पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक

पण्डित रामगोविन्द त्रिवेदी

॥श्रीः॥

विद्याभवन प्राच्यविद्या ग्रन्थमाला

३५

पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक

पण्डित रामगोविन्द त्रिवेदी

पञ्चमोऽष्टकः



चौखम्बा विद्याभवन

वाराणसी

प्रकाशक

**चौखम्बा विद्याभवन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बैंक ऑफ बड़ोदा भवन के पीछे )

पो. बा. नं. 1069, वाराणसी 221001

दूरभाष : 2420404

ई-मेल : cvbhawan@yahoo.co.in



पुनर्मुद्रित 2007 ई०

१-९ भाग (सम्पूर्ण)

मूल्य : ३५००.००

अन्य प्राप्तिस्थान

**चौखम्बा पब्लिशिंग हाउस**

4697/2, भू-तल ( ग्राउण्ड फ्लोर )

गली नं. 21-ए, अंसारी रोड

दरियागंज, नई दिल्ली 110002

दूरभाष : 23286537



**चौखम्बा संस्कृत प्रतिष्ठान**

38 यू. ए. बंगलो रोड, जवाहर नगर

पो. बा. नं. 2113

दिल्ली 110007

दूरभाष : 23856391



**चौखम्बा सुरभारती प्रकाशन**

के. 37/117 गोपालमन्दिर लेन

पो. बा. नं. 1129, वाराणसी 221001

दूरभाष : 2335263

THE
VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA
35

# ṚG-VEDA-SAṀHITĀ

Together with

**PADAPĀṬHA**
**&**
**SĀYAṆABHĀṢYA**

Hindi Translation

by

**Pt. Ram Govind Trivedi**

**FIFTH AṢṬAKA**



**CHOWKHAMBA VIDYABHAWAN**
**VĀRANASI**

*Publishers :*
**CHOWKHAMBA VIDYABHAWAN**
*(Oriental Publishers & Distributors)*
Chowk (Behind Bank of Baroda Building)
Post Box No. 1069
Varanasi 221001
Tel. : 2420404
E-mail : cvbhawan@yahoo.co.in


Edition : 2007
Price : 3500.00

*Also can be had from :*
**CHAUKHAMBA PUBLISHING HOUSE**
4697/2, Ground Floor
Gali No. 21-A, Ansari Road
Daryaganj, New Delhi 110002
Tel. : 23286537

**CHAUKHAMBA SANSKRIT PRATISHTHAN**
38 U.A. Bungalow Road, Jawahar Nagar
Post Box No. 2113
Delhi 110007
Tel. : 23856391

**CHAUKHAMBA SURBHARATI PRAKASHAN**
K. 37/117, Gopal Mandir Lane
Post Box No. 1129
Varanasi 221001
Tel. : 2335263

## ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदा यो वेदेभ्योखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥

अथ पंचमाष्टके प्रथमोध्याय आरभ्यते । षष्ठमंडलस्य षष्ठेनुवाके चतुर्दश सूक्तानि तत्र स्तुषे नरेत्येकादशर्चं प्रथमं सूक्तं अत्रेयमनुक्रमणिका स्तुष एकादशाश्विनं त्विति । मंडलद्रष्टा बार्हस्पत्यो भरद्वाजऋषिः । अनुक्तत्वात्त्रिष्टुप्छन्दः अश्विनौ देवता । प्रातरनुवाकाश्विने क्रतौ इदमादिके द्वे सूक्ते आश्विनशस्त्रे चैत एव सूत्रितं च स्तुषे नरेति सूक्ते इति ।

तत्र प्रथमा–

ओम् स्तुषेनरादिवोअस्यप्रसन्ताश्विनाहुवेजरमाणोअर्कैः ।
यासद्यउस्राव्युषिज्मोअन्तान्युयूषतःपर्युरूवरांसि ॥ १ ॥

स्तुषे । नरा । दिवः । अस्य । प्रऽसन्ता । अश्विना । हुवे ।
जरमाणः । अर्कैः । या । सद्यः । उस्रा । विऽउषि । ज्मः ।
अन्तान् । युयूषतः । परि । उरु । वरांसि ॥ १ ॥

दिवो द्युलोकस्य नरा नेतारौ अस्य भुवनस्य प्रसन्ता प्रसन्तौ प्रभवन्तावीश्वरौ अश्विना अश्विनौ अश्वैरन्वितौ स्तुषे प्रगीतमंत्रसाध्यैः स्तोत्रैः स्तोतुं अर्कैः अर्चनीयमंत्रसाध्यैः शस्त्रैः जरमाणः स्तुतिं कुर्वन् हुवे आह्वयामि । कीदृशावित्यपेक्षायां या यौ सद्यएव उस्रा शत्रूणां निवारकौ व्युषि व्युष्टौ निशायाः समाप्तौ ज्मः पृथिव्याः अन्तान् पर्यंतान् उरु पुरूणि वरांसि रूपस्यावरकाणि तमांसि च परि परितः युयूषतः पृथक्कुरुतः । अथवा वरांसि तेजांसि तमोनिवारणान्परि युयूषतः विस्तारयतः ॥ १ ॥

१. जो क्षणमात्र में शत्रुओं को हराते हैं और प्रभात में पृथिवी-पर्यन्त प्रभूत अन्धकार दूर करते हैं, उन्हीं द्युलोक के नेता और भुवनों के ईश्वर अश्विनीकुमारों की मैं स्तुति करता हूं और मन्त्रों-द्वारा स्तुति करता हुआ उन्हें बुलाता हूं ।

अथ द्वितीया–

तायज्ञमाशुचिभिश्चक्रमाणारथस्यभानुंरुरुचूरजोभिः ।
पुरूवरांस्यमितामिमानापोधन्वान्यतियाथोअज्रान् ॥ २ ॥

ता । यज्ञम् । आ । शुचिऽभिः । चक्रमाणा । रथस्य । भानुम् ।
रुरुचुः । रजःऽभिः । पुरु । वरांसि । अमिता । मिमाना ।
अपः । धन्वानि । अति । याथः । अज्रान् ॥ २ ॥

किंच ता तौ प्रसिद्धौ अश्विनौ यज्ञं अस्मदीयं यागं आचक्रमाणा अभिचक्रमाणौ शुचिभिर्निर्मलैः रजोभिः स्वीयैः तेजोभिः रजोरजतेर्ज्योतीरजउच्यतइतियास्केनोक्तत्वात् रथस्य स्वकीयस्य रथस्य भानुं दीप्तिं रुरुचुः रोचयेते । अपि च पुरु बहूनि वरांसि तमोनिवारकाणि तेजांसि अमिता अपरिमितानि मिमाना निर्मिमाणौ अप उद्दिश्य धन्वानि मरुप्रदेशान् अज्रान् स्वकीयान् अश्वान् अतियाथः अतिक्रामयथः ॥ २ ॥

२. अश्विनीकुमार यज्ञ की ओर आते हुए, निर्मल तेजोबल से, रथ की दीप्ति प्रकट करते हैं और असीम रूप से तेजों का निर्माण करते हुए जल के लिए अश्वों को, मरुदेश को लँघाकर, ले गये ।

ताहत्यद्वर्तिर्यदरध्रमुग्रेत्थाधियऊहथुःशश्वदश्वैः ।
मनोजवेभिरिषिरैःशयध्यैपरिव्यथिर्दाशुषोमर्त्यस्य ॥ ३ ॥

ता । ह । त्यत् । वर्तिः । यत् । अरध्रम् । उग्रा । इत्था । धियः ।
ऊहथुः । शश्वत् । अश्वैः । मनःऽजवेभिः । इषिरैः ।
शयध्यै । परि । व्यथिः । दाशुषः । मर्त्यस्य ॥ ३ ॥

ता ह तौ खलु उग्रा उग्रौ अश्विनौ युवां यत् अरध्रं असमृद्धं त्यद्वर्तिर्यजमानस्य तद्गृहं समर्धयितुं गच्छथः । किंचेत्था इत्थं धियः स्तोतॄन् इषिरैः एषणीयैः काम्यैः मनोजवेभिर्मनोवेगैः अश्वैः स्वीयैरश्वैः शश्वत्सर्वदा ऊहथुः स्वर्गं प्रापयथः । मर्त्यस्य मनुष्यस्य दाशुषो यजमानस्य व्यथि हिंसकः परिशयध्यै परिशयनाय दीर्घनिद्रायै युवाभ्यां क्रियतां ॥ ३ ॥

३. अश्विद्वय, उग्र तुम लोग उस असमृद्ध गृह में जाते हो । इस प्रकार वाञ्छनीय और मन के समान वेगवान् अश्वों-द्वारा स्तोताओं को स्वर्ग ले जाओ । हव्य-दाता मनुष्य के हिंसक को दीर्घ निद्रा में सुला दो ।

अथ चतुर्थी—

तानव्यसोजरमाणस्यमन्मोपभूषतोयुयुजानसप्ती ।
शुभंपृक्षमिषमूर्जंवहन्ताहोतायक्षत्प्रत्नोअध्रुग्युवाना ॥ ४ ॥

---

१ नि० ४. १९. ।

ता । नव्यसः । जरमाणस्य । मन्म । उप । भूषतः ।
युयुजानसप्ती इति युयुजानऽसप्ती । शुभ्रम् । पृक्षम् । इषम् ।
ऊर्जम् । वहन्ता । होता । यक्षत् । प्रत्नः । अध्रुक् । युवाना ॥ ४ ॥

ता तावश्विनौ युयुजानसप्ती रथे युज्यमानाश्वौ शुभ्रं शोभनं पृक्षमन्नं पयः पृक्ष इत्यन्ननामसु पाठात् इषं पुष्टिं ऊर्जं रसं च वहन्ता वहन्तौ नव्यसो नवतरस्य जरमाणस्य स्तुतिं कुर्वतः मन्म मननीयं स्तोत्रं उपभूषतः उपगच्छतः । यद्वा स्तोत्रसमीपेभवतः किंच युवाना नित्यतरुणौ तौ होता देवानामाह्वाता अध्रुक् अद्रोग्धा प्रियः प्रत्नः पुराणोऽग्निः यक्षत् यजतु ॥ ४ ॥

४. अश्विद्वय अश्व जोतते हुए सुन्दर अन्न, पुष्टि और रस का वहन करते हुए अभिनव स्तोता की मनोज्ञ स्तुति के समीप आवें । वे युवक हैं । होता, द्रोह-रहित और प्राचीन अग्नि उनका याग करें ।

तावल्गूदस्रापुरुशाकतमाप्रत्नानव्यसावचसाविवासे ।
याशंसतेस्तुवतेशम्भविष्ठावभूवतुर्गृणतेचित्ररातीः ॥ ५ ॥ १ ॥

ता । वल्गू इति । दस्रा । पुरुशाकऽतमा । प्रत्ना । नव्यसा । वचसा ।
आ । विवासे । या । शंसते । स्तुवते । शम्ऽभविष्ठा । बभूवतुः ।
गृणते । चित्ररातीं इति चित्रऽराती ॥ ५ ॥ १ ॥

या यौ शंसते शस्त्रैः स्तुतिं कुर्वते स्तुवते स्तोत्रैः स्तुतिं कुर्वते जनाय शंभविष्ठा अतिशयेन सुखस्य भावयितारौ अतिशयेन सुखस्वरूपौ वा गृणते स्तोत्रशस्त्रव्यतिरिक्तलौकिकस्तुतिभिः स्तुवते च चित्रराती विचित्रदानौ बभूवतुः । ता तौ वल्गू वल्गनशीलौ रुचिरौ वा पुरुशाकतमा अतिशयेन बहुकर्माणौ बहुसाहाय्यौ वा प्रत्ना प्रत्नौ पुराणौ प्रत्नं प्रदिवइति पुराणनामसु पाठात् दस्रा दर्शनीयौ अश्विनौ नव्यसा नवतरेण वचसा स्तुत्या आविवासे परिचरामि ॥ ५ ॥

५. जो स्तुतिकारी (शस्त्र-स्तोता) और स्तोत्रकर्त्ता व्यक्ति को सुखी करते हैं और स्तुति-कर्त्ता को बहुविधि दान देते हैं, उन्हीं रुचिर, बहु-कर्मा, प्राचीन और दर्शनीय अश्विद्वय की, नई स्तुति से, मैं परिचर्या करता हूँ । ॥ इति पंचमस्य प्रथमे प्रथमो वर्गः ॥ १ ॥

अथ षष्ठी—

ताभुज्युंविभिरद्भ्यःसमुद्रात्तुग्रस्यसूनुमूहथूरजोभिः ।
अरेणुभिर्योजनेभिर्भुजन्तापतत्रिभिरर्णसोनिरुपस्थात् ॥ ६ ॥

ता । भुज्युम् । विऽभिः । अत्ऽभ्यः । समुद्रात् । तुग्रस्य । सूनुम् ।
ऊहथुः । रजःऽभिः । अरेणुऽभिः । योजनेभिः । भुजन्ता ।
पतत्रिऽभिः । अर्णसः । निः । उपऽस्थात् ॥ ६ ॥

ता तावश्विनौ युवां तुग्रस्य सूनुं भुज्युं भुज्युनामकं समुद्रमध्ये भग्ननावं भुजन्ता रक्षन्तौ अरेणुभिः रेणुसहितैः आन्तरिक्षैः रजोभिर्मार्गैः योजनेभिःरथयुक्तैः पतत्रिभिः पतनवद्भिः विभिः अश्वैः अर्णसोजलस्य उपस्थात् योनेः समुद्रात् अद्भ्यो निरूहथुः निरगमयतं। समुद्रादद्भ्य- इति प्रयोगो मातुर्गृहाद्गच्छतीतिवत् ॥ ६ ॥

६. तुमने तुग्र के पुत्र भुज्यु को नौका-रहित हो जाने पर धूलि-रहित मार्ग में रथ-युक्त और गमनशील अश्वों-द्वारा जल के उत्पत्ति-स्थान समुद्र के जल से बाहर किया था।

विजयुषारथ्यायातमद्रिंश्रुतंहवंवृषणावध्रिमत्याः ।
दशस्यन्ताशयवेपिप्यथुर्गामितिच्यवानासुमतिंभुरण्यू ॥ ७ ॥

वि । जयुषा । रथ्या । यातम् । अद्रिम् । श्रुतम् । हवम् ।
वृषणा । वध्रिऽमत्याः । दशस्यन्ता । शयवे । पिप्यथुः ।
गाम् । इति । च्यवाना । सुऽमतिम् । भुरण्यू इति ॥ ७ ॥

रथ्या हे रथारूढावश्विनौ जयुषा जयशीलेन रथेन अद्रिं मार्गे स्थितं पर्वतं वियातं व्यबाधेथां।यातिरत्र वधकर्मा तथा च निगमान्तरं—विभिन्दुनानासत्यारथेनविपर्वताँअजरयू- अयातमिति। वृषणा कामानां वर्षितारौ वध्रिमत्याः पुत्रार्थिन्याः हवमाह्वानं श्रुतं शृणुतं दशस्यन्ता स्तोतृभ्यः कामान्प्रयच्छन्तौ शयवे युवां स्तुवते गां निवृत्तप्रसवां पिप्यथुः क्षीरेणाप्याययतं। तथा च निगमान्तरं—शयवेचिन्नासत्याशचीभिर्जसुरयेस्तर्यंपिप्यथुर्गामिति । सुष्टुतिं इतीत्थं सुमतिं च्यवाना गच्छन्तौ भुरण्यू सर्वत्र गन्तारौ यज्ञस्य भर्तारौ वा भवतं ॥ ७ ॥

७. रथारोही अश्विनीकुमारो, विजयी रथ के द्वारा मार्ग में स्थित पर्वत का विनाश करो। तुम काम-वर्षी हो। पुत्रार्थिनी का आह्वान सुनो। स्तोताओं का मनोरथ पूर्ण करते हो। तुम स्तोता की निवृत्त-प्रसवा गाय को दुग्धशालिनी करो। इस प्रकार सुबुद्धशाली होकर सर्वत्रगामी बनो।

यद्रोदसीप्रदिवोअस्तिभूमाहेळोदेवानामुतमर्त्यत्रा ।
तदादित्यावसवोरुद्रियासोरक्षोयुजेतपुरघंदधात ॥ ८ ॥

---

१ ऋ० सं० १. ८. ११. । २ ऋ० सं० १. ८. १२. ।

यत् । रोदसी इति । प्रऽदिवः । अस्ति । भूर्म । हेळः । देवानाम् ।
उत । मर्त्यऽत्रा । तत् । आदित्याः । वसवः । रुद्रियासः ।
रक्षःऽयुजे । तपुः । अघम् । दधात ॥ ८ ॥

रोदसी हे द्यावापृथिव्यौ हे आदित्याः हे वसवः रुद्रियासः हे रुद्रपुत्राः मरुतः मर्त्यत्रा मर्त्येषु अश्विनोः परिचारकेषु देवानां यद्धेळः क्रोधः भूम महानस्ति तद्धेळः तपुस्तापकं रक्षोयुजे रक्षोभिर्युक्ताय रक्षसां स्वामिने प्रेरकाय वा अघं आहन्तृ दधात कुरुत । अथवा रक्षोयुजे रक्षोभिर्युक्ताय यज्वने अघमाहन्तृ कुरुत ॥ ८ ॥

८. प्राचीन द्यावा-पृथिवी आदित्यो, वसुओ और रुद्रपुत्रो, अश्वि-द्वय के परिचारक मनुष्यों के प्रति देवताओं का जो महान् क्रोध है उस तापकारी क्रोध को राक्षस-पति को मारने के काम में लाओ ।

यईंराजानावृतुथाविदधद्रजसोमित्रोवरुणश्चिकेतत् ।
गम्भीरायरक्षसेहेतिमस्यद्रोघायचिद्वचसआनवाय ॥ ९ ॥

यः । ईम् । राजानौ । ऋतुऽथा । विऽदधत् । रजसः । मित्रः ।
वरुणः । चिकेतत् । गम्भीराय । रक्षसे । हेतिम् । अस्य ।
द्रोघाय । चित् । वचसे । आनवाय ॥ ९ ॥

यो नरः रजसः समस्तलोकस्य लोकारजांस्युच्यन्ते इति यास्केनोक्तत्वात्[1] राजानौ ईं एतावश्विनौ ऋतुथा कालेकाले विदधत्परिचरति तं मित्रोवरुणश्च चिकेतत् जानीयात् मित्रवरुणप्रभृतयोदेवा एनं विदु रित्यर्थः । किंच अयं परिचारकः गंभीराय महाबलाय रक्षसे राक्षसाय हेतिं घातकमायुधं अस्य अस्यति क्षिपति प्रथमपुरुषस्य मध्यमपुरुषेण व्यत्ययः द्रोघायाभिद्रोहात्मकाय आनवाय मनुष्यसंबन्धिने वचसे चित् वचनायैव हेतिमस्यति मनुष्याणामभिद्रोहायैनमास्कन्दतीति ॥ ९ ॥

९. जो व्यक्ति लोकों के राजा इन अश्विनीकुमारों की यथासमय परिचर्या करता है, उसे मित्र और वरुण जानते हैं । वह व्यक्ति महाबली राक्षस के विरुद्ध अस्त्र फेंकता है । वह अभिद्रोहात्मक मनुष्यों के वचनानुसार अस्त्र-क्षेप करता है ।

अन्तरैश्चक्रैस्तनयायवर्तिर्द्युमतायातंनृवतारथेन ।
सनुत्येनत्यजसामर्त्यस्यवनुष्यतामपिशीर्षाववृक्तम् ॥ १० ॥

---

1 नि० ४. १९ ।

अन्तरैः । चक्रैः । तनयाय । वर्तिः । द्युऽमता । आ । यातम् ।
नृऽवता । रथेन । सनुत्येन । त्यजसा । मर्त्यस्य । वनुष्यताम् ।
अधि । शीर्षा । ववृक्तम् ॥ १० ॥

हे अश्विनौ अन्तरैः अनिकृष्टैश्चक्रैर्युक्तेन द्युमता दीप्तिमता नृवता नेत्रा सारथिना युक्तेन यद्वा अश्वयुक्तेन पतंगाः नर इति अश्वनामसु पाठात् रथेन वर्तिः अस्माकं गृहं तनयाय तनयं दातुं आयातं अपि च सनुत्येन तिरोहितेन त्यजसा क्रोधेन हणिस्त्यजइति क्रोधनामसु पाठात् मर्त्यस्य मनुष्यस्य वनुष्यतां बाधमानानां वनुष्यतिर्हंतिकर्मेति[1] यास्केनोक्तत्वात् शीर्षा शिरांस्यपि ववृक्तं प्रवृक्तं ॥ १० ॥

१०. अश्विद्वय, तुम उत्तम चक्र, दीप्ति और सारथिवाले रथ पर चढ़कर सन्तान देने के लिए हमारे घर में आओ और क्रोध छोड़ते हुए मनुष्यों के विघ्न-कर्त्ताओं के मस्तक छिन्न करो ।

आ परमाभिरुत मध्यमाभिर्नियुद्भिर्यातमवमाभिरर्वाक् ।
दृळ्हस्य चिद्गोमतो वि व्रजस्य दुरो वर्तं गृणते चित्रराती ॥ ११ ॥ २ ॥

आ । परमाभिः । उत । मध्यमाभिः नियुत्ऽभिः । यातम् ।
अवमाभिः । अर्वाक् । दृळ्हस्य । चित् । गोऽमतः । वि । व्रजस्य ।
दुरः । वर्तम् । गृणते । चित्रराती इति चित्रऽराती ॥ ११ ॥ २ ॥

हे अश्विनौ परमाभिरुत्कृष्टाभिः उतापि च मध्यमाभिरनुत्कृष्टाभिः अवमाभिः निकृष्टाभिश्च नियुद्भिः वाहैरर्वागस्मदभिमुखं आयातं दृळ्हस्य चित् दृळ्हापिधानस्यापि गोमतो गोयुक्तस्य व्रजस्य गोष्ठस्य दुरो द्वाराणि विवर्तं विवृणुतं । किंच गृणते स्तुवते मह्यं चित्रराती विचित्रदानौ भवतं ॥ ११ ॥

११. अश्विद्वय, उत्कृष्ट, मध्यम और साधारण घोड़ों के साथ हमारे सामने आओ । दृढ़ और गौओं से भरी गोशाला का दरवाजा खोलो । मैं स्तुति करता हूँ । मुझे विचित्र धन दो ।

॥ इति पंचमस्य प्रथमे द्वितीयो वर्गः ॥ २ ॥

क्त्येत्येकादशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षं अत्रेयमनुक्रमणिका क्त्यैकपदान्तं त्रैष्टुभमिति आवांसुम्नइत्येकादशी एकपदात्रिष्टुप् शिष्टास्त्रिष्टुभः आश्विनं त्वित्युक्तत्वात् अस्यापि सूक्तस्य अश्विनौ देवता प्रातरनुवाकाश्विनशस्त्रयोः त्रैष्टुभे छन्दसि विनियोगः ।

---

[1] नि० ५. २. ।

तत्र प्रथमा—

क्वं१त्यावल्गूपुंरुहूताद्यदूतोनस्तोमोंविदन्नमंस्वान् ।
आयोअर्वाङ्नासंत्याववर्तंप्रेष्ठाह्यसंथोअस्यमन्मंन् ॥ १ ॥

क्वं । त्या । वल्गू इति । पुरुऽहूता । अद्य । दूतः । न । स्तोमः ।
अविदत् । नमंस्वान् । आ । यः । अर्वाक् । नासंत्या । ववर्तं ।
प्रेष्ठां । हि । असंथः । अस्य । मन्मंन् ॥ १ ॥

क्व कुत्र स्थितौ वल्गू रुचिरौ पुरुहूता बहुभिराहूतौ त्या तावश्विनौ नमस्वान् हविषा युक्तः नम आयुरित्यन्ननामसु पाठात् स्तोमः पंचदशादिस्तोमः अद्य दूतो न प्रेरितोदूत इव अविदत् विंदेत् यः स्तोमः अर्वागस्मदभिमुखं नासत्यावश्विनौ आववर्त आवर्तयत् । हे अश्विनौ युवामस्य स्तोतुः मन्मन् स्तोत्रे प्रेष्ठा हि प्रियतमौ हि असथो भवतः ॥ १ ॥

१. अनेकाहूत और मनोहर अश्विनीकुमार जहाँ ठहरते हैं, वहाँ हव्य-युक्त पञ्चदशादि स्तोम दूत की तरह उन्हें प्राप्त करे। इसी स्तोम ने अश्विद्वय को मेरी ओर घुमाया था। अश्विद्वय, स्तोता की स्तुति पर तुम प्रसन्न होते हो।

अथ द्वितीया—

अरंमेगन्तंहवंनायास्मैगृंणानायथापिबांथोअन्धंः ।
परिंहत्यद्वर्तिर्यांथोरिषोनयत्परोनान्तंरस्तुतुर्यात् ॥ २ ॥

अरंम् । मे । गन्तम् । हवंनाय । अस्मै । गृणाना । यथां । पिबांथः ।
अन्धंः । परिं । ह । त्यत् । वर्तिः । याथः । रिषः । न । यत् । परंः ।
न । अन्तंरः । तुतुर्यात् ॥ २ ॥

हे अश्विनौ युवां मे मदीयायास्मै हवनायाह्वानाय अरं पर्याप्तं गन्तं गच्छतं गृणाना स्तूयमानौ अंधः सोमं यथा पिबाथः पिबतं । रिषो हिंसकस्य शत्रोः त्यद्वर्तिः तद्गृहं परियाथः परितोयाथः यद्वर्तिः परो विप्रकृष्टो न तुतुर्यात् न हिंस्यात् अन्तरः संनिकृष्टोपि न तुतुर्यात् यद्वा त्यद्वर्तिः तदस्मदीयं गृहं रिषोहिंसकात्परियाथः । त्यद्वर्तिः परोविप्रकृष्टः अन्तरः सन्निकृष्टोपि न तुतुर्यात् अयं भावः यथास्मदीयं गृहं दूरस्थः सन्निकृष्टोपि न हिंस्यात् तथा रक्षां कुरुथइति ॥ २ ॥

२. अश्विद्वय, हमारे आह्वान के अनुसार भली भाँति गमन करो। स्तुति किये जाने पर सोम पान करो। शत्रु से हमारे घर को बचाओ, पास या दूर का शत्रु हमारे घर को नष्ट न करने पावे।

अकारिवामन्धसोवरींमन्नस्तारिबर्हिःसुंप्रायणतंमम् ।
उत्तानहंस्तोयुवयुर्ववन्दावांनक्षन्तोअद्रंयआञ्जन् ॥ ३ ॥

अकारि । वाम् । अन्धसः । वरीमन् । अस्तारि । बर्हिः ।
सुप्रऽअयनऽतमम् । उत्तानऽहस्तः । युवऽयुः । ववन्द । आ । वाम् ।
नक्षन्तः । अद्रयः । आञ्जन् ॥ ३ ॥

वां युवयोरर्थे अन्धसः सोमस्य वरीमन् विस्तृतेभिषवादौ यत्कृत्यमस्ति तदकारि । कृतं सुप्रायणतमं मृदुतमं बर्हिः अस्तारि स्तीर्णं उत्तानहस्तः कृतांजलिः युवयुः युवां कामयमानः होता ववन्द स्तौति वां युवां नक्षन्तः व्याप्नुवन्तः नृक्ष पृक्ष नक्ष गताविति धातुः अद्रयः ग्रावाणः आंजन् सोमरसं आसमन्ताद्व्यक्तीकृतवन्तः ॥ ३ ॥

३. सोम का विस्तृत अभिषव, तुम्हारे लिए, प्रस्तुत किया गया है। मृदुतम कुश बिछाये गये हैं। तुम्हारी कामना से होता हाथ जोड़कर तुम्हारी स्तुति करता है। पत्थरों ने तुम्हें व्याप्त करके सोम रस प्रकट किया है।

ऊर्ध्वोवामग्निरध्वरेष्वस्थात्प्ररातिरेतिजूर्णिनीघृताची ।
प्रहोतागूर्तमनाउराणोयुक्तयोनासत्याहवीमन् ॥ ४ ॥

ऊर्ध्वः । वाम् । अग्निः । अध्वरेषु । अस्थात् । प्र । रातिः ।
एति । जूर्णिनी । घृताची । प्र । होता । गूर्तऽमनाः । उराणः । अयुक्त ।
यः । नासत्या । हवीमन् ॥ ४ ॥

अग्निः वां युवयोर्यज्ञार्थं ऊर्ध्वःअस्थात् उदतिष्ठत् अध्वरेषु यज्ञेषु प्रैति समिद्धः आहवनीयं गच्छति च रातिः धनं हविः जूर्णिनी जूर्णिजंवतेर्वेतियास्केनोक्तत्वात् घृताची घृतेनाक्ता उपस्तीर्णाभिघारितेत्यर्थः किं च होता उराणः उरुकुर्वाणः प्रगूर्तमनाः प्रकर्षेण उद्युक्तमनाः भवति यो होता नासत्यावश्विनौ हवीमन्नाह्वाने स्तोत्रे वा अयुक्त योजयति ॥ ४ ॥

४. तुम्हारे यज्ञ के लिए अग्नि ऊपर उठते, यज्ञ में जाते तथा हव्य और घृतवाले बनते हैं। जो स्तोता अश्विद्वय का स्तोत्र—युक्त करता है, वही बहुकर्मा और अतीव उद्युक्त-मना होता है।

अधिश्रियेदुहितासूर्यस्यरथंतस्थौपुरुभुजाशतोतिम् ।
प्रमायाभिर्मायिनाभूतमत्रनरानृतूजनिमन्यज्ञियानाम् ॥५॥३॥

अधि । श्रिये । दुहिता । सूर्यस्य । रथम् । तस्थौ । पुरुऽभुजा ।
शतऽऊतिम् । प्र । मायाभिः । मायिना । भूतम् । अत्र । । नरा ।
नृतू इति । जनिमन् । यज्ञियानाम् ॥ ५ ॥ ३ ॥

---

१ नि० ६. ४.।

हे पुरुभुजा पूर्णभुजौ बहूनां रक्षकावश्विनौ युवयोः शतोतिं बहुरक्षकं बहुगमनं वा रथं सूर्यस्य दुहिता सूर्या श्रिये श्रयितुमधितस्थौ अध्यतिष्ठत्। अपि च यज्ञियानां देवानामत्र जनिमन् अस्मिन् जन्मनि प्रादुर्भावे मायाभिः प्रज्ञानैः शची माया इति प्रज्ञा नामसु पाठात् मायिनौ प्रज्ञावन्तौ नरा नेतारौ नृतू नृत्यंतौ भूतं भवतं। यद्वा हे मायिनौ प्राज्ञौ नरौ नेतारौ नृतू नृत्यन्तावश्विनौ यज्ञियानां देवानां अत्र जनिमन् जन्मनि प्रादुर्भावे प्रभूतं प्राज्ञतमं अग्न्यादिकं देवं मायाभिः प्रज्ञानैः कौशलैर्वा जितवन्तौ स्थः इत्यर्थः। अयमर्थः प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीमित्यादिना स्पष्टीकृतः ॥ ५ ॥

५. अनेकों के रक्षक अश्विद्वय, सूर्य-पुत्री तुम्हारे बहुरक्षक रथ को सुशोभित करने के लिए अधिष्ठित हुई थी। तुम देवों की इसी जन्म की प्रज्ञा से प्राज्ञ नेता और नृत्यशाली बनो।

॥ इति पंचमस्य प्रथमे तृतीयो वर्गः ॥ ३ ॥

अथ षष्ठी—

युवंश्रीभिर्दर्शताभिराभिःशुभेपुष्टिमूहथुःसूर्यायाः।
प्रवांवयोवपुषेनुपप्तन्नक्षद्वाणीसुष्टुताधिष्ण्यावाम् ॥ ६ ॥

युवम्। श्रीभिः। दर्शताभिः। आभिः। शुभे। पुष्टिम्। ऊहथुः। सूर्यायाः। प्र। वाम्। वयः। वपुषे। अनु। पप्तन्। नक्षत्। वाणी इति। सुऽस्तुता। धिष्ण्या। वाम् ॥ ६ ॥

हे अश्विनौ युवं युवां दर्शताभिः दर्शनीयाभिराभिः श्रीमतां परिदृश्यमानाभिः श्रीभिः लक्ष्मीभिः कान्तिभिर्वा सूर्यायाः युवयोः पत्न्याः शुभे शोभनार्थं पुष्टिं पूर्तिं ऊहथुः प्रापयथः। किं च वां युवां वयोश्वा वपुषे शोभायै प्रानुपप्तन् प्रकर्षेणान्वपतन्। अपि च हे धिष्ण्या स्तुत्यर्हावश्विनौ वां युवां सुष्टुता वाणी ऋषीणां स्तुतिः नक्षत व्याप्नोति ॥ ६ ॥

६. इस दर्शनीय कांति-द्वारा तुम सूर्या की शोभा के लिए पुष्टि प्राप्त करो। शोभा के लिए तुम्हारे घोड़े भली भाँति अनुगमन करते हैं। स्तवनीय अश्विद्वय, भली भाँति की गई स्तुतियां तुम्हें व्याप्त करें।

आवांवयोश्वासोवहिष्ठाअभिप्रयोनासत्यावहन्तु।
प्रवांरथोमनोजवाअसर्जीषःपृक्षइषिधोअनुपूर्वीः ॥ ७ ॥

आ। वाम्। वयः। अश्वासः। वहिष्ठाः। अभि। प्रयः। नासत्या। वहन्तु। प्र। वाम्। रथः। मनःऽजवाः। असर्जि। इषः। पृक्षः। इषिधः। अनु। पूर्वीः ॥ ७ ॥

१ ऐ० ब्रा० ४. ७।

हे नासत्या वां युवां वयो गन्तारः वह्निष्ठाः वोढृतमाः अश्वासो अश्वाः प्रयः सोमरूपमन्नमभि आ वहन्तु । वां युवयोः मनोजवाः मनोवेगो रथः पृक्षः संपर्चनीयः इषिधः एषणीयाः पूर्वीर्बह्वीः इषोऽन्नानि सोमान् अनु प्रासर्जि विसृष्टः ॥ ७ ॥

७. अश्विनीकुमारो, गतिशील और ढोने में अत्यन्त चतुर घोड़े तुम्हें अन्न की ओर ले आवें। मन की तरह वेगशाली तुम्हारा रथ सम्पर्क के योग्य और अभिलषणीय प्रभूत अन्न के लिए छोड़ा गया है।

पुरुहिवांपुरुभुजादेष्णंधेनुंनइषंपिन्वतमसंक्राम् ।
स्तुतंश्चवांमाध्वीसुष्टुतिश्चरसांश्चयेवामनुंरातिमग्मंन् ॥ ८ ॥

पुरु । हि । वाम् । पुरुऽभुजा । देष्णम् । धेनुम् । नः । इषम् ।
पिन्वतम् । असंक्राम् । स्तुतः । च । वाम् । माध्वी इति । सुऽस्तुतिः ।
च । रसाः । च । ये । वाम् । अनु । रातिम् । अग्मन् ॥ ८ ॥

पुरुभुजा हे पूर्णभुजौ बहुपालकौ वां युवयोर्देष्णं दातव्यं धनं पुरु बहु हि भवति अतः कारणान्नोस्मभ्यं धेनुं प्रीणयित्रीं असक्रां मत्तोन्यत्रासंक्रमणीं असक्रामसंक्रमणीर्गिति यास्केनोक्तत्वात् इषमन्नं पिन्वतं प्रयच्छतं यद्वा इषमेषणीयां धेनुमित्यन्वयः किं च वां स्तुतः स्तुवन्तीति स्तुतः स्तोतारः सन्ति माध्वी मदयितारावश्विनौ सुष्टुतिः शोभना स्तुतिश्च स्तोतृषु भवति। रसाः सोमरसाश्च संति ये रसाः वां युवयोः रातिं दानं अनु अनूद्दिश्यागमन् देवयजनं प्राप्ताः अयं भावः सुष्टुतिं श्रुत्वा देवयजनं प्राप्तान् सोमरसान् पीत्वा स्तोतृभ्यः कामान्प्रयच्छतमितिशेषः ॥ ८ ॥

८. बहु-पालक अश्विनीकुमारो, तुम्हारे पास बहुत धन है; इसलिए हमारे लिए प्रीति-करी और दूसरे स्थान पर न जानेवाली धेनु तथा अन्न दो। मादयिता अश्विद्वय, तुम्हारे लिए स्तोता हैं, स्तुतियां हैं और जो तुम्हारे दान के उद्देश्य से जाते हैं, वे सोमरस भी हैं।

उतमंऋज्रेपुरंयस्यरघ्वीसुमीळ्हेशतंपेरुकेचपक्का ।
शाण्डोदाद्धिरणिनस्मद्दिष्टीन्दशवशासोअभिषाचंऋष्वान् ॥ ९ ॥

उत । मे । ऋज्रे इति । पुरंयस्य । रघ्वी इति । सुऽमीळ्हे । शतम् ।
पेरुके । च । पक्का । शाण्डः । दात् । हिरणिनः । स्मत्ऽदिष्टीन् ।
दश । वशासः । अभिऽसाचः । ऋष्वान् ॥ ९ ॥

उतापि च पुरयस्य पुरयनामकस्य स्वभूते ऋज्रे ऋजुगमने रघ्वी क्षिप्रगामिन्यौ वडवे मे अश्विनौ स्तुतिं कुर्वतो ममाभूतां सुमीळ्हे राज्ञि विद्यमानाः सन्तः शतं गावो ममाभूवन् पेरुके राज्ञि

१ नि० ६, २९।

विद्यमानानि पक्का पक्कान्यन्नानि ममासन् शांडश्च राजा हिरणिनः हिरण्यवतः स्मद्दिष्टीन् प्रशस्तदर्शनान् रथानश्वान्वा दश दशसंख्याकान् वशासः अनुगुणान् अभिघातः शत्रूणाम-भिघातुकान् ऋज्वान् दर्शनीयान् पुरुषान् अश्विनोः स्तोतृभ्यो दात् ददातु ॥ ९ ॥

९. पुण्य की सरल गति और शीघ्रगामिनी दो वड़वायें मेरे पास हैं; स्मीढ़ की सौ गायें मेरे पास हैं। पेरुक के पक्व अन्न भी मेरे पास हैं। शान्त नाम के राजा ने अश्विद्वय के स्तोताओं को हिरण्ययुक्त और सुदृश्य दस रथ या अश्व दिये और उनके अनुरूप ही शत्रु-नाशक तथा दर्श-नीय पुरुष भी दिये थे।

सं वां शता नासत्या सहस्राश्वानां पुरुपन्था गिरे दात् ।
भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥ १० ॥

सम् । वाम् । शता । नासत्या । सहस्रा । अश्वानाम् । पुरुऽपन्थाः । गिरे । दात् । भरत्ऽवाजाय । वीरं । नु । गिरे । दात् । हता । रक्षांसि पुरुऽदंससा । स्युरितिस्युः ॥ १० ॥

नासत्या हे अश्विनौ वां युवयोर्गिरे गृणातीति गीः स्तोता तस्मै अश्वानां शता शतानि सहस्रा सहस्राणि पुरुपंथा नाम राजा संदात् संददाति । वीर हे वीरावश्विनौ द्विवचनस्य लुक् गिरे युवयोः स्तोत्रे भरद्वाजाय मह्यं अपि नु क्षिप्रं दात् ददातु । किं च हे पुरुदंससा बहुकर्मा-णावश्विनौ युवयोरनुग्रहात् रक्षांसि हता हतानि स्युः ॥ १० ॥

१०. नासत्यद्वय, तुम्हारे स्तोता को पुरुपन्था नाम के राजा सैकड़ों और हज़ारों अश्व देते हैं। वीर अश्विद्वय, वह स्तोता भरद्वाज को भी शीघ्र दें। बहुकर्मशाली अश्विनीकुमारो, राक्षस विनष्ट हों।

आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम् ॥ ११ ॥ ४ ॥

आ । वाम् । सुम्ने । वरिमन् । सूरिऽभिः । स्याम् ॥ ११ ॥ ४ ॥

हे अश्विनौ वरिमन् विस्तृते सुम्ने वां युवाभ्यां दत्ते सुखावहे धने जलापं सुम्नमिति सु-खनामसु पाठात् सूरिभिर्विद्वद्भिः सह आसमन्तात् स्यां भवेयं ॥ ११ ॥

११. अश्विद्वय, मैं, विद्वान् व्यक्तियों के साथ, तुम्हारे सुखद धन से परिवेष्टित बनूं।

॥ इति पंचमस्य प्रथमे चतुर्थो वर्गः ॥ ४ ॥

उदु श्रिय इति षळृचं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमुषोदेवताकं अनुक्रम्यते च—उदु-श्रिये षळुषस्यं तु इति प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दसि आश्विनशस्त्रे चैतदा-दिके द्वे सूक्ते सूत्र्यते हि—उदु श्रिय इति सूक्ते इति ।

तत्र प्रथमा—

उदुश्रियउषसोरोचमानाअस्थुरपांनोर्मयोरुशन्तः।
कृणोतिविश्वासुपथासुगान्यभूदुवस्वीदक्षिणामघोनी ॥ १ ॥

उत्। ऊँ इति। श्रिये। उषसः। रोचमानाः। अस्थुः। अपाम्।
न। ऊर्मयः। रुशन्तः। कृणोति। विश्वा। सुऽपथा। सुऽगानि।
अभूत्। ऊँ इति। वस्वी। दक्षिणा। मघोनी ॥ १ ॥

रोचमाना दीप्यमाना रुशन्तः शुक्लवर्णाः रुशदिति वर्णनामेति यास्कः[1] उषसः श्रिये जगतः शोभायै जगद्व्याप्तुं वा अपामूर्मयो न उदकसंबन्धिनस्तरंगाइव उदस्थुः उत्तिष्ठन्ति। अनन्तरमेकवन्निगमः उषाः विश्वा विश्वानि स्थानानि सुपथा सुमार्गाणि सुगानि सुखेन गम्यानि कृणोति करोति अथ च मघोनी धनवत्युषाः वस्वी प्रशस्ता दक्षिणा समर्धयित्री चाभूव ॥ १ ॥

१. दीप्तिमती और शुक्लवर्ण उषायें, शोभा के लिए, जल-लहरी की तरह, उत्थित होती हैं। समस्त स्थानों को उषा सुपथवाले और सरलता से जाने योग्य बनाती हैं। धनवती उषा प्रशस्ता और समृद्धिमती हैं।

भद्राददृक्षउर्वियाविभास्युत्तेशोचिर्भानवोद्यामपप्तन्।
आविर्वक्षःकृणुषेशुम्भमानोषोदेविरोचमानामहोभिः ॥ २ ॥

भद्रा। ददृक्षे। उर्विया। वि। भासि। उत्। ते। शोचिः।
भानवः। द्याम्। अपप्तन्। आविः। वक्षः। कृणुषे। शुम्भमाना।
उषः। देवि। रोचमाना। महःऽभिः ॥ २ ॥

हे उषो देवि भद्रा कल्याणी ददृक्षे दृश्यसे उर्विया विस्तीर्णा च विभासि ते तव शोचिः शोचिषः जसोलुक् दीप्यमाना भानवोरश्मयः द्यामन्तरिक्षं उदपप्तन् उत्पतन्ति। किं च हे उषोदेवि महोभिस्तेजोभिः शुंभमाना शोभमाना दीप्यमाना रोचमाना वक्षः त्वदीयं रूपं आविष्कृणुषे प्रकटीकरोषि ॥ २ ॥

२. उषादेवी, तुम कल्याणी की तरह दिखाई दे रही हो और विस्तृत होकर शोभा पा रही हो। तुम्हारी दीप्तिमती किरणें शोभा पा रही हैं। तुम्हारी दीप्तिमती किरणें अन्तरिक्ष में उठ रही हैं। तुम तेजों में शोभमाना और दीप्यमाना होकर रूप प्रकाश कर रही हो।

वहन्तिसीमरुणासोरुशन्तोगावःसुभगामुर्वियाप्रथानाम्।
अपेजतेशूरोअस्तेवशत्रून्बाधतेतमोअजिरोनवोळ्हा ॥ ३ ॥

---

[1] नि० २. २०.

वहन्ति । सीम् । अरुणासः । रुशन्तः । गावः । सुऽभगाम् । उर्विया । प्रथानाम् । अप । ईजते । शूरः । अस्ताऽइव । शत्रून् । बाधते । तमः । अजिरः । न । वोळ्हा ॥ ३ ॥

अरुणासो लोहितवर्णाःरुशन्तो दीप्यमाना गावः रश्मयःकिरणा गाव इति रश्मि नामसु पाठाव् सुभगां उर्विया उर्वीं विस्तीर्णां प्रथानां प्रथमानां सीमेनामुषोदेवतां वहन्ति सेयमुषो देवता शूरः अस्तेव वीरः क्षेप्तेव शत्रून् तमः अपेजते अपगमयति । वोळ्हा सेनायाः अजिरो न क्षिप्रगामी शत्रून् यथा वा तथा तमांसि बाधते च ॥ ३ ॥

३. लोहित-वर्ण और दीप्तिमान् रश्मियाँ सुभगा, विस्तीर्ण और प्रथमा उषा देवता को वहन करती हैं। जैसे शस्त्र फेंकने में निपुण वीर शत्रु को दूर करता है, वैसे ही उषा अन्धकार को दूर करती हैं तथा शीघ्र गामी सेनापति की तरह अन्धकार को रोकती हैं।

सुगोततेसुपथापर्वतेष्ववातेअपस्तरसिस्वभानो ।
सानआवहपृथुयामन्नृष्वेरयिंदिवोदुहितरिषयध्यै ॥ ४ ॥

सुऽगा । उत । ते । सुऽपथा । पर्वतेषु । अवाते । अपः । तरसि । स्वभानोइति स्वऽभानो । सा । नः । आ । वह । पृथुऽयामन् । ऋष्वे । रयिम् । दिवः । दुहितः । इषयध्यै ॥ ४ ॥

हे उषोदेवि पर्वतेषु उत दुर्गेष्वपि अवाते गमनसाधनरहिते देशे सुपथा सुपथानि मार्गाणि सुगा सुगानि सुखेन गम्यानि ते तव भवन्ति । स्वभानो हे स्वप्रकाश अपोन्तरिक्षं आकाशं आप इत्यन्तरिक्षनामसु पाठाव् सामुद्रिकीरपोवा तरसि । पृथुयामन् पृथुरथे ऋष्वे दर्शनीये दिवो दुहितः अन्तरिक्षसुते हे उषोदेवि सा त्वं इषयध्यै एषणीयं रयिं धनं नोस्मभ्यं आवह ॥४॥

४. पर्वत और वायुरहित प्रदेश तुम्हारे लिए सुपथ और सुगम हैं। हे स्वप्रकाश-युक्ता, तुम अन्तरिक्ष को पार कर डालती हो। विशाल रथवाली और सुदृश्य द्युलोक-दुहिता, हमें अभिलषणीय धन दो।

सावहयोक्षभिरवातोषोवरंवहसिजोषमनु ।
त्वंदिवोदुहितर्याहदेवीपूर्वहूतौमंहनादर्शताभूः ॥ ५ ॥

सा । आ । वह । या । उक्षऽभिः । अवाता । उषः । वरम् । वहसि । जोषम् । अनु । त्वम् । दिवः । दुहितः । या । ह । देवी । पूर्वऽहूतौ । मंहना । दर्शता । भूः ॥ ५ ॥

हे उषः सा त्वं वरं धनं मह्यमावह । या त्वं अवाता अप्रतिगता जोषं प्रीतिं अनु उक्षभिः अनडुद्भिरश्वैर्वा स्तोतृभ्योवरं वहसि। किं च हे दिवोदुहितः अन्तरिक्षसुते या त्वं देवी द्योतमाना पूर्वहूतौ प्रथमाह्वाने प्रातरनुवाके मंहना पूजनीया भवसि सा त्वं दर्शता दर्शनीया भूरिति द्योतना या दर्शताभूरित्यन्वये यद्वृत्तेन सामानाधिकरण्यात् भूरित्यस्य निघातो न स्यात् ॥ ५ ॥

५. उषा देवी मुझे धन दो। तुम अप्रतिगत होकर प्रीति-पूर्वक अश्व द्वारा धन ढोती हो। हे द्युलोकपुत्री तुम दीप्तमती हो। प्रथम आह्वान में पूजनीया हो। इसलिए तुम दर्शनीया होओ।

उत्तेवयश्चिद्वसतेरपप्तन्नरश्चयेपितुभाजोव्युष्टौ ।
अमासतेवहसिभूरिवाममुषोदेविदाशुषेमर्त्याय ॥ ६ ॥ ५ ॥

उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये ।
पितुऽभाजः । विऽउष्टौ । अमा । सते । वहसि । भूरि । वामम् ।
उषः । देवि । दाशुषे । मर्त्याय ॥ ६ ॥ ५ ॥

हे उषोदेवि ते तव व्युष्टौ सत्यां वयश्चित् पक्षिणोपि वसतेः निवासस्थानात् उदपप्तन् उत्पतन्ति ये पितुभाजो हविषां संभक्तारः अन्नस्योपार्जकावा पितुरित्यन्ननामसु पाठात् नरश्च तेपि चोत्पतन्ति किं च हे उषोदेवि त्वं अमा समीपे सते वर्तमानाय दाशुषे हविषां प्रदात्रे मर्त्याय भूरि प्रभूतं वामं धनं वहसि॥ ६ ॥

६. उषादेवी तुम्हारे प्रकट होने पर चिड़ियाँ घोसलों से निकलती हैं और अन्न के उपार्जक मनुष्य सोकर उठते हैं। समीप में वर्तमान हव्य-दाता मनुष्य को यथेष्ट धन देती हो।

॥ इति पंचमस्य प्रथमे पंचमो वर्गः ॥ ५ ॥

एषास्येति षळृचं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं अनुक्रम्यतेच एषास्येति उषस्यंत्विति पूर्वसूक्ते उक्तत्वात् इदमप्युषोदेवताकं प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्र प्रथमा—

एषास्यानोदुहितादिवोजाःक्षितीरुच्छन्तीमानुषीरजीगः ।
याभानुनारुशतारम्यास्वज्ञायितिरस्तमसश्चिदक्तून् ॥ १ ॥

एषा । स्या । नः । दुहिता । दिवःऽजाः । क्षितीः । उच्छन्तीः ।
मानुषीः । अजीगरिति । या । भानुना । रुशता । राम्यासु ।
अज्ञायि । तिरः । तमसः । चित् । अक्तून् ॥ १ ॥

एषा स्या सा दिवोजाः दिवोजाता अतएव दुहिता दिवः पुत्र्युषा नोस्मदर्थं उच्छंती तमांसि वर्जयन्ती क्षितीः प्रजाः मानुषी रजीगः उद्गिरति जीगर्तिर्गिरतिकर्मेवेति यास्कः प्रकाशयतीति यावत् या रुशता दीप्यमानेन भानुना युक्ता राम्यासु याम्यासु रात्रिषु रेफयकारयोर्व्यत्ययः अक्तून् नक्षत्रादि तेजांसि तमसश्चित् तमांसि च तिरस्तिरस्कुर्वंती अज्ञायि दृश्यते ॥ १ ॥

१. जो उषा दीप्तिमान् किरणों से युक्त होकर रात्रि में तेजःपदार्थ (नक्षत्रादि) और अन्धकार को तिरस्कृत करती दिखाई देती हैं, वही द्युलोकोत्पन्ना पुत्री उषा हमारे लिए अन्धकार दूर करके प्रजागण को प्रकाशित करती हैं। अथ द्वितीया—

वितद्ययुररुणयुग्भिरश्वैश्चित्रंभान्त्युषसश्चन्द्ररथाः ।
अग्रंयज्ञस्यबृहतोनयन्तीर्विताबाधन्तेतमऊर्म्यायाः ॥ २ ॥

वि । तत् । ययुः । अरुणयुक्ऽभिः । अश्वैः । चित्रम् । भान्ति । उषसः । चन्द्रऽरथाः । अग्रम् । यज्ञस्य । बृहतः । नयन्तीः । वि । ताः । बाधन्ते । तमः । ऊर्म्यायाः ॥ २ ॥

चन्द्ररथाःकान्तिरथाः चन्द्रश्चन्दतेःकान्तिकर्मणइति यास्कः । ता उषसः तत् तदानीं प्रातःकाले बृहतो बृंहणशीलस्य यज्ञस्य अग्रं मुखं नयन्तीः संपादयंत्यः अरुणयुग्भिररुणवर्णयुक्तैरश्वैः वियुयः विस्तीर्णं यान्ति चित्रं यथाभवति तथाभान्ति च ऊर्म्यायाः रात्रेः अक्तुः ऊर्म्येति रात्रिनामसु पाठात् तमो विबाधन्ते सम्यगपनयन्ति च ॥ २ ॥

२. कान्तियुक्त रथवाली उषादेवी उसी समय बृहत् यज्ञ का प्रथम चरण सम्पादित करके लाल रंग के घोड़ों से विस्तृत रूप से गमन करती हैं। वे विचित्र रूप से शोभा पाती हैं और रात्रि के अन्धकार को भली भाँति दूर हटाती हैं। अथ तृतीया—

श्रवोवाजमिषमूर्जंवहन्तीर्निदाशुषउषसोमर्त्याय ।
मघोनीर्वीरवत्पत्यमानाअवोधातविधतेरत्नमद्य ॥ ३ ॥

श्रवः । वाजम् । इषम् । ऊर्जम् । वहन्तीः । नि । दाशुषे । उषसः । मर्त्याय । मघोनीः । वीरऽवत् । पत्यमानाः । अवः । धात । विधते । रत्नम् । अद्य ॥ ३ ॥

हे उषसः दाशुषे हविषां दात्रे मर्त्याय श्रवःकीर्तिं वाजं बलं इषमन्नं ऊर्जं रसं च वहन्ती र्वहंत्योयूयं मघोनी धनवत्यः पत्यमाना गच्छन्त्यः अद्य विधते परिचरते मह्यं वीरवत् पुत्रपौत्रादिसहितं अवोन्नं सिनं अवेत्यन्ननामसु पाठात् रत्नं धनं च श्वात्रं रत्नमिति धननामसु पाठात् निधात नितरां धत्त ॥ ३ ॥

---

१ नि० ६.८. । २ नि० ११.५. ।

३. उषादेवियो, तुम हव्यदाता मनुष्य को कीर्त्ति, बल, अन्न और रस दान करती हो। तुम धनशालिनी और गमनशीला हो। आज परिचर्या करनेवाले को पुत्र-पौत्र आदि से युक्त अन्न और धन दो।

इदाहिवोविधतेरत्नमस्तीदावीरायदाशुषउषासः।
इदाविप्रायजरतेयदुक्थानिष्ममावतेवहथापुराचित्॥ ४ ॥

इदा। हि। वः। विधते। रत्नम्। अस्ति। इदा। वीराय। दाशुषे। उषसः। इदा। विप्राय। जरते। यत्। उक्था। नि। स्म। माऽवते। वहथ। पुरा। चित्॥ ४ ॥

हे उषः इदाहि इदानीमेव वोयुष्माकं विधते परिचरते दातुं रत्नं धनमस्ति इदाहि इदानीमेव वीराय प्रेरयित्रे हविषां दाशुषे यजमानाय दातुं वोरत्नमस्ति इदाहि इदानीमेव विप्राय प्राज्ञाय जरते स्तुवते दातुं वोरत्नमस्ति यद्यस्मिन् विप्रे उक्था उक्थनामकानि स्तोत्राणि विद्यन्ते मावते मत्सदृशाय यजमानाय तद्रत्नं निवहथ पुराचिव् पुरापि रत्नं मह्यं दत्तं॥ ४ ॥

४. उषा देवियो, तुम्हारी परिचर्या करनेवाले के लिए इस समय धन है। इस समय वीर हव्यदाता के लिए तुम्हारे पास धन है। इस समय प्राज्ञ स्तोता के लिए तुम्हारे पास धन है जिस विप्र में उक्थ नामक मन्त्र हैं, ऐसे मेरे समान व्यक्ति को, पहले की तरह, वही धन दो।

इदाहितंउषोअद्रिसानोगोत्रागवामङ्गिरसोगृणन्ति।
व्यर्१केणंबिभिदुर्ब्रह्मणाचसत्यानृणामभवद्देवहूतिः॥ ५ ॥

इदा। हि। ते। उषः। अद्रिसानो इत्यद्रिऽसानो। गोत्रा। गवाम्। अङ्गिरसः। गृणन्ति। वि। अर्केण। बिभिदुः। ब्रह्मणा। च। सत्य। नृणाम्। अभवत्। देवऽहूतिः॥ ५ ॥

हे उषः अद्रिसानो आदृतसानो ते तव प्रसादाव् इदाहि सद्यएवगवां गोत्रा संघान् अंगिरसो गृणन्ति सृजन्ति तथा च निगमान्तरं—गवां गोत्रमुदसृजोयदंगिरईति। अर्केण अर्चनीयेन ब्रह्मणा स्तोत्रेण वि बिभिदुः तमांसि विदारयन्ति च नृणां नेतॄणां तेषामंगिरसां देवहूतिर्देवविषयास्तुतिः सत्या सत्यफलाभवव्॥ ५ ॥

५. गिरितट-प्रिय उषादेवी, अङ्गिरा लोगों ने तुम्हारी कृपा से तुरत ही गायों को छोड़ दिया था और पूजनीय स्तोत्र-द्वारा अन्धकार का विनाश किया था। नेता अङ्गिरा लोगों की स्तुति सत्यफलवती हुई थी।

उच्छादिवोदुहितःप्रत्नवन्नोभरद्वाजवद्विधतेमघोनि।
सुवीरंरयिंगृणतेरिरीह्युरुगायमधिधेहिश्रवोनः॥ ६ ॥ ६ ॥

१ ऋ० सं० २. ६. ३२.।

उच्छ । दिवः । दुहितरिति । प्रत्नऽवत् । नः । भरद्वाजऽवत् ।
विधते । मघोनि । सुऽवीरम् । रयिम् । गृणते । रिरीहि ।
उरुऽगायम् । अधि । धेहि । श्रवः । नः ॥ ६ ॥ ६ ॥

हे दिवो दुहितरुषः प्रत्नवत् पुरातनेभ्य इव नोस्मदर्थं उच्छ तमांसि वर्जय । हे मघोनि भरद्वाजवत् विधते परिचरते भरद्वाजवदिति वचनात् अन्योप्यस्ति भरद्वाजः तथाच ब्राह्मणं—प्राणो वै भरद्वाजवदिति । गृणते स्तुतिं कुर्वते मह्यं सुवीरं कल्याणं पुत्रपौत्रादियुक्तं रयिं धनं रिरीहि देहि । किं च नोस्मभ्यं उरुगायं बहुभिर्गंतव्यं श्रवोन्नं अधिधेहि अधिकंप्रयच्छ ॥६॥

६. द्युलोक-पुत्री उषा, प्राचीन लोगों की तरह हमारे लिए अन्धकार दूर करो। धनशालिनी उषा, भरद्वाज की तरह स्तुति करनेवाले मुझे पुत्र-पौत्र आदि से युक्त धन दो। हमें अनेकों के गन्तव्य अन्न दो।

॥ इति पंचमस्य प्रथमे षष्ठो वर्गः ॥ ६ ॥

वपुर्न्वित्येकादशर्चं पंचमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं मारुतं तथा चानुक्रम्यते—वपुर्न्वेकादश मारुतमिति व्यूह्ळे दशरात्रे षष्ठेहन्याग्निमारुते इदं सूक्तं मारुतनिविद्धानं सूत्रितं च—हविष्पांतं वपुर्नुतदिति वैश्वदेवे पर्वणि मारुतसप्तकपालस्य प्रचित्रमर्कमिति याज्या प्रचित्रमर्कं गृणते नवानुयाज्या इति एकादशिने मारुते पशौ प्रचित्रमर्कमित्येषैव याज्या सूत्रितं च—प्रचित्रमर्कं गृणते तुरायाराइवेदचरमाअहेवेति।

तत्र प्रथमा—

वपुर्नुतच्चिकितुषेचिदस्तुसमानंनामधेनुपत्यमानम् ।
मर्तेष्वन्यद्दोहसेपीपायसकृच्छुक्रंदुदुहेपृश्निरूधः ॥ १ ॥

वपुः । नु । तत् । चिकितुषे । चित् । अस्तु । समानम् । नाम ।
धेनु । पत्यमानम् । मर्तेषु । अन्यत् । दोहसे । पीपाय ।
सकृत् । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥ १ ॥

तत्प्रसिद्धं समानमेकरूपं मरुतः सर्वदा समानरूपाः तथा च निगमान्तरं—अज्येष्ठासो अकनिष्ठासएतईति। नाम स्थिराणामपि नामकं धेनु प्रीणयितृ पत्यमानं सर्वदा गच्छत् वपुर्मरु-

---

१ तै०सं० ५. ३. । २ ऋ० सं० ४. ३. २५. ।

तां रूपं चिकितुषे विदुषे स्तोत्रे नु क्षिप्रं अस्तु प्रादुर्भवतु। चिदिति पूरकं किं च तद्रूपं मर्त्येषु मर्त्यलोके अन्यदोषधिवनस्पत्यादिकं दोहसे कामान् दोग्धुं पीपाय आप्याययति। किं च मरुतामेव निर्देशात् पृश्निरन्तरिक्षं सकृत्संवत्सरस्य वर्षासु शुक्रं शुक्लवर्णं ऊधः उदकं दुदुहे क्षरति ॥ १ ॥

१. मरुतों के समान, स्थिर पदार्थों में भी स्थिर प्रीतिकर और गतिपरायण रूप, विद्वान् स्तोता के निकट, शीघ्र प्रकट हो। वह अन्तरिक्ष में एक बार शुक्लवर्ण जल क्षरण करता और मर्त्यलोक में अन्य पदार्थ दोहन करने के लिए बढ़ता है।

ये अग्नयो न शोशुचन्निधाना द्विर्यत्त्रिर्मरुतो वावृधन्त।
अरेणवो हिरण्ययास एषां साकं नृम्णैः पौंस्येभिश्च भूवन् ॥ २ ॥

ये। अग्नयः। न। शोशुचन्। इधानाः। द्विः। यत्। त्रिः।
मरुतः। ववृधन्त। अरेणवः। हिरण्ययासः। एषाम्।
साकम्। नृम्णैः। पौंस्येभिः। च। भूवन् ॥ २ ॥

ये मरुतः इधानाः अग्नयो न समिध्यमानाः अग्नयइव शोशुचन् दीप्यन्ते यत् ये मरुतः द्विर्द्विगुणं त्रिस्त्रिगुणं च ववृधन्त इच्छानुरूपं वर्धन्ते। संहितायां दीर्घश्छान्दसः एषां मरुतां रथाः अरेणवो रेणुरहिताः हिरण्ययासो हिरण्मयालंकाराश्च भवन्ति। ते मरुतः नृम्णैर्धनैः पौंस्येभिर्बलैश्च साकं सार्धं भूवन् प्रादुर्भवन्ति। तथा च निगमान्तरं—ये पृषतीभिर्ऋष्टिभिरिति[1] ॥ २ ॥

२. जो धनी अग्नि के समान दीप्त होते हैं, जो इच्छानुसार द्विगुण और त्रिगुण बढ़ते हैं, उन मरुतों के रथ धूलि-शून्य और सुवर्णालङ्कारवाले हैं। वे ही मरुत् धन और बल के साथ प्रादुर्भूत होते हैं।

रुद्रस्य ये मीळ्हुषः सन्ति पुत्रा याँश्चो नु दाधृविर्भरध्यै।
विदे हि माता महो मही षा सेत्पृश्निः सुभ्वे गर्भमाधात् ॥ ३ ॥

रुद्रस्य। ये। मीळ्हुषः। सन्ति। पुत्राः। यान्। चो इति।
नु। दाधृविः। भरध्यै। विदे। हि। माता। महः। मही। सा। सा।
इत्। पृश्निः। सुऽभ्वे। गर्भम्। आ। अधात् ॥ ३ ॥

मीळ्हुषः सेक्तुः रुद्रस्य पुत्रा ये मरुतः सन्ति दाधृविः धरित्री पृश्निरन्तरिक्षं याँश्चो नु याँश्च मरुतो नु भरध्यै भर्तुं क्षमा भवति विदे हि सर्वज्ञाता हि महो महतामेषां माता सा पृश्निर्मही महती किं च सा पृश्निः सुभ्वे नृणां सम्यक्भवनाय गर्भमुदकं आधात् आदधाति ॥ ३ ॥

---

१ ऋ० स० १. ३. १२।

३. सेचनकारी रुद्र के जो मरुद्गण पुत्र हैं और जिनको धारण-कर्त्ता अन्तरिक्ष धारण करने में समर्थ है, उन्हीं महान् मरुतों की माता (पृश्नि) महती है। वह माता मनुष्योत्पत्ति के लिए गर्भ या जल धारण करती है।

नयईषन्तेजनुषोयान्वं१न्तःसन्तोवद्यानिपुनानाः।
निर्यद्दुह्रेशुचयोनुजोषमनुश्रियातन्वमुक्षमाणाः ॥ ४ ॥

न। ये। ईषन्ते। जनुषः। अया। नु। अन्तरिति। सन्तः।
अवद्यानि। पुनानाः। निः। यत्। दुह्रे। शुचयः। अनु।
जोषम्। अनु। श्रिया। तन्वम्। उक्षमाणाः ॥ ४ ॥

ये प्रसिद्धा मरुतः जनुषो जनान् स्तोतॄन् प्रति अया अयेन मनसा धनेन नेषन्ते नगच्छन्ति। किं तेषां रक्षणीयत्वाभावाद्गमनाभावः नेत्याह अन्तः सन्तः सर्वेषां हृदि वर्तमानाएव अवद्यानि पापानि पुनानाः शोधयन्तः तथा च निगमान्तरं—प्राणावैमरुतःस्वापयईति।अतः सर्वप्राणिनां हृदि वर्तमानानां तेषां गमनं नास्तीति अध्यात्मं प्राणरूपेणावस्थानं दर्शितं भवति। शीघ्रगामित्वं तु तेषामाधिदैवतरूपेणेति द्रष्टव्यं यद्यदा शुचयो दीप्यमाना मरुतः जोषमनु स्तोतॄणां काममनु निदुह्रे नितरां दुहंत्युदकं तथा श्रिया दीप्त्या अनु अनुगतास्तन्वं आत्मीयं शरीरं प्रकाशयन्तः उक्षमाणाः भूमिं सिंचन्तो भवन्ति। यद्वा तन्वं विस्तीर्णं यथा भवति तथोक्षमाणा भूमिं सिंचन्तो भवन्तीत्यर्थः ॥ ४ ॥

४. जो स्तोताओं के पास यान पर नहीं जाते; परन्तु उनके अन्तःकरण में रहकर पापों को विनष्ट करते हैं, जो दीप्तिमान् हैं, जो स्तोताओं की अभिलाषा के अनुसार जल दूह लेते हैं, जो दीप्तियुक्त होकर अपने को प्रकाशित करते हैं और भूमि को सींचते हैं।

मक्षूनयेषुदोहसेचिदयाआनामधृष्णुमारुतंदधानाः।
नयेस्तौनाअयासोमह्नानूचित्सुदानुरवयासदुग्रान् ॥ ५ ॥ ७ ॥

मक्षु। न। येषु। दोहसे। चित्। अयाः। आ। नाम। धृष्णु।
मारुतम्। दधानाः। न। ये। स्तौनाः। अयासः। मह्ना।
नु। चित्। सुऽदानुः। अव। यासत्। उग्रान् ॥ ५ ॥ ७ ॥

येषु प्रसिद्धेषु मरुत्सु धृष्णु धर्षकं मारुतं नाम मरुत्संज्ञकं शस्त्रं आदधानाः उच्चारयन्तः अयाः उपगच्छन्तः स्तोतारः मक्षु क्षिप्रं दोहसे कामान् दोग्धुं क्षमा भवन्ति। नेति संप्रत्यर्थे ये स्तौनाः स्तेनास्तिरोहितावा स्तोतुर्धनानामपहर्तारः अयासो गन्तारो भवन्ति। मह्ना म-

१ ऐ० ब्रा० ३. १६.।

हत्वेन युक्ताश्च भवन्ति । उग्रान् तान् क्रुद्धान् सुदानुः शोभनहविर्दानो यजमानः अवयासत् अवयजते अपगतक्रोधान्करोति नेति संप्रत्यर्थे ॥ ५ ॥

५. जिनको उद्देश्य करके इस समय समीपवर्ती स्तोता मरुत्संज्ञक शस्त्र का उच्चारण करते हुए शीघ्र मनोरथ प्राप्त करते हैं, जो अपहरण-कर्त्ता, गमनशील और महत्त्वयुक्त हैं, उन्हीं उग्र मरुतों को इस समय दान-कर्त्ता, यजमान क्रोध-शून्य करता है ।

॥ इति पंचमस्य प्रथमे सप्तमो वर्गः ॥ ७ ॥

तइदुग्राःशवसाधृष्णुषेणाउभेयुजन्तरोदसीसुमेके ।
अधस्मैषुरोदसीस्वशोचिरामवत्सुतस्थौनरोकः ॥ ६ ॥

ते । इत् । उग्राः । शवसा । धृष्णुऽसेनाः । उभे इति । युजन्त ।
रोदसी इति । सुमेके इतिसुऽमेके । अध । स्म । एषु । रोदसी ।
स्वऽशोचिः । आ । अमवत्ऽसु । तस्थौ । न । रोकः ॥ ६ ॥

ते मरुतः उग्राः शवसा बलेन वेगेन युक्ताः धृष्णुषेणा धर्षकसेनाः सुमेके सुरूपे उभे रोदसी द्यावापृथिव्यौ युजन्त योजयन्ति वृष्ट्या पृथिवीं तर्पयन्तीत्यभिप्रायः । अध स्म अपि च एषु मरुत्सु रोदसी रुद्रस्य पत्नी माध्यमिकीवाक् स्वशोचिः स्वदीप्तिर्वर्तते अमवत्सु बलवत्सु तेषु रोको दीप्तिर्बाधको वा नातस्थौ नतिष्ठति न निःसरत्येवेत्यर्थः ॥ ६ ॥

६. वे उग्र और बलशाली हैं । वे घर्षण करनेवाली सेना को सुरूपिणी द्यावा-पृथिवी के सहित योजित करते हैं । इनकी रोदसी (माध्यमिकी वाक्) स्वदीप्ति से संयुक्त है । इन बलवान् मरुतों में दीप्ति नहीं है ।

अनेनोवोमरुतोयामोअस्त्वनश्वश्चिद्यमजत्यरथीः ।
अनवसोअनभीशूरजस्तूर्विरोदसीपथ्यायातिसाधन् ॥ ७ ॥

अनेनः । वः । मरुतः । यामः । अस्तु । अनश्वः । चित् ।
यम् । अजति । अरथीः । अनवसः । अनभीशुः । रजःऽतूः ।
वि । रोदसी इति । पथ्याः । याति । साधन् ॥ ७ ॥

हे मरुतः वो युष्माकं संबन्धी यामो रथः अनेनः पापरहितं यथा भवति तथा अस्तु प्रादुर्भवतु । किं च यं यामं अरथीः रथिः सारथिः नरथिः अरथीः असारथिरपि स्तोता अजति प्रेरयति । स रथः अनश्वश्चित् अश्वरहितोपि अनवसः पथ्यदनरहितः अनभीशुः पाशरहितोपि रजस्तूः उदकस्य प्रेरकः साधन् स्तोतॄणां कामान् साधयन् रोदसी द्यावापृथिव्यौपथ्याः पथोन्तरिक्षमार्गान् वियाति विविधं गच्छति ॥ ७ ॥

७. मरुतो, तुम्हारा रथ पाप-रहित हो। सारथि न होकर भी स्तोता जिसे चलाता है, वही रथ अश्व-रहित होकर भी, भोजन-शून्य और पाश-रहित होकर भी, जल-प्रेरक और अभीष्टप्रद होकर द्यावा-पृथिवी और अन्तरिक्ष में गमन करता है।

नास्यंवर्तानतरुतान्वंस्तिमरुतोयमवंथवाजंसातौ।
तोकेवागोषुतनंयेयमप्सुसव्रजंदर्तापार्येअधद्योः ॥ ८ ॥

न। अस्य। वर्ता। न। तरुता। नु। अस्ति। मरुतः। यम्।
अवंथ। वाजंऽसातौ। तोके। वा। गोषु। तनंये। यम्।
अप्ऽसु। सः। व्रजम्। दर्ता। पार्ये। अध। द्योः ॥ ८ ॥

हे मरुतः वाजसातौ संग्रामे यमवथ रक्षथ। अस्य जनस्य वर्ता प्रेरको नास्ति अस्य तरुता नु हिंसिता च नास्ति अध अपि च तोके पुत्रे तनये पौत्रे धने वा गोषु वा अप्सु वा निमित्तभूतेषु यमवथ पार्ये संग्रामे द्योः दीप्तस्यापि विजिगीषोर्वा शत्रोः व्रजं गवां संघं दर्ता दारयिता भवति ॥ ८ ॥

८. मरुतो, तुम लोग संग्राम में जिसकी रक्षा करते हो, उसका कोई प्रेरक नहीं होता और न उसकी कोई हिंसा ही होती है। तुम पुत्र, पौत्र, गौ और जल के संचरण में जिसकी रक्षा करते हो, वह संग्राम में शत्रुओं के गो-समूह को विदीर्ण करता है।

प्रचित्रमर्कंगृणतेतुरायमारुतायस्वतंवसेभरध्वम्।
येसहांसिसहंसासहन्तेरेजंतेअग्नेपृथिवीमखेभ्यंः ॥ ९ ॥

प्र। चित्रम्। अर्कम्। गृणते। तुरायं। मारुताय। स्वऽतंवसे।
भरध्वम्। ये। सहांसि। सहंसा। सहंन्ते। रेजंते।
अग्ने। पृथिवी। मखेभ्यंः ॥ ९ ॥

हे अग्ने गृणते शब्दं कुर्वते स्तूयमानाय वा तुराय त्वरिताय स्वतवसे स्वभूतबलाय मारुताय मरुतां गणाय चित्रं दर्शनीयं अर्कमन्नं हविः स्वधा अर्क इत्यन्ननामसु पाठात् प्रभरध्वं त्वत्सहायभूता ऋत्विजः त्वं च सर्वे यूयं प्रभरत। यथा लोके बहुष्वेककार्यंकरेषु मुख्यमेकं संबोध्य यूयमेवं कुरुतेति प्रार्थना तद्वदत्रापि मुख्यमग्निमेकमेव संबोध्य प्रभरध्वमिति बहुवचनप्रयोगः ये मरुतः सहांसि शत्रूणां बलानि सहसा बलेन सहन्ते अभिभवन्ति। मखेभ्यो मंहनीयेभ्यो मरुद्भ्यो भयात् पृथिवी रेजते कंपते। मारुतायेति तद्धितवृत्तावन्तर्भूतानामपि मरुतां बुद्ध्या प्रविभागात् य इति प्रत्यवमर्शः यथा महाभाष्ये अथ शब्दानुशासनं केषां शब्दानामिति यथा वा लोके राजपुरुषइत्युक्ते कस्य राज्ञ इति ॥ ९ ॥

९. अग्नि, जो बल-द्वारा शत्रुओं का बल दबा देते हैं, जिन महान् मरुतों से पृथिवी काँपती है, उन्हीं शब्दकर्ता शीघ्र बलवान् मरुतों को दर्शनीय अन्न दो।

त्विषीमन्तोअध्वरस्येवदिद्युत्तृषुच्यवसोजुह्वो३नाग्नेः।
अर्चत्रयोधुनयोनवीराभ्राजज्जन्मानोमरुतोअधृष्टाः॥ १०॥

त्विषिऽमन्तः। अध्वरस्यऽइव। दिद्युत्। तृषुऽच्यवसः।
जुह्वः। न। अग्नेः। अर्चत्रयः। धुनयः। न। वीराः।
भ्राजत्ऽजन्मानः। मरुतः। अधृष्टाः॥ १०॥

मरुतः अध्वरस्येव यज्ञस्येव दिद्युत् द्योतमानाः तृषुच्यवसः क्षिप्रगमनाः अग्नेः जुह्वो न रश्मय इव त्विषीमन्तो दीप्तिमन्तः अर्चत्रयोर्चनीयाः धुनयो न सपत्नान् कंपयन्त इव वीराः शूराः भ्राजज्जन्मानः दीप्तशरीराः अधृष्टाः परैरनभिभूताश्च भवन्ति॥ १०॥

१०. मरुद्गण यज्ञ की तरह प्रकाशमान हैं। जो शीघ्रगामी अग्नि-शिखा की तरह दीप्तिमान और पूजनीय हैं, वे शत्रुओं के प्रकम्पक व्यक्तियों की तरह वीर, दीप्त शरीर से युक्त और अनभिभूत हैं।

तंवृधन्तंमारुतंभ्राजदृष्टिंरुद्रस्यसूनुंहवसाविवासे।
दिवःशर्धायशुचयोमनीषागिरयोनापउग्राअस्पृध्रन्॥ ११॥८॥

तम्। वृधन्तम्। मारुतम्। भ्राजत्ऽऋष्टिम्। रुद्रस्य।
सूनुम्। हवसा। आ। विवासे। दिवः। शर्धाय। शुचयः।
मनीषाः। गिरयः। न। आपः। उग्राः। अस्पृध्रन्॥ ११॥ ८॥

तं प्रसिद्धं वृधन्तं वर्धमानं भ्राजदृष्टिं भ्राजमानर्ष्टिं रुद्रस्य सूनुं पुत्रं मारुतं मरुद्गणं हवसा स्तोत्रेण आविवासे परिचरामि। किंच दिवः स्तोतुः शुचयो निर्मलाः मनीषाः स्तुतयः उग्राः उद्गूर्णाः शर्धाय मारुताय बलाय त्वक्षः शर्ध इति बलनामसु पाठात् आपः आप्नुवन्तः गिरयो न मेघाइव गिरिः व्रज इति मेघनामसु पाठात् अस्पृध्रन् अस्पर्धन्त॥ ११॥

११. मैं उन्हीं वर्द्धमान और दीप्तिमान्, खड्ग से युक्त रुद्रपुत्र मरुतों की स्तोत्र-द्वारा परिचर्या करता हूँ। स्तोता की निर्मल स्तुतियाँ उग्र होकर मेघ की तरह मरुतों के बल की बराबरी करती हैं।

॥ इति पंचमस्य प्रथमे ष्टमो वर्गः॥ ८॥

विश्वेषांव इत्येकादशर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं मैत्रावरुणं तथा चानुक्रम्यते—विश्वेषां मैत्रावरुणमिति सूक्तविनियोगो लैंगिकः मैत्रावरुणे पशौ आयातं मित्रावरुणेति पशुपुरोडाशस्यानुवाक्या सूत्रितं च—आयातंमित्रावरुणासुशस्त्यानोमित्रावरुणाहव्यजुष्टिमिति। व्यूढे दशरात्रे सप्तमे हनि प्रउगशस्त्रे प्रयद्वामिति मैत्रावरुणस्तृतीयस्तृचः तथा च सूत्रितं—प्रयद्वां मित्रावरुणास्पूर्धन्नागोमतानासत्यारथेनेति।

तत्र प्रथमा—

विश्वेषांवःसतांज्येष्ठतमागीर्भिर्मित्रावरुणावावृधध्यै ।
संयारश्मेवयमतुर्यमिष्ठाद्वाजनाँअसमाबाहुभिःस्वैः ॥ १ ॥

विश्वेषाम् । वः । सताम् । ज्येष्ठऽतमा । गीःऽभिः । मित्रावरुणा । ववृधध्यै । सम् । या । रश्माऽइव । यमतुः । यमिष्ठा । द्वा । जनान् । असमा । बाहुऽभिः । स्वैः ॥ १ ॥

विश्वेषां सतां मध्ये ज्येष्ठतमा ज्येष्ठतमौ मित्रावरुणौ वः वां गीर्भिः स्तुतिभिः ववृधध्यै वर्धयितुं प्रवृत्तोस्मि या यौ द्वा द्वौ सहितौ असमा विषमौ त्रिरश्रिहन्तिचतुरश्रिरुग्रइति निगमान्तरेण साम्यं दर्शितं यमिष्ठा यन्तृतमौ स्वै रात्मीयै र्बाहुभिः रश्मेव रश्मिनेव अश्वान् जनान् संयमतुः संगच्छतः बाहुभिरिति बहुवचनं पूजार्थं ॥ १ ॥

१. सारे विश्व में श्रेष्ठ मित्र और वरुण, तुम्हें मैं स्तुति-द्वारा वर्द्धित करता हूँ। तुम दोनों विषम और यन्तृ-श्रेष्ठ हो। रज्जु की तरह अपनी भुजाओं-द्वारा तुम मनुष्यों को संयत करते हो।

इयंमद्वांप्रस्तृणीतेमनीषोपप्रियानमसाबर्हिरच्छ ।
यन्तंनोमित्रावरुणावधृष्टंछर्दिर्यद्वांवरूथ्यंसुदानू ॥ २ ॥

इयम् । मत् । वाम् । प्र । स्तृणीते । मनीषा । उप । प्रिया । नमसा । बर्हिः । अच्छ । यन्तम् । नः । मित्रावरुणौ । अधृष्टम् । छर्दिः । यत् । वाम् । वरूथ्यम् । सुदानु इतिसुऽदानू ॥ २ ॥

हे मित्रावरुणौ वां युवां मत् मम इयं मनीषा स्तुतिः प्रस्तृणीते प्रच्छादयति । प्रिया हे प्रियौ युवां नमसा अन्नेन हविषा सहोपगच्छति च । युवयोः बर्हिः यज्ञमच्छ अभिगच्छति च । हे मित्रावरुणौ नोस्मभ्यं अधृष्टं अनभिभूतं छर्दिर्गृहं यंतं प्रयच्छतं हे सुदानू शोभनदानौ वां युवयोः संबन्धि युवाभ्यां देयं यद्गृहं वरूथ्यं शीतवातातपानां वारयितृ भवति ॥ २ ॥

२. प्रिय मित्र और वरुण, हमारी यही स्तुति तुम्हें प्रच्छादित करती है। हव्य के साथ तुम्हारे पास यही स्तुति जाती है और तुम्हारे यज्ञ की ओर जाती है। हे सुन्दर दानवाले मित्र और वरुण, हमें शीत आदि का निवारक और अनभिभूत गृह दो।

आयातंमित्रावरुणासुशस्त्युपप्रियानमसाहूयमाना ।
संयावप्नस्थोअपसेवजनाञ्छ्रुधीयतश्चिद्यतथोमहित्वा ॥ ३ ॥

---

१ ऋ० सं० २, २, २२.।

आ । यातम् । मित्रावरुणा । सुऽशस्ति । उप । प्रिया । नमसा ।
हूयमाना । सम् । यौ । अप्नःऽस्थः । अपसाऽइव । जनान् ।
श्रुधिऽयतः । चित् । यतथः । महिऽत्वा ॥ ३ ॥

हे मित्रावरुणौ सुशस्ति शोभनशंसनं नमसा अन्नेन हविषा स्तोत्रेण हूयमाना स्तूयमानौ प्रिया विश्वस्य प्रियौ उपायातं उपागच्छतं । यौ महित्वा महत्वेनयुक्तौ युवां श्रुधीयतः श्रुधि-मन्नं यशोवा आत्मनइच्छतो जनान् अप्नःस्थः कर्मण्यधिकृतः पुरुषः अपः अप्नइति कर्मनामसु पाठात् अपसेव कर्मणेव संयतथः संगच्छथः ॥ ३ ॥

३. प्रिय मित्र और वरुण, अन्न और स्तोत्र-द्वारा आहूत होकर आओ। जैसे कर्म-नियुक्त कर्म-द्वारा अन्नार्थी व्यक्तियों को संयत करता है, वैसे ही तुम भी अपनी महिमा-द्वारा करो।

अश्वानयावाजिनापूतबन्धूऋतायद्गर्भमदितिर्भरध्यै ।
प्रयामहिमहान्ताजायमानाघोरामर्तायरिपवेनिदीधः ॥ ४ ॥

अश्वा । न । या । वाजिना । पूतबन्धू इति पूतऽबन्धू । ऋता ।
यत् । गर्भम् । अदितिः । भरध्यै । प्र । या । महि । महान्ता ।
जायमाना । घोरा । मर्ताय । रिपवे । नि । दीधरितिदीधः ॥ ४ ॥

या यौ अश्वान अश्वाविव वाजिना वाजिनौ बलिनौ पूतबन्धू पूतस्तोत्रौ ऋता सत्यौ च यत् यौ गर्भं गर्भभूतौ अदितिर्देवी भरध्यै बभार। किं च या यौ जायमाना जायमानायेव महि महतो महान्ता महत्तरौ प्रभूतौ मित्रावरुणौ मर्ताय मर्त्याय रिपवे हिंसकाय घोरा घोरौ घातकौ निदीधः निदधार अदितिः स्वोदरे ॥ ४ ॥

४. जो अश्व की तरह बली, पवित्र स्तोत्र से युक्त और सत्यरूप हैं, उन्हीं गर्भभूत मित्र और वरुण को अदिति ने धारण किया था। जन्म लेने के साथ ही जो महान् से भी महान् और हिंसक मनुष्य के घातक हुए, उन्हें अदिति ने धारण किया था।

अथपंचमी—

विश्वेयद्वांमंहनामन्दमानाःक्षत्रंदेवासोअदधुःसजोषाः ।
परियद्भूथोरोदसीचिदुर्वीसन्तिस्पशोअदब्धासोअमूराः ॥५॥१॥

विश्वे । यत् । वाम् । मंहना । मन्दमानाः । क्षत्रम् । देवासः । अदधुः ।
सऽजोषाः । परि । यत् । भूथः । रोदसी इति । चित् । उर्वी इति ।
सन्ति । स्पशः । अदब्धासः । अमूराः ॥ ५ ॥ १ ॥

विश्वे सर्वे देवासो देवाः सजोषाः परस्परं प्रीतियुक्ताः यत् यौ वां युवां मंहना महत्वेन मंदमानाः स्तुवन्तः क्षत्रं बलमदधुः धत्तवन्तः । किं च यत् यौ युवां उर्वी विस्तीर्णे रोदसी द्यावापृथिव्यौ परिभूथः परिभवथः । तयोर्युवयोः अदब्धासः अहिंसिताः अमूराः अमूढाः स्पशः रश्मयश्चरा वा सन्ति ॥ ५ ॥

५. परस्पर प्रीतियुक्त होकर समस्त देवों ने, तुम्हारी महिमा का कीर्त्तन करते हुए, बल धारण किया है। तुम लोग विस्तीर्ण द्यावापृथिवी को परिभूत करते हो। तुम्हारी रश्मि अहिंसित और अगूढ़ हैं।

॥ इति पंचमस्य प्रथमे नवमो वर्गः ॥ ९ ॥

ताहिक्षत्रंधारयेथेअनुद्यून्दृंहेथेसानुमुपमादिवद्योः ।
दृह्ळोनक्षत्रउतविश्वदेवोभूमिमातान्द्यांधासिनायोः ॥ ६ ॥

ता । हि । क्षत्रम् । धारयेथे इति । अनु । द्यून् । दृंहेथे इति । सानुम् । उपमात्ऽइव । द्योः । दृह्ळः । नक्षत्रः । उत । विश्वऽदेवः । भूमिम् । आ । अतान् । द्याम् । धासिना । आयोः ॥ ६ ॥

ता तौ मित्रावरुणौ युवां अनुद्यून् दिवसेदिवसे क्षत्रं बलं धारयेथेहि । द्योरन्तरिक्षस्य सानुं समुच्छ्रितप्रदेशं मेघं सूर्यं वा दृंहेथे दृढीकुरुतं । उपमादिव उपमीयते प्रक्षिप्यते इत्युपमात् स्थूणा सा यथावत्सं धारयति तद्वत् इत्यर्थः । दृह्ळः युवाभ्यां दृढीकृतश्च मेघो नक्षत्रः अन्तरिक्षं व्याप्नुवानः उत अपि च विश्वदेवः सूर्यो भूमिं द्यां दिवं च आयोर्मनुष्यस्य द्रुह्यव आयव इति मनुष्यनामसु पाठात् धासिना अन्नेन हविषा क्षुत् धासिरित्यन्ननामसु पाठात् आप्यायितःसन् आ अतान् आतनोति युवाभ्यां दृढीकृतएव ॥ ६ ॥

६. तुम प्रतिदिन बल धारण करते हो। अन्तरिक्ष के उन्नत प्रदेश (मेघ अथवा सूर्य) को खूंटे की तरह दृढ़ रूप से धारण करो। तुम्हारे द्वारा दृढ़ीकृत मेघ अन्तरिक्ष में व्याप्त होता है और विश्वदेव (सूर्य) मनुष्य के हव्य से तृप्त होकर भूमि और द्युलोक में व्याप्त होते हैं।

अथ सप्तमी—

ताविग्रंधैथेजठरंपृणध्याआयत्सद्मसभृतयःपृणन्ति ।
नमृष्यन्तेयुवतयोवाताविय्त्पयोविश्वजिन्वाभरन्ते ॥ ७ ॥

ता । विग्रम् । धैथे इति । जठरम् । पृणध्यै । आ । यत् । सद्म । सऽभृतयः । पृणन्ति । न । मृष्यन्ते । युवतयः । अवाताः । वि । यत् । पयः । विश्वऽजिन्वा । भरन्ते ॥ ७ ॥

ता तौ मित्रावरुणौ युवां विप्रं प्राज्ञं यजमानं विप्रः विप्र इति मेधाविनामसु पाठात् धे-थे धारयथः। जठरमुदरं पृणध्यै सोमेन पूरयितुं यद्यदा सभृतयः सहभ्रियमाणा ऋत्विजः सद्म यज्ञसदनं आपृणन्ति आपूरयन्ति। विश्वजिन्वा हे विश्वजिन्वानौ यद्यदा पयो जलं भ-वद्भ्यां महितं तदा युवतयो नद्यो दिशो वा न मृष्यन्ते रजसानाभिभूयन्ते। अवाताः अशुष्का अविरमन्ते विभूतिं धारयन्ति ॥ ७ ॥

७. सोम-द्वारा उदर पूर्ण करने के लिए तुम लोग प्राज्ञ व्यक्ति को धारण करते हो। हे विश्वजिन्वा मित्र और वरुण, जिस समय ऋत्विक् लोग यज्ञ-गृह पूर्ण करते हैं और तुम जल भेजते हो, उस समय युवतियाँ (नदियाँ अथवा दिशायें) धूलि से नहीं भरतीं; परञ्च अशुष्क और अवात होकर विभूति धारण करती हैं।

ताजिह्वयासदमेदंसुमेधाआयद्वांसत्योअरतिर्ऋतेभूत्।
तद्वांमहित्वंघृतान्नावस्तुयुवंदाशुषेविचयिष्टमंहः ॥ ८ ॥

ता। जिह्वया। सदम्। आ। इदम्। सुऽमेधाः। आ। यत्।
वाम्। सत्यः। अरतिः। ऋते। भूत्। तत्। वाम्। महिऽत्वम्।
घृतऽअन्नौ। अस्तु। युवम्। दाशुषे। वि। चयिष्टम्। अंहः ॥ ८ ॥

ता तौ मित्रावरुणौ युवां सुमेधाः प्राज्ञः जिह्वया वाचा सदं सर्वदा इदं जलं आया-चते। आ इत्युपसर्गदर्शनाद्योग्यक्रियाध्याहाराद्याचतइत्यध्याह्रियते। पूर्वस्यामृचि जलस्य प्रकृतत्वात् बुद्धौ विपरिवर्तमानं जलं इदंशब्देन परामृश्यते। यद्यदा वां युवयोररति रभिगन्ता ऋते यज्ञे सत्यो मायारहितः आभूत् आभवति। हे घृतान्नौ तन्महित्व-मपेक्षितप्रदातृत्वलक्षणं वां युवयोरस्तु किं च युवं युवां दाशुषे दाशुषो यजमानस्य षष्ठ्य-र्थे चतुर्थी अंहः पापं विचयिष्टं विनाशयतमित्यर्थः ॥ ८ ॥

८. मेधावी व्यक्ति तुमसे सदा वचन-द्वारा इस जल की याचना करता है। हे घृतान्नयुक्त मित्र और वरुण, जैसे तुम्हारा अभिगन्ता यज्ञ में माया-रहित होता है, वैसे ही तुम्हारी महिमा हो। हव्यदाता का पाप विनष्ट करो।

प्रयद्वांमित्रावरुणास्पूर्धन्प्रियाधामयुवधितामिनन्ति।
नयेदेवासओहसानमर्ताअयज्ञसाचोअप्योनपुत्राः ॥ ९ ॥

प्र। यत्। वाम्। मित्रावरुणा। स्पूर्धन्। प्रिया। धाम।
युवऽधिता। मिनन्ति। न। ये। देवासः। ओहसा। न।
मर्ताः। अयज्ञऽसाचः। अप्यः। न। पुत्राः ॥ ९ ॥

हे मित्रावरुणौ वां युवयोः प्रिया प्रियाणि धाम धामानि कर्माणि युवधिता युवाभ्यां विहितानि यद् ये यजन्तौ जना स्पूर्धन् स्पर्धमानाः प्रमिनन्ति हिंसन्ति। ये च देवासो देवाः ओहसा वहनसाधनेन स्तोत्रेण युज्यन्ते मर्ता मनुष्याश्च ओहसा न युज्यन्ते ये च अप्यः अपः कर्म तद्वन्तः अयज्ञसाचः यज्ञयुक्ता न वृथा कर्माणि कुर्वन्त इत्यर्थः। ये च न पुत्राः पृणन्तीतिपुत्राः न पुत्राः अपृणन्त इत्यर्थः तान् सर्वान्विचयिष्टमित्यनुषज्यते ॥ ९ ॥

९. मित्र और वरुण, जो लोग स्पर्द्धा करके तुम्हारे द्वारा विहित और तुम्हारे प्रिय कर्म में विघ्न करते हैं, जो देवता और मनुष्य स्तोत्र-रहित हैं, जो कर्मशील होकर भी यज्ञ-सम्पन्न नहीं हैं और जो पुत्र-रूप नहीं हैं, उन्हें विनष्ट करो।

वियद्वाचंकीस्तासोभरन्तेशंसन्तिकेचिन्निविदोमनानाः।
आद्वांब्रवामसत्यान्युक्थानकिर्देवेभिर्यतथोमहित्वा ॥ १० ॥

वि। यत्। वाचम्। कीस्तासः। भरन्ते। शंसन्ति। के। चित्।
निऽविदः। मनानाः। आत्। वाम्। ब्रवाम। सत्यानि। उक्था।
नकिः। देवेभिः। यतथः। महिऽत्वा ॥ १० ॥

यद्यदा कीस्तासो मेधाविनः उद्गातारः उशिजःकीस्तास इतिमेधाविनामसु पाठात् वाचं स्तुतिं विभरन्ते पृथगुच्चारयन्ति तदा केचिद्बह्वृचाः मनानाः अभ्यादींस्तुवन्तः निविदः शंसन्ति आत् तथा सति वां युवाभ्यां सत्यान्युक्थानि स्तोत्राणि वयं ब्रवाम महित्वा महत्वेन देवेभिरन्यैर्देवैः सह नकिर्यतथः न गच्छथः ॥ १० ॥

१०. जिस समय मेधावी लोग स्तुति का उच्चारण करते हैं, कोई-कोई स्तुति करते हुए सूक्तपाठ करते हैं, और जब हम, तुम्हें लक्ष्यकर, सत्य मन्त्रों का पाठ करते हैं, उस समय तुम लोग महिमान्वित होकर देवों के साथ नहीं चला जाना।

अवोरित्थावांछर्दिषोअभिष्टौयुवोर्मित्रावरुणावस्कृधोयु।
अनुयद्गावस्फुरानृजिप्यंधृष्णुंयद्रणेवृषणंयुनजन् ॥ ११ ॥ १० ॥

अवोः। इत्था। वाम्। छर्दिषः। अभिष्टौ। युवोः। मित्रावरुणौ।
अस्कृधोयु। अनु। यत्। गावः। स्फुरान्। ऋजिप्यम्।
धृष्णुम्। यत्। रणे। वृषणम्। युनजन् ॥ ११ ॥ १० ॥

हे मित्रावरुणौ अवोः अवतोर्वां युवयोरभिष्टौ अभिगमने छर्दिषः गृहाय सुखाय वा चतुर्थ्यर्थे षष्ठी युवामभिगतेषु स्तोतृषु युवोः युवयोः संबन्धि युवाभ्यां देयं तद्गृहादिकं अस्कृधोयु अविच्छिन्नं भवति। तथा च यास्कः अस्कृधोयुरकृध्वायुःकृध्वितिह्रस्वनामनिकृत्तंभवती-

तिं। इत्था सत्यमेव कदा मित्रावरुणयोरभिगमनं इत्यतआह यद्यदा गावः स्तुतयः अनुस्फुरान् अनुस्फुरेयुः यदाच ऋजिप्यं ऋजुगामिनं धृष्णुं शत्रूणां धर्षकं वृषणं कामानां वर्षितारं सोमं रणे रमणे यज्ञे यनजन् यजमाना यंज्यः ॥ ११ ॥

११. रक्षक वरुण और मित्र, जिस समय स्तुतियाँ उच्चारित होती हैं और जब सरलगामी, धर्षक तथा अभीष्टवर्षी सोम को यज्ञ में संयुक्त किया जाता है, उस समय गृह-दान के लिए तुम्हारे आने पर तुम्हारा दातव्य गृह अविच्छिन्न होता है, यह सत्य है।

॥ इति पंचमस्य प्रथमे दशमो वर्गः ॥ १० ॥

श्रुष्टीवामित्येकादशर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रावरुणं तथाचानुक्रम्यते—श्रुष्टीवामैन्द्रावरुणमुपांत्येजगत्याविति। प्रसम्राजे इन्द्रावरुणासुतपावित्येते जगत्यौ शिष्टास्त्रिष्टुभः इन्द्रावरुणौ देवता आभिप्लविकेषूक्थ्येषु तृतीयसवने होत्रकशस्त्रेषु स्तोमवृद्धौ मैत्रावरुणस्येदमावापार्थं सूक्तं सूत्रितं च—श्रुष्टीवांयज्ञोयुवांनरेति। तृतीयसवने इन्द्रावरुणासुतपाविमंसुतमितिप्रशास्तुःप्रस्थितयाज्या सूत्रितं च—इन्द्रावरुणासुतपाविमंसुतमिन्द्रश्चसोमंपिबतबृहस्पतइति। उक्थ्ये तृतीयसवने इन्द्रावरुणामधुमत्तमस्येति। मैत्रावरुणस्य शस्त्रयाज्या सूत्रितं च इन्द्रावरुणा मधुमस्येतियाज्येति।

श्रुष्टीवांयज्ञउद्यतःसजोषामनुष्वद्वृक्तबर्हिषोयजध्यै।
आयइन्द्रावरुणाविषेअद्यमहेसुम्नायमहआववर्तत् ॥ १ ॥

श्रुष्टी। वाम्। यज्ञः। उत्ऽयतः। सऽजोषाः। मनुष्वत्।
वृक्तऽबर्हिषः। यजध्यै। आ। यः। इन्द्रावरुणौ।
इषे। अद्य। महे। सुम्नाय। महे। आऽववर्तत् ॥ १ ॥

महे मंहनीयौ हे इन्द्रावरुणौ वां युवयोरर्थे श्रुष्टी क्षिप्रः तथा च यास्कः—श्रुष्टीति क्षिप्रनाम श्रु अष्टीति[1]। यज्ञः सोमः सजोषाः ऋत्विग्भिः सहितः अद्य आसमन्तात् उद्यतः प्रवृत्तः यः सोमः मनुष्वत् मनोरिव वृक्तबर्हिषः स्तीर्णबर्हिषो यजमानस्य इषोन्नार्थं[2] महे महते सुम्नाय सुखाय च यजध्यै यष्टुं वां आववर्तत् आवर्तयंति ॥ १ ॥

१. महान् इन्द्र और वरुण, मनु की तरह कुश-विस्तारक यजमान के अन्न और सुख के लिए जो यज्ञ आरम्भ होता है, आज, तुम लोगों के लिए, वही क्षिप्र यज्ञ ऋत्विकों-द्वारा प्रवृत्त किया गया है।

ताहिश्रेष्ठादेवतातातुजाशूराणांशविष्ठाताहिभूतम्।
मघोनांमंहिष्ठातुविशुष्मऋतेनवृत्रतुरासर्वसेना ॥ २ ॥

---

१ नि० ६. ३.। २ नि० ६. १२.।

ता । हि । श्रेष्ठा । देवऽताता । तुजा । शूराणाम् ।
शविष्ठा । ता । हि । भूतम् । मघोनाम् । मंहिष्ठा ।
तुविऽशुष्मा । ऋतेन । वृत्रऽतुरा । सर्वऽसेना ॥ २ ॥

हे इन्द्रावरुणौ ता तौ प्रसिद्धौ युवां श्रेष्ठा श्रेष्ठौ देवताता देवतातौ यज्ञे इष्टिर्देवतेति यज्ञनामसु पाठात् तुजा धनानां प्रेरकौ हि भूतं भवतं। किं च ता तौ हि युवां शूराणां मध्ये शविष्ठा अतिशयेन बलवन्तौ भूतं किं च मघोनां दानवतां मंहिष्ठा दातृतमौ तुविशुष्मा बहुबलौ ऋतेन सत्येन वृत्रतुरा शत्रूणां हिंसकौ सर्वसेना कृत्स्नसेनौ च भूतमिति ॥ २ ॥

२. तुम श्रेष्ठ हो, यज्ञ में धन देनेवाले हो और वीरों में अतीव बलवान् हो। दाताओं में श्रेष्ठ दाता तथा बहु-बलशाली सत्य के द्वारा शत्रुओं के हिंसक और सब प्रकार की सेनाओंवाले हो।

तागृणीहिनमस्येभिःशूषैःसुम्नेभिरिन्द्रावरुणाचकाना ।
वज्रेणान्यःशवसाहन्तिवृत्रंसिषक्त्यन्योवृजनेषुविप्रः ॥ ३ ॥

ता । गृणीहि । नमस्येभिः । शूषैः । सुम्नेभिः । इन्द्रावरुणा ।
चकाना । वज्रेण । अन्यः । शवसा । हन्ति ।
वृत्रम् । सिसक्ति । अन्यः । वृजनेषु । विप्रः ॥ ३ ॥

हे भरद्वाज नमस्येभिः स्तुत्यैः शूषैः बलैः शूषमिति बलनामसु पाठात् सुम्नेभिः सुखैश्च सर्वैश्चकाना स्तुतौ कायतिः शब्दकर्मा तस्य लिटः कानचि रूपमिदं ता तौ इन्द्रावरुणौ गृणीहि स्तुहि। अन्यः तयोरन्यइन्द्रः वृत्रं वृत्रनामकमसुरं वज्रेण हन्ति। अन्योवरुणः विप्रः प्राज्ञः वृजनेषु स्तोतॄणामुपद्रवेषु रक्षितुं शवसा बलेन सिषक्ति संगच्छते ॥ ३ ॥

३. स्तुति, बल और सुख के द्वारा स्तुत इन्द्र और वरुण की स्तुति करो। उनमें से एक (इन्द्र) वृत्र का वध करते हैं, दूसरे प्रजा में युक्त (वरुण) उपद्रवों से रक्षा करने के लिए बलशाली होते हैं।

ग्नाश्चयंनरश्चवावृधन्तविश्वेदेवासोनरांस्वगूर्ताः ।
प्रैभ्यइन्द्रावरुणामहित्वाद्यौश्चपृथिविभूतमुर्वी ॥ ४ ॥

ग्नाः । च । यत् । नरः । च । ववृधन्त । विश्वे । देवासः ।
नराम् । स्वऽगूर्ताः । प्र । एभ्यः । इन्द्रावरुणा । महिऽत्वा ।
द्यौः । च । पृथिवि । भूतम् । उर्वी इति ॥ ४ ॥

नरां नृणां मनुष्याणां मध्ये ग्नाश्च स्त्रियश्च मेना ग्ना इति स्त्रीणामिति यास्कवचनात्। नरश्च पुरुषाश्च विश्वे सर्वे देवासो देवाः देवास इत्यत्र पुमान् स्त्रियेत्येकशेषात् देव्यश्च देवाश्च देवास इति निर्देशः पुंवन्निर्देशः स्वगूर्ताः स्वयमुद्यताः यद्यदा ववृधन्त स्तुतिभिर्वर्धयन्ते। तदा हे इन्द्रावरुणौ महित्वा महत्वयुक्तौ एभ्यः स्तोतृभ्यः प्रभूतं प्रभवतं हे द्यौः पृथिवि च उभे उर्वी विस्तीर्णे युवां एभ्यः प्रभूतमित्यनुषंगः ॥ ४ ॥

४. इन्द्र और वरुण; मनुष्यों में पुरुष और स्त्री एवम् समस्त देवगण स्वतः उद्यत होकर जब तुम्हें स्तुति-द्वारा वर्द्धित करते हैं, तब महिमान्वित होकर तुम लोग उनके प्रभु बनो। विस्तीर्ण द्यावापृथिवी, तुम इनके प्रभु बनो।

सइत्सुदानुस्ववाँऋतावेन्द्रायोवांवरुणदाशतित्मन्।
इषासद्विषस्तरेद्दास्वान्वंसद्रयिंरयिवतश्चजनान्॥ ५ ॥ ११ ॥

सः। इत्। सुऽदानुः। स्वऽवान्। ऋतऽवा। इन्द्रा। यः।
वां। वरुणा। दाशति। त्मन्। इषा। सः। द्विषः। तरेत्।
दास्वान्। वंसत्। रयिं। रयिऽवतः। च। जनान्॥ ५ ॥ ११ ॥

हे इन्द्रा इन्द्रौ वरुणा हे वरुणौ इतरेतरयोगादुभयत्रद्विवचनप्रयोगः वरुणेत्यत्र संहितायां ह्रस्वश्छान्दसः वां युवाभ्यां यो यजमानः त्मन् आत्मनैव दाशति हवींषि ददाति। स इत् स एव सुदानुः शोभनदानो भवति। स्ववान् धनवांश्च ऋतावा यज्ञवांश्च भवति। किं च सः दास्वान् दानवान् द्विषो द्वेष्टुः इषा अन्नेन जयलब्धेन सह तरेत् प्राप्येत। अपि च रयिं धनं रयिवतो धनवतो जनान् पुत्रांश्च वंसत् संभजेत्॥ ५ ॥

५. इन्द्र और वरुण, जो यजमान तुम्हें स्वयं हवि देता है, वह सुन्दर दानवाला धनवान् और यज्ञशाली होता है। वही दाता, जय-प्राप्त अन्न के साथ, शत्रु के हाथ से उद्धार पाता तथा धन और सम्पत्ति-शाली पुत्र प्राप्त करता है।

॥ इति पंचमस्य प्रथमे एकादशो वर्गः ॥ ११ ॥

यंयुवंदाश्वध्वरायदेवारयिंधत्थोवसुमन्तंपुरुक्षुम्।
अस्मेसइन्द्रावरुणावपिष्यात्प्रयोभनक्तिवनुषामशस्तीः॥ ६ ॥

यम्। युवम्। दाशुऽअध्वराय। देवा। रयिम्। धत्थः।
वसुऽमन्तम्। पुरुऽक्षुम्। अस्मे इति। सः। इन्द्रावरुणा।
वसु। स्यात्। प्र। यः। भनक्ति। वनुषाम्। अशस्तीः॥ ६ ॥

१ नि० ३.२१।

देवा देवौ स्तूयमानौ हे इन्द्रावरुणौ युवं युवां दाश्वध्वराय दत्तहविष्काय वसुमन्तं धनानुबन्धिनं पुरुक्षुं बह्वन्नं पूर्णयशस्कं वा यं यादृशं रयिं धनं धत्थः प्रयच्छथः योपि च वनुषां हिंसकानां अशस्तीः प्रकीर्तीः शत्रुकृतान्ययशांसीत्यर्थः । प्रभनक्ति प्ररुजति । सतादृशोरयिः अस्मे अस्मासु स्यात् भूयात् ॥ ६ ॥

६. देव, इन्द्र और वरुण, तुम हव्यदाता को धनानुगामी और बहुअन्नवाली जो धन देते हो और जो शत्रु-कृत अयश को दूर करता है, वही धन हमें मिले ।

उतनः॑सुत्रात्रोदे॒वगो॑पाः॒सूरिभ्य॑इन्द्रावरुणार॒यिःष्या॑त् ।
येषां॒शुष्म॒ःपृत॑नासुसा॒ह्वान्प्रस॒द्योद्यु॒म्नाति॒रते॒तत॒ुरिः ॥ ७ ॥

उ॒त । न॒ः । सु॒ऽत्रा॒त्रः । दे॒वऽगो॑पाः । सू॒रिऽभ्यः॑ । इ॒न्द्रा॒व॒रु॒णा॒ ।
र॒यिः । स्या॒त् । येषा॑म् । शु॒ष्मः॑ । पृत॑नासु । स॒ह्वान् । प्र ।
स॒द्यः । द्यु॒म्ना । ति॒रते॑ । तत॒ुरिः ॥ ७ ॥

उतापि च इन्द्रावरुणा हे इन्द्रावरुणौ सूरिभ्यः स्तोतृभ्यः नोस्मभ्यं सुत्रात्रः सुरक्षः देवगोपाः देवा गोपा गोप्तारो यस्य सतथाविधः रयिर्धनं स्यात् भूयात् । किं च येषामस्माकं शुष्मो बलं पृतनासु युद्धेषु साह्वान् शत्रूणाममिभविता ततुरिः हिंसकश्च सन् द्युम्ना यशांसि सद्यएव प्रतिरथे सम्यक्तिरस्कुर्याद् ॥ ७ ॥

७. इन्द्र और वरुण, हम तुम्हारे स्तोता हैं । जो धन सुरक्षित है और जिसके रक्षक देवगण हैं, वही धन हम स्तोता को हो । हमारा बल संग्राम में शत्रुओं को दबानेवाला और हिंसक होकर तुरत उनके यश को तिरस्कृत करे ।

अथाष्टमी—

नूनइन्द्रावरुणागृणा॒नापृ॒ङ्क्तंर॒यिंसौश्र॑व॒साय॑देवा ।
इ॒त्थागृ॒णन्तो॑म॒हिन॑स्य॒शर्धो॒पोनना॒वादु॑रि॒तात॑रेम ॥ ८ ॥

नु । न॒ः । इ॒न्द्रा॒व॒रु॒णा॒ । गृ॒णा॒ना । पृ॒ङ्क्तम् । र॒यिम् । सौ॒श्र॒व॒साय॑ ।
दे॒वा॒ । इ॒त्था । गृ॒णन्तः॑ । म॒हिन॑स्य । शर्धः॑ । अ॒पः । न । ना॒वा ।
दु॒ःऽइ॒ता । त॒रे॒म ॥ ८ ॥

हे इन्द्रावरुणा इन्द्रावरुणौ गृणाना स्तूयमानौ युवां नोस्मभ्यं सौश्रवसाय सुश्रवसोभावः सौश्रवसं तस्मै सुश्रवस्त्वाय रयिं धनं नु क्षिप्रं पृंक्तं प्रयच्छतं । किं च देवा हे देवौ महिनस्य महतोर्युवयोः शर्धोबलं इत्था इत्थं गृणन्तः स्तुवन्तः वयं दुरिता दुरितानि नावा अपोन उदकानीव तरेम ॥ ८ ॥

८. इन्द्र और वरुण, तुम लोग स्तुत होकर सुअन्न के लिए हमें शीघ्र धन दो। देवो, तुम लोग महान् हो। हम इस प्रकार तुम्हारे बल की स्तुति करते हैं। हम नौका-द्वारा जल की तरह पापों को पार कर सकें। अथ नवमी—

प्रसम्राजेबृहतेमन्मनुप्रियमर्चदेवायवरुणायसप्रथः।
अयंयउर्वीमहिनामहिव्रतःक्रत्वाविभात्यजरोनशोचिषा॥ ९॥

प्र। सम्ऽराजे। बृहते। मन्म। नु। प्रियम्। अर्च। देवाय। वरुणाय। सऽप्रथः। अयम्। यः। उर्वी इति। महिना। महिऽव्रतः। क्रत्वा। विऽभाति। अजरः। न। शोचिषा॥ ९॥

हे स्तोतः सम्राजे आज्ञया राज्ञां शासकाय बृहते परिवृढाय देवाय द्योतमानाय वरुणाय प्रियं मनोहरं सप्रथः सर्वतः पृथु तथा च यास्कः—सप्रथाः सर्वतः पृथुरिति[1]। मन्म स्तोत्रं नु अद्य प्रार्च प्रोच्चारय अयं यः यो यं वरुणः महिना महिम्ना युक्तः महिव्रतोमहाकर्मा क्रत्वा प्रज्ञया च युक्तः शोचिषा तेजसा युक्तः अजरो न जरारहितश्च उर्वी विस्तीर्णे द्यावापृथिव्यौ विभाति विभासयति॥ ९॥

९. जो वरुण महिमान्वित, महाकर्मा, प्रज्ञा-युक्त, तेजःसम्पन्न और अजर हैं, जो विस्तीर्ण द्यावापृथिवी को विभासित करते हैं, उन्हीं सम्राट् और विराट् वरुण को लक्ष्य कर आज मनोहर और सब प्रकार से विशालस्तोत्र पढ़ो। अथ दशमी—

इन्द्रावरुणासुतपाविमंसुतंसोमंपिबतंमद्यंधृतव्रता।
युवोरथोअध्वरंदेववीतयेप्रतिस्वसरमुपयातिपीतये॥ १०॥

इन्द्रावरुणा। सुतऽपौ। इमम्। सुतम्। सोमम्। पिबतम्। मद्यम्। धृतऽव्रता। युवोः। रथः। अध्वरम्। देवऽवीतये। प्रति। स्वसरम्। उप। याति। पीतये॥ १०॥

इन्द्रावरुणा हे इन्द्रावरुणौ सुतपौ सुतस्य सोमस्य पातारौ युवां मद्यं मदकरं सुतमभिषुतमिमं सोमं पिबतं किं च धृतव्रता हे धृतकर्माणौ युवोः युवयोः रथः अध्वरमुद्दिश्य देववीतये देवानां पानार्थं पीतये युवयोरपि सोमपानार्थं स्वसरं मार्गं प्रत्युपयाति॥ १०॥

१०. इन्द्र और वरुण, तुम सोम का पान करनेवाले हो; इसलिए इस मादक और अभिषुत सोम का पान करो। हे धृत-व्रत मित्र और वरुण, देवों के पान के लिए तुम्हारा रथ यज्ञ की ओर आता है।

इन्द्रावरुणामधुमत्तमस्यवृष्णःसोमस्यवृषणावृषेथाम्।
इदंवामन्धःपरिषिक्तमस्मेआसद्यास्मिन्बर्हिषिमादयेथाम्॥११॥१२॥

---

१ नि० ६. ७.।

इन्द्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा ।
आ । वृषेथाम् । इदम् । वाम् । अन्धः । परिऽसिक्तम् । अस्मे इति ।
आऽसद्य । अस्मिन् । बर्हिषि । मादयेथाम् ॥ ११ ॥ १२ ॥

हे इन्द्रावरुणा इन्द्रावरुणौ वृषणा कामानां वर्षितारौ युवां मधुमत्तमस्य अतिशयेन मधुमन्तं रसवन्तं वृष्णोवर्षितारं सोमस्य सोमं आवृषेथां अश्नीतं तथा च शतपथब्राह्मणं—यथाभागमावृषायध्वमिति । यथाभागमश्नीतेत्येवैतदाहेति । वां युवयोरर्थे इदमन्धः सोमरूपमन्नं अस्मे अस्माभिः परिषिक्तं पात्रेषु अतः आसद्योपविश्यास्मिन्बर्हिषि यज्ञे मादयेथां सोमपानेनेतिशेषः ॥ ११ ॥

११. हे कामवर्षी इन्द्र और वरुण, तुम अतीव मधुर और मनोरथ-वर्षक सोम का पान करो। तुम्हारे लिए हमने इस सोम-रूप अन्न को ढाला है; इसलिए इसमें बैठकर इस यज्ञ में सोमपान से मत्त होओ।

॥ इति पंचमस्य प्रथमे द्वादशोवर्गः ॥ १२ ॥

संवांकर्मणेत्यष्टर्चमष्टमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रावैष्णवं अनुक्रम्यते च—संवामष्टावैन्द्रावैष्णवमिति । उक्थे तृतीयसवनेच्छावाकशस्त्रे एतत्सूक्तं सूत्र्यते हि—संवांकर्मणेन्द्राविष्णूमदपतीमदानामिति याज्येति । सोमातिरेके प्रातःसवने नैमित्तिके शस्त्रे परिहिते सति गाणगारिमते संवामिति तस्य शस्त्रयाज्या सूत्रितं च—इन्द्रावैष्णव्येति गाणगारिर्दैवतप्रधानत्वात् संवांकर्मणासमिषाहिनोमीति । सोमातिरेके माध्यंदिनसवने याविश्वासामित्येषा शस्त्रयाज्या सूत्रितं च—याविश्वासांजनितारामतीनामितियाज्येति । उक्थे तृतीयसवनेच्छावाकस्येन्द्राविष्णूमदपती इति शस्त्रयाज्या सूत्रंतूदाहृतं तृतीयसवनेच्छावाकस्येन्द्राविष्णूपिबतमितिप्रस्थितयाज्या सूत्रितंच इन्द्राविष्णूपिबतंमध्वोअस्येमंस्तोममर्हतेजातवेदसइति ।

तत्र प्रथमा—

संवांकर्मणासमिषाहिनोमीन्द्राविष्णूअपसस्पारेअस्य ।
जुषेथांयज्ञंद्रविणंचधत्तमरिष्टैर्नःपथिभिःपारयन्ता ॥ १ ॥

सम् । वाम् । कर्मणा । सम् । इषा । हिनोमि । इन्द्राविष्णू इति ।
अपसः । पारे । अस्य । जुषेथाम् । यज्ञम् । द्रविणम् । च ।
धत्तम् । अरिष्टैः । नः । पथिऽभिः । पारयन्ता ॥ १ ॥

हे इन्द्राविष्णू वां युवां कर्मणा स्तोत्रेण इषा हविषा च संहिनोमि सम्यक्प्रेरयामि । अ-पसः कर्मणः अस्य उक्थस्य पारे समाप्तौ यज्ञं जुषेथां सेवेथां । किं च अरिष्टैः अनुपद्रवैः प-थिभिर्मार्गैः नोस्मान् पारयन्ता पारं नयन्तौ युवां द्रविणं धनं धत्तमस्मभ्यं दत्तं ॥ १ ॥

१. इन्द्र और विष्णु, तुम्हें लक्ष्य कर स्तोत्र और हवि में प्रेरित करता हूँ । इस कर्म के समाप्त होने पर तुम लोग यज्ञ की सेवा करो । उपद्रव-शून्य मार्ग-द्वारा हमें पार करते हो । तुम हमें धन दो ।

**याविश्वासांजनितारांमतीनामिन्द्राविष्णूकलशासोमधाना ।**
**प्रवांगिरःशस्यमानाअवन्तुप्रस्तोमासोगीयमानासोअर्कैः ॥ २ ॥**

**या । विश्वासाम् । जनितारा । मतीनाम् । इन्द्राविष्णू इति । कलशा । सोमऽधाना । प्र । वाम् । गिरः । शस्यमानाः । अवन्तु । प्र । स्तोमासः । गीयमानासः । अर्कैः ॥ २ ॥**

या यौ प्रसिद्धाविन्द्राविष्णू विश्वासां सर्वासां मतीनां स्तुतीनां जनितारा जनितारौ ज-नजनने इत्यस्माद्धातोस्तृचीदं रूपं यद्वा जनी प्रादुर्भावे इत्यस्माद्धातोरेव तृचि जनितामंत्रे इति निपातनाण्णिलोपः कलशा कलशौ सोमधाना सोमस्य निधानभूतौ च स्यातां । अथ प्रत्यक्षस्तुतिः हे इन्द्राविष्णू वां युवां शस्यमाना उच्चार्यमाणाः शस्त्ररूपाः गिरोवाचः प्रावन्तु प्राप्नुवन्तु अर्कैः स्तोतृभिः गीयमानासः गीयमानाः स्तोमासः स्तोमाः स्तोत्राणि च प्रावन्तु प्राप्नुवन्तु ॥ २ ॥

२. इन्द्र और विष्णु, तुम स्तुतियों के जनक हो । तुम कलस-स्वरूप और सोम के निधान-भूत हो । कहे जानेवाले स्तोत्र तुम्हें प्राप्त हों । स्तोताओं-द्वारा गीयमान स्तोत्र तुम्हें प्राप्त हों ।

**इन्द्राविष्णूमदपतीमदानामासोमंयातंद्रविणोदधाना ।**
**संवामञ्जन्त्वक्तुभिर्मतीनांसंस्तोमासःशस्यमानासउक्थैः ॥ ३ ॥**

**इन्द्राविष्णू इति । मदपती इति मदऽपती । मदानाम् । आ । सोमम् । यातम् । द्रविणो इति । दधाना । सम् । वाम् । अञ्जन्तु । अक्तुऽभिः । मतीनाम् । सम् । स्तोमासः । शस्यमानासः । उक्थैः ॥ ३ ॥**

हे इन्द्राविष्णू मदानां सोमानां मदपती स्वामिनौ मदपती इत्यत्रमदशब्दोनुवादः द्रविणो द्रविणानि धनान्यपि द्रविणा उ इति पदद्वयमेकीभूय द्रविणो इति निष्पन्नं पदं । दधाना ददानौ युवां सोममभि आयातं मतीनां स्तोतॄणां स्तोमासः स्तोत्राणि उक्थैः शस्त्रैः सार्धं शस्यमानासः उच्चार्यमाणाः वां युवां अक्तुभिः तेजोभिः समञ्जन्तु समर्धयन्तुसंसमितिद्विरुक्तिरादरार्था ॥ ३ ॥

३. इन्द्र और विष्णु, तुम सोमों के अधिपति हो। धन देते हुए तुम सोम के अभिमुख आओ। स्तोताओं के स्तोत्र, उक्थों के साथ, तुम्हें तेज-द्वारा वर्द्धित करें।

आवामश्वासोअभिमातिषाहइन्द्राविष्णूसधमादोवहन्तु।
जुषेथांविश्वाहवनामतीनामुपब्रह्माणिशृणुतंगिरोमे ॥ ४ ॥

आ। वाम्। अश्वासः। अभिमातिऽसहः। इन्द्राविष्णू इति। सधऽमादः। वहन्तु। जुषेथाम्। विश्वा। हवना। मतीनाम्। उप। ब्रह्माणि। शृणुतम्। गिरः। मे ॥ ४ ॥

हे इन्द्राविष्णू वां युवां अभिमातिषाहः अभिमातीनां हिंसकानां अभिभवितारः सधमादः सहमाद्यन्तः अश्वासः अश्वाः आवहन्तु मतीनां स्तोतॄणां विश्वा विश्वानि हवना हवनानि स्तोत्राणि जुषेथां सेवेथां तदर्थं मे मदीयानि ब्रह्माणि स्तोत्राणि गिरः शस्त्ररूपा वाचश्च उपशृणुतं ॥ ४ ॥

४. इन्द्र और विष्णु, हिंसाकारियों को हरानेवाले और एकत्र मत्त अश्वगण तुम्हें वहन करें। स्तोताओं के सारे स्तोत्रों का तुम सेवन करो। मेरे स्तोत्रों और वचनों को भी सुनो।

इन्द्राविष्णूतत्पनयाय्यंवांसोमस्यमदउरुचक्रमाथे।
अकृणुतमन्तरिक्षंवरीयोप्रथतंजीवसेनोरजांसि ॥ ५ ॥

इन्द्राविष्णू इति। तत्। पनयाय्यम्। वाम्। सोमस्य। मदे। उरु। चक्रमाथे इति। अकृणुतम्। अन्तरिक्षम्। वरीयः। अप्रथतम्। जीवसे। नः। रजांसि ॥ ५ ॥

हे इन्द्राविष्णू वां युवयोः तत्कर्म पनयाय्यं स्तुत्यं किं तत्कर्मेत्यतआह सोमस्य मदे सति यदुरु विस्तीर्णं चक्रमाथे विचक्रमाथे। यद्यपि विष्णोरेव विक्रमः तथाप्येकार्थत्वाद् उभयोरित्युच्यते यच्चान्तरिक्षं वरीयः उरुतरं अकृणुतं अकुरुतं यदपि च रजांसि लोकान् सर्वान् लोकारजांस्युच्यन्तइति यास्कः[1]। नोस्माकं जीवनाय अप्रथतं अप्रथयतं ॥ ५ ॥

५. इन्द्र और विष्णु, सोम का मद या हर्ष उत्पन्न होने पर तुम लोग विस्तृत रूप से परिक्रमा करते हो। तुमने अन्तरिक्ष को विस्तृत किया है। तुमने लोकों को हमारे जीने के लिए प्रसिद्ध किया है। तुम्हारे ये सब कर्म प्रशंसा के योग्य हैं। अथ षष्ठी—

इन्द्राविष्णूहविषावावृधानाग्राद्वानानमसारातहव्या।
घृतासुतीद्रविणंधत्तमस्मेसमुद्रस्थःकलशःसोमधानः ॥ ६ ॥

---

1 नि० ४. १९।

इन्द्रा॑विष्णू॒ इति॑ । ह॒विषा॑ । वा॒वृ॒धा॒ना । अग्र॑ऽअद्वाना । नम॑सा ।
रा॒त॒ऽह॒व्या॒ । घृ॒तासु॑ती॒ इति॑ घृ॒त॑ऽआसु॑ती । द्रवि॑णम् । ध॒त्त॒म् ।
अ॒स्मे इति॑ । स॒मु॒द्रः । स्थः॒ । क॒लशः॑ । सो॒म॒ऽधानः॑ ॥ ६ ॥

घृतासुती घृतान्नाविन्द्राविष्णू युवां हविषा सोमेन वावृधाना वर्धमानौ अग्राद्वाना सोमाग्रस्य शुक्रस्यात्तारौ नमसा नमस्कारेण रातहव्या दत्तहविष्कौ यजमानैरस्मे अस्मभ्यं द्रविणं धनं धत्तं प्रयच्छतं किं च युवां समुद्रः उदधिरिव स्थो भवथः । यतः सोमधानः सोमनिधानकलशोभवथः ॥ ६ ॥

६. घृत और अन्न से युक्त इन्द्र और विष्णु, तुम सोम से बढ़ते हो और सोम के अग्र भाग का भक्षण करते हो। नमस्कार के साथ यजमान लोग तुम्हें हव्य देते हैं। तुम हमें धन दो। तुम लोग समुद्र की तरह हो। तुम सोम की खान और कलस के रूप हो।

इन्द्रा॑विष्णू॒पिब॑तं॒मध्वो॑अ॒स्यसोम॑स्यद॒स्राज॒ठरं॑पृणेथाम् ।
आवा॒मन्धां॑सिमदि॒राण्य॑ग्म॒न्नुप॒ब्रह्मा॑णिशृणु॒तंहवं॑मे ॥ ७ ॥

इन्द्रा॑विष्णू॒ इति॑ । पिब॑तम् । मध्वः॑ । अ॒स्य । सोम॑स्य । द॒स्रा॒ ।
ज॒ठर॑म् । पृ॒णे॒था॒म् । आ । वा॒म् । अन्धां॑सि । म॒दि॒राणि॑ ।
अ॒ग्म॒न् । उप॑ । ब्रह्मा॑णि । शृ॒णु॒त॒म् । हव॑म् । मे॒ ॥ ७ ॥

हे दस्रा दर्शनीयाविन्द्राविष्णू युवां मध्वः अस्य मदकरं सोमस्य सोमं पिबतं किं च जठरं उदरं पृणेथां सोमेन पूरयेथां। हे इन्द्राविष्णू वां युवां मदिराणि मदकराणि अंधांसि सोमात्मकान्यन्नानि आगमन् अभिगच्छन्तु । मे मदीयानि ब्रह्माणि स्तोत्राणि हवं मदीयमाह्वानं चोपशृणतं ॥ ७ ॥

७. दर्शनीय इन्द्र और विष्णु, तुम इस मदकारी सोम को पियो और उदर भरो। तुम्हारे पास मदकर सोम-रूप अन्न जाय। मेरा स्तोत्र और आह्वान सुनो।

उ॒भाजि॑ग्यथु॒र्नप॑राजयेथे॒नपरा॑जिग्येकत॒रश्च॒नैनोः॑ ।
इन्द्र॑श्चविष्णो॒यदप॑स्पृधेथांत्रे॒धासह॒स्रंवितदैर॑येथाम् ॥ ८ ॥ १३ ॥

उ॒भा । जि॒ग्य॒थुः॒ । न । परा॑ । ज॒ये॒थे॒ इति॑ । न । परा॑ । जि॒ग्ये॒ ।
क॒त॒रः । च॒न । ए॒नोः॒ । इन्द्रः॑ । च॒ । वि॒ष्णो॒ इति॑ । यत् ।
अप॑स्पृधेथाम् । त्रे॒धा । स॒हस्र॑म् । वि । तत् । ऐर॑येथाम् ॥ ८ ॥ १३ ॥

हे इन्द्राविष्णू उभा उभौ युवां जिग्यथुः शत्रूनजैष्टं नपराजयेथे न पुनः कदाचन पराजयेथे एनोरेनयोर्युवयोर्मध्ये कतरश्चन एकतरोपि न पराजिग्ये न पराजैष्ट हे विष्णो इन्द्रश्च त्वं च युवां यत् यद्वस्तु प्रत्यपस्पृधेथां असुरैः सहास्पृधेथां त्रेधा लोकवेदवागात्मना त्रिधास्थितं सहस्रममितं च वितदैरयेथां व्यक्रमेथामित्यर्थः। तथा च ब्राह्मणं—उभाजिग्यथुरित्यच्छावाकस्योभौहितौ जिग्यथुर्नपराजयेथे नपराजिग्यइतिनहितयोः कतरश्चनपराजिग्यइन्द्रश्चविष्णोयदपस्पृधेथां त्रेधासहस्रंवितदैरयेथामितीन्द्रश्चह वैविष्णुश्चासुरैर्युयुधातेतान्हस्मजित्वोचतुः कल्पामहाइतितेहतथेत्यसुराऊचुः सोब्रवीदिन्द्रोयावदेवायं विष्णुस्त्रिर्विक्रमते तावदस्माकमथयुष्माकमितरदितिसइमान्लोकान्विचक्रमेथोवेदानथोवाचंतदाहुः किंतत्सहस्रमितीमेलोकाइमे वेदाअथोवागितिब्रूयादैरयेथामैरयेथामिति। यद्वा तत्सहस्रं गवां सहस्रं त्रेधा व्यैरयेथामित्यर्थः॥८॥

८. इन्द्र और विष्णु, तुम विजयी हो; कभी पराजित नहीं होते। तुम दोनों में से कोई भी पराजित होनेवाला नहीं है। तुमने जिस वस्तु के लिए असुरों के साथ स्पर्द्धा की है, वह यद्यपि त्रिधा (लोक, वेद और वचन के रूपों में) स्थित और असंख्य है, तथापि तुमने अपने विक्रम से उसे प्राप्त किया है।

॥ इति पंचमस्य प्रथमे त्रयोदशो वर्गः॥ १३॥

घृतवतीभुवनानामितिषळृचंनवमंसूक्तं भरद्वाजस्यार्षं जागतं द्यावापृथिवीदेवताकं तथा चानुक्रम्यते—घृतवतीषड्द्यावापृथिवीयं जागतमिति आभिप्लविके पंचमेहनि वैश्वदेवशस्त्रे आद्यस्तृचोद्यावापृथिव्यनिविद्धानार्थः सूत्रितंच—घृतवती भुवनानामभिश्रियेन्द्रऋभुभिर्वाजवद्भिरिति तृचाविति। बृहस्पतिसवे वैश्वदेवशस्त्रे एषतृचः सूत्रितं च—आभिप्लविके तृतीयेहनि वैश्वदेवशस्त्रे घृतेनद्यावापृथिवी इति तिस्रोद्यावापृथिवीयनिविद्धानार्थाः सूत्रितंच—घृतेनद्यावापृथिवीइति तिस्रोनश्वोजातइति।

तत्र प्रथमा—

घृ॒तव॑ती॒ भुव॑नानामभि॒श्रियो॒र्वी पृ॒थ्वी म॑धु॒दुघे॑ सु॒पेश॑सा।
द्यावा॑पृथि॒वी वरु॑णस्य॒ धर्म॑णा॒ विष्क॑भिते अ॒जरे॒ भूरि॑रेतसा॥ १॥

घृ॒तव॑ती॒ इति॑ घृ॒तऽव॑ती। भुव॑नानाम्। अ॒भि॒ऽश्रिया॑। उ॒र्वी इति॑। पृ॒थ्वी इति॑। म॒धु॒दुघे॒ इति॑ म॒धु॒ऽदुघे॑। सु॒ऽपेश॑सा द्यावा॑पृथि॒वी इति॑ वरु॑णस्य। धर्म॑णा। विस्क॑भिते॒ इति॒ विऽस्क॑भिते। अ॒जरे॒ इति॑। भूरि॑ऽरेतसा॥ १॥

१ ऐ० ब्रा० ६. १५।

द्यावापृथिवी हे द्यावापृथिव्यौ घृतवती दीप्तिमत्यौ उदकवत्यौ वा वनं घृतमित्युदकनामसु पाठात् भवतइति शेषः भुवनानां भूतानामभिश्रिया अभिश्रयणीये भवत इति सर्वत्रानुसंबन्धनीयं उर्वी विस्तीर्णे पृथ्वी बहुकार्यरूपेण प्रथिते च मधुदुघे मधुनउदकस्य दोग्ध्यौ सुपेशसा सुरूपे वरुणस्य सर्वस्य नियामकस्य धर्मणा धारणेन विष्कभिते पृथग्धारिते अजरे नित्ये भूरिरेतसा बहुरेतस्के बहुकार्ये वा भवतः । अत्र साक्षात् द्यावापृथिव्योः स्तुतिप्रसंगात् वरुणस्येति द्रष्टव्यं ॥ १ ॥

१. हे द्यावापृथिवी, तुम जलवती, भूतों के आश्रय-स्थल, विस्तीर्णा, प्रसिद्धा, जलदोहन-कर्त्री, सुरूपा, वरुण के धारण-द्वारा पृथक् रूप से धारिता, नित्या और बहुकर्मा हो।

**असंश्चन्तीभूरिधारेपयस्वतीघृतंदुहातेसुकृतेशुचिव्रते ।**
**राजन्तीअस्यभुवनस्यरोदसीअस्मेरेतःसिञ्चतंयन्मनुर्हितम् ॥२॥**

**असंश्चन्ती इति । भूरिधारे इति भूरिऽधारे । पयस्वती इति । घृतम् । दुहाते इति । सुऽकृते । शुचिव्रते इति शुचिऽव्रते । राजन्ती इति । अस्य । भुवनस्य । रोदसी इति । अस्मे इति । रेतः । सिञ्चतम् । यत् । मनुःऽहितम् ॥ २ ॥**

असश्चन्ती असज्यमाने व्युदस्यंत्यौवा भूरिधारे बहुधारे दिवो वृष्टिधाराः पृथिव्याश्चाहुत्युद्भूतरसधाराः एवमुभयोरपि बहुधारत्वं पयस्वती उदकवत्यौ तथा च यास्कः—असज्यमाने इतिवाव्युदस्यंत्याविति वा बहुधारे उदकवत्याविंति[1] । शुचिव्रते शुचिक्रिये द्यावापृथिव्यौ सुकृते शोभनकारिणे यजमानाय घृतं सस्यादिसमृद्धिहेतु उदकं दुहाते । अथ प्रत्यक्षस्तुतिः रोदसी हे द्यावापृथिव्यौ अस्य भुवनस्य भूतजातस्य राजन्ती ईशाते युवां अस्मै अस्मासु रेतः प्रजननसमर्थं वीर्यं सिंचतं यद्रेतोमनुर्हितं मनुष्येभ्यो हितं ॥ २ ॥

२. असंगता, बहुधारावती, जलवती और शुचिकर्मा द्यावापृथिवी, सुकृती व्यक्ति को तुम, जल देती हो। हे द्यावापृथिवी, तुम भुवन की राज्ञी हो। तम मनष्यों का हितैषी वीर्य हमें दान दो।

अथ तृतीया—

**योवामृजवेक्रमणायरोदसीमर्तोददाशधिषणेससाधति ।**
**प्रप्रजाभिर्जायतेधर्मणस्परियुवोःसिक्ताविषुरूपाणिसव्रता ॥३॥**

---

१ नि० ५, २।

यः । वाम् । ऋजवे । क्रमणाय । रोदसी इति । मर्तः । ददाश । धिषणे इति । सः । साधति । प्र । प्रऽजाभिः । जायते । धर्मणः । परि । युवोः । सिक्ता । विषुऽरूपाणि । सऽव्रता ॥ ३ ॥

धिषणे धृष्टे सर्वस्य भुवनस्य निवासभूते वा हे रोदसी वां युवाभ्यां यो मर्तो मर्त्यः ऋजवे क्रमणाय युवयोः सुखगमनाय ददाश हवींषि ददाति स मर्त्यः साधति कामान् साधयति । किं च प्रजाभिः पुत्रपौत्रादिभिः प्रजायते प्रवृद्धो भवति।धर्मणः कर्मणः परिउपरि युवोर्युवयोः सिक्ता सिक्तानि रेतांसि विषुरूपाणि नानावर्णानि सव्रता समानकर्माणि भूतानि जायन्ते ॥३॥

३. सर्व-निवासभूता द्यावा-पृथिवी, जो मनुष्य तुम्हें, सरल गमन के लिए, यह देता है, वह सिद्ध-मनोरथ होता और अपत्यों के साथ बढ़ता है। कर्मों के ऊपर तुम्हारे द्वारा सिक्तरेत नाना रूप है और वह समान-कर्मा उत्पन्न होता है।

घृतेनद्यावापृथिवीअभीवृतेघृतश्रियाघृतपृचाघृतावृधा ।
उर्वीपृथ्वीहोतृवूर्येपुरोहितेतेइद्विप्राईळतेसुम्नमिष्टये ॥ ४ ॥

घृतेन ।द्यावापृथिवी इति । अभिवृते इत्यभिऽवृते । घृतऽश्रिया । घृतऽपृचा । घृतऽवृधा । उर्वी इति । पृथ्वी इति । होतृऽवूर्ये । पुरोहिते इति पुरःऽहिते । ते इति । इत् । विप्राः । ईळते । सुम्नम् । इष्टये ॥ ४ ॥

द्यावापृथिवी द्यावापृथिव्यौ घृतेनोदकेन अभिवृते आवृते भवतः घृतश्रिया उदकं श्रयंत्यौच घृतपृचा घृतसंपृक्तेच घृतवृधा घृतं वर्धयंत्यौ च उर्वी विस्तीर्णे पृथ्वी प्रथिते च भवतः होतृवूर्ये यज्ञे पुरोहिते यजमानैः पुरस्कृते च भवतः विप्राः प्राज्ञाः स्तोतारः ते इव द्यावापृथिव्यावेव इष्टये यज्ञाय होत्रा इष्टिरिति यज्ञनामसु पाठात् सुम्नं सुखं ईळते याचन्ते। सुखे सति हि यागाः प्रवर्तन्ते ॥ ४ ॥

४. द्यावा-पृथिवी जल-द्वारा ढकी हुई हैं और और जल का आश्रय करती हैं। वे जल से ओत प्रोत हैं, जलवर्षाविधायिनी और विस्तृता हैं, प्रसिद्धा और यज्ञ में पुरस्कृता हैं। यज्ञ के लिए विद्वान् उनसे सुख की याचना करता है।

अथ पंचमी—

मधुनोद्यावापृथिवीमिमिक्षतांमधुश्चुतांमधुदुघेमधुव्रते ।
दधानेयज्ञंद्रविणंचदेवतामहिश्रवोवाजमस्मेसुवीर्यम् ॥ ५ ॥

मधु । नः । द्यावापृथिवी इति । मिमिक्षताम् । मधुऽश्चुता । मधुदुघे इति मधुऽदुघे । मधुव्रते इति मधुऽव्रते । दधाने इति । यज्ञम् । द्रविणम् । च । देवता । महि । श्रवः । वाजम् । अस्मे इति ।सुऽवीर्यम् ॥५॥

मधुश्चुतः उदकस्य क्षारयित्र्यौ मधुदुघे उदकदोग्ध्र्यौ मधुव्रते उदकार्थकर्माणौ देवता देवताभूते अस्मे अस्मासु यज्ञं द्रविणं धनं च महे महत् श्रवोयशः वाजमन्नं सुवीर्यं सुवीरत्वं च दधाने दधत्यौ द्यावापृथिवी द्यावापृथिव्यौ नोस्मान् मधु मधुना तृतीयैकवचनस्य लुक् मिमिक्षतां सिंचतां ॥ ५ ॥

५. जल का क्षरण करनेवाली, जल दूहनेवाली, उदककर्मा देवी तथा हमें यज्ञ, धन, महान् यश, अन्न और वीर्य देनेवाली द्यावा-पृथिवी हमें मधु से सींचे।

ऊर्जंनोद्यौश्चपृथिवीचपिन्वतांपितामाताविश्वविदासुदंससा।
संरराणेरोदसीविश्वशम्भुवासनिंवाजंरयिमस्मेसमिन्वताम् ॥६॥१४॥

ऊर्जम्। नः। द्यौः। च। पृथिवी। च। पिन्वताम्। पिता। माता। विश्वऽविदा। सुऽदंससा। संरराणे इति सम्ऽरराणे। रोदसी इति। विश्वऽशम्भुवा। सनिम्। वाजम्। रयिम्। अस्मे इति। सम्। इन्वताम् ॥ ६ ॥ १४ ॥

पिता वर्षस्य सेक्तृत्वेन पितृभूता द्यौश्च माता धारकत्वेन मातृभूता पृथिवी च उभे नः अस्मभ्यं ऊर्जमन्नं पिन्वतां यच्छतां। किंच विश्वविदा विश्वं जानंत्यौ विश्वस्य वेदयित्र्यौ वा सुदंससा सुकर्माणौ संरराणे परस्परोपकार्योपकारकभावेन सहरममाणे विश्वशंभुवा सर्वस्य भावयित्र्यौ रोदसी द्यावापृथिव्यौ अस्मे अस्मासु सनिं संभजनीयं पुत्रादिकं वाजं बलं रयिं धनं च समिन्वतां संप्रेरयतां ॥ ६ ॥

६. पिता द्युलोक और माता पृथिवी, हमें अन्न दो। संसार को जाननेवाली, सुकर्मा परस्पर रममाण और सबको सुख देनेवाली द्यावा-पृथिवी हमें पुत्रादि बल और धन दो।

॥ इति पंचमस्य प्रथमे चतुर्दशोवर्गः ॥ १४ ॥

उदुष्यदेवइतिषळृचं दशमं सूक्तं भरद्वाजस्यार्षं सवितृदेवताकं आद्यास्तिस्रोजगत्यः चतुर्थ्याद्यास्तिस्रस्त्रिष्टुभः तथा चानुक्रान्तं—उदुष्यःसावित्रं त्रित्रिष्टुबन्तमिति सूक्तविनियोगोलैंगिकःचातुर्विंशिकेहनि वैश्वदेवशस्त्रे आद्यस्तृचः सावित्रसूक्तस्थाने आवपनीयः सूत्रितं च—उदुष्यदेवः सविता हिरण्ययेति तिस्रः तेहिद्यावापृथिवीति। बृहस्पतिसवेपि वैश्वदेवशस्त्रे सावित्रसूक्तस्थाने एषतृचः सूत्रितं च उदुष्यदेवः सविताहिरण्ययेत्यनूचिष्ठेदिति। व्यूळ्हे पंचमेहनि वैश्वदेवशस्त्रे उदुष्यदेवः सविता दमूनाइति तृचः सावित्रनिविद्धानार्थः सूत्रितं च—उदुष्यदेवःसवितादमूनाइति तिस्रइति। वैश्वदेवपर्वणि सावित्रद्वादशकपालस्य वाममद्येतियाज्या सूत्रितं च—वाममद्यसवितर्वाममश्वः पूषन्नवस्रतेवयमिति।

तत्र प्रथमा—

उदुष्यदेवःसविताहिरण्ययाबाहूअयंस्तसवनायसुक्रतुः।
घृतेनपाणीअभिप्रुष्णुतेमखोयुवासुदक्षोरजसोविधर्मणि ॥ १ ॥

उत्। ऊँ इति। स्यः। देवः। सविता। हिरण्ययां। बाहू इति। अयंस्त। सवनाय। सुऽक्रतुः। घृतेनं। पाणी इति। अभि। प्रुष्णुते। मखः। युवा। सुऽदक्षः। रजसः। विऽधर्मणि ॥ १ ॥

देवो द्योतमानः सुक्रतुः सुकर्मा स्यः सः प्रसिद्धः सविता हिरण्यया हिरण्मयौ आत्मीयौ बाहू सवनाय सुवनाय दानाय वा उदयंस्त उद्यच्छति किंच मखो मंहनीयो युवा नित्यतरुणः सुदक्षः सुप्रज्ञः रजसो लोकस्योदकस्यवा विधर्मणि विधारणे स्थितः घृतेनोदकेन पूर्णौ स्वौ पाणी अभिप्रुष्णुते अभिप्रेरयति ॥ १ ॥

१. वही सुकृति सविता देवता दान के लिए हिरण्मय बाहुओं को ऊपर उठाते हैं। विशाल, तरुण और विद्वान् सविता, संसार की रक्षा के लिए दोनों जलमय बाहुओं को प्रेरित करते हैं।

देवस्यवयंसवितुःसवीमनिश्रेष्ठेस्यामवसुनश्चदावने।
योविश्वस्यद्विपदोयश्चतुष्पदोनिवेशनेप्रसवेचासिभूमनः ॥ २ ॥

देवस्य। वयम्। सवितुः। सवीमनि। श्रेष्ठे। स्याम। वसुनः। च। दावने। यः। विश्वस्य। द्विऽपदः। यः। चतुःऽपदः। निऽवेशने। प्रऽसवे। च। असि। भूमनः ॥ २ ॥

तस्य देवस्य सवितुः प्रेरकस्य सवीमनि प्रसवे अनुज्ञाने तथा च यास्कः—सवीमनिप्रसवेइतिश्रेष्ठे[1]। अतिशयेन प्रशस्ते वसुनो धनस्य दावने दाने च वयं स्याम समर्थाभूयास्म यस्त्वं विश्वस्य सर्वस्य द्विपदोनिवेशने स्थितौ प्रसवे च स्वतंत्रोसि यस्त्वं भूमनो भूरेश्चतुष्पदोनिवेशने प्रसवे च स्वतंत्रोसि ॥ २ ॥

२. हम उन्हीं सविता के प्रसव-कर्म और प्रशस्त धन दान के विषय में समर्थ हों। सविता, तुम सारे द्विपदों और चतुष्पदों की स्थिति और प्रसव (उत्पत्ति) में समर्थ हो।

---

१ नि० ६. ७.।

अथ तृतीया—

अद॑ब्धेभिः सवितः पा॒युभि॒ष्ट्वं शि॒वेभि॑र॒द्य परि॑ पाहि नो॒ गय॑म् ।
हिर॑ण्यजिह्वः सुवि॒ताय॒ नव्य॑से॒ रक्षा॒ माकि॑र्नो अ॒घशं॑स ईशत ॥ ३ ॥

अद॑ब्धेभिः । स॒वि॒त॒रिति॑ । पा॒यु॒ऽभिः॑ । त्वम् । शि॒वेभिः॑ । अ॒द्य ।
परि॑ । पा॒हि॒ । नः॒ । गय॑म् । हिर॑ण्यऽजिह्वः । सु॒वि॒ताय॑ । नव्य॑से ।
रक्ष॑ । माकिः॑ । नः॒ । अ॒घऽशं॑सः । ई॒श॒त ॥ ३ ॥

हे सवितः अदब्धेभिः अहिंसितैः पायुभिः तेजोभिः रक्षणसाधनैर्वा शिवेभिः सुखकारिभिः नोस्माकं गयं गृहं धनं वा गयः कृदरइति गृहनामसु मीह्ळं गयइति धननामसु पाठात् अद्य परिपाहि रक्ष । हिरण्यजिह्वो हितरमणीयवाक् त्वं तथाचयास्कः—हिरण्यंकस्मादित्युपक्रम्य हितरमणंभवतीतिवेति । सुविताय सुखाय नव्यसे नवतराय भव रक्ष अस्मान्पालय च नोस्माकमघ शंसः अनर्थमाशंसमानः शत्रुः माकिरीशत मेशत ॥ ३ ॥

३. सविता, तुम आज अहिंसित और सुखावह तेज के द्वारा हमारे घरों की रक्षा करो। तुम हिरण्यवाक् हो। नया सुख दो और हमारी रक्षा करो। हमारा अहित करनेवाला व्यक्ति प्रभुत्व न करने पावे।

उदु॒ ष्य दे॒वः स॑वि॒ता दमू॑ना॒ हिर॑ण्यपाणिः प्रतिदो॒षम॑स्थात् ।
अयो॑हनुर्यज॒तो म॒न्द्रजि॑ह्व॒ आ दा॒शुषे॑ सुवति॒ भूरि॑ वा॒मम् ॥ ४ ॥

उत् । ऊँ इति॑ । स्यः । दे॒वः । स॒वि॒ता । दमू॑नाः । हिर॑ण्यऽपाणिः ।
प्र॒ति॒ऽदो॒षम् । अ॒स्था॒त् । अयः॑ऽहनुः । य॒ज॒तः । म॒न्द्रऽजि॑ह्वः । आ ।
दा॒शुषे॑ । सु॒व॒ति॒ । भूरि॑ । वा॒मम् ॥ ४ ॥

देवो द्योतमानः दमूनाः दममनाः दानमनावा तथा च यास्कः—दमूनादममनावा दानमनावा दान्तमनावेति[1] । हिरण्यपाणिः हिरण्मयपाणिः अयोहनुः हिरण्मयहनुः रुक्मं अय इतिहिरण्यनामसु पाठात् यजतो यष्टव्यः मन्द्रजिह्वः मोदमानवाक् स्यः सः सविता प्रतिदोषं प्रतिरात्रं रात्रेरवसाने उदस्थात् उत्तिष्ठतु यो दाशुषे यजमानाय मह्यं भूरि प्रभूतं वामं वननीयं संभजनीयमन्नं वामं वननीयमिति यास्कः[2]। आसुवति प्रेरयति ॥ ४ ॥

४. शान्तमना, हिरण्य-हस्त, हिरण्मय हनु (जबड़ा) वाले, यज्ञ के योग्य और मनोहर वचनवाले वही सविता देव रात्रि के अन्त में उठें। वे हव्यदाता के लिए, यथेष्ट अन्न प्रेरित करें।

---

१ नि० २. १०. । २ नि० ४. ४. । ३ नि० ६. ३१. ।

अथ पञ्चमी–

उदूँअयाँउपवक्तेवबाहूहिरण्ययासविितासुप्रतीका ।
दिवोरोहांस्यरुहत्पृथिव्याअरीरमत्पतयत्कच्चिदभ्वम् ॥ ५ ॥

उत् । ऊँ इति । अयान् । उपवक्ताऽइव । बाहू इति । हिरण्ययां ।
सविता । सुऽप्रतीका । दिवः । रोहांसि । अरुहत् । पृथिव्याः ।
अरीरमत् । पतयत् । कत् । चित् । अभ्वम् ॥ ५ ॥

सविता उपवक्तेव अस्माकमधिवक्तेव हिरण्यया हिरण्मयौ सुप्रतीका शोभनावयवौ बाहू उदयान् उद्यच्छतुयोयं पृथिव्याः पृथिवीपर्यन्तात् दिवोन्तरिक्षस्य रोहांसि उच्छ्रितप्रदेशान् अरुहत् रोहति पतयत् गच्छत् कच्चित् यत्किंचिदभ्वं महत् सर्वं वस्तुजातं तिरोहितं अरीरमत् रमयति च ॥ ५ ॥

५. सविता, अधिवक्ता की तरह हिरण्मय और शोभनांश, दोनों बाहुओं को उठावें। वे पृथिवी से द्युलोक के उन्नत प्रदेश में चढ़ते हैं। गतिशील, जो कुछ महान् वस्तुएँ हैं, सबको वे प्रसन्न करते हैं।

वाममद्यसवितर्वाममुश्वोदिवेदिवेवाममस्मभ्यंसावीः ।
वामस्यहिक्षयस्यदेवभूरेरयाधियावामभाजःस्याम ॥ ६ ॥ १५ ॥

वामम् । अद्य । सवितः । वामम् । ऊँ इति । श्वः । दिवेऽदिवे ।
वामम् । अस्मभ्यम् । सावीः । वामस्य । हि । क्षयस्य ।
देव । भूरेः । अया । धिया । वामऽभाजः । स्याम ॥ ६ ॥ १५ ॥

हे सवितः अस्मभ्यं वामं धनं अद्य सावीः सुव श्वश्च वामं धनं प्रसुव किं बहूक्त्या दिवेदिवे प्रतिदिनं वामं धनं प्रसुव हे देव हि यस्मात् क्षयस्य निवासभूतस्य भूरेः प्रभूतस्य वामस्य दातासि अतो वयं अया अनया धिया स्तुत्या वामभाजो धनवन्तः स्याम भूयास्म उ इति पूरणः ॥ ६ ॥

६. सविता, आज हमें धन दो। कल हमें धन देना। प्रतिदिन हमें धन देना। हे देव, तुम निवास-भूत प्रचुर धन के दाता हो; इसलिए हम इसी स्तुति के द्वारा धन प्राप्त करेंगे।

॥ इति पंचमस्य प्रथमे पंचदशोवर्गः ॥ १५ ॥

इन्द्रासोमामहीतिपंचर्चमेकादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं इंद्रासोमदेवताकं अनुक्रम्यते च–इन्द्रासोमापंचैन्द्रासोममिति सूक्तविनियोगोलैंगिकः ।

तत्र प्रथमा—

इन्द्रासोमा महि तद्वां महित्वं युवं महानि प्रथमानि चक्रथुः ।
युवं सूर्यं विविदथुर्युवं स्व१र्विश्वा तमांस्यहतं निदश्च ॥ १ ॥

इन्द्रासोमा । महि । तत् । वाम् । महिऽत्वम् । युवम् । महानि । प्रथमानि । चक्रथुः । युवम् । सूर्यम् । विविदथुः । युवम् । स्वः । विश्वा । तमांसि । अहतम् । निदः । च ॥ १ ॥

इन्द्रासोमा हे इन्द्रासोमौ वां युवयोः तन्महित्वं महत्त्वं महि महत् । किंतदित्यतआह युवं युवां महानि महान्ति प्रथमानि प्रतमानि मुख्यानि वा भूतानि प्रथमइति मुख्यनामप्रतमो भवतीतियास्कः । चक्रथुः अकार्ष्टं । किंच युवं युवां सूर्यं विविदथुः अलंभयतं च जनान् युवं युवां स्वरुदकं च विविदथुः हेम स्वरित्युदकनामसु पाठात् अपि च विश्वा विश्वानि तमांसि निदश्च निन्दितॄनसुरांश्च अहतं अहिंस्तम् ॥ १ ॥

१. इन्द्र और सोम, तुम्हारी महिमा महान् है । तुमने महान् और मुख्य भूतों को बनाया है । तुमने सूर्य और जल को प्राप्त किया है । तुमने सारे अन्धकारों और निन्दकों का वध किया है ।

इन्द्रासोमा वासयथ उषसमुत्सूर्यं नयथो ज्योतिषा सह ।
उप द्यां स्कम्भथुः स्कम्भनेनाप्रथतं पृथिवीं मातरं वि ॥ २ ॥

इन्द्रासोमा । वासयथः । उषसम् । उत् । सूर्यम् । नयथः । ज्योतिषा । सह । उप । द्याम् । स्कम्भथुः । स्कम्भनेन । अप्रथतम् । पृथिवीम् । मातरम् । वि ॥ २ ॥

इन्द्रासोमा हे इन्द्रासोमौ उषसं वासयथः विवासयथः उषसं व्युच्छन्तीं कारयथ इत्यर्थः । किं च सूर्यं ज्योतिषा तेजसा सह उन्नयथः अपि च द्यां दिवं स्कंभनेन स्तंभनहेतुनान्तरिक्षेण मध्ये स्थापितेन उपस्कंभथुः अस्तंभयतं मातरं विश्वस्य मातृभूतां पृथिवीं व्यप्रथतं व्यप्रथयतम् ॥ २ ॥

२. इन्द्र और सोम, तुम उषा को प्रकाशित करो और सूर्य को ज्योति के साथ ऊपर उठाओ तथा अन्तरिक्ष के द्वारा द्युलोक को स्तम्भित करो । माता पृथिवी को प्रसिद्ध करो ।

इन्द्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत ।
प्राणांस्यैरयतं नदीनामा समुद्राणि पप्रथुः पुरूणि ॥ ३ ॥

इन्द्रासोमौ । अहिम् । अपः । परिऽस्थाम् । हथः । वृत्रम् । अनु ।
वाम् । द्यौः । अमन्यत । प्र । अर्णांसि । ऐरयतम् । नदीनाम् ।
आ । समुद्राणि । पप्रथुः । पुरूणि ॥ ३ ॥

हे इन्द्रासोमौ अहिं जगत आहन्तारं अपोमेघस्थान्युदकानि परिष्ठां परिवृत्यस्थितं वृत्रं असुरं हथः हतं तदानीं द्यौर्वां युवां अन्वमन्यत किं च नदीनां अर्णांस्युदकानि प्रैरयतं पुरूणि बहुनि तुवि पुर्वीति बहुनामसु पाठात् समुद्राणि उदकस्थानानि आपप्रथुः उदकैरापूरयतं च । अथवा समुन्दन्तीति उदकान्येव समुद्राणि तानि रसेनापूरयतमित्यर्थः तथा च यास्कः—समुद्रः कस्मात्समुद्द्रवंत्यस्मादापः समभिद्रवंत्येनमापःसंमोदन्तेस्मिन्भूतानिसमुदकोभवतिसमुनत्तीतिवेति[1] ॥ ३ ॥

३. इन्द्र और सोम, जल को रोकनेवाले अहि (मारक) वृत्र का वध करो। द्युलोक ने तुम्हें संवर्द्धित किया था। नदी के जल को प्रेरित करो। जल-द्वारा समुद्र को पूर्ण करो।

इन्द्रासोमापक्वमामास्वन्तर्निगवामिद्दधथुर्वक्षणासु ।
जगृभथुरनपिनद्धमासुरुशच्चित्रासुजगतीष्वन्तः ॥ ४ ॥

इन्द्रासोमा । पक्वम् । आमासु । अन्तः । नि । गवाम् । इत् ।
दधथुः । वक्षणासु । जगृभथुः । अनपिऽनद्धम् । आसु ।
रुशत् । चित्रासु । जगतीषु । अन्तरिति ॥ ४ ॥

इन्द्रासोमा हे इन्द्रासोमौ आमासु अपक्वासु गवां वक्षणासु ऊधःसु अन्तर्मध्ये पक्वं पयो निदधुः । किं च चित्रासु नानावर्णासु आसु जगतीषु गोषु इळा जगतीति गोनामसु पाठात् अन्तर्मध्ये अनपिनद्धं केनाप्यबद्धं रुशत् शुक्लवर्णं पयोजगृभथुः यथा पृथिव्यां स्वयं न क्षरति तथा धारितवन्तावित्यर्थः । इदिति पूरणः ॥ ४ ॥

४. इन्द्र और सोम, तुमने गायों के लिए अपक्व अन्तर्देश में पक्व दुग्ध रक्खा है। नाना वर्ण गौओं के बीच तुमने अबद्ध और शुक्ल वर्ण दुग्ध धारण किया है।    अथ पंचमी—

इन्द्रासोमायुवमङ्गतरुत्रमपत्यसाचंश्रुत्यंरराथे ।
युवंशुष्मंनर्यंचर्षणिभ्यःसंविव्यथुःपृतनाषाहमुग्रा ॥ ५ ॥ १६ ॥

---

[1] नि० २, १०.

इन्द्रासोमा। युवम्। अङ्ग। तरुत्रम्। अपत्यऽसाचम्। श्रुत्यम्।
रराथे इति। युवम्। शुष्मम्। नर्यम्। चर्षणिऽभ्यः। सम्।
विव्यथुः। पृतनाऽसहम्। उग्रा॥ ५॥ १६॥

इन्द्रासोमा हे इन्द्रासोमौ युवं यवां तरुत्रं तारकं अपत्यसाचं संतानयुक्तं श्रुत्यं श्रवणीयं रयिं धनं अंग क्षिप्रं रराथे अस्मभ्यं धत्थः किंच उग्रा हे उद्गूर्णाविन्द्रासोमौ युवं युवां नर्यं नृभ्योहितं पृतनासहं शत्रुसैन्याभिभावुकं शुष्मं बलं चर्षणिभ्योमनुष्येभ्यः कृष्टयः चर्षणय इतिमनुष्यनामसु पाठात् संविव्यथुः समतनुतं परिवेष्टयथोवा॥ ५॥

५. इन्द्र और सोम, तुम लोग तारक, सन्तान-युक्त और श्रवण-योग्य धन हमें शीघ्र दो। उग्र इन्द्र और सोम, मनुष्यों के लिए हितकर और शत्रुसेना को हरानेवाले बल को तुम वर्द्धित करो।

॥ इति पंचमस्य प्रथमे षोडशोवर्गः॥ १६॥

योअद्रिभिदितितृचंद्वादशंसूक्तं बार्हस्पत्यं भरद्वाजस्यार्षं त्रैष्टुभं तथा चानुक्रम्यते—योअद्रिभित्तृचंबार्हस्पत्यमिति आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे स्तोमातिशंसनार्थमिदं सूक्तं सूत्र्यते हि योअद्रिभिद्यज्ञेदिवइति सूक्ते इति। वाजपेये बार्हस्पत्ये चरौ बृहस्पतिः समजयद्वसूनि त्वामीळेअजिरंदूत्यायेति।

योअद्रिभित्प्रथमजाऋतावाबृहस्पतिराङ्गिरसोहविष्मान्।
द्विबर्हज्माप्राघर्मसत्पितानआरोदसीवृषभोरोरवीति॥ १॥

यः। अद्रिऽभित्। प्रथमऽजाः। ऋतऽवा। बृहस्पतिः।
आङ्गिरसः। हविष्मान्। द्विबर्हऽज्मा। प्राघर्मऽसत्।
पिता। नः। आ। रोदसी इति। वृषभः। रोरवीति॥ १॥

योबृहस्पतिः अद्रिभित् पणिभिर्विरचितानां शिलोच्चयानां भेत्ता मेघानां विदारकोवा अद्रिःग्रावेति मेघनामसु पाठात् प्रथमजाः प्रजापतेर्वीर्यात् प्रथमं जातः ऋतावा सत्यवानुदकवान्वा अंगिरसः पश्चाज्जातः तथा च निगमः—येंगाराआसंस्तेंगिरसोभवन्यदंगाराःपुनरवशान्ताउददीप्यन्ततद्बृहस्पतिरभवदिति[1]। हविष्मान् यज्ञभागवान् द्विबर्हज्मा द्वयोर्लोकयोर्बृंहितगमनः प्राघर्मसत् प्रकर्षेण दीप्तस्थाने वर्तमानो नोस्माकं पिता पालयिता भवति सबृहस्पतिः वृषभो वर्षकः सन् रोदसी द्यावापृथिव्यौ आरोरवीति अभिगर्जति॥ १॥

१. जिन बृहस्पति ने पर्वत को तोड़ा था, जो सबसे प्रथम उत्पन्न हुए थे, जो सत्य-रूप, अङ्गिरा और यज्ञ-पात्र हैं, जो दोनों लोकों में भली भाँति जाते हैं, जो प्रदीप्त स्थान में रहते हैं और जो हम लोगों के पालक हैं, वही बृहस्पति, बर्षक होकर द्यावापृथिवी में गर्जन करते हैं।

---

१ ऐ० ब्रा० ३. ३४.।

अथ द्वितीया–

जनायचिद्यईवतउलोकंबृहस्पतिर्देवहूतौचकार ।
घ्नन्वृत्राणिविपुरोदर्दरीतिजयञ्छत्रूँरमित्रान्पृत्सुसाहन् ॥ २ ॥

जनाय । चित् । यः । ईवते । ऊँ इति । लोकम् । बृहस्पतिः ।
देवऽहूतौ । चकार । घ्नन् । वृत्राणि । वि । पुरः । दर्दरीति ।
जयन् । शत्रून् । अमित्रान् । पृत्ऽसु । सहन् ॥ २ ॥

अपि च योबृहस्पतिः देवहूतौ यज्ञे वर्तमानाय ईवते उपगच्छते स्तोत्रे जनाय लोकं स्थानं चकार करोति चिदिति पूरणः सवृत्राण्यावरकाणि तमांसि घ्नन् निवारयन् पृत्सु युद्धेषु शत्रून् जयन् अमित्रान् सहन् अभिभवन् पुरः आसुरीः पुरीः विदर्दरीति भृशं विदारयति ॥२॥

२. जो बृहस्पति यज्ञ में स्तोता को स्थान देते हैं, वही वृत्रों या आवरक अन्धकारों को विनष्ट करते, युद्ध में शत्रुओं को जीतते, द्वेषियों को अभिभूत करते और असुर-पुरियों को अच्छी तरह छिन्न-भिन्न करते हैं।

बृहस्पतिःसमजयद्वसूनिमहोव्रजान्गोमतोदेवएषः ।
अपःसिषासन्त्स्व१रप्रतीतोबृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ३ ॥१७॥

बृहस्पतिः । सम् । अजयत् । वसूनि । महः । व्रजान् ।
गोऽमतः । देवः । एषः । अपः । सिसासन् । स्वः । अप्रतिऽइतः ।
बृहस्पतिः । हन्ति । अमित्रम् । अर्कैः ॥ ३ ॥ १७ ॥

देवोद्योतमानः एषप्रसिद्धोबृहस्पतिः वसूनि पणीनामसुराणां वलस्य वा धनानि महो महतो गोमतोगोसहितान् व्रजांश्च समजयत् तथा च निगमौ—बृहस्पतिर्गोवपुषोवलस्यनिर्मज्जानंनपर्वणोजभारेति । दूरमितपणयोवरीयउद्गावोयन्तुमिनतीर्ऋतेन । बृहस्पतिर्याअविन्दन्निगूह्ळाः सोमोग्रावाणऋषयश्चविप्राइति । किंच बृहस्पतिः अप्रतीतः केनाप्यप्रतिगतः सिषासन् संभक्तुमिच्छन् स्वः स्वर्गस्य अमित्रं असुरं अर्कैरर्चनसाधनैर्मन्त्रैर्हन्ति अर्कोमंत्रोभवतियदेनेनार्चन्तीतियास्कः ॥ ३ ॥

३. इन्हीं बृहस्पति देव ने असुरों का धन और गौओं के साथ गोचरों को जीता था। अप्रतिगत होकर यज्ञ-कर्म-द्वारा, भोग करने की इच्छा करके, वृहस्पति स्वर्ग के शत्रु का, अर्चना-साधन मन्त्र-द्वारा, वध करते हैं।

॥ इति पंचमस्य प्रथमे सप्तदशोवर्गः ॥ १७ ॥

---

१ ऋ० सं० ८. २. १८। २ ऋ० सं० ८. ६. ६। २ नि० ५. ४।

सोमारुद्रेतिचतुर्ऋचं त्रयोदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं सोमारुद्रदेवताकं अनुक्रम्यते च सोमारुद्राचतुष्कं सोमारौद्रमिति। विनियोगोलैंगिकः।

तत्र प्रथमा—

सोमा॑रुद्राधा॒रये॑थामसु॒र्यं१॑प्रवा॑मि॒ष्टयो॒रम॑श्नुवन्तु।
दमे॑दमे॒सप्तरत्ना॒दधा॑ना॒शंनो॑भूतंद्वि॒पदे॒शंचतु॑ष्पदे॥ १॥

सोमा॑रुद्रा। धा॒रये॑थाम्। अ॒सु॒र्य॑म्। प्र। वा॒म्। इ॒ष्टयः॑।
अर॑म्। अ॒श्नु॒व॒न्तु॒। दमे॑ऽदमे। स॒प्त। रत्ना॑। दधा॑ना। शम्।
न॒ः। भू॒त॒म्। द्वि॒ऽपदे॑। शम्। चतुः॑ऽपदे॥ १॥

सोमारुद्रा हे सोमारुद्रौ असुर्यं असुरसंबन्धिबलं अस्मासु धारयेथां किं च दमेदमे सर्वेष्वस्मद्गृहेषु इष्टयोयज्ञाः वां युवां अरमलं पर्याप्तं प्राश्नुवन्तु प्रकर्षेणव्याप्नुवन्तु। अपि च युवां सप्तरत्ना रत्नानि दधाना धारयन्तौ नोस्मभ्यं शं सुखकरौ सुखरूपौ वा भूतं भवतं। द्विपदे अस्मदीयाय पुत्रादये चतुष्पदे पश्वादये च शं भूतं भवतं॥१॥

१. सोम और रुद्र, तुम हमें असुर-सम्बन्धी बल दो। सारे यज्ञ तुम्हें प्रतिगृह में अच्छी तरह व्याप्त करें। तुम सप्तरत्न धारण करते हो; इसलिए हमारे लिए तुम सुखकर होओ और द्विपदों और चतुष्पदों के लिए भी कल्याणवाही बनो।

सोमा॑रुद्रा॒वि॒वृ॑हतं॒विषू॑ची॒ममी॑वा॒यानो॒गय॑मावि॒वेश॑।
आ॒रेबा॑धेथां॒निर्ऋ॑तिंपरा॒चैर॒स्मेभ॒द्रासौ॑श्रव॒सानि॑सन्तु॥ २॥

सोमा॑रुद्रा। वि। वृ॒ह॒त॒म्। विषू॑चीम्। अमी॑वा। या। न॒ः।
गय॑म्। आ॒ऽवि॒वेश॑। आ॒रे। बा॒धे॒था॒म्। निः॒ऽऋ॑तिम्।
प॒रा॒चैः। अ॒स्मे। इ॒ति॑। भ॒द्रा सौ॒श्र॒व॒सानि॑। स॒न्तु॒॥ २॥

सोमारुद्रा हे सोमारुद्रौ नोस्माकं गयं गृहं गृहगतंप्राणिजातंवा याअमीवा योरोगआविवेश तांविषूचीं विष्वक् सर्वतो गच्छन्तीं अमीवां विवृहतं वियोजयतं। अपि च निर्ऋतिमलक्ष्मीं पराचैः पराग्यथाभवति तथा आरे दूरे बाधेथां निवारयतं। अस्मे अस्माकं भद्रा भद्राणि सौश्रवसानि अन्नानि यशांसि च संतु भवन्तु सुश्रवसौभावः सौश्रवसं श्रवोन्नंयशश्च॥ २॥

२. सोम और रुद्र, जो रोग हमारे घर में पैठा है, उसी संक्रामक रोग को विदूरित करो। ऐसी बाधा दो, जिससे दरिद्रता पराङ्मुखी हो। हमारे पास सुखावह अन्न हो।

अथ तृतीया—

सोमा॑रुद्रा यु॒वमे॒तान्य॒स्मे विश्वा॑ त॒नूषु॑ भेष॒जानि॑ धत्तम्।
अव॑ स्यतं मु॒ञ्चतं॒ यन्नो॒ अस्ति॑ त॒नूषु॑ ब॒द्धं कृ॒तमेनो॑ अ॒स्मत् ॥ ३ ॥

सोमा॑रुद्रा । यु॒वम् । ए॒तानि॑ । अ॒स्मे इति॑ । विश्वा॑ । त॒नूषु॑ । भे॒ष॒जानि॑ । ध॒त्त॒म् । अव॑ । स्य॒त॒म् । मु॒ञ्चत॑म् । यत् । न॒ः । अस्ति॑ । त॒नूषु॑ । ब॒द्धम् । कृ॒तम् । एन॑ः । अ॒स्मत् ॥ ३ ॥

हे सोमारुद्रा सोमारुद्रौ युवं युवां अस्मे अस्माकं तनूष्वंगेषु एतानि प्रसिद्धानि विश्वा सर्वाणि भेषजानि धत्तं धारयतं । किं च नोस्माकं तनूष्वंगेषु अस्माभिः कृतं बद्धं च यदेनः पापमस्ति विद्यते तत्पापं अवस्यतं क्षपयतं श्लथयतं शिथिलबन्धं कुरुतमित्यर्थः । अस्मदस्मत्तोमुंचतंच ॥ ३ ॥

३. सोम और रुद्र, हमारे शरीर के लिए सब प्रसिद्ध औषध धारण करो। हमारे किये पाप, जो शरीर में निबद्ध हैं, उसे शिथिल करो—हमसे हटा दो।

ति॒ग्माyu॑धौ ति॒ग्महे॑ती सु॒शेवौ॒ सोमा॑रुद्रावि॒ह सु मृ॑ळतं नः।
प्र नो॑ मुञ्चतं॒ वरु॑णस्य॒ पाशा॑द्गोपा॒यतं॑ नः सुमन॒स्यमा॑ना ॥ ४ ॥ १८ ॥

ति॒ग्मऽआ॑युधौ । ति॒ग्महे॑ती॒ इति॑ ति॒ग्मऽहे॑ती । सु॒ऽशेवौ॑ । सोमा॑रुद्रौ । इ॒ह । सु । मृ॒ळ॒त॒म् । न॒ः । प्र । न॒ः । मु॒ञ्च॒त॒म् । वरु॑णस्य । पाशा॑त् । गो॒पा॒यत॑म् । न॒ः । सु॒ऽम॒न॒स्यमा॑ना ॥ ४ ॥ १८ ॥

हेसोमारुद्रौ तिग्मायुधौ दीप्तधनुष्कौ तिग्महेती तीक्ष्णशरौ सुशेवौ शोभनसुखप्रदौ सुमनस्यमाना शोभनंमनःस्तोत्रमिच्छन्तौ सुमनस्यमानौ स्तूयमानौ सुमनसौ वा सन्तौ युवां इह लोके नोस्मान् सु अत्यन्तं मृळतं सुखयतं नोस्मान्वरुणस्य पाशात् प्रमुंचतं नोस्मान् गोपायतं आपद्भ्योरक्षतं च ॥ ४ ॥

४. सोम और रुद्र, तुम्हारे पास दीप्त धनुष और तीक्ष्ण शर हैं। तुम लोग सुन्दर सुख देते हो। शोभन स्तोत्र की अभिलाषा करते हुए हमें इस संसार में खूब सुखी करो। तुम हमें वरुण के पाश से छुड़ाओ और हमारी रक्षा करो।

॥ इति पंचमस्य प्रथमेष्टादशोवर्गः ॥ १८ ॥

जीमूतस्येत्येकोनविंशर्चंचतुर्दशंसूक्तं भारद्वाजस्यपायोरार्षं अनुक्रम्यतेच—जीमूतस्यैवै-कोनापायुर्भारद्वाजःसंग्रामांगान्यूकुशोभितुष्टाववर्मधनुर्ज्यामार्त्नीइषुधिंजगत्यर्धे सारथिमर्धेर-श्मीनश्वान्नथं रथगोपान्जगत्यादि लिंगोक्तदेवताद्वाभ्यामिषूः प्रतोदंहस्तघ्नंद्वाभ्यामिषुः पराः पंक्त्यादयो लिंगोक्तदेवताः संग्रामाशिषोन्त्यानुष्टुप् ऋजीतआलाक्तेतिचद्वेद्वेइति। रथेतिष्ठन् ब्रा-ह्मणासइतिषष्ठीदशम्यौ जगत्यौ अंत्यायोनःस्वोअरणइत्येषानुष्टुप् ऋजीतेआजंघन्तिआ-लाक्ताअवसृष्टायोनःस्वइतिपंचानुष्टुभः यत्रबाणाइतिपंक्तिः शिष्टास्त्रिष्टुभः आद्ययावर्मस्तू-यते द्वितीययाधनुः तृतीययाज्या चतुर्थ्यांआर्त्नी पंचम्याइषुधिः अतः पंचानांवर्माद्यादेवताः षष्ठ्याः पूर्वार्धेनसारथिः स्तूयते अतः सोर्धर्चस्तद्देवताकः उत्तरार्धेनरश्मयः स्तूयन्ते सप्तम्या-अश्वाः अष्टम्यारथः नवम्यारथगोपाः अतस्तास्तद्देवताकाः ब्राह्मणासइत्यस्यांब्राह्मणपितृसो-म्यद्यावापृथिवीपूषणोलिंगोक्तादेवताः एकादशीद्वादश्याविषुस्तुतिरूपत्वात् इषुदेवताके त्रयो-दश्याप्रतोदः चतुर्दश्याहस्तघ्नः पंचदशीषोडश्याविषुदेवताके सप्तदश्यायुद्धभूमिब्रह्मणस्पत्यदि-तिरूपालिंगोक्तदेवताः अष्टादश्याः कवचसोमवरुणदेवताः अंत्यायादेवाब्रह्मचदेवता युद्धेअने-नसूक्तेनराजानंसंनाहयेत् तथाचाश्वलायनः—संग्रामेसमुपोह्लेराजानंसंनाहयेदात्वाहार्षमन्तरेधी-तिपश्चाद्रथस्यावस्थायजीमूतस्येवभवतिप्रतीकमितिकवचंप्रयच्छेदुत्तरयाधनुरुत्तरांवाचयेत्स्व-यंचतुर्थींजपेत्पंचम्येषुधिंप्रयच्छेदभिप्रवर्तमानेषष्ठींसप्तम्याश्वानष्टमीमिषूनवेक्षमाणं वाचयत्यहि-रिवभोगैःपर्येतिबाहुमितितलं नह्यमानमिति तथाचावसृष्टापरापतेतीषून्विसर्जयेद्यत्रबाणाः संपतन्तीतियुध्यमानेषुजपेत्संशिष्याद्वेति। अध्यायोपाकरणोत्सर्जनयोर्मंडलांत्यहोमे योनःस्व-इत्येषा।

तत्र प्रथमा—

जीमूतस्येवभवतिप्रतीकंयद्वर्मीयातिसमदामुपस्थे।
अनाविद्धयातन्वाजयत्वंसत्वावर्मणोमहिमापिपर्तु॥ १॥

जीमूतस्यऽइव। भवति। प्रतीकम्। यत्। वर्मी। याति।
सऽमदाम्। उपऽस्थे। अनाविद्धया। तन्वा। जय।
त्वम्। सः। त्वा। वर्मणः। महिमा। पिपर्तु॥ १॥

समदां संग्रामाणां उपस्थे उपस्थाने सति यद्यदायं राजा वर्मी कवची याति तदा लोह-मयेन वर्मणा सन्नद्धस्य राज्ञः प्रतीकं रूपं जीमूतस्येव मेघस्येव भवति मेघस्य यादृशं रूपं ता-

दृशमस्य भवतीत्यर्थः हे राजन् त्वं अनाविद्धया शत्रुभिरबाधितया तन्वा शरीरेण शत्रून् जय वर्मणः सनादृशो महिमा त्वा त्वां पिपर्तु पालयतु ॥ १ ॥

१. युद्ध छिड़ जाने पर यह राजा जिस समय लौहमय कवच पहन कर जाता है, उस समय मालूम पड़ता है कि यह साक्षात् मेघ है। राजन् अविद्ध शरीर रहकर जय प्राप्त करो। वर्म (कवच) की वह महिमा तुम्हारी रक्षा करे।

अथ द्वितीया–

**धन्व॑ना॒गाधन्व॑ना॒जिंज॑येम॒धन्व॑नाती॒व्राःस॒मदो॑जयेम ।**
**धनुः॒शत्रो॑रपका॒मंकृ॑णोति॒धन्व॑ना॒सर्वाः॑प्र॒दिशो॑जयेम ॥ २॥**

धन्व॑ना । गाः । धन्व॑ना । आ॒जिम् । ज॒ये॒म॒ । धन्व॑ना । ती॒व्राः ।
स॒ऽमदः॑ । ज॒ये॒म॒ । धनुः॑ । शत्रोः॑ । अ॒प॒ऽका॒मम् । कृ॒णो॒ति॒ ।
धन्व॑ना । सर्वाः॑ । प्र॒ऽदिशः॑ । ज॒ये॒म॒ ॥ २ ॥

धन्वना चापेन गाः शत्रूणां जयेम वयं वशीकरवाम धन्वना आजिं संग्रामं च जयेम धन्वना तीव्राः उद्धताः समदः अत्यन्तमदवतीः शत्रुसेनाश्च जयेम तथाचयास्कः–संमदः समदोवात्तेः संमदोवामदतेरिति। धनुः शत्रोरपकामं कामस्यापायं कृणोति करोतु। किं च धन्वना वयं सर्वाः प्रदिशः सर्वासु दिक्षु वर्तमानान् शत्रून् जयेम प्रदिक् शब्दो लक्षणया तत्स्थेषु पुरुषेषु वर्तते मंचाः क्रोशंतीतिवत्। धन्वन् शब्दस्य जयतेश्चावृत्तिरादरार्था ॥ २ ॥

२. हम धनुष के द्वारा शत्रुओं की गायों को जीतेंगे, युद्ध जीतेंगे और मदोन्मत्त शत्रु-सेना का वध करेंगे। शत्रु की अभिलाषा धनुष नष्ट करे। हम इस धनुष से समस्त दिशाओं में स्थित शत्रुओं को जीतेंगे।

अथ तृतीया–

**व॒क्ष्यन्ती॒वेदाग॑नीगन्ति॒कर्णं॑प्रि॒यंसखा॑यंपरिषस्व॒जा॒ना ।**
**योषे॑वशिङ्क्ते॒वित॒ताधि॒धन्व॒ञ्ज्याइ॒यंसम॑नेपा॒रय॑न्ती ॥ ३ ॥**

व॒क्ष्यन्ती॑ऽइव । इत् । आ । ग॒नी॒ग॒न्ति॒ । कर्ण॑म् । प्रि॒यम् ।
सखा॑यम् । प॒रि॒ऽस॒स्व॒जा॒ना । योषा॑ऽइव । शि॒ङ्क्ते॒ । वि॒ऽत॒ता ।
अधि॑ । धन्व॑न् । ज्या । इ॒यम् । सम॑ने । पा॒रय॑न्ती ॥ ३ ॥

पूर्वत्र ऋग्द्वयेन कवचधनुषी स्तुते अत्र ज्यास्तुतिः इयं ज्या समने संग्रामे धन्वन् धन्वनि अधीति सप्तम्यर्थानुवादः। वितता विस्तृता पारयन्ती पारं नयन्ती प्रियं प्रियकरं वाक्यं वक्ष्यन्ती इव कर्णं धन्विनो राज्ञः कर्णप्रदेशं आगनीगन्ति आगच्छति। इदिति पूरणः योषा नारी सखायं पतिमिव परिषस्वजाना इषुं परिष्वजमाना शिंक्ते शब्दायते च। तथाच या–

---

१ नि० ९. १८.।

स्कः—वक्ष्यन्तीवागच्छति कर्णप्रियमिव सखायमिषुं परिष्वजमाना योषेव शिंक्ते शब्दंकरोति वितताधिधनुषिज्येयंसमने संग्रामे पारयन्ती पारं नयन्तीति[1] ॥ ३ ॥

३. धनुष की यह ज्या, युद्ध-वेला में, युद्ध से पार ले जाने की इच्छा करके मानो प्रिय वचन बोलने के लिए ही धनुर्धारी के कान के पास आती है। जैसे स्त्री प्रिय पति का आलिङ्गन करके बात करती है, वैसे ही यह ज्या भी वाण का आलिङ्गन करके ही शब्द करती है।

ते॒आ॒चर॑न्ती॒सम॑नेव॒योषा॑मा॒तेव॑पु॒त्रंबि॑भृताम॒ुपस्थे॑।
अप॒शत्रू॑न्विध्यतांसंविदा॒नेआर्त्नी॑इ॒मेवि॑ष्फु॒रन्ती॑अ॒मित्रा॑न् ॥ ४ ॥

ते इति॑। आ॒चर॑न्ती॒ इत्या॒ऽचर॑न्ती। सम॑नाऽइव। योषा॑। मा॒ताऽइ॑व।
पु॒त्रम्। बि॒भृ॒ता॒म्। उ॒पऽस्थे॑। अप॑। शत्रू॑न्। वि॒ध्य॒ता॒म्।
सं॒वि॒दा॒ने इति॑ स॒म्ऽवि॒दा॒ने। आर्त्नी॒ इति॑। इ॒मे इति॑।
वि॒स्फु॒रन्ती॒ इति॑ वि॒ऽस्फु॒रन्ती॑। अ॒मित्रा॑न् ॥ ४ ॥

अत्र धनुःकोट्योः स्तुतिः ते धनुःकोट्यौ समनेव समनस्केव योषा पतिसमीपं न त्यजति तद्वदाचरन्ती अभितश्चरंत्यौ उपस्थे उपस्थाने मातेव पुत्रं यथा माता पुत्रं धारयति तद्वत् बिभृतां राजानं धारयेतां। किं च इमे धनुःकोट्यौ संविदाने संजानाने विसंवादरहिते आर्त्नी गच्छन्त्यौ ऋगताविति धातोः चुर्यंगिभ्यां निरिति बाहुलकात् निप्रत्ययोधातोरार्तभावश्च ततः कृदिकाराद-क्तिनइतिङीष् द्विवचनस्य पूर्वसवर्णः अस्य राज्ञः अमित्रान् विष्फुरन्ती विहिंसंत्यौ शत्रूंश्च अपविध्यतां।तथाच यास्कः—तेआचारन्ती समनसाविवयोषे मातेवपुत्रं विभृतामुपस्थउपस्थाने पविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नवत्यावमित्रानिति[2] ॥ ४ ॥

४. वे दोनों धनुस्कोटियाँ, अन्यमनस्का स्त्री की तरह, आचरण करके शत्रु के ऊपर आक्रमण करते समय माता की तरह पुत्र-तुल्य राजा की रक्षा करें और अपने कार्य को भली भाँति जानकर जाते हुए इस राजा के द्वेषियों का वध कर शत्रुओं को छेद डालें।

ब॒ह्वी॒नांपि॒ताब॒हुर॑स्यपु॒त्रश्चि॒श्चाकृ॑णो॒तिसम॑नाव॒गत्य॑।
इ॒षु॒धिसङ्काः॒पृत॑नाश्च॒सर्वाः॑पृ॒ष्ठेनिन॑द्धोजयति॒प्रसू॑तः ॥ ५ ॥ १९ ॥

ब॒ह्वी॒नाम्। पि॒ता। ब॒हुः। अ॒स्य॒। पु॒त्रः। चि॒श्चा। कृ॒णो॒ति॒।
सम॑ना। अ॒व॒ऽगत्य॑। इ॒षु॒ऽधिः। सङ्काः॑। पृत॑नाः।
च॒। सर्वाः॑। पृ॒ष्ठे। निऽन॑द्धः। ज॒य॒ति॒। प्रऽसू॑तः ॥ ५ ॥ १९ ॥

---

१ नि० ९, १८। २ नि० ९, ३९।

इषुधिरत्र स्तूयते इषुधिः बह्वीनामिषूणांपिता भवति रक्षणहेतुत्वात् पितेत्युच्यते इषुशब्द-स्योभयलिंगत्वात् बह्वीनामिति प्रयोगः अस्य इषुधेः पुत्रः इषुर्बहुर्भवति बहवः इषवो हि इषु-धौ निधीयन्ते इषूणां निधानत्वादिषुधिः तथाच यास्कः—इषुधिरिषूणां निधानमितिं। चिश्चाकृ-णोति चिश्चेति शब्दानुकृतिः इषुषूद्भ्रियमाणेषु इषुधिश्चिश्चाशब्दं करोति। किं च इषुधिः पृष्ठे निनद्धः धन्विनो राज्ञः पृष्ठभागे बद्धः समना युद्धानि अवगत्य प्राप्य प्रसूतः प्रसुवन् कर्तरिनिष्ठा इषून्प्रेरयन् संकाः सहकायन्ति शब्दायन्ते इति संकाः पृतनाः सर्वाः सेनाः जयति ॥ ५ ॥

५. यह तूणीर अनेक वाणों का पिता है। कितने ही वाण इसके पुत्र हैं। वाण निकालने के समय यह तूणीर "चिश्चा" शब्द करता है। यह योद्धा के पृष्ठ-देश में निबद्ध रहकर युद्ध-काल में वाणों का प्रसव करता हुआ सारी सेना को जीत डालता है।

॥ इति पंचमस्य प्रथमे एकोनविंशोवर्गः ॥ १९ ॥

रथेतिष्ठन्नयतिवाजिनःपुरोयत्रंयत्रकामयंतेसुषारथिः ।
अभीशूनांमहिमानंपनायतमनःपश्चादनुयच्छन्तिरश्मयः ॥ ६ ॥

रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्रऽयत्र । कामयते ।
सुऽसारथिः । अभीशूनाम् । महिमानम् । पनायत । मनः ।
पश्चात् । अनु । यच्छन्ति । रश्मयः ॥ ६ ॥

अत्र पूर्वार्धे सारथिस्तुतिः उत्तरार्धेभीशूनां स्तुतिः सुषारथिः शोभनसारथिः रथे तिष्ठन् पुरः पुरस्तात् वर्तमानान् वाजिनोश्वान् यत्र यत्र नेतुं कामयते तत्र तत्र नयति ये रथे रश्मयो-श्वग्रीवाभ्यां व्याप्य वर्तमानाः पाशाः पश्चात् रथस्य पृष्ठभागे विद्यमानानश्वान् मनः सारथे-र्मनोनुकूलं अनुयच्छन्ति नियच्छन्ति तेषामभीशूनां रश्मीनां महिमानं महत्त्वं पनायत हे जनाः स्तुत तथाच यास्कः—रथेतिष्ठन्नयतिवाजिनःपुरस्तात्सतोयत्रयत्रकामयतेसुषारथिःकल्याणसा-रथिरभीशूनांमहिमानंपूजयतमनःपश्चात्सतोनुपयच्छंतिरश्मयइंति ॥ ६ ॥

६. सुन्दर सारथि रथ में अवस्थान करके आगे के घोड़ों को, जहाँ इच्छा होती है, वहाँ, ले जाता है। रस्सियाँ अश्वों के कण्ठ तक फैल कर और अश्वों के पीछे फैलकर सारथि के मन के अनुकूल नियुक्त होती हैं। रस्सियों की महिमा बखानो।

तीव्रान्घोषान्कृण्वतेवृषपाणयोश्वारथेभिःसहवाजयन्तः ।
अवक्रामन्तःप्रपदैरमित्रान्क्षिणन्तिशत्रूँरनपव्ययन्तः ॥ ७ ॥

---

१ नि० ९ः १३. २ नि० ९. १६.

तीव्रान् । घोषान् । कृण्वते । वृषऽपाणयः । अश्वाः ।
रथेभिः । सह । वाजयन्तः । अवऽक्रामन्तः । प्रऽपदैः ।
अमित्रान् । क्षिणन्ति । शत्रून् । अनपऽव्ययन्तः ॥ ७॥

अत्राश्वस्तुतिः अश्वाः वृषपाणयः पांसूनां वर्षकखुराः रथेभिः रथैः सह वाजयन्तो वेगमाचरन्तः तीव्रान् उच्चतरान्घोषान् शब्दान् कुर्वंतेकृण्वते किं च। अनपव्ययन्तोऽपलायमानाः अमित्रान् हिंसकान् शत्रून् प्रपदैः पादाग्रैः अवक्रामन्तः क्षिणंति हिंसन्ति ॥ ७॥

७. अश्व टापों से धूलि उड़ाते हुए और रथ के साथ सवेग जाते हुए हिनहिनाते हैं तथा पलायन न करके हिंसक शत्रुओं को टापों से पीटते हैं।

रथवाहनंहविरस्यनामयत्रायुधंनिहितमस्यवर्म ।
तत्रारथमुपशग्मंसदेमविश्वाहावयंसुमनस्यमानाः ॥ ८ ॥

रथऽवाहनम् । हविः । अस्य । नाम । यत्र । आयुधम् ।
निऽहितम् । अस्य । वर्म । तत्र । रथम् । उप । शग्मम् ।
सदेम । विश्वाहा । वयम् । सुऽमनस्यमानाः ॥ ८ ॥

अस्य राज्ञः रथवाहनं शत्रून् जित्वा रथेनोह्यमानं धनं हविर्भवति अग्नेर्हविरिववर्धकं भवतीत्यर्थः। नामेति संमतिः यत्र रथे अस्य राज्ञः आयुधं धनुः शरादिकं वर्म कवचं च निहितं भवति तत्रेत्यव्ययस्य सार्वविभक्तिकत्वात् शग्मं सुखकरं विश्वाहा सर्वदा सुमनस्यमानाः सुखमनसो भवन्तो वयं पायवो भरद्वाजाः उपसदेम उपगच्छेम ॥ ८ ॥

८. जैसे हव्य अग्नि को बढ़ाता है, वैसे ही इस राजा के रथ-द्वारा ढोया जानेवाला धन इसे वर्द्धित करे। रथ पर इस राजा के अस्त्र, कवच आदि रहते हैं। हम सदा प्रसन्न-चित्त से उस सुखावह रथ के पास जाते हैं।

अथ नवमी—

स्वादुषंसदःपितरोवयोधाःकृच्छ्रेश्रितःशक्तीवन्तोगभीराः ।
चित्रसेनाइषुबलाअमृध्राःसतोवीराउरवोव्रातसाहाः ॥ ९ ॥

स्वादुऽसंसदः । पितरः । वयःऽधाः । कृच्छ्रेऽश्रितः ।
शक्तिऽवन्तः । गभीराः । चित्रऽसेनाः । इषुऽबलाः ।
अमृध्राः । सतःऽवीराः । उरवः । व्रातऽसहाः ॥ ९ ॥

१ नि० ३. २०. २ नि० ११. १८.

अत्र रथगोपस्तुतिः पितरो रथस्य पालयितारः स्वादुषं सदः शत्रूणां स्वादुन्यन्ने संसीदन्तः शत्रूणामन्नमवसादयन्तो वा वयोधाः अन्नस्य दातारः कृच्छ्रे श्रितः आपदि श्रयन्तः शक्तिरायुधविशेषः तद्वन्तः शक्तीवन्तः शक्तिहस्ताइति यावत्। यद्वा शक्तिर्बलं तद्वन्तः गभीराः अनाधृष्याः चित्रसेनाः दर्शनीयसेनाः इषुबलाः बाणबलाः अमृध्राः हिंसितुमशक्याः सतोवीराः प्राप्तवीर्याः। तथाचयास्कः—तिरः सतइति प्राप्तस्य तिरः स्तीर्णंभवति सतःसंसृतंभवतीति। उरवोमहान्तः व्रातसहाः समूहानामभिभवितारोभवन्तीति ॥ ९ ॥

९. रथ के रक्षक शत्रुओं के सुस्वादु अन्न को नष्ट करके अपने पक्ष के लोगों को अन्न दान करते हैं। विपत्ति के समय इनका आश्रय लिया जाता है। ये शक्तिमान्, गम्भीर, विचित्र सेना से युक्त, बाण-बल-सम्पन्न अहिंसक, वीर, महान् और अनेक शत्रुओं को जीतने में समर्थ हैं।

ब्राह्मणासःपितरःसोम्यासःशिवेनोद्यावापृथिवीअनेहसा।
पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशंसईशत ॥१०॥२०॥

ब्राह्मणासः। पितरः। सोम्यासः। शिवे इति। नः।
द्यावापृथिवी इति। अनेहसा। पूषा नः। पातु। दुःऽइतात्।
ऋतऽवृधः। रक्ष। माकिः। नः। अघऽशंसः। ईशत ॥ १० ॥ २० ॥

ब्राह्मणासो हे ब्राह्मणाः पितरः ऋतावृधः ऋतस्य यज्ञस्य वा वर्धयितारःसोम्यासः सोमार्हाः सोमसंपादिनो वा तथाचयास्कः—सोम्याः सोमसंपादिनइति नोस्मान् रक्षत रक्षेत्युपरितनमेकवचनान्तं सत्यपिव्यवधाने बहुवचनान्ततया विपरिणतं सदत्रसंबध्यते अध्याहारस्यातिजघन्यत्वात्। किं च अनेहसा अपापे द्यावापृथिवी द्यावापृथिव्यौ नोस्माकं शिवे सुखकृतौ भवतां पूषा पोषको देवोपि नोस्मान् दुरितात् दुष्कृतात्पातु रक्षतु। नोस्माकमघशंसः पापशंसः शत्रुरपिमाकिरीशत माईष्ट ॥ १० ॥

१०. हे ब्राह्मणो, पितरो और यज्ञ-वर्द्धक सोम-सम्पादक, तुम हमारी रक्षा करो। पापशून्या द्यावापृथिवी हमारे लिए सुखकारी हों। पूषा हमें पाप से बचावें। हमारा पापी शत्रु प्रभुत्व न करने पावे।

इति पंचमस्य प्रथमे विंशोवर्गः ॥ २० ॥

अथैकादशी—

सुपर्णंवस्तेमृगोअस्यादन्तोगोभिःसंनद्धापततिप्रसूता।
यत्रानरःसंचविचद्रवन्तितत्रास्मभ्यमिषवःशर्मयंसन् ॥ ११ ॥

१ नि० ३. २०.  २ नि० ११. १८.

सुऽपर्णम् । वस्ते । मृगः । अस्याः । दन्तः । गोभिः । सम्ऽनद्धा ।
पतति । प्रऽसूता । यत्र । नरः । सम् । च । वि । च । द्रवन्ति ।
तत्र । अस्मभ्यम् । इषवः । शर्म । यंसन् ॥ ११ ॥

अस्याष्टचीषवः स्तूयन्ते सुपर्णं शोभनं वाजं वस्ते इयमिषुर्धारयति अस्याइषोः मृगोष्ट गावयवः शृंगं दन्तोभवति इषवः काश्चिद्दन्तमुखाभवन्ति हि अथवा अस्या दन्तः मृगः शत्रून् मृगयमाणोभवति किं च गोभिः गोविकारैः स्नायुभिः सन्नद्धा सम्यक्‌बद्धा अथवा गौरिति ज्यानाम तया संबद्धा अत्रवचनव्यत्ययः तथाचनिगमः—वृक्षेवृक्षेनियतामीमयद्गौरिति[1] । अस्यायमर्थः वृक्षेवृक्षे धनुषि धनुषि गौर्ज्यानियता मीमयत् शब्दं करोतीति तथा च यास्कः—वृक्षे वृक्षे धनुषि धनुषि वृक्षोव्रश्चनात् वृत्वा क्षां तिष्ठतीतिवा क्षाक्षियतेर्निवासकर्मणोनियतामीमयद्गौः शब्दंकरोति मीमयतिः शब्दकर्मेति[2]।प्रसूता प्रेरिता सती पतति यत्र युद्धे नरः संच सहच विच पृथक्‌च द्रवन्तिचरन्ति तत्रास्मभ्यं इषवः शराः शर्म सुखं यंसन् प्रयच्छन्तु तथा च यास्कः—सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोस्यादन्तोमृगयतेर्वागोभिः सन्नद्धापतति प्रसूतेति व्याख्यातं यत्र नराः संद्रवन्तिच तत्रास्मभ्यमिषवःशर्मशरणं प्रयच्छन्त्विति[3] ॥ ११ ॥

११. वाण शोभन पंख धारण करता है। इसका दाँत मृग-शृंग है। यह ज्या अथवा गोचर्म (ताँत) से अच्छी तरह बद्ध है। यह प्रेरित होकर पतित होता है। जहाँ नेता लोग एकत्र वा पृथक् रूप से विचरण करते हैं, वहाँ वाण हमें शरण दे।

ऋजीतेपरिवृङ्ग्धिनोश्माभवतुनस्तनूः।
सोमोअधिब्रवीतुनोदितिःशर्मयच्छतु ॥ १२ ॥

ऋजीते । परि । वृङ्ग्धि । नः । अश्मा । भवतु । नः । तनूः ।
सोमः । अधि । ब्रवीतु । नः । अदितिः । शर्म । यच्छतु ॥ १२ ॥

ऋजीते ऋजुगच्छतीत्यृजीतिरिषुः हेइषो नोस्मान् परिवृङ्ग्धि परितो वर्धय नोस्माकं तनूः शरीरं अश्मा भवतु अश्मवदभेद्या दृढा भवतु किंच नोस्मभ्य सोमोधिब्रवीतु पक्षपातेन ब्रवीतु अदितिरपि शर्म सुखं यच्छतु ॥ १२ ॥

१२. वाण, हमें परिवर्द्धित करो। हमारा शरीर पाषाण की तरह हो। सोम हमारे पक्ष पर बोले। अदिति सुख दें।

---

१ ऋ० सं० ७. ७. २१. २ नि०२. ६. ३ नि० ९. १९।

अथ त्रयोदशी—

आजंङ्घन्ति॒सान्वे॑षांज॒घनाँ॒उपं॑जिघ्नते।
अश्वा॑जनि॒प्रचे॑तसो॒ऽश्वा॑न्त्स॒मत्सु॑चोदय॥ १३॥

आ। ज॒ङ्घ॒न्ति॒। सानु॑। ए॒षा॒म्। ज॒घना॑न्। उप॑। जि॒घ्न॒ते॒।
अश्व॑ऽअजनि। प्रऽचे॑तसः। अश्वा॑न्। स॒मत्ऽसु॑। चो॒द॒य॥ १३॥

अश्वाजनि अश्वानां क्षेप्त्रि कशे यया त्वया प्रचेतसः प्रकृष्टज्ञानाः सादिनः सारथयोवा एषामश्वानां सानु सानूनि सक्थीनि आजंघंति आघ्नंति जघनान् जघनानि उपजिघ्नते उपजिघ्नंति सा त्वं समत्सु संग्रामेषु अश्वान् चोदय प्रेरय। तथाच यास्कः—आघ्नंति सानून्येषां सरणानि सक्थीनि सक्थिसचतेरासक्तोस्मिन् कायोजघनानि चोपघ्नंति जघनंजघन्यतेरश्वाजनिप्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदंयेति॥ १३॥

१३. कशा (चाबुक), प्रकृष्ट ज्ञानी सारथि लोग तुम्हारे द्वारा अश्वों के उरु और जघन में मारते हैं। संग्राम में तुम अश्वों को प्रेरित करो।

अथ चतुर्दशी—

अहि॑रिवभो॒गैः पर्ये॑ति॒बा॒हुंज्या॒याहे॒तिंप॑रि॒बाध॑मानः।
ह॒स्त॒घ्नोविश्वा॑व॒युना॑निवि॒द्वान्पु॒मा॒न्पुमां॑सं॒परि॑पातु॒वि॒श्वतः॑॥ १४॥

अहिः॑ऽइव। भो॒गैः। परि॑। ए॒ति॒। बा॒हुम्। ज्या॒याः॑।
हे॒तिम्। प॒रि॒ऽबाध॑मानः। ह॒स्त॒ऽघ्नः। विश्वा॑। व॒युना॑नि।
वि॒द्वान्। पु॒मान्। पु॒मांस॑म्। परि॑। पा॒तु॒। वि॒श्वतः॑॥ १४॥

अत्र धन्विनः प्रकोष्ठे बन्धनीयस्य हस्तघ्नस्य स्तुतिः हस्तघ्नः हस्ते हस्तसमीपे वर्तिनि प्रकोष्ठे स्थितः सन् ज्यया हन्यतइति हस्तघ्नः घञर्थेकविधानमिति कः ज्यायाः हेतिं ज्याहेतुकां हिंसां परिबाधमानः निवारयन् भोगैः शरीरेण वचनव्यत्ययः अहिरिव सर्पइव बाहुं प्रकोष्ठं लक्षणया बाहुशब्दः प्रकोष्ठे वर्तते पर्येति परिवेष्टयति किंच विश्वा विश्वानि वयुनानि ज्ञानानि ज्ञातव्यानि माया वयुनमिति तन्नामसु पाठात् विद्वान् जानन् पुमान् पौरुषोपेतः स्वयं पुमांसं धन्विनं विश्वतः सर्वतः परिपातु रक्षति तथाच यास्कः—अहिरिव भोगैःपरिवेष्टयति बाहुं ज्यायावधात्परित्रायमाणोहस्तघ्नःसर्वाणि प्रज्ञानानि प्रजानन् पुमान् पुरुमना भवति पुंसतेर्वेति॥ १४॥

१४. हस्तघ्न (ज्या के आघात से हाथ को बचाने के लिए बंधा हुआ चर्म) ज्या के आघात का निवारण करता हुआ सर्प की तरह शरीर के द्वारा प्रकोष्ठ (जानु से मणिबन्ध तक) को परिवेष्टित करता है, सारे ज्ञातव्य विषयों को जानता है और पौरुषशाली होकर चारों ओर से रक्षा करता है।

---

१ नि० ९।२०। २ नि० ९।१५।

अथ पंचदशी—

**आलाक्तायारुरुशीर्ष्ण्यथोयस्याअयोमुखम् ।**
**इदंपर्जन्यरेतसइष्वैदेव्यैबृहन्नमः ॥ १५ ॥ २१ ॥**

आलऽअक्ता । या । रुरुऽशीर्ष्णी । अथो इति । यस्याः । अयः ।
मुखम् । इदम् । पर्जन्यऽरेतसे । इष्वै । देव्यै बृहत् । नमः ॥१५॥२१॥

या इषुः आलाक्ता आलेन विषेणाक्ता रुरुशीर्ष्णी हन्तृशिरस्का अर्तेर्हिंसाकर्मणोरुरुशब्दो त्पत्तिः श्रृंगशीर्ष्णी वा अथो किंच यस्याः इषोर्मुखं अयः अयोमयं भवति पर्जन्यरेतसे पर्जन्यः रेतोयस्याः सापर्जन्यरेताः तस्यै पर्जन्यकार्यभूतायै शरकांडस्य पर्जन्यजन्यत्वात् बृहत् बृहत्यै तस्यै इष्वै देव्यै इदं नमः क्रियतइति ॥ १५ ॥

१५. जो विषाक्त है, जिसका अग्रभाग हिंसक है और जिसका मुख लोहमय है, उसी पर्जन्य से उत्पन्न विशाल वाण-देवता को नमस्कार।

॥ इति पंचमस्य प्रथमे एकविंशोवर्गः ॥ २१ ॥

**अवसृष्टापरापतशरव्येब्रह्मसंशिते ।**
**गच्छामित्रान्प्रपद्यस्वमामीषांकंचनोच्छिषः ॥ १६ ॥**

अवऽसृष्टा । परा । पत । शरव्ये । ब्रह्मऽसंशिते । गच्छ । अमित्रान् ।
प्र । पद्यस्व । मा । अमीषाम् । कम् । चन । उत् । शिषः ॥ १६ ॥

ब्रह्मसंशिते मंत्रेण तीक्ष्णीकृते शरव्ये हिंसाकुशले इषो त्वं अवसृष्टा क्षिप्ता परापत परागच्छ इतोदेशाद्गच्छ च अमित्रान् हिंसकान् प्रपद्यस्व प्राप्नुहि च अमीषाममित्राणां मध्ये कंचन कंचिदपि माउच्छिषः अवशिष्टं माकुरु ॥ १६ ॥

१६. मन्त्र-द्वारा तेज किये गये और हिंसा-निपुण वाण, तुम छोड़े जाकर गिरो, जाओ और शत्रुओं को मिलो। किसी भी शत्रु को जीते जी नहीं छोड़ना।

अथ सप्तदशी—

**यत्रबाणाःसंपतंतिकुमाराविशिखाइव ।**
**तत्रानोब्रह्मणस्पतिरदितिःशर्मयच्छतुविश्वाहाशर्मयच्छतु ॥१७॥**

यत्र । बाणाः । सम्ऽपतन्ति । कुमाराः । विशिखाःऽइव ।
तत्र । नः । ब्रह्मणः । पतिः । अदितिः । शर्म ।
यच्छतु । विश्वाहा । शर्म । यच्छतु ॥ १७ ॥

यत्र युद्धे कुमाराः विशिखाइव मुंडिताइव बाणाः संपतंति तत्र नोस्मभ्यं ब्रह्मणस्पतिः शर्म सुखं विश्वाहा सर्वदा यच्छतु अदितिश्च शर्म यच्छतु द्विरुक्तिरादरार्था ॥ १७ ॥

१७. मुण्डित कुमारों की तरह जिस युद्ध में बाण गिरते हैं, उसमें हमें ब्रह्मणस्पति सदा सुख दें, अदिति सुख दें।

मर्माणिते॒वर्म॑णाछादयामि॒सोम॑स्त्वा॒राजा॒मृते॒नानु॑वस्ताम् ।
उ॒रोर्वरी॑यो॒वरु॑णस्तेकृणोतु॒जय॑न्तं॒त्वानु॑दे॒वाम॑दन्तु ॥ १८ ॥

मर्मा॑णि । ते॒ । वर्म॑णा । छा॒द॒या॒मि॒ । सोमः॑ । त्वा॒ । राजा॑ ।
अ॒मृते॑न । अनु॑ । व॒स्ता॒म् । उ॒रोः । वरी॑यः । वरु॑णः ।
ते॒ । कृ॒णो॒तु॒ । जय॑न्तम् । त्वा॒ । अनु॑ । दे॒वाः । म॒द॒न्तु॒ ॥ १८ ॥

हे राजन् ते त्वदीयानिमर्माणि येषु स्थानेषु विद्धः सद्योम्रियते तानि मर्माणि वर्मणा कवचेन छादयामि सोमोराजा त्वा त्वां अनु मर्मच्छादनानंतरममृतेन वस्तां आच्छादयतु। किंच वरुणोपि ते तुभ्यं उरोर्वरीयः उरुतरं सुखं कृणोतु करोतु। जयंतं त्वा त्वां देवाः सर्वेपि अनुमदन्तु अनुहृष्यन्तु ॥ १८ ॥

१८. राजन्, तुम्हारे शरीर के मर्मस्थानों को कवच से आच्छादित कर रहा हूँ। सोम राजा तुम्हें अमृत-द्वारा आच्छादित करें, वरुण तुम्हें श्रेष्ठ से भी श्रेष्ठ सुख दें। तुम्हारे विजयी होने पर देवगण हर्ष मनावें।

योनः॒स्वोअर॑णो॒यश्च॒निष्ट्यो॒जिघां॑सति ।
दे॒वास्तंसर्वे॑धूर्व॑न्तु॒ब्रह्म॒वर्म॒ममान्त॑रम् ॥ १९ ॥ २२ ॥

यः । नः॒ । स्वः । अर॑णः । यः । च॒ । निष्ट्यः॑ । जिघां॑सति ।
दे॒वाः । तम् । सर्वे॑ । धूर्व॑न्तु॒ । ब्रह्म॑ । वर्म॑ । मम॑ । अन्त॑रम् ॥ १९ ॥ २२ ॥

यः स्वोज्ञातिः अरणः अरममाणः यश्च निष्ट्यः तिरोभूतः दूरेस्थितः नोस्मान् जिघांसति हन्तुमिच्छति तं देवाः सर्वे देवाः धूर्वन्तु हिंसन्तु ब्रह्म मंत्रोमम अंतरं शराणां निवारकं वर्म विद्यते ॥ १९ ॥

१९. जो कुटुम्बी हमारे प्रति प्रसन्न नहीं और जो अलग रहकर हमारे वध की इच्छा करता है, उसे सारे देवगण मारें। हमारे लिए तो मन्त्र ही बाण-निवारक कवच है।

॥ इति पंचमस्य प्रथमे द्वाविंशोवर्गः ॥ २२ ॥

॥ इति षष्ठे मंडले षष्ठोनुवाकः ॥ ६ ॥

॥ इति भारद्वाजं षष्ठं मंडलंसमाप्तं ॥

वासिष्ठे सप्तमे मंडले षडनुवाकाः तत्र प्रथमेनुवाके सप्तदश सूक्तानि तत्राग्निंनरइति पंचविंशत्यृचं प्रथमं सूक्तं अत्रेयमनुक्रमणिका—अग्निंपंचाधिका विराजोष्टादशाद्याइति सप्तमं मंडलं वसिष्ठो पश्यदित्युक्तत्वान्मंडलद्रष्टा वसिष्ठऋषिः आदितोष्टादश विराजस्त्र्येकादशकाः शिष्टा अनादेशपरिभाषया त्रिष्टुभः मंडलादिपरिभाषया अग्निर्देवता विश्वजितीदं सूक्तं आज्यशस्त्रं सूत्रितं च—विश्वजितोग्निंनरइत्याज्यमिति । अत्रेश्वतुर्वीराख्ये चतूरात्रे चतुर्थेहनि इदमेवसूक्तमाज्यशस्त्रं सूत्र्यते हि—अग्निंनरइतिचतुर्थइति व्यूळ्हे दशरात्रे चतुर्थेहनि इदं सूक्तं जातवेदस्य निविद्धानं सूत्रितं च—अग्निंनरइत्याग्निमारुतमिति । महाव्रतेपीदमाज्यशस्त्रं तथैव पंचमारण्यके सूत्र्यते—आज्यप्रउगेविश्वजितइति । प्रातरनुवाके त्वमग्नेवसूनित्यादीनामनुष्टुभां स्थाने आद्यस्तृचः प्रक्षेपणीयः सूत्र्यते हि—दशमेहन्यनुष्टुभांस्थानेग्निंनरोदीधितिभिररण्योरिति तृचमाग्नेये क्रताविति । आद्याः षळृचः तस्मिन्नेवाहनि आग्निमारुते शस्त्रे स्तोत्रियानुरूपार्थाः सूत्रितं च—अग्निंनरोदीधितिभिररण्योरिति स्तोत्रियानुरूपाविति । मंडलादिहोमेप्येषा । आधाने तृतीयायामिष्टौ प्रेद्धइति स्विष्टकृतोनुवाक्या सूत्रितं च—प्रेद्धोअग्नइमोअग्नइति संयाज्ये इति । एवमन्यत्रापि दीक्षणीयादिषु स्विष्टकृतोनुवाक्या । प्रायणीयेष्टौ सेदग्निरग्नीनित्यादिके द्वे स्विष्टकृतो याज्यानुवाक्ये सूत्रितंच—सेदग्निरग्नीरत्यस्त्वन्यानिति द्वे संयाज्ये इति । आधाने तृतीयायामिष्टौ । इमोअग्नइति स्विष्टकृतो याज्या सूत्रितं च—इमोअग्नइति संयाज्ये इति । एवमन्यत्रापि दीक्षणीयादिषु एषा सौविष्टकृतीयाज्या प्रातरनुवाकाग्नेये क्रतौ त्रैष्टुभे छंदसि आश्विनशस्त्रे च त्वमग्नेसुहवइत्याद्याः पंचर्चः सूत्रितं च—त्वमग्नेसुहवोरणवसंदृगिति ।

तत्र प्रथमा—

अग्निंनरोदीधितिभिररण्योर्हस्तच्युतीजनयन्तप्रशस्तम् ।
दूरेदृशंगृहपतिमथर्युम् ॥ १ ॥

अग्निम् । नरः । दीधितिऽभिः । अरण्योः । हस्तऽच्युती । जनयन्त । प्रऽशस्तम् । दूरेऽदृशम् । गृहऽपतिम् । अथर्युम् ॥ १ ॥

नरो नेतारऋत्विजः प्रशस्तं प्रकर्षेण स्तुतं दूरेदृशं दूरेदृश्यमानं दूरेपश्यन्तं वा गृहपतिं गृहाणां पालकं अथर्युं आगम्यमतनवन्तंवाग्निं अरण्योर्विद्यमानं हस्तच्युती हस्तप्रच्युत्या हस्तगत्या दीधितिभिः अंगुलिभिः जनयन्त दीधितयोंगुलयो भवन्ति धीयन्ते कर्मस्वरणी प्रत्यृतएने

अग्निसमरणाज्जायतइतिवा हस्तच्युती हस्तप्रच्युत्या जनयंत प्रशस्तं दूरेदर्शनं गृहपति-मतनवन्तमिति ॥ १ ॥

१. नेता ऋत्विक् लोग प्रशस्त, दूरस्थित, गृहपति और गतिशील अग्नि को दो काष्ठों से हस्तगति और अँगुलियों के द्वारा, उत्पन्न करते हैं।

अथ द्वितीया–

तमग्निमस्तेवसवोन्यृण्वन्त्सुप्रतिचक्षमवसेकुतश्चित्।
दक्षाय्योयोदमआसनित्यः ॥ २ ॥

तम्। अग्निम्। अस्ते। वसवः। नि। ऋण्वन्। सुऽप्रतिचक्षम्।
अवसे। कुतः। चित्। दक्षाय्यः। यः। दमे। आस। नित्यः ॥ २ ॥

योग्निः दमे गृहे दक्षाय्यः पूजनीयो हविर्भिः समर्धनीयोवा नित्यो जस्रः आस बभूव तं सुप्रतिचक्षं सुप्रतिदर्शनमग्निं कुतश्चित् सर्वस्मादपि भयहेतोः अवसे रक्षणाय वसवो वासकाः ये वसिष्ठा अस्ते गृहे न्यृण्वन् न्यदधुः ॥ २ ॥

२. जो अग्नि गृह में नित्य पूजनीय थे, उन्हीं सुदृश्य अग्नि को, सब प्रकार के भयों से बचाने के लिए, वसिष्ठगण ने गृह में रक्खा था।

अथ तृतीया–

प्रेद्धोअग्नेदीदिहिपुरोनोजंस्रयासूर्म्यायविष्ठ।
त्वांशश्वन्तउपयन्तिवाजाः ॥ ३ ॥

प्रऽइद्धः। अग्ने। दीदिहि। पुरः। नः। अजस्रया। सूर्म्या।
यविष्ठ। त्वाम्। शश्वन्तः। उप। यन्ति। वाजाः ॥ ३ ॥

यविष्ठ युतम हे अग्ने प्रेद्धः प्रकर्षेण समिद्धस्त्वं अजस्रया सरणशीलया सूर्म्या ज्वालया नोस्मदर्थं पुरः पुरस्तादाहवनीयायतने दीदिहि दीप्यस्व त्वां शश्वन्तो बहवः वाजाः अन्नानि हवींषि उपयन्ति उपगच्छन्ति ॥ ३ ॥

३. तरुणतम अग्नि, भली भाँति समृद्ध होकर, सतत ज्वाला के साथ, हमारे आगे प्रदीप्त होओ। तुम्हारे पास बहुत अन्न जाता है।

प्रतेअग्नयोग्निभ्योवरंनिःसुवीरासःशोशुचन्तद्युमन्तः।
यत्रानरःसमासतेसुजाताः ॥ ४ ॥

१ नि० ५। १०।

प्र । ते । अग्नयः । अग्निऽभ्यः । वरम् । निः । सुऽवीरासः । शोशुचन्त ।
द्युऽमन्तः । यत्र । नरः । सम्ऽआसते । सुऽजाताः ॥ ४ ॥

अग्निभ्यो लौकिकेभ्योग्निभ्यः वरं अत्यन्तं द्युमन्तोदीप्तिमन्तः सुवीरासः कल्याणपुत्रपौत्रप्रदाः ते अग्नयो प्रनिःशोशुचन्त प्रकर्षेण नितरां दीप्यन्ते यत्र येष्वग्निषु सुजाताः सुजन्मानः नरः कर्मणां नेतारो यजमाना ऋत्विजो वा समासते सहासते ॥ ४ ॥

४. सुजन्मा नेता या ऋत्विक् लोग जिन अग्नि के पास बैठते हैं, वह लौकिक अग्नियों से अधिक दीप्तिमान्, कल्याणवाही, पुत्र-पौत्र-प्रद और विशेष रूप से दीप्ति प्राप्त करनेवाले हैं।

दानोअग्नेधियारयिंसुवीरंस्वपत्यंसहस्यप्रशस्तम् ।
नयंयावातरतियातुमावान् ॥ ५ ॥ २३ ॥

दाः । नः । अग्ने । धिया । रयिम् । सुऽवीरम् । सुऽअपत्यम् ।
सहस्य । प्रऽशस्तम् । न । यम् । यावा । तरति ।
यातुऽमावान् ॥ ५ ॥ २३ ॥

सहस्य अभिभवकुशल हे अग्ने सुवीरं शोभनपुत्रपौत्रोपेतं स्वपत्यं शोभनपौत्रोपेतं प्रशस्तं श्रेष्ठं रयिं धनं धिया स्तोत्रेण नोस्मभ्यं दाःदेहि यं रयिं यावा अभिगन्ता शत्रुः यातुमावान् हिंसायानिर्गतः नलोपाभावश्छांदसः यद्वा हिंसायुक्तः परोवतिर्मत्वर्थीयः पूरकः न तरति न-बाधते ॥ ५ ॥

५. अभिभवनिपुण अग्नि, हिंसक शत्रु जिसमें बाधा न दे सकें, ऐसी कल्याणकर, पुत्र-पौत्र-प्रद और सुन्दर सन्तति से युक्त धन, स्तोत्र सुनकर, हमें दो। ॥ इति पंचमस्य प्रथमे त्रयोविंशो वर्गः ॥ २३ ॥

उपयमेतियुवतिःसुदक्षंदोषावस्तोर्हविष्मतीघृताची ।
उपस्वैनमरमतिर्वसूयुः ॥ ६ ॥

उप । यम् । एति । युवतिः । सुऽदक्षम् । दोषा । वस्तोः ।
हविष्मती । घृताची । उप । स्वा । एनम् । अरमतिः । वसुऽयुः ॥६॥

सुदक्षं सुबलं यमग्निं हविष्मती हविषा युक्ता घृताची घृतमंचतीति घृताची जुहूः युवतिः अग्निना नित्ययुक्ता दोषा वस्तोः रात्रावहनि च उपैति उपगच्छति तमेनं स्वा स्वकीया अरमतिः दीप्तिः वसुयुः स्तोतॄणां धनमिच्छन्ती उपैति ॥ ६ ॥

६. हव्ययुक्ता युवती जुहू कुशल अग्नि के पास दिन-रात आती है। स्वकीय दीप्ति धनाभिलाषी होकर उसके निकट आती है।

अथ सप्तमी—

विश्वा॑अग्ने॒अप॑द॒हाराती॒र्येभि॒स्तपो॑भि॒रद॑हो॒जरू॑थम्।
प्रनि॑स्व॒रंचा॑तय॒स्वामी॑वाम् ॥ ७ ॥

विश्वाः॑ । अ॒ग्ने॒ । अप॑ । द॒ह॒ । अरा॑तीः । येभिः॑ । तपः॑ऽभिः । अद॑हः ।
जरू॑थम् । प्र । निः॒ऽस्व॒रम् । चा॒त॒य॒स्व॒ । अमी॑वाम् ॥ ७ ॥

हे अग्ने विश्वा विश्वान् अरातीः शत्रून् तपोभिस्तेजोभिः अपदह येभिः यैस्तपोभिः जरूथं परुषशब्दकारिणं राक्षसं गृणातेरूथन्प्रत्ययेसति जरूथशब्दनिष्पत्तिः अदहो दहसि। किंच अमीवां रोगं निस्वरं न्यक्कृतोपतापं यथाभवति तथा स्वृशब्दोपतापयोरितिधातुः प्रचातयस्व प्रकर्षेण नाशय चततिर्गत्यर्थोवेति भट्टभास्करमिश्रः ॥ ७ ॥

७. अग्नि, जिस तेज से तुम कठोर-शब्द-कर्त्ता राक्षस को जलाते हो, उसी तेज के बल से सारे शत्रुओं को जलाओ। उपताप दूर करके रोग को नष्ट करो।

आयस्ते॑अग्नइध॒तेअनी॑कं॒वसि॑ष्ठ॒शुक्र॒दीदि॑वः॒पाव॑क।
उ॒तोन॑ए॒भिः॒स्त॒वथै॑रि॒हस्याः॑ ॥ ८ ॥

आ । यः । ते॒ । अ॒ग्ने॒ । इ॒ध॒ते । अनी॑कम् । वसि॑ष्ठ शुक्र॑ ।
दीदि॑ऽवः । पाव॑क । उ॒तो इति॑ । नः॒ । ए॒भिः॒ । स्त॒वथैः॑ । इ॒ह । स्याः॒ ॥८॥

वसिष्ठ श्रेष्ठ शुक्र शुभ्र दीदिवः दीप्त पावक शोधक हे अग्ने ते तव अनीकं तेजः यः आ इधते समेधयति तस्येव नोस्माकं उतो अपि च येभिः स्तवथैः स्तोत्रैः इहास्मिन्यज्ञे स्याः भव॥८॥

८. हे श्रेष्ठ, शुभ्र, दीप्त और पावक अग्नि, जो तुम्हें समिद्ध करते हैं, उन्हीं के समान हमारे इस स्तोत्र से भी प्रसन्न होकर इस यज्ञ में ठहरो।

वि॒येते॑अग्नेभेजि॒रेअनी॑कं॒मर्ता॒नरः॒पित्र्या॑सः॒पुरु॒त्रा।
उ॒तोन॑ए॒भिः॒सु॒मना॑इ॒हस्याः॑ ॥ ९ ॥

वि । ये । ते॒ । अ॒ग्ने॒ । भे॒जि॒रे । अनी॑कम् । मर्ताः॑ । नरः॑ । पित्र्या॑सः ।
पु॒रु॒ऽत्रा । उ॒तो इति॑ । नः॒ । ए॒भिः॒ । सु॒ऽमनाः॑ । इ॒ह । स्याः॒ ॥ ९ ॥

हे अग्ने ते तव अनीकं तेजः पित्र्यासः पितृहिताः आर्षेयावा मर्ता मनुष्याः नरः कर्मणां नेतारो ये यजमानाः पुरुत्रा बहुषु देशेषु विभेजिरे विभजन्त आदधुरितियावत् तेषामिव नोस्माकं उतो अपि एभिः स्तुतैः सह स्तोत्रैर्वा सुमना अनुग्राहकमनाः सन् इह यज्ञे स्याः भव॥९॥

९. अग्नि, जो पितृ-हितैषी और (कर्म-नेता) मनुष्यों ने तुम्हारे तेज को अनेक देशों में विभक्त किया है, उन्हीं के समान हमारे इस स्तोत्र से प्रसन्न होकर इस यज्ञ में ठहरो।

अथ दशमी—

इमेनरोवृत्रहत्येषुशूराविश्वाअदेवीरभिसन्तुमायाः ।
येमेधियंपनयन्तप्रशस्ताम् ॥ १० ॥ २४ ॥

इमे । नरः । वृत्रऽहत्येषु । शूराः । विश्वाः । अदेवीः । अभि ।
सन्तु । मायाः । ये । मे । धियम् । पनयन्त । प्रऽशस्ताम्॥१०॥२४॥

ये मनुष्याः मे मदीयां प्रशस्तां प्रकृष्टां धियं कर्म स्तुतिं वा पनयन्त स्तुवन्ति ब्रुवन्ति वा तइमे मयि स्निग्धा नरो मनुष्या वृत्रहत्येषु संग्रामेषु शूराः अदेवीरासुरीः विश्वाः सर्वाः मायाः अभिसन्तु अभिभवन्तु ॥ १० ॥

१०. जो मनुष्य मेरे श्रेष्ठ कर्म की स्तुति करते हैं, वही वीर नेता संग्रामों में सारी आसुरी माया को दबा दें।

॥ इतिपंचमस्य प्रथमे चतुर्विंशोवर्गः ॥ २४ ॥

माशूनेअग्नेनिषदामनृणांमाशेषसोवीरतापरित्वा ।
प्रजावतीषुदुर्यासुदुर्य ॥ ११ ॥

मा । शूने । अग्ने । नि । सदाम । नृणाम् । मा । अशेषसः ।
अवीरता । परि । त्वा । प्रजाऽवतीषु । दुर्यासु । दुर्य ॥ ११ ॥

हे अग्ने शूने शून्ये पुत्रादिरहिते गृहे मानिषदाम न निवसाम नृणामन्येषां च गृहे मानिषदाम दुर्य गृहेभ्योहित हे अग्ने अशेषसः अपुत्राः तोक्म शेष इति पुत्रनामसु पाठात् अवीरता अवीरतया युक्ताश्च सन्तः त्वा त्वां परिचरन्तः प्रजावतीष्वेव दुर्यासु गृहेषु निवसाम॥११॥

११. अग्नि, हम शून्य गृह में नहीं रहेंगे; दूसरे के घर में भी नहीं रहेंगे। गृह के हितैषी अग्निदेव, हम पुत्र-शून्य और वीर-रहित हैं। तुम्हारी परिचर्या करते हुए हम प्रजा से सम्पन्न घर में रहें।

अथ द्वादशी—

यमश्वीनित्यमुपयातियज्ञंप्रजावन्तंस्वपत्यंक्षयंनः ।
स्वजन्मनाशेषसावावृधानम् ॥ १२ ॥

यम् । अश्वी । नित्यम् । उपऽयाति । यज्ञम् । प्रजाऽवन्तम्
सुऽअपत्यम् । क्षयम् । नः । स्वऽजन्मना । शेषसा । ववृधानम्॥१२॥

यं यज्ञं यज्ञाश्रयं अश्वी अश्ववानग्निः नित्यमुपयाति तं प्रजावन्तं भृत्यादिसहितं स्वपत्यं शोभनसंतानोपेतं स्वजन्मना औरसेन शेषसा पुत्रेण ववृधानं वर्धमानं क्षयं गृहं नोस्मभ्यं हे अग्ने देहीति शेषः ॥ १२ ॥

१२. जिस यज्ञाश्रय गृह में अश्ववाले अग्नि नित्य जाते हैं, हमें वही, नौकर आदि से युक्त, सुन्दर सन्तानवाले तथा औरसजात पुत्र के द्वारा वर्द्धमान गृह दो। अथ त्रयोदशी—

पाहिनोअग्नेरक्षसोअजुंष्टात्पाहिधूर्तेररंरुषोअघायोः ।
त्वायुजापृतनायूँरभिष्याम् ॥ १३ ॥

पाहि । नः । अग्ने । रक्षसः । अजुंष्टात् । पाहि । धूर्तेः । अररुषः । अघऽयोः । त्वा । युजा । पृतनाऽयून् । अभि । स्याम् ॥ १३ ॥

हे अग्ने नोस्मान् अजुष्टात् अप्रीतिविषयात् रक्षसो राक्षसात् पाहि रक्ष किं च अररुषोऽदातुः अघायोः पापमिच्छतः धूर्तेर्हिंसकात् पाहि। अपि च त्वा त्वया युजा सहायभूतेन पृतनायून् पृतनाकामान् अभिष्यां अहमभिभवेयं ॥ १३ ॥

१३. हमें अप्रीतिकर राक्षस से बचाओ। अदाता और पापी हिंसक से बचाओ। हम तुम्हारी सहायता से सेना के अभिलाषी व्यक्ति को पराजित करेंगे। अथ चतुर्दशी—

सेदुग्निरुग्नीँरत्यस्त्वन्यान्यत्रवाजीतनयोवीळुपाणिः ।
सहस्रपाथाअक्षरासमेति ॥ १४ ॥

सः । इत् । अग्निः । अग्नीन् । अति । अस्तु । अन्यान् । यत्र । वाजी । तनयः । वीळुऽपाणिः । सहस्रऽपाथाः । अक्षरा । सम्ऽएति ॥ १४ ॥

सइत् सएवाग्निः आहवनीयादिरस्मदीयः अन्यानितरानन्यदीयानग्नीन् अत्यस्तु अतिभवतु यत्र यस्मिन्नग्नौ वाजी अशनवान् बलवान् वा वीळुपाणिः दृढहस्तः वीळु च्यौत्नमिति बलनामसु पाठात् सहस्रपाथाः बह्वन्नः बहुस्थानोवा बहूदकोवा तनयोस्मत्पुत्रः अक्षरा अक्षरेण क्षयरहितेन स्तोत्रेण समेति सम्यक् परिचरन्नेति समर्थपुत्रवतएवाग्निरन्यदीयानग्नीनभिभवतीति भावः ॥ १४ ॥

१४. बलवान्, दृढ़हस्त, प्रभूत अन्नवाला हमारा पुत्र क्षय-रहित स्तोत्र-द्वारा जिस अग्नि की सेवा करता है, वही अग्नि दूसरे के अग्नि को आविभूत करें। अथ पंचदशी—

सेदग्निर्योवनुष्यतोनिपातिसमेद्धारमंहसउरुष्यात् ।
सुजातासःपरिचरन्तिवीराः ॥ १५ ॥ २५ ॥

सः । इत् । अ॒ग्निः । यः । व॒नु॒ष्य॒तः । नि॒ऽपाति॑ । स॒म्ऽए॒द्धार॑म् ।
अंह॑सः । उ॒रु॒ष्यात् । सु॒ऽजा॒तासः॑ । परि॑ । च॒र॒न्ति॒ । वी॒राः॥१५॥२५॥

यः समेद्धारं प्रबोधकं वनुष्यतो हिंसकान् वनुष्यतिर्हंतिकर्मेतियास्कः। उरुष्यात् अधिकादंहसः पापाच्च निपाति अत्यन्तं रक्षति यं च सुजातासः सुजन्मानएव वीराः स्तोतारः सुतावा परिचरन्ति सइव् सएवाग्निः ॥१५॥

१५. जो यज्ञकर्त्ता प्रबोधक को हिंसा और पाप से बचाते हैं और जिनकी सेवा कुलीन वीरगण करते हैं, वही अग्नि हैं।

॥ इति पंचमस्य प्रथमे पंचविंशो वर्गः ॥२५॥

अ॒यंसोअ॒ग्निराहु॑तःपु॒रु॒त्रायमीशा॑न॒ःसमिदि॒न्धेह॒विष्मा॑न् ।
परि॒यमेत्य॑ध्व॒रेषु॒होता॑ ॥ १६ ॥

अ॒यम् । सः । अ॒ग्निः । आऽहु॑तः । पु॒रु॒ऽत्रा । यम् । ईशा॑नः । सम् ।
इत् । इ॒न्धे । ह॒विष्मा॑न् । परि॑ । यम् । एति॑ । अ॒ध्व॒रेषु॑ । होता॑ ॥१६॥

यमग्निं ईशानः समृद्धः ऐश्वर्यमिच्छन् वा हविष्मान् यजमानः समिदिन्धे सम्यग्दीपयतियं चाध्वरेषु हिंसारहितेषु यज्ञेषु होता देवानामाह्वाता पर्येति परिगच्छति सोयमग्निः पुरुत्रा बहुषु देशेषु बहुषु यज्ञेषुवा आहुतः आहुतिभिरभिहुतः ॥१६॥

१६. जिन्हें समृद्ध और हविष्मान् व्यक्ति भली भाँति दीप्त करता है और यज्ञ में जिनकी परिक्रमा होता (देवों को बुलानेवाला) करता है, वे ही ये अग्नि अनेक देशों में बुलाये जाते हैं।

त्वेअ॑ग्नआ॒हव॑नानि॒भूरी॑शा॒नास॒आजु॑हुया॒म॒नित्या॑ ।
उ॒भाकृ॒ण्वन्तो॑वह॒तूमि॒येधे॑ ॥ १७ ॥

त्वे इति॑ । अ॒ग्ने॒ । आ॒ऽहव॑नानि । भूरि॑ । ई॒शा॒नासः॑ । आ । जु॒हु॒या॒म॒ ।
नित्या॑ । उ॒भा । कृ॒ण्वन्तः॑ । व॒ह॒तू इति॑ । मि॒येधे॑ ॥ १७ ॥

हे अग्ने त्वे त्वयि ईशानासः धनानामीश्वराः सन्तः नित्या नित्यान्यग्निहोत्रादीनि उभा उभौ वहत् वहनहेतू स्तोत्रं शस्त्रं च कृण्वन्तः कुर्वन्तः मियेधे यज्ञे भूरि बहूनि आहवनानि हवींषि आजुहुयाम आजुहवाम ॥ १७ ॥

१७. अग्निदेव, धनपति होकर हम तुम्हें लक्ष्य करके नित्य स्तोत्र और उक्थ-द्वारा यज्ञ में प्रभूत हव्य देंगे।

---

१ नि० ५. २.

अथाष्टादशी–

इमोअंग्नेवीततमानिहव्याजंस्रोवक्षिदेवतातिमच्छं ।
प्रतिनईंसुरभीणिव्यन्तु ॥ १८ ॥

इमो इति । अग्ने । वीतऽतमानि । हव्या । अजस्रः । वक्षि ।
देवऽतातिम् । अच्छं । प्रति । नः । ईम् । सुरभीणि । व्यन्तु ॥ १८ ॥

हे अग्ने त्वं अजस्रः अनवरतःसन् इमो इमानि वीततमानि अतिशयेन कान्तानि हव्या हव्यानि देवतातिं देवानां समूहं अभिवक्षि वह अच्छ गच्छ च नोस्मदीयानि सुरभीणि शोभनानि ईं एतानि हव्यानि देवाः प्रतिव्यन्तु प्रत्येकं कामयन्तां ॥ १८ ॥

१८. अग्नि, देवताओं के पास तुम सदा इस अतीव कमनीय हव्य को ले जाओ और गमन करो। प्रत्येक देवता हमारे इस शोभन हव्य की इच्छा करता है।

मानोअग्नेवीरतेपरादादुर्वाससेमतयेमानोअस्यै ।
मानःक्षुधेमारक्षसंऋतावोमानोदमेमावनआजुहूर्थाः ॥ १९ ॥

मा । नः । अग्ने । अवीरते । परां । दाः । दुःऽवाससे । अमतये ।
मा । नः । अस्यै । मा । नः । क्षुधे । मा । रक्षसे । ऋतऽवः ।
मा । नः ! दमे । मा । वने । आ । जुहूर्थाः ॥ १९ ॥

हे अग्ने नोस्मान् अवीरते अपुत्रतायै मापरादाः मादेहि दुर्वाससे दुष्टवस्त्रायच नोमापरादाः अस्यै अमतये अभिहान्यै नोस्मान् मापरादाः क्षुधे अशनायायै नोस्मान् माच परादाः रक्षसे बलिने चास्मान् मापरादाः हेऋतावः सत्यवन्नग्ने नोस्मान् दमे गृहे माजुहूर्थाः मार्हिसीः हुर्छांकौटिल्येइति धातुः वनेचास्मान् माजुहूर्थाः ॥ १९॥

१९. अग्नि, हमें निस्सन्तान नहीं करना। ख़राब कपड़े नहीं देना। हमें कुबुद्धि नहीं देना। हमें भूख नहीं देना। हमें राक्षस के हाथ में नहीं देना। हे सत्यवान् अग्नि, हमें न घर में मारना, न वन में।

नूमेब्रह्माण्यग्नउच्छंशाधित्वंदेवमघवंद्भ्यःसुषूदः ।
रातौस्यामोभयासआतेयूयंपातस्वस्तिभिःसदानः ॥२०॥२६॥

नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवत्ऽभ्यः ।
सुसूदः । रातौ । स्याम । उभयासः । आ । ते । यूयम् । पात ।
स्वस्तिऽभिः । सदा । नः ॥ २० ॥ २६ ॥

हे अग्ने मे मम मदर्थं ब्रह्माणि अन्नानि नु क्षिप्रमुच्छशाधि उत्कर्षेण शोधितानि कुरु। किं च हे देव द्योतमानाग्ने मघवद्भ्योहविष्मद्भ्योस्मभ्यं सुषूदः अन्नानि प्रेरय। ते त्वदीयायां रातौ दाने उभयासः स्तोत्रिणः शस्त्रिणश्च अथवा स्तुवन्तो यजमानाश्च वयं आस्याम अत्यर्थं भवेम नोस्मान् यूयं त्वं त्वत्परिवाराश्च सर्वे स्वस्तिभिरविनाशिभिर्मंगलैः। तथा च यास्कः—स्वस्तीत्यविनाशिनामास्तिरभिपूजितः स्वस्तीति[1] सदा पात रक्षत ॥ २० ॥

२०. अग्नि, हमारा अन्न विशेष रूप से शोधित करना। देव, याज्ञिकों को अन्न देना। हम दोनों (स्तोता और यजमान) तुम्हारे दान में रहें। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य प्रथमे षड्विंशो वर्गः ॥ २६ ॥

त्वमग्नेसुहवोरण्वसन्दृक्सुदीतीसूनोसहसोदिदीहि।
मात्वेसचातनयेनित्यआधङ्मावीरोअस्मन्नर्योविदासीत् ॥२१॥

त्वम्। अग्ने। सुऽहवः रण्वऽसन्दृक्। सुऽदीती। सूनो इति। सहसः। दिदीहि। मा। त्वे इति। सचा। तनये। नित्ये। आ। धक्। मा। वीरः। अस्मत्। नर्यः। वि। दासीत् ॥ २१ ॥

सहसःसूनो सहसःसुत हे अग्ने सुहवः स्वाह्वानः रण्वसंदृक् रमणीयसंदर्शनस्त्वं सुदीती शोभनया दीप्त्या दिदीहि दीप्यस्व। किं च तनये नित्ये औरसे पुत्रे त्वे त्वं सचा सहायभूतः मा आधक् मा अभिधाक्षीः। अपि च अस्मत् पृथग्भूतः अस्माकं वा षष्ठयर्थे पंचमी वीरः पुत्रः नर्यो नरहितः माविदासीत् मोपक्षीयत ॥ २१ ॥

२१. अग्नि, तुम सुन्दर आह्वानवाले और रमणीय-दर्शन हो। शोभन दीप्ति के साथ प्रदीप्त होओ। सहायक बनो और औरस पुत्र को नहीं जलाओ। हमारा मनुष्यों का हितैषी पुत्र नष्ट न होने पावे।

अथ द्वाविंशी—

मानोअग्नेदुर्भृतयेसचैषुदेवेद्धेष्वग्निषुप्रवोचः।
मातेअस्मान्दुर्मतयोभृमाच्चिद्देवस्यसूनोसहसोनशन्त ॥ २२ ॥

मा। नः। अग्ने। दुःऽभृतये। सचा। एषु। देवऽइद्धेषु। अग्निषु। प्र। वोचः। मा। ते। अस्मान्। दुःऽमतयः। भृमात्। चित्। देवस्य। सूनो इति। सहसः। नशन्त ॥ २२ ॥

---

1 नि० ३, २१।

हे अग्ने सचा सहायभूतस्त्वं देवेद्धेषु ऋत्विग्भिः समिद्धेषु एष्वग्निषु दुर्भृतये कृच्छ्रभरणाय नोस्मान् मा प्रवोचः न ब्रूहि त्वत्सहायभूताअग्नयः यथा माम कृच्छ्रेणबिभृयुः तथा ब्रूहीत्यर्थः किं च सहसः सूनो हे बलस्य पुत्राग्ने देवस्य द्योतमानस्य ते तव दुर्मतयो निग्रहबुद्धयः भ्रमाच्चित् भ्रमादपि अत्र संप्रसारणं छान्दसं प्रमादादपीत्यर्थः । अस्मान्मानशंत माव्याप्नुवंतु नशदितिव्याप्तिकर्मसु पाठात् ॥ २२ ॥

२२. अग्नि, तुम सहायक होओ; और ऋत्विकों द्वारा समिद्ध अग्निगण को कहो कि वे सुख के साथ हमारा भरण करें। बल के पुत्र अग्नि, तुम्हारी दुर्बुद्धि भ्रम से भी हमें व्याप्त न करे।

समर्तोअग्नेस्वनीकरेवानमर्त्येयआजुहोतिहव्यम् ।
सदेवतावसुवनिंदधातियंसूरिरर्थीपृच्छमानएति ॥ २३ ॥

सः । मर्तः । अग्ने । सुऽअनीक । रेवान् । अमर्त्ये । यः ।
आऽजुहोति । हव्यम् । सः । देवता । वसुऽवनिम् । दधाति ।
यम् । सूरिः । अर्थी । पृच्छमानः । एति ॥ २३ ॥

स्वनीक सुतेजस्क हे अग्ने अमर्त्ये अमनुष्ये देवतात्मनि त्वयि हव्यं हविः यआजुहोति समर्तो मनुष्यो रेवान् धनवान् भवति यं मर्त्यं सूरिः प्राज्ञः अर्थी धनादिकामः पृच्छमानः असावुदारः क्वास्तइतिपृच्छन् एति अभिगच्छति स एव मनुष्यः देवता देवताभ्यो वसुवनिं धनपोषं दधाति धारयति यद्वा सदेवताग्निः वसुवनिं यजमानं दधाति धारयति यमग्निं सूरिः स्तोता अर्थी प्रयोजनवान् पृच्छमानः कोसावग्निरिति पृच्छमानएति ॥ २३ ॥

२३. सुतेजा और देवात्मा अग्नि, जो मनुष्य तुम्हें हव्य देता है, वही धनी होता है। जिसके पास धनाभिलाषी स्तोता जानने की इच्छा से जाता है, वही अग्निदेव यजमान की रक्षा करते हैं।

अथ चतुर्विंशी—

महोनोअग्नेसुवितस्यविद्वान्रयिंसूरिभ्यआवहाबृहन्तम् ।
येनवयंसहसावन्मदेमाविक्षितासआयुषासुवीराः ॥ २४ ॥

महः । नः । अग्ने । सुवितस्य । विद्वान् । रयिम् । सूरिऽभ्यः ।
आ । वह । बृहन्तम् । येन । वयम् । सहसाऽवन् । मदेम ।
अविऽक्षितासः । आयुषा । सुऽवीराः ॥ २४ ॥

हे अग्ने नोस्मदीयस्य महो महतः सुवितस्य कल्याणस्य कर्मणो विद्वान् अस्मदीयं कल्याणं कर्म जानन्नित्यर्थः। त्वं सूरिभ्यः स्तोतृभ्योस्मभ्यं बृहन्तं महान्तं रयिं धनं आवह रयिमेव विशिनष्टि हे सहसावन् बलवन्नग्ने येन धनेन वयं स्तोतारः अविक्षितासः अविक्षीणाः आयुषा पूर्णायुषः सुवीराः कल्याणपुत्रपौत्राश्च सन्तो मदेम हृष्येम ॥ २४ ॥

२४. अग्नि, तुम हमारे महान् कल्याणवाले कार्य को जानते हो। बल के पुत्र, हम तुम्हारे स्तोता हैं। जिससे हम अक्षय, पूर्णायु और कल्याणकर पुत्र-पौत्र आदि से सम्पन्न होकर प्रसन्न हो सकें, ऐसा महान् धन हमें दो।

अथ पंचविंशी--

नूमेब्रह्माण्यग्नउच्छशाधित्वंदेवमघवद्भ्यःसुषूदः ।
रातौस्यामोभयासआतेयूयंपातस्वस्तिभिःसदानः ॥२५॥२७॥

नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवत्ऽभ्यः । सुसूदः । रातौ । स्याम । उभयासः । आ । ते । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ २५ ॥ २७ ॥

इयमृक् प्रागेव व्याख्याता ॥ २५ ॥

२५. अग्निदेव, हमारे अन्न का भली भाँति शोधन करो। देव, तुम याज्ञिकों को अन्न दो। हम दोनों (स्तोता और यजमान) तुम्हारे दान में रहें। तुम हमें सदा कल्याण-द्वारा पालन करो।

॥ इति पंचमस्य प्रथमे सप्तविंशोवर्गः ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येण विरचितेमाधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके प्रथमोध्यायः समाप्तः ॥१॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा योवेदेभ्योखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

जुषस्वनइत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं आप्रशब्दोक्तत्वात् इदं तनूनपाद्र-हितं समिद्धाद्याअग्निविशेषाः प्रत्यृचं देवताउक्ताः तथाचानुक्रम्यते—जुषस्वैकादशाप्रमिति । प-शाविष्टाविदमाप्रीसूक्तं सूत्रितं च—जुषस्वनःसमिधमिति वसिष्ठानामिति । पत्नीसंयाजे त्वाष्ट्र्या-गस्ययाज्या त्वाष्ट्रे पशावपिपुरोडाशस्यानुवाक्येयमिति पूर्वमुक्तम् ।

तत्र प्रथमा—

ओम् जुषस्वंनःसमिधमग्नेअद्यशोचाबृहद्यजतंधूममृण्वन् ।
उपस्पृशदिव्यंसानुस्तूपैःसंरश्मिभिस्ततनःसूर्यस्य ॥ १ ॥

जुषस्व । नः । सम्ऽइधम् । अग्ने । अद्य । शोच । बृहत् । यजतम् । धूमम् । ऋण्वन् । उप । स्पृश । दिव्यम् । सानु । स्तूपैः । सम् । रश्मिऽभिः । ततनः । सूर्यस्य ॥ १ ॥

हे अग्ने नोस्माकं समिधं अद्य जुषस्व सेवस्व यजतं यजनीयं प्रशस्तं धूमं ऋण्वन् प्रेर-यन् बृहदत्यन्तं शोच दीप्यस्व च किंच दिव्यमन्तरिक्षभवं सानु समुच्छ्रितं स्तूपैः तैः रश्मिभिः उपस्पृश अपि च सूर्यस्य रश्मिभिस्तेजोभिः संततनः संगच्छस्व ॥ १ ॥

१. अग्नि आज हमारी समिधा को ग्रहण करो। यज्ञ के योग्य धुआँ देते हुए अतीव दीप्त होओ। तप्त ज्वाला-माला से अन्तरिक्ष का तट-प्रदेश स्पर्श करो और सूर्य की किरणों के साथ मिलित होओ।

अथ द्वितीया—

नराशंसस्यमहिमानमेषामुपस्तोषामयजतस्ययज्ञैः ।
येसुक्रतवःशुचयोधियंधाःस्वदन्तिदेवाउभयानिहव्या ॥ २ ॥

नराशंसस्य । महिमानम् । एषाम् । उप । स्तोषाम । यजतस्य । यज्ञैः । ये । सुऽक्रतवः । शुचयः । धियम्ऽधाः । स्वदन्ति । देवाः । उभयानि । हव्या ॥ २ ॥

ये देवाः सुक्रतवः सुप्रज्ञाः सुकर्माणोवा शुचयो दीप्तिमन्तो धियंधाः कर्मणांधारयितारः उभयानि सौमिकानि च हविःसंस्थादीनि च हव्या हव्यानि स्वदंति स्वदयन्ति तेषामेषांमध्ये यज्ञैर्हविर्भिः स्तोत्रैर्वा यजतस्य यजनीयस्य नराशंसस्य नरैः प्रशंसनीयस्याग्निविशेषस्य महि-मानं महत्त्वं उपस्तोषाम वयमुपस्तुमः तथा च यास्कः—नराआसीनाःशंसंत्यग्निरितिशाकपूणि-र्नरैः प्रशस्योभवति तस्यैषा भवति नराशंसस्यमहिमानमेषामुपस्तोषामयजतस्ययज्ञैर्येसुकर्माणः शुचयो धियंधारयितारःस्वदयंतुदेवाउभयानिहवींषिसोमंचेतराणिचेति[1] ॥ २ ॥

२. जो सुकर्मा, शुचि और कर्मों के धारक देवगण सौमिक और हविःसंस्थादि, दोनों का भक्षण करते हैं, उनके बीच हम स्तोत्र-द्वारा यजनीय और नर-प्रशस्य अग्नि की महिमा की स्तुति करते हैं।

ईळेन्यंवोअसुरंसुदक्षमन्तर्दूतंरोदसीसत्यवाचम् ।
मनुष्वदग्निमनुनासमिद्धंसमध्वरायसदमिन्महेम ॥ ३ ॥

ईळेन्यम् । वः । असुरम् । सुऽदक्षम् । अन्तः । दूतम् । रोदसी इति । सत्यऽवाचम् । मनुष्वत् । अग्निम् । मनुना । समऽइद्धम् । सम् । अध्वराय । सदम् । इत् । महेम ॥ ३ ॥

हे अध्वर्यवः वोयूयं ईळेन्यं स्तुत्यमसुरं बलवन्तं सुदक्षं सुप्रज्ञः रोदसी रोदस्योरन्तर्मध्ये दूतं देवानां हविर्वहनार्थं चरन्तं सत्यवाचं मनुष्वत् मनुष्यवत् मनुना समिद्धं यथेदानीं मनुष्याः समिन्धते तथा पूर्वं मनुना प्रजापतिना समिद्धमग्निमध्वराय यज्ञाय सदमित् सदैव संमहेम संपूजयत मध्यमपुरुषस्य व्यत्ययेनोत्तमपुरुषत्वम् ॥ ३ ॥

३. यजमानो, तुम स्तुतियोग्य, असुर (बली), सुदक्ष, द्यावापृथिवी के बीच दूत, सत्यवक्ता, मनुष्य की तरह मनु-द्वारा समिद्ध अग्निदेव की सदा पूजा करो। अथ चतुर्थी--

सपर्यवोभरमाणाअभिज्ञुप्रवृंजतेनमसाबर्हिरग्नौ ।
आजुह्वानाघृतपृष्ठंपृषद्वदध्वर्यवोहविषामर्जयध्वम् ॥ ४ ॥

सपर्यवः । भरमाणाः । अभिऽज्ञु । प्र । वृञ्जते । नमसा । बर्हिः । अग्नौ । आऽजुह्वानः । घृतऽपृष्ठम् । पृषत्ऽवत् । अध्वर्यवः । हविषा । मर्जयध्वम् ॥ ४ ॥

---

1 नि० ८, ७.

सपर्यवः परिचरणमिच्छन्तः अभिज्ञु अभिगतजानुकं भरणाः पादैर्भरन्तः बर्हिः नमसा हविषासहाग्नौ प्रवृञ्जते प्रभरन्ति। तदेव विशदयति हे अध्वर्यवः घृतपृष्ठं घृतसंसिक्तपृष्ठं पृषद्वत् स्थूलबिंदुभिर्युक्तं बर्हिर्हविषासह आजुह्वानाः मर्जयध्वं अग्निं परिचरत ॥ ४ ॥

४. सेवाभिलाषी लोग घुटने टेककर पात्र पूर्ण करते हुए अग्नि को हव्य के साथ बर्हिदान करते हैं। अध्वर्युओ, घृत पृष्ठ और स्थूल बिन्दु से युक्त बर्हि हवन करते हुए उसे प्रदान करो।

स्वाध्यो३विदुरोदेवयन्तोशिश्रयूरथयुर्देवताता।
पूर्वीशिशुंनमातरारिहाणेसमग्रुवोनसमनेष्वञ्जन् ॥ ५ ॥ १ ॥

सुऽआध्यः। वि। दुरः। देवऽयन्तः। अशिश्रयुः। रथऽयुः। देवऽताता। पूर्वी इति। शिशुम्। न। मातरा। रिहाणे इति। सम्। अग्रुवः। न। समनेषु। अञ्जन् ॥ ५ ॥ १ ॥

स्वाध्यः सुकर्माणः देवयन्तो देवकामाः यजमानाः रथयुः रथकामाश्च जसि पूर्वसवर्णो-ह्रस्वश्च देवताता देवतातौ यज्ञे दुरो यज्ञगृहद्वाराणि व्यशिश्रयुः आश्रितवन्तः। किं च समनेषु यज्ञेषु पूर्वी प्राचीने प्रागग्रे जूहूपभृतौ शिशुंन वत्समिव मातरौ गावौ रिहाणे अग्निं लिहाने अग्रवोन यथानद्यः क्षेत्राण्युदकेन तद्वत् समञ्जन् अध्वर्यव आज्येन समञ्जन्ति ॥ ५ ॥

५. सुकर्मा, देवाभिलाषी और रथेच्छुक लोगों ने यज्ञ में द्वार का आश्रय किया है। जैसे गायें बछड़ों को चाटती हैं, वैसे ही चाटनेवाले और पूर्वाभिलाषी (जुहू और उपभृति) को अध्वर्युगण नदी की तरह यज्ञ में सिक्त करते हैं॥ इति पञ्चमस्य द्वितीये प्रथमो वर्गः ॥ १ ॥

उतयोषणेदिव्येमहीनंउषासानक्तासुदुघेवधेनुः।
बर्हिषदापुरुहूतेमघोनीआयज्ञियेसुवितायश्रयेताम् ॥ ६ ॥

उत। योषणे इति। दिव्ये इति। मही इति। नः। उषसानक्ता। सुदुघाऽइव। धेनुः। बर्हिःऽसदा। पुरुहूते इतिपुरुऽहूते। मघोनी इति। आ। यज्ञिये इति। सुवितायं। श्रयेताम् ॥ ६ ॥

उतापिच योषणे युवत्यौ स्त्रीरूपे वा दिव्ये दिविभवे मही महत्यौ बर्हिषदा बर्हिषि सीदन्त्यौ पुरुहूते बहुभिः स्तुते मघोनी धनवत्यौ यज्ञिये यज्ञार्हे उषासानक्ता अहोरात्रे सुदुघेव धेनुः कामधुग्धेनुरिव नोस्मान् सुविताय कल्याणाय आश्रयेताम् ॥ ६ ॥

६. युवती, दिव्या, महती, कुशों पर बैठी हुई, बहु-स्तुता, धनवती और यज्ञार्हा अहोरात्रि, कामदुघा धेनु की तरह, कल्याण के लिए, हमें आश्रय करें।

अथ सप्तमी—

विप्रा॑य॒ज्ञेषु॒मानु॑षेषुका॒रूमन्ये॑वांजा॒तवे॑दसा॒यज॑ध्यै ।
ऊ॒र्ध्वंनो॑अध्व॒रंकृ॒तंहवे॑षु॒तादे॒वेषु॑वनथो॒वार्या॑णि ॥ ७ ॥

विप्रा॑ । य॒ज्ञेषु॑ । मानु॑षेषु । का॒रू इति॑ । मन्ये॑ । वा॒म् । जा॒तऽवे॑दसा । यज॑ध्यै । ऊ॒र्ध्वम् । नः॒ । अ॒ध्व॒रम् । कृ॒तम् । हवे॑षु । ता । दे॒वेषु॑ । व॒न॒थः॒ । वार्या॑णि ॥ ७ ॥

हे दैव्यौ होतारौ विप्रा मेधाविनौ जातवेदसा जातधनौ मानुषेषु मनुष्यैः क्रियमाणेषु यज्ञेषु कारू कर्मणां कर्तारौ वां युवां यजध्यै यष्टुं मन्ये स्तौमि । किं च हवेषु हवनेषु स्तोत्रेषु सत्सु नोस्माकमध्वरमकुटिलं यज्ञं ऊर्ध्वं देवाभिमुखं कृतं कुरुतं । च अपिच ता तौ युवां देवेषु विद्यमानानि वार्याणि धनानि वनथः संभजथः तान्यस्मभ्यं संप्रयच्छथइत्यर्थः ॥ ७ ॥

७. हे विप्र और जातधन तथा मनुष्यों के यज्ञ में कर्मकर्त्ता, यज्ञ करने के लिए मैं तुम्हारी स्तुति करता हूँ। स्तुति हो जाने पर हमारे अकुटिल यज्ञ को देवाभिमुख करो। देवों के बीच विद्यमान वरणीय धन का विभाग कर दो।

आभार॑ती॒भार॑तीभिः॒स॒जोषा॒इळा॑दे॒वैर्म॑नु॒ष्ये॑भिर॒ग्निः ।
सर॑स्वतीसारस्व॒तेभि॑र॒र्वाक्ति॒स्रोदे॒वीर्ब॒र्हिरेदंस॑दन्तु ॥ ८ ॥

आ । भार॑ती । भार॑तीभिः । स॒ऽजोषाः॑ । इळा॑ । दे॒वैः । म॒नु॒ष्ये॑भिः । अ॒ग्निः । सर॑स्वती । सा॒र॒स्व॒तेभिः॑ । अ॒र्वाक् । ति॒स्रः । दे॒वीः । ब॒र्हिः । आ । इ॒दम् । स॒द॒न्तु॒ ॥ ८ ॥

एतदादि ऋक्चतुष्टयं द्वितीयाष्टकस्याष्टमाध्याये यद्यपि व्याख्यातं तथापि व्यवधानात् संक्षेपतोत्रापि व्याख्यायते । भारती भरतस्यादित्यस्यपत्नी भारतीभिः सजोषाः सहिता इळा मनुष्येभिः मनुष्यलोकभवैः देवैः सार्धं अग्निरागच्छतु । सरस्वती सारस्वतेभिः सारस्वतैः मध्यमस्थानैर्देवैः सार्धं अर्वागस्मदभिमुखमागच्छतु आगत्य तिस्रोदेवीः देव्यः प्रथमार्थे द्वितीया बर्हिरिदमासदन्तु ॥ ८ ॥

८. भारतीगण (सूर्य-सम्बन्धियों) के साथ भारती (अग्नि) आवें। देवों और मनुष्यों के साथ इला (अग्नि) भी आवें। सारस्वतों (अन्तरिक्षस्थ वचनों) के साथ सरस्वती आवें। ये तीनों देवियाँ आकर इन कुशों पर बैठें।

अथ नवमी—

तन्न॑स्तु॒रीप॒मध॑पोषयि॒त्नुदेव॑त्वष्ट॒र्विर॑रा॒णस्य॑स्व ।
यतो॑वी॒रः क॑र्म॒ण्यः॑सु॒दक्षो॑यु॒क्तग्रा॑वा॒जाय॑तेदे॒वका॑मः ॥ ९ ॥

तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः ।
स्यस्वेति स्यस्व । यतः । वीरः । कर्मण्यः । सुऽदक्षः ।
युक्तऽग्रावा । जायते । देवऽकामः ॥ ९ ॥

देव द्योतमान हे त्वष्टः रराणो रममाणस्त्वं नोस्माकं तुरीपं त्वरितमाप्नुवत् पोषयित्नु पोषकरं तद्रेतः विस्यस्व विशेषेणावसानं प्रापय विमोचयेत्यर्थः । यतोरेतसः कर्मण्यः कर्मसु साधुः सुदक्षः सुबलो युक्तग्रावा सोमसुत् देवकामो वीरः पुत्रो जायते ॥ ९ ॥

९. अग्निरूप त्वष्टा देव, जिससे वीर, कर्मकुशल, बलशाली, सोमाभिषव के लिए प्रस्तर-हस्त और देवाभिलाषी पुत्र उत्पन्न हो सके, तुम सन्तुष्ट होकर हमें वैसा ही रक्षा-कुशल और पुष्टिकारी वीर्य प्रदान करो।

वनस्पतेवसृजोपदेवानग्निर्हविःशमितासूदयाति ।
सेदुहोतासत्यतरोयजातियथादेवानांजनिमानिवेद ॥ १० ॥

वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः ।
शमिता । सूदयाति । सः । इत् । ॐ इति । होता । सत्यऽतरः ।
यजाति । यथा । देवानाम् । जनिमानि । वेद ॥ १० ॥

हे वनस्पते देवानुपावसृज । अथ परोक्षस्तुतिः अग्निर्वनस्पतिः शमिता शामित्ररूपःसन् हविः सूदयाति प्रेरयतु सेत् सएव वनस्पतिः होता देवानामाह्वाता सत्यतरोपिसन् यजाति यजतु देवानां जनिमानि जननानि यथा स्वयं वेद तथा ॥ १० ॥

१०. अग्निरूप वनस्पति, देवों को पास ले आओ। पशु के संस्कारक अग्नि वनस्पति देवों के लिए हव्य दें। वे ही यज्ञ-रूप देवता लोगों को बुलानेवाले अग्नि यज्ञ करें; क्योंकि वे ही देवों का जन्म जानते हैं।

अथैकादशी—

आयाह्यग्नेसमिधानोअर्वाङिन्द्रेणदेवैःसरथंतुरेभिः ।
बर्हिर्नआस्तामदितिःसुपुत्राःस्वाहादेवाअमृतामादयन्ताम् ॥ ११ ॥ २ ॥

आ । याहि । अग्ने । सम्ऽइधानः । अर्वाङ् । इन्द्रेण । देवैः ।
सऽरथम् । तुरेभिः । बर्हिः । नः । आस्ताम् । अदितिः ।
सुऽपुत्राः । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥ ११ ॥ २ ॥

हे अग्ने समिधान समिध्यमानः अर्वाङस्मदभिमुखस्त्वं इन्द्रेण तुरेभिः त्वरितैर्देवैश्च सरथं समानरथं यथा भवति तथा आयाहि आगच्छ नोस्माकं बर्हिरध्यास्तां। अदितिश्च सुपुत्राः कल्याणपुत्राः स्वाहा देवाश्च सर्वे अमृताः सन्तोमादयन्तामिति ॥ ११ ॥

११. अग्नि, तुम दीप्तिशाली होकर इन्द्र और शीघ्रताकारी देवों के साथ एक रथ पर हमारे सामने आओ। सुपुत्र-युक्ता अदिति हमारे कुश पर बैठें। नित्य देवगण अग्नि-रूप स्वाहाकारवाले होकर तृप्ति प्राप्त करें।

॥ इति पञ्चमस्य द्वितीये द्वितीयो वर्गः ॥ २ ॥

अग्निंवोदेवमिति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं अत्रेयमनुक्रमणिका—अग्निंवोदशेति अग्निंवोदेवमित्येतदादीनि दशसूक्तानि तृतीयचतुर्थवर्जितानि प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दसि आश्विनशस्त्रे च विनियुक्तानि सूत्रितंच-अग्निंवोदेवमिति दशानां तृतीयचतुर्थे उद्धरेदिति। व्युढे दशरात्रेष्टमेहनीदं सूक्तं आज्यशस्त्रं सूत्र्यते हि—द्वितीयस्याग्निंवोदेवमित्याज्यमिति।

अग्निंवोदेवमग्निभिःसजोषायजिष्ठंदूतमध्वरेकृणुध्वम्।
योमर्त्येषुनिध्रुविर्ऋतावातपुर्मूर्धाघृतान्नःपावकः ॥ १ ॥

अग्निम्। वः। देवम्। अग्निऽभिः। सऽजोषाः। यजिष्ठम्।
दूतम्। अध्वरे। कृणुध्वम्। यः। मर्त्येषु। निऽध्रुविः। ऋतऽवा।
तपुःऽमूर्धा। घृतऽअन्नः। पावकः ॥ १ ॥

हेदेवाः वो यूयं देवं द्योतमानं अग्निभिरन्यैरग्निभिः सजोषाः सजोषसं सहितं द्वितीयार्थे प्रथमा यजिष्ठं यष्टृतममग्निं अध्वरे कौटिल्यरहिते यज्ञे दूतं कृणुध्वं कुरुत योग्निर्देवोपिसन् मर्त्येषु निध्रुविः नितरां ध्रुवस्तिष्ठति ऋतावा यज्ञवान् सत्यवान् वा तपुर्मूर्धा तापकतेजाः घृतान्नः पावकः शोधकश्च भवति ॥ १ ॥

१. देवो, जो अग्नि मनुष्यों में स्थिर भाव से रहते हैं, जो यज्ञवान्, तापक, तेजःशाली, घृतान्न-सम्पन्न और शोधक हैं, जो याज्ञिकों में श्रेष्ठ हैं और अन्य अग्नि-समूह के साथ मिलित होते हैं, उन्हीं अग्निदेव को यज्ञ में तुम दूत बनाओ। अथ द्वितीया—

प्रोथदश्वोनयवसेविष्यन्यदामहःसंवरणाद्व्यस्थात्।
आदस्यवातोअनुवातिशोचिरधस्मतेव्रजनंकृष्णमस्ति ॥ २ ॥

प्रोथंत् । अश्वंः । न । यवंसे । अविष्यन् । यदा । महः ।
सम्ऽवरंणात् । वि । अस्थांत् । आत् । अस्य । वातंः । अनुं । वाति ।
शोचिः । अधं । स्म । ते । व्रजंनम् । कृष्णम् । अस्ति ॥ २॥

यवसे घासे अविष्यन् भक्षयन् प्रोथत् शब्दं कुर्वन् संचरन्वा अश्वोन अश्वइव महो-महतः संवरणान्निरोधात् दावरूपोग्निः यदा व्यस्थात् सततेषु वृक्षेषु वितिष्ठते आत् तदा अस्याग्नेः शोचिरर्चिरनुवातो वाति । अथ प्रत्यक्षस्तुतिः अधअनन्तरं हे अग्ने ते तव व्रजनं वर्त्म कृष्णमस्ति भवति स्मेतिपूरणः ॥ २ ॥

२. जिस समय अश्व की तरह घास का भक्षण और शब्द करते हुए महान् निरोध के साथ वृक्षों में दारु-रूप अग्नि अवस्थित रहते हैं, उस समय उनकी दीप्ति प्रवाहित होती है। इसके अनन्तर, अग्निदेव, तुम्हारा मार्ग काला (धुआँवाला) हो जाता है।

उद्यस्यंतेनवंजातस्यवृष्णोग्नेचरंन्त्यजराइधानाः ।
अच्छाद्यामंरुषोधूमएंतिसंदूतोअंग्नईयंसेहिदेवान् ॥ ३ ॥

उत् । यस्यं । ते । नवंऽजातस्य । वृष्णंः । अग्ने । चरंन्ति ।
अजरांः । इधानाः । अच्छं । द्याम् । अरुषः । धूमः । एति ।
सम् । दूतः । अग्ने । ईयंसे । हि । देवान् ॥ ३ ॥

हे अग्ने नवजातस्य नवप्रादुर्भावस्य वृष्णोवर्षितुर्यस्य ते तव अजराः जरारहिताः ज्वालाः इधानाः समिध्यमानाः उच्चरन्त्युद्गच्छन्ति । अस्य अरुषः अरोचमानो धूमोद्यामच्छ दिवमभिएति अभिगच्छति । हे अग्ने त्वं दूतः सन् समीयसेहि संप्राप्नोषिच ॥ ३ ॥

३. अग्नि, नवजात और वर्षक तुम्हारी जो अजर ज्वाला समिद्ध होकर ऊपर उठती है, उसका रोचक धूम द्युलोक में जाता है। अग्निदेव, दूत होकर तुम देवों को प्राप्त होते हो।

वियस्यंतेपृथिव्यांपाजोअश्रेंत्तृषुयदन्नासमवृंक्तजम्भैः ।
सेनेंवसृष्टाप्रसितिष्टएतियवंनदस्मजुह्वाविवेक्षि ॥ ४ ॥

वि । यस्यं । ते । पृथिव्याम् । पाजंः । अश्रेंत् । तृषु । यत् ।
अन्नां । सम्ऽअवृंक्त । जम्भैः । सेनांऽइव । सृष्टा । प्रऽसिंतिः ।
ते । एति । यवंम् । न । दस्म । जुह्वा । विवेक्षि ॥ ४ ॥

हे अग्ने यस्य दावरूपस्य ते तव पाजस्तेजः पृथिव्यां भूम्यां तृषु क्षिप्रं व्यश्रेत् विश्रयति यद्यदा अन्नानि काष्ठादीनि जंभैर्दन्तैः ज्वालाभिरित्यर्थः समवृक्‌ वृंक्ते खादति तथा सेनेव सृष्टा उद्युक्ता ते तव प्रसितिर्ज्वाला एति गच्छति । दस्म हे दर्शनीयाग्ने त्वं यवं न यवमिव जुह्वा ज्वालया विवेक्षि काष्ठादीनि भक्षयसि व्यामोषि वा ॥ ४ ॥

४. अग्नि, जिस समय तुम दाँतों (ज्वालाओं) से काष्ठादि अन्नों का भक्षण करते हो, उस समय तुम्हारा तेज पृथिवी में मिल जाता है। सेना की तरह विमुक्त होकर तुम्हारी ज्वाला जाती है। अग्निदेव, अपनी ज्वाला से जौ की तरह काष्ठ आदि का भक्षण करते हो।

तमिद्दोषातमुषसियविष्ठमग्निमत्यंनमर्जयन्तनरः ।
निशिशानाअतिथिमस्ययोनौदीदायशोचिराहुतस्यवृष्णः ॥ ५ ॥३॥

तम् । इत् । दोषा । तम् । उषसि । यविष्ठम् । अग्निम् । अत्यम् । न । मर्जयन्त । नरः । निऽशिशानाः । अतिथिम् । अस्य । योनौ । दीदाय । शोचिः । आऽहुतस्य । वृष्णः ॥ ५ ॥ ३ ॥

यविष्ठं युवतमं अतिथिं अतिथिवत्पूज्यं तमित् तमेवाग्निं दोषा दोषायां रात्रौउषसि वासरेपि तमेवास्याग्नेर्योनौ स्थाने आवहनीयायतने धिष्ण्ये वा निशिशानाः दीपयन्तो नरो मनुष्याः अत्यं सततगमनयुक्तं वोढारमश्वमिव मर्जयन्त परिचरन्ति । आहूतस्य च वृष्णः कामानां वर्षितुरग्नेस्तस्य शोचिर्ज्वाला दीदाय दीप्यते ॥ ५ ॥

५. तरुण अतिथि की तरह पूज्य अग्नि की, उनके स्थान पर, रात और दिन में, पूजा करते हुए मनुष्य सदागामी अश्व की तरह अग्नि की सेवा करते हैं। आहूत और अभीष्टवर्षी अग्नि की शिखा प्रदीप्त होती है।

॥ इति पञ्चमस्य द्वितीये तृतीयो वर्गः ॥ ३ ॥

सुसंदृक्तेस्वनीकप्रतीकंवियद्रुक्मोनरोचसउपाके ।
दिवोनतेतन्यतुरेतिशुष्मश्चित्रोनसूरःप्रतिचक्षिभानुम् ॥ ६ ॥

सुऽसन्दृक् । ते । सुऽअनीक । प्रतीकम् । वि । यत् । रुक्मः । न । रोचसे । उपाके । दिवः । न । ते । तन्यतुः । एति । शुष्मः । चित्रः । न । सूरः । प्रति । चक्षि । भानुम् ॥ ६ ॥

स्वनीक हे सुतेजस्काग्ने यद्यदा रुक्मोन सूर्यइव सुवर्णमिव वा उपाके अन्तिके विरोचसे विशेषेण दीप्यसे तदा ते तव प्रतीकं रूपमंगंवा सुसंदृक् सुसंदर्शनं भवति । किं च ते तव शुष्मो दिवोन्तरिक्षात् तन्यतुर्न अशनिरिव एति निर्गच्छति । चित्रोदर्शनीयः सूरोन सूर्यइव भानुं स्वां दीप्तिं प्रतिचक्षि प्रदर्शयसि ॥ ६ ॥

६. सुन्दर तेजवाले अग्नि, जिस समय तुम सूर्य की तरह समीप में दीप्ति पाते हो, उस समय तुम्हारा रूप दर्शनीय हो जाता है। अन्तरिक्ष से तुम्हारा तेज बिजली की तरह निकलता है। दर्शनीय सूर्य की तरह ही तुम भी स्वयं अपना प्रकाश करते हो।

यथा॑वः॒स्वाहा॒ग्नये॒दाशे॑म॒परीळा॑भिर्घृ॒तव॑द्भिश्च॒ह॒व्यैः ।
तेभि॑र्नोअग्ने॒अमि॑तै॒र्महो॑भिः॒श॒तंपू॒र्भिराय॑सीभि॒र्निपा॑हि ॥ ७ ॥

यथा॑ । वः॒ । स्वाहा॑ । अ॒ग्नये॑ । दाशे॑म । परि॑ । इळा॑भिः ।
घृ॒तव॑त्ऽभिः । च॒ । ह॒व्यैः । तेभि॑ः । नः॒ । अ॒ग्ने॒ । अमि॑तैः ।
महः॑ऽभिः । श॒तम् । पूः॒ऽभिः । आय॑सीभिः । नि । पा॒हि॒ ॥ ७ ॥

हे अग्ने अग्नये अग्नस्य नेत्रे वः तुभ्यं स्वाहा स्वाहुतं हविः किं च यथा वयमिळाभिः गोविकारैः क्षीरादिभिः घृतवद्भिः घृतसहितैः हव्यैः पुरोडाशादिभिश्च दाशेम परिचरेम। तथा त्वमपि तेभिः प्रसिद्धैः अमितैः अपरिमितैः महोभिस्तेजोभिः शतमपरिमिताभिः आयसीभिर्हिरण्मयीभिः रुक्मं अयइति हिरण्यनामसु पाठात् पूर्भिर्नगरीभिरेव नोस्मान् निपाहि नितरां रक्ष ॥ ७ ॥

७. अग्नि, जैसे हम लोग गव्य और घृत-युक्त हव्य के द्वारा तुम्हें स्वाहा दान करते हैं, अग्नि, तुम भी वैसे ही, असीम तेजोबल के साथ, अपरिमित लौहमय अथवा सुवर्णमय पुरियों-द्वारा, हमारी रक्षा करना।

यावा॑ते॒सन्ति॑दा॒शुषे॒अधृ॑ष्टा॒गिरो॒वा॒याभि॑र्नृ॒वती॑रुरु॒ष्याः ।
ताभि॑र्नः॒सूनोसहसो॒निपा॑हि॒स्मत्सू॒रीञ्ज॑रि॒तॄञ्जा॑तवेदः ॥ ८ ॥

यः । वा॒ । ते॒ । सन्ति॑ । दा॒शुषे॑ । अधृ॑ष्टाः । गिरः॑ । वा॒ । याभि॑ः ।
नृ॒ऽवती॑ः । उ॒रु॒ष्याः । ताभि॑ः । न॒ः । सूनो॒ इति॑ । स॒ह॒सः॒ ।
नि । पा॒हि॒ । स्मत् । सू॒रीन् । ज॒रि॒तॄन् । जा॒त॒ऽवे॒दः॒ ॥ ८ ॥

सहसःसूनो हे बलस्यपुत्र जातवेदग्ने दाशुषे दाशुषस्ते तव यावा याश्च ज्वालाः सन्ति अधृष्टाः रक्षोभिरप्रधृषिताः गिरोवा गिरश्च सन्ति याभिर्गीर्भिर्नृवतीः पुत्रवतीः प्रजा उरुष्याः रक्षेः ताभिरुभयीभिर्नोस्मान् स्मदिति प्रशस्तवचनः प्रशस्तान् सूरीन् हविषां प्रेरकान् जरितॄन् स्तोतॄंश्च निपाहि नितरां रक्ष ॥ ८ ॥

८. बल के पुत्र और जातधन अग्नि, तुम दानशील हो, तुम्हारी जो शिखायें हैं और जिन वाक्यों-द्वारा पुत्रवान् प्रजागण की तुम रक्षा करते हो, इन दोनों से हमारी रक्षा करो। प्रशस्त और हव्य-दाता स्तोताओं की रक्षा करो।

निर्यत्पूतेवस्वधितिःशुचिर्गात्स्वयाकृपातन्वा३रोचमानः ।
आयोमात्रोरुशेन्योजनिष्टदेवयज्यायसुक्रतुःपावकः ॥ ९ ॥

निः । यत् । पूताऽइव । स्वऽधितिः । शुचिः । गात् । स्वया ।
कृपा । तन्वा । रोचमानः । आ । यः । मात्रोः । उशेन्यः ।
जनिष्ट । देवऽयज्याय । सुऽक्रतुः : पावकः ॥ ९ ॥

यद्यदा शुचिरग्निः स्वया स्वकीयया तन्वा ततया कृपा कृपया दीप्त्या रोचमानः पूतेव स्वधितिः तीक्ष्णीकृता स्वधितिरिव निर्गात् काष्ठान्निर्गच्छति तदानीं देवयज्याय भवति तदेव विशदयति योग्निः रुशेन्यः कमनीयः सुक्रतुः सुकर्मा पावकः शोधकश्च मात्रोररण्योः आजनिष्ट आजायत सदेवयज्यायभवतीति ॥ ९ ॥

९. जिस समय विशुद्ध अग्नि अपने शरीर द्वारा कृपा-परवश और रोचक होकर तीक्ष्ण फरसे की तरह काष्ठ से निकलते हैं, उस समय वे यज्ञ के योग्य होते हैं। सुन्दर, सुकृती और शोधक अग्नि मातृ-रूप दो काष्ठों से उत्पन्न हुए हैं।

एतानोअग्नेसौभगादिदीह्यपिक्रतुंसुचेतसंवतेम ।
विश्वास्तोतृभ्योगृणतेचसन्तुयूयंपातस्वस्तिभिःसदानः ॥१०॥४॥

एता । नः । अग्ने । सौभगा । दिदीहि । अपि । क्रतुम् ।
सुऽचेतसम् । वतेम । विश्वा । स्तोतृऽभ्यः । गृणते । च । सन्तु ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १० ॥ ४ ॥

हे अग्ने एता एतानि परिदृश्यमानानि सौभगा सौभगानि शोभनानि धनानि नोस्मभ्यं दिदीहि दीपय देहिवा अपि अपिच क्रतुं कर्म यज्ञानां कर्तारं वा सुचेतसं शोभनप्रज्ञायुक्तं सुप्रज्ञानं पुत्रं वा वतेम संभजेमहि। वनतेः संभजनार्थस्यवर्णान्तरागमेसतिरूपं विश्वा विश्वानि धनानि स्तोतृभ्य उद्गातृभ्यो गृणते शंसतेच सन्तु यूयं त्वत्परिवाराश्च सर्वे यूयं नोस्मान् स्वस्तिभिः क्षेमैः सदा सर्वदा पात रक्षत ॥ १० ॥

१०. अग्नि, हमें यही सुन्दर धन दो। हम याज्ञिक और विशुद्धान्तःकरण पुत्र प्राप्त कर सकें। सारा धन उद्गाताओं और स्तोताओं का हो। तुम सदा हमें कल्याण-कार्य के द्वारा पालन करो।

॥ इति पञ्चमस्य द्वितीये चतुर्थो वर्गः ॥ ४ ॥

प्रवःशुक्रायेति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं प्रवइत्यनुक्रान्तं । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्ये द्वितीयेनोक्तः सूक्तविनियोगः । एकादशिनआग्नेयेपशौ प्रवः शुक्रायेत्येषा वपाया याज्या सूत्रितं च—प्रवःशुक्रायभानवेभरध्वंयथाविप्रस्यमनुषोहविर्भिरिति ।

तत्र प्रथमा—

प्र वः॑ शु॒क्राय॑ भा॒नवे॑ भरध्वं ह॒व्यं म॒तिं चा॒ग्नये॒ सुपू॑तम् ।
यो दैव्या॑नि॒ मानु॑षा ज॒नूंष्य॒न्तर्विश्वा॑नि वि॒द्मना॒ जिगा॑ति ॥ १ ॥

प्र । वः॒ । शु॒क्राय॑ । भा॒नवे॑ । भ॒र॒ध्व॒म् । ह॒व्यम् । म॒तिम् । च॒ । अ॒ग्नये॑ । सु॒ऽपू॑तम् । यः । दैव्या॑नि । मानु॑षा । ज॒नूंषि॑ । अ॒न्तः । विश्वा॑नि । वि॒द्मना॑ । जिगा॑ति ॥ १ ॥

हे हविषां वोढारः वो यूयं शुक्राय शुभ्राय भानवे दीप्तायाग्नये सुपूतं सुशुद्धहव्यं मतिं स्तुतिं च प्रभरध्वं योग्निर्दैव्यानि मानुषा मानुषाणि च विश्वा विश्वानि जनूंषि जातानि अन्तरन्तरा विद्मना प्रज्ञानेन मार्गेण वा जिगाति गच्छति देवान् मनुष्यांश्चान्तराहवींषि नेतुं वर्ततइत्यर्थः॥१॥

१. हविवालो, तुम शुभ्र और दीप्त अग्नि को शुद्ध हव्य और स्तुति प्रदान करो। अग्नि देवों और मनुष्यों के समस्त पदार्थों के बीच प्रज्ञा-द्वारा गमन करते हैं।

स गृत्सो॑ अ॒ग्निस्तरु॑णश्चिदस्तु॒ यतो॒ यवि॑ष्ठो॒ अज॑निष्ट मा॒तुः ।
सं यो वना॑ यु॒वते॒ शुचि॑दन्भूरि॑ चि॒दन्ना॒ समिद॑त्ति स॒द्यः ॥ २ ॥

सः । गृत्सः॑ । अ॒ग्निः । तरु॑णः । चि॒त् । अ॒स्तु॒ । यतः॑ । यवि॑ष्ठः । अज॑निष्ट । मा॒तुः । सम् । यः । वना॑ । यु॒वते॑ । शुचि॑ऽदन् । भूरि॑ । चि॒त् । अन्ना॑ । सम् । इत् । अ॒त्ति॒ । स॒द्यः ॥ २ ॥

सचित्सएव गृत्सो मेधावी तथा च यास्कः—गृत्स इतिमेधाविनाम[1] अग्निस्तरुणस्तारकोभवति तदा यतोयदा मातुररण्याः यविष्ठो युवतमःसन् अजनिष्ट। योग्निः शुचिदन् दीप्तदन्तः वना वनानि संयुवते आत्मना संयोजयति। किं च भूरिचित् भूरीण्यपि अन्ना स्वीयान्यन्नानि सद्यइव सद्यएव समत्ति सम्यग्भक्षयति ॥ २ ॥

२. दो काष्ठों (अरणि-द्वय) से, तरुणतम होकर, अग्नि उत्पन्न हुए हैं; इसलिए वही मेधावी अग्नि तरुण बनें। दीप्तशिख अग्नि वनों को जलाते और क्षणमात्र में ही यथेष्ट अन्न का भक्षण कर डालते हैं।

अथ तृतीया—

अ॒स्य दे॒वस्य॑ सं॒सद्यनी॑के॒ यं मर्ता॑सः श्ये॒तं ज॑गृ॒भ्रे ।
नि यो गृभं॒ पौरु॑षेयीमु॒वोच॑ दु॒रोक॑म॒ग्निरा॒यवे॑ शुशोच ॥ ३ ॥

---

१ नि० ९.५.।

अस्य । देवस्य । सम्ऽसदि । अनीके । यम् । मर्तासः । श्येतम् ।
जगृभ्रे । नि । यः । गृभम् । पौरुषेयीम् । उवोच । दुःऽओकम् ।
अग्निः । आयवे । शुशोच ॥ ३ ॥

अस्य देवस्याग्नेः अनीके मुख्ये संसदि स्थाने श्येतं श्वेतं शुभ्रं यमग्निं मर्तासो मनुष्याः जगृभ्रे परिगृह्णंति । यश्चाग्निः पौरुषेयीं पुरुषैः क्रियमाणां गृभं गृभीतं निउवोच अत्र वचिः सेवार्थे वर्तते निषेवतइत्यर्थः । सोग्निः आयवे मनुष्यार्थं दुद्रवः आयवइति मनुष्यनामसु पाठात् दुरोकं सपत्नैर्दुःसेवं यथा भवति तथा शुशोच दीप्यते ॥ ३ ॥

३. मनुष्य जिन शुभ्र अग्नि को मुख्य स्थान में परिग्रहण करते हैं और जो पुरुषों-द्वारा गृहीत वस्तु की सेवा करते हैं, वही मनुष्यों के लिए शत्रुओं की दुःसेव्य रूप से दीप्ति पाते हैं ।

अयंकविरकविषुप्रचेतामर्तेष्वग्निरमृतोनिधायि ।
समानोअत्रजुहुरःसहस्वःसदात्वेसुमनसःस्याम ॥ ४ ॥

अयम् । कविः । अकविषु । प्रऽचेताः । मर्तेषु । अग्निः । अमृतः ।
नि । धायि । सः । मा । नः । अत्र । जुहुरः । सहस्वः । सदा ।
त्वे इति । सुऽमनसः । स्याम ॥ ४ ॥

कविः क्रान्तदृक् प्रचेताः प्रकाशकः अमृतोमरणधर्मरहितोयमग्निः अकविषु अक्रान्तदृक्षु मर्तेषु मरणधर्मकेषु निधायि निहितः । अथ प्रत्यक्षस्तुतिः सहस्वोबलवन्नग्ने त्वे यस्मिन् त्वयि सदा वयं सुमनसः सुमतयः स्याम । सत्वं अत्रास्मिन्लोके नोस्मान् माजुहुरः मा हिंसीः ॥ ४ ॥

४. कवि, प्रकाशक और अमर अग्नि अकवि मनुष्यों के बीच निहित हैं। अग्नि, हम तुम्हारे लिए सदा सुबुद्धि रहेंगे। हमें नहीं मारना ।

अथ पञ्चमी—

आयोयोनिंदेवकृतंससादक्रत्वाह्य१ग्निरमृताँअतारीत् ।
तमोषधीश्चवनिनश्चगर्भंभूमिश्चविश्वधायसंबिभर्ति ॥ ५ ॥ ५ ॥

आ । यः । योनिम् । देवऽकृतम् । ससाद । क्रत्वा । हि । अग्निः ।
अमृतान् । अतारीत् । तम् । ओषधीः । च । वनिनः । च ।
गर्भम् । भूमिः । च । विश्वऽधायसम् । बिभर्ति ॥ ५ ॥ ५ ॥

योग्निः देवकृतं देवैः कल्पितं योनिं स्थानं आससाद अध्यास्ते। किमर्थं देवाः स्थानं कल्पयन्त्यग्नेरित्यतआह हि यस्मात् कारणात् अग्निः क्रत्वा प्रज्ञया अमृतान् देवान् अतारीत्। विश्वधायसं विश्वस्य धारकं ओषधीरोषधयः वनिनश्च वृक्षाश्च गर्भं गर्भं सन्तं तं बिभ्रती भूमिश्च बिभर्ति श्रुतमेव बिभर्तीति पदं बहुवचनान्ततया विपरिणतंसत् ओषधीभिः वनिभिश्च संबध्यते ॥ ५ ॥

५. अग्नि ने प्रज्ञा-द्वारा देवों को तारा है; इसलिए वे देवों के स्थान पर बैठते हैं। ओषधियाँ, वृक्ष, धारक और गर्भ में वर्त्तमान अग्नि का धारण करते हैं; पृथ्वी भी अग्नि को धारण करती है।

॥ इति पञ्चमस्य द्वितीये पञ्चमो वर्गः ॥ ५ ॥

ईशेह्य१ग्निरमृतस्यभूरेरीशेरायःसुवीर्यस्यदातोः।
मात्वावयंसहसावन्नवीरामाप्सवःपरिषदाममादुवः ॥ ६ ॥

ईशे। हि। अग्निः। अमृतस्य। भूरेः। ईशे। रायः।
सुऽवीर्यस्य। दातोः। मा। त्वा। वयम्। सहसाऽवन्।
अऽवीराः। मा। अप्सवः। परि। सदाम। मा। अदुवः ॥ ६ ॥

अमृतस्य अमृतमन्नमुदकं वा द्वितीयार्थे षष्ठी भूरेरधिकं दातोर्दातुमग्निः ईशे ईष्टे हि। सुवीर्यस्य शोभनवीर्ययुक्तं रायो धनं दातुं ईशे ईष्टे। अथ प्रत्यक्षस्तुतिः सहसावान् हे बलवन्नग्ने वयं वसिष्ठाः अवीराः पुत्रादिरहिताःसन्तः मापरिषदाम मापर्युपविशाम। अप्सवो रूपरहिताश्चसंतो मापरिषदाम। तथा च यास्कः—अप्सइति रूपनामेति अदुवः परिचरणहीनाश्च मापरिषदाम ॥ ६ ॥

६. अग्नि अधिक अमृत देने में समर्थ हैं; सुन्दर अमृत देने में समर्थ हैं। बली अग्नि, हम पुत्रादि से शून्य होकर नहीं बैठें; रूप-रहित होकर न बैठें; सेवा-शून्य होकर भी नहीं बैठें।

अथ सप्तमी—

परिषद्यंह्यरणस्यरेक्णोनित्यस्यरायःपतयःस्याम।
नशेषोअग्नेअन्यजातमस्त्यचेतानस्यमापथोविदुक्षः ॥ ७ ॥

परिऽसद्यम्। हि। अरणस्य। रेक्णः। नित्यस्य। रायः।
पतयः। स्याम। न। शेषः। अग्ने। अन्यऽजातम्। अस्ति।
अचेतानस्य। मा। पथः। वि। दुक्षः ॥ ७ ॥

---

१ नि० ५. १३.।

अरणस्य अनृणस्य रेक्णो धनं परिषद्यं पर्याप्तं भवति। हि अतो नित्यस्यापुनर्देयस्य रायो धनस्य पतयःस्याम। यद्वा अरणस्य रेक्णो धनं परिषद्यं परिहर्तव्यं भवति अतो नित्यस्य औरसस्य रायः पुत्राख्यस्य धनस्य पतयः स्याम। हे अग्ने अन्यजातं अनौरसं शेषोपत्यं नास्ति नभवति। अचेतानस्य अविदुषः पथो मार्गान् पुत्रोत्पादनप्रमुखान् मार्गान् माविदूक्षः माविदुदुषः। दुषवैकृत्ये धातुः तथा च यास्कः—परिहर्तव्यंहिनोपसर्तव्यमरणस्य रेक्णे रणो पार्णो भवति रेक्णइति धननाम रिच्यते प्रयतो नित्यस्य रायः पतयः स्याम न शेषो अग्ने अन्यजातमस्ति शेष इत्यपत्यनामशिष्यते प्रयतो चेतयमानस्य तत्प्रमत्तस्य भवति मानः पथो विदूदुष इति[1] ॥ ७ ॥

७. ऋण-रहित व्यक्ति के पास यथेष्ट धन रहता है; इसलिए हम नित्य धन के पति होंगे। अग्नि, हमारी सन्तान अन्यजात (अनौरस) न हो। मूर्ख का मार्ग नहीं जानना।

नहिग्रभायारणःसुशेवोन्योदर्योमनसामन्तवाउ।
अधाचिदोकःपुनरित्सएत्यानोवाज्यभीषाळेतुनव्यः ॥ ८ ॥

नहि। ग्रभाय। अरणः। सुऽशेवः। अन्यऽउदर्यः। मनसा।
मन्तवै। ऊँ इति। अध। चित्। ओकः। पुनः। इत्। सः।
एति। आ। नः। वाजी। अभीषाट्। एतु। नव्यः ॥ ८ ॥

पूर्वस्यामृच्युक्तएवार्थोत्र प्रपंच्यते अरणो रममाणो न्योदर्यः सुशेवः सुखतमःसन् ग्रभाय पुत्रत्वेन ग्रहणाय मनसा मन्तवाउ मनसापिमन्तव्यो नभवति। अधचित् अपि च सोन्योदर्यः ओकइत् संस्थानमेव पुनरेति प्राप्नोति अतो वाजी अन्नवान् अभीषाट् शत्रूणामभिभविता नव्यो नवजातः पुत्रो नोस्मान् आएतु आगच्छतु ॥ ८ ॥

८. अन्यजात (दत्तक पुत्र) पुत्र सुखावह होने पर भी उसे पुत्र कहकर ग्रहण नहीं किया जा सकता या नहीं समझा जा सकता; क्योंकि वह फिर अपने ही स्थान पर जा पहुँचता है। इसलिए अन्नवान्, शत्रुहन्ता और नवजात शिशु हमें प्राप्त हो।

त्वमंग्नेवनुष्यतोनिपाहित्वमुनःसहसावन्नवद्यात्।
सन्त्वाध्वस्मन्वदभ्येतुपाथःसंरयिःस्पृहयाय्यःसहस्री ॥ ९ ॥

त्वम्। अग्ने। वनुष्यतः। नि। पाहि। त्वम्। ऊँ इति। नः।
सहसाऽवन्। अवद्यात्। सम्। त्वा। ध्वस्मन्ऽवत्। अभि।
एतु। पाथः। सम्। रयिः। स्पृहयाय्यः। सहस्री ॥ ९ ॥

---

[1] नि० ३. २.

हे अग्ने त्वं वनुष्यतो हिंसकात् नोस्मान्निपाहि सहसावन् हे बलवन्नग्ने त्वमु त्वमेवाघात्पापात् च नोस्मान्निपाहि त्वा त्वां ध्वस्मन्वत् ध्वस्तदोषं पाथोन्नंहविः समभ्येतु सम्यक् प्राप्नोतु अपिचास्मान् स्पृहयाय्यः स्पृहणीयः सहस्री सहस्रसंख्याको रयिः अभ्येतु ॥ ९ ॥

९. अग्नि, तुम हमें हिंसक से बचाओ। बली अग्नि, तुम हमें पाप से बचाओ। निर्दोष अन्न तुम्हारे पास जाय। अभिलषणीय हजारों प्रकार के धन हमें प्राप्त हों।

एतानोअग्नेसौभगादिदीह्यपिक्रतुंसुचेतसंवतेम।
विश्वास्तोतृभ्योगृणतेचसन्तुयूयंपातस्वस्तिभिःसदानः ॥१०॥६॥

एता। नः। अग्ने। सौभगा। दिदीहि। अपि। क्रतुम्।
सुऽचेतसम्। वतेम। विश्वा। स्तोतृऽभ्यः। गृणते। च। सन्तु।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ १०॥ ६॥

एषा ऋक् प्राक् व्याख्याता ॥ १० ॥

१०. अग्नि, हमें यही सुन्दर धन दो। हम यज्ञ-सेवी और विशुद्धान्तःकरण पुत्र प्राप्त करें। सारा धन उद्गाताओं और स्तोताओं का हो। तुम लोग सदा हमें कल्याण-कार्य के द्वारा पालन करो।

॥ इति पंचमस्य द्वितीये षष्ठो वर्गः ॥६ ॥

प्राग्नये तवस इति नवर्चं पंचमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकं तथाचानुक्रान्तं—प्राग्नये नव वैश्वानरीयं त्विति विनियोगो लैंगिकः।

प्राग्नयेतवसेभरध्वंगिरंदिवोअरतयेपृथिव्याः।
योविश्वेषाममृतानामुपस्थेवैश्वानरोवावृधेजागृवद्भिः ॥ १ ॥

प्र। अग्नये। तवसे। भरध्वम्। गिरम्। दिवः। अरतये।
पृथिव्याः। यः। विश्वेषाम्। अमृतानाम्। उपऽस्थे।
वैश्वानरः। ववृधे। जागृवत्ऽभिः॥ १ ॥

हे स्तोतारः तवसे प्रवृद्धाय दिवोन्तरिक्षस्य पृथिव्याश्च अरतये गंत्रे अग्नये वैश्वानरसंज्ञकाय अग्नये गिरं स्तुतिं प्रभरध्वं। यो वैश्वानरो विश्वनरहितोग्निः विश्वेषां सर्वेषाममृतानां देवानां उपस्थे उपस्थाने यज्ञे जागृवद्भिः प्रबुद्धैः देवैः सहितःसन् ववृधे स्तुतिभिर्हविर्भिश्च वर्धते ॥ १ ॥

१. जो वैश्वानर अग्नि यज्ञ में जागे हुए सारे देवों के साथ बढ़ते हैं, उन्हीं प्रवृद्ध और अन्तरिक्ष तथा पृथिवी पर गतिशील अग्नि को लक्ष्य कर स्तुति करो।

पृष्टोदिविधाय्यग्निःपृथिव्यांनेतासिन्धूनांवृषभस्तियानाम् ।
समानुषीरभिविशोविभातिवैश्वानरोवावृधानोवरेण ॥ २ ॥

पृष्टः । दिवि । धायि । अग्निः । पृथिव्याम् । नेता । सिन्धूनाम् ।
वृषभः । स्तियानाम् । सः । मानुषीः । अभि । विशः । वि ।
भाति । वैश्वानरः । ववृधानः । वरेण ॥ २ ॥

सिन्धूनां नदीनां नेता स्तियानां अपां स्तिया आपोभवन्ति स्त्यायनादिति[1] यास्कवचनात् । वृषभो वर्षिता पृष्टोर्चितस्तेजसा संपृक्तो वा योग्निः दिव्यन्तरिक्षे पृथिव्यां च धायिन्यधायि । स वैश्वानरो विश्वनरहितोग्निः वरेण श्रेष्ठेन हविषा तेजसा वा वावृधानो वर्धमानःसन् मानुषीर्विशोभिमानुषीः प्रजाः प्रति विभाति ॥ २ ॥

२. जो नदियों के नेता, जलवर्षक और पूजित अग्नि अन्तरिक्ष और पृथिवी पर निकले हैं, वही वैश्वानर नामक अग्नि हव्य-द्वार। वर्द्धित होकर मनुष्य-प्रजा के सामने शोभा पाते हैं।

त्वद्भियाविशआयन्नसिक्नीरसमनाजहतीर्भोजनानि ।
वैश्वानरपूरवेशोशुचानःपुरोयदग्नेदरयन्नदीदेः ॥ ३ ॥

त्वत् । भिया । विशः । आयन् । असिक्नीः । असमनाः ।
जहतीः । भोजनानि । वैश्वानर । पूरवे । शोशुचानः । पुरः ।
यत् । अग्ने । दरयन् । अदीदेः ॥ ३ ॥

हे वैश्वानर विश्वनरहिताग्ने त्वत् त्वत्तो भिया भीत्या असिक्नीः असितवर्णाः राजस्यः प्रथमार्थे द्वितीया विशः प्रजाः असमनाः परस्परमसंमेताः भोजनानि धनानि जहतीः त्यजन्त्यः आयन् आगच्छन् । कदेत्यत आह यद्यदा पूरवे राज्ञे शोशुचानो दीप्यमानः पुरस्तस्य शत्रूणां पुरो दरयन् दारयन् अदीदेः अज्वलः तथा च निगमः—अंहोराजन्नवरिवःपूरवेकरिति[2] ॥ ३ ॥

३. वैश्वानर अग्नि, जिस समय तुम पुरु के पास दीप्त होकर उनके शत्रु की पुरी को विदीर्ण कर प्रज्वलित हुए थे, उस समय तुम्हारे डर से असितवर्ण प्रजा, परस्पर असमान होकर, भोजन छोड़कर आई थी।

---

१ नि० ६, १७. । २ ऋ० सं० १. ५. ५. ।

अथ चतुर्थी—

तवंत्रिधातुपृथिवीउतद्यौर्वैश्वानरव्रतमंग्नेसचन्त ।
त्वंभासारोदसीआततन्थाजस्रेणशोचिषाशोशुचानः ॥ ४ ॥

तवं । त्रिऽधातु । पृथिवी । उत । द्यौः । वैश्वानर । व्रतम् ।
अग्ने । सचन्त । त्वम् । भासा । रोदसी इति । आ ।
ततन्थ । अजस्रेण । शोचिषा । शोशुचानः ॥ ४ ॥

हे वैश्वानर विश्वेषां नराणां नेतरग्ने तथा च यास्कः—वैश्वानरः कस्माद्विश्वान्नरान्नय-ति विश्व एनं नरा नयन्तीति वेति[1] । तव व्रतं त्वत्प्रीतिकरं कर्म त्रिधातु अन्तरिक्षं पृथिवी च उतापि च द्यौरिति त्रयो लोकाः सचन्ते सेवन्ते त्रैलोक्यवर्तिन्यः प्रजाः त्वदर्थं कर्म कुर्वन्तीत्य-र्थः । अपि च त्वं अजस्रेण नित्येन शोचिषा प्रकाशेन शोशुचानो दीप्यमानो भासा दीप्त्या रोदसी द्यावापृथिव्यौ चाततंथ विस्तारयसि ॥ ४ ॥

४. वैश्वानर अग्नि, अन्तरिक्ष, पृथिवी और द्युलोक तुम्हारे लिए प्रीतिजनक कर्म करते हैं। तुम सतत प्रकाश-द्वारा विभासित होकर अपनी दीप्ति से द्यावापृथिवी को विस्तृत करते हो।

त्वामंग्नेहरितोवावशानागिरःसचन्तेधुनंयोघृताचीः ।
पतिंकृष्टीनांरथ्यंरयीणांवैश्वानरमुषसांकेतुमह्नाम् ॥ ५ ॥ ७ ॥

त्वाम् । अग्ने । हरितः । वावशानाः । गिरः । सचन्ते । धुनंयः ।
घृताचीः । पतिम् । कृष्टीनाम् । रथ्यम् । रयीणाम् ।
वैश्वानरम् । उषसाम् । केतुम् । अह्नाम् ॥ ५ ॥ ७ ॥

हेअग्ने कृष्टीनां क्षितयः कृष्टय इति मनुष्यनामसु पाठात् पतिं स्वामिनं रयीणां धनानां रथ्यं नेतारं उषसामह्नां महान्तं केतुं प्रज्ञापकं वैश्वानरं विश्वनरहितं त्वां हरितोश्वाः वावशा नाः कामयमानाः सचन्ते सेवन्ते तथा गिरो नृणां स्तुतिरूपावाचः धुनयः पापं धुन्वानाः घृता चीः घृतमंचंत्यः हविषासहिता इत्यर्थः सचन्ते ॥ ५ ॥

५. वैश्वानर अग्नि, तुम मनुष्यों के स्वामी, धनों के नेता और उषा तथा दिन के महान् केतुस्वरूप हो। अश्वगण कामना करके तुम्हारी सेवा करते हैं। पाप-नाशक और घृत-युक्त वाक्य तुम्हारी सेवा करते हैं।

॥ इति पञ्चमस्य द्वितीये सप्तमो वर्गः ॥ ७ ॥

---

1 नि० ७. २१. ।

अथ षष्ठी—

त्वेअसुर्यं१वसवोन्यृण्वन्क्रतुंहितेमित्रमहोजुषन्त ।
त्वंदस्यूँरोकसोअग्नआजउरुज्योतिर्जनयन्नार्याय ॥ ६ ॥

त्वे इति । असुर्यम् । वसवः । नि । ऋण्वन् । क्रतुम् । हि ।
ते । मित्रऽमहः । जुषन्त । त्वम् । दस्यून् । ओकसः । अग्ने ।
आजः । उरु । ज्योतिः । जनयन् । आर्याय ॥ ६ ॥

हेमित्रमहः मित्राणां पूजयितरग्ने त्वे त्वयि वसवो वासकादेवा असुर्यं बलं न्यृण्वन् न्यगमयन्।ते क्रतुं त्वत्प्रीतिकरं कर्म जुषन्त असेवन्तहि। किं च त्वं आर्याय कर्मवते जनाय उरु ज्योतिः अधिकं तेजो जनयन् दस्यून् कर्महीनान् ओकसः स्थानात् आजः निरगमयः ॥ ६ ॥

६. मित्रों के पूजयिता अग्नि, वसुओं ने तुममें बल स्थापित किया है; तुम्हारे कर्म की सेवा की है। आर्य (कर्म-निष्ठ) के लिए अधिक तेज उत्पन्न करते हुए दस्युओं (अनार्यों) को उनके स्थानों से बाहर निकाल दिया है।

अथ सप्तमी—

सजायमानःपरमेव्योमन्वायुर्नपाथःपरिपासिसद्यः ।
त्वंभुवनाजनयन्नभिक्रन्नपत्यायजातवेदोदशस्यन् ॥ ७ ॥

सः । जायमानः । परमे । विऽओमन् । वायुः । न । पाथः ।
परि । पासि । सद्यः । त्वम् । भुवना । जनयन् । अभि ।
क्रन् । अपत्याय । जातऽवेदः । दशस्यन् ॥ ७ ॥

हे वैश्वानर सप्रसिद्धः त्वं परमे दूरस्थे व्योमन्नन्तरिक्षे जायमानः सूर्यरूपेण प्रादुर्भवन् वायुर्न यथा वायुः द्विदेवत्यग्रहेषु प्रथमं सोमं पिबति तथा पाथः सोमं सद्यः परिपासि परिपिबसि यद्वा वायुरिव पाथो जलं परिपासि परिपिबसि शोषयसीत्यर्थः। किं च हे जातवेदः जातधनाग्ने त्वं भुवना भुवनानि उदकानि भूतं भुवनमित्युदक नामसु पाठात् जनयन् अपत्याय अपत्यवत्पालनीयाय यजमानाय दशस्यन् कामांश्च यच्छन् अभिक्रन् वैद्युतात्मना अभिक्रन्दसि अभिगर्जसि वा ॥ ७ ॥

७. तुम दूरस्थ अन्तरिक्ष में सूर्य-रूप से प्रकट होकर वायु की तरह सबसे पहले सदा सोमपान करते हो। जातधन अग्नि, जल उत्पन्न करते हुए अपत्य की तरह पालनीय व्यक्ति को अभिलाषायें देते हुए विद्युद्रूप से गर्जन करते हो।

तामग्नेअस्मेइषमेरयस्ववैश्वानरद्युमतींजातवेदः
यथाराधःपिन्वसिविश्ववारपृथुश्रवोदाशुषेमर्त्याय ॥ ८ ॥

ताम् । अग्ने । अस्मे इति । इषम् । आ । ईरयस्व । वैश्वानर ।
द्युऽमतीम् । जातऽवेदः । यया । राधः पिन्वसि ।
विश्वऽवार । पृथु । श्रवः । दाशुषे । मर्त्याय ॥ ८ ॥

हे जातवेदः जातप्रज्ञ वैश्वानर विश्वनरहिताग्ने तामिषं एषणीयां वृष्टिं द्युमतीं दीप्तिमतीं अस्मे अस्मभ्यं एरयस्व प्रेरयस्व । वृष्ट्या त्रैलोक्यं द्योतते हि । यद्वा यथा द्युमतीं तामिषमन्नमेरयस्व तथा च श्रूयते—तस्माद्यस्यैवेहभूयिष्ठमन्नंभवतिसएवभूयिष्ठंलोकेविराजतीति । अथवा इषमेषणीयां तां द्युमतीं भास्वतीं दीप्तिमेरयस्व यया इषा रायो धनं पिन्वसि पालयसि अपि च हे विश्ववार विश्वैर्वरणीयाग्ने पृथु विस्तीर्णं श्रवो यशः दाशुषे मर्त्याय यजमानाय पिन्वसि ॥ ८ ॥

८. सबके वरणीय अग्निदेव, जिस अन्न के द्वारा धन की रक्षा करते हो और हव्यदाता मनुष्य के विस्तृत यश की रक्षा करते हो, हमें तुम वही दीप्तिमान् अन्न दो।

तंनोअग्नेमघवंद्भ्यःपुरुक्षुंरयिंनिवाजंश्रुत्यंयुवस्व ।
वैश्वानरमहिनःशर्मयच्छरुद्रेभिरग्नेवसुभिःसजोषाः ॥ ९ ॥ ८ ॥

तम् । नः । अग्ने । मघवंत्ऽभ्यः । पुरुऽक्षुम् । रयिम् । नि ।
वाजम् । श्रुत्यम् । युवस्व । वैश्वानर । महि । नः । शर्म ।
यच्छ । रुद्रेभिः । अग्ने । वसुऽभिः । सऽजोषाः ॥ ९ ॥ ८ ॥

हे अग्ने मघवद्भ्यो धनवद्भ्यः हविष्मद्भ्यइत्यर्थः नोस्मभ्यं पुरुक्षुं बह्वन्नं बहुयशस्कं वा तं प्रसिद्धं रयिं श्रुत्यं श्रवणीयं वाजं बलं च नियुवस्व नितरां मिश्रयस्व । किं च हे वैश्वानर विश्वनरहिताग्ने त्वं रुद्रेभिः रुद्रैर्वसुभिश्च देवैः सजोषाः सहितश्चसन् नोस्मभ्यं महि महत् शर्म सुखं यच्छ प्रयच्छ ॥ ९ ॥

९. अग्नि, हम हविर्दाताओं को प्रभूत अन्न, धन और श्रवणीय बल दो। वैश्वानर अग्नि, तुम रुद्रों और वसुओं के साथ हमें महान् सुख दो।

॥ इति पञ्चमस्य द्वितीयेष्टमो वर्गः ॥ ८ ॥

प्रसम्राज इति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं अनुक्रम्यते च—प्रसम्राजः सप्त वैश्वानरीयं त्वित्युक्तत्वात् अस्यापि वैश्वानरोग्निर्देवता । विनियोगो लैङ्गिकः ।

1 ऐ०ब्रा० १.५ ।

तत्र प्रथमा—

प्रसम्राजोअसुरस्यप्रशस्तिंपुंसःकृष्टीनामनुमाद्यस्य ।
इन्द्रस्येवप्रतवसस्कृतानिवन्देदारुंवन्दमानोविवक्मि ॥ १ ॥

प्र । सम्ऽराजः । असुरस्य । प्रऽशस्तिम् । पुंसः । कृष्टीनाम् ।
अनुऽमाद्यस्य । इन्द्रस्यऽइव । प्र । तवसः । कृतानि ।
वन्दे । दारुम् । वन्दमानः । विवक्मि ॥ १ ॥

दारुं पुरां भेत्तारं वन्दे वन्दमानःसन् सम्राजः सर्वस्य भुवनस्येश्वरस्य असुरस्य बलवतः पुंसो वीरस्य पौंस्यमिति वीर्यमुच्यते तथा च यास्कः—पुमान् पुरुमना भवति पुंसतेर्वेति । कृष्टीनां जनानां अनुमाद्यस्य स्तुत्यस्य तवसो बलवतइन्द्रस्येव तस्य वैश्वानरस्य प्रशस्तिं स्तुतिं कृतानि कर्माणि च प्रविवक्मि प्रब्रवीमि ॥ १ ॥

१. मैं पुरियों के भेदकों की वन्दना करता हूँ। वन्दन करके सम्राट्, असुर, वीर और मनुष्यों की स्तुति के योग्य तथा बलवान् इन्द्र की तरह उन्हीं वैश्वानर की स्तुति और कर्मों का कीर्त्तन करता हूँ।

कविंकेतुंधासिंभानुमद्रेर्हिन्वन्तिशंराज्यंरोदस्योः ।
पुरन्दरस्यगीर्भिराविवासेग्नेर्व्रतानिपूर्व्यामहानि ॥ २ ॥

कविम् । केतुम् । धासिम् । भानुम् । अद्रेः । हिन्वन्ति ।
शम् । राज्यम् । रोदस्योः । पुरम्ऽदरस्य । गीःऽभिः । आ ।
विवासे । अग्नेः । व्रतानि । पूर्व्या । महानि ॥ २ ॥

कविं प्राज्ञं केतुं विश्वस्य प्रज्ञापकं धासिं अद्रेर्धर्तारं आदर्तुः स्तोतुर्वा भानुं भासकं शं सुखकरं रोदस्योः द्यावापृथिव्योः राज्यं राजानं वैश्वानरमग्निं हिन्वन्ति मदीयाः प्रीणयन्ति प्रेरयन्ति वा देवाः । अहं च पुरंदरस्य पुरां दारयितुरग्नेः पूर्व्या पूर्व्याणि पुरातनानि महानि महान्ति व्रतानि कर्माणि गीर्भिराविवासे परिचरामि ॥ २ ॥

२. अग्निदेव प्राज्ञ, प्रज्ञापक, पर्वतधारी, दीप्तिशाली, सुखदाता और द्यावापृथिवी के राजा हैं। देवगण उन्हीं अग्नि को प्रसन्न करते हैं। मैं पुरी-विदारक अग्नि के प्राचीन और महान् कर्मों की, स्तुति-द्वारा, कीर्त्ति गाता हूँ।

अथ तृतीया—

न्यक्रतून्ग्रथिनोमृध्रवाचःपणीँरश्रद्धाँअवृधाँअयज्ञान् ।
प्रप्रतान्दस्यूँरग्निर्विवायपूर्वश्चकारापराँअयज्यून् ॥ ३ ॥

नि । अक्रतून् । ग्रथिनः । मृध्रऽवाचः । पणीन् । अश्रद्धान् ।
अवृधान् । अयज्ञान् । प्रऽप्र । तान् । दस्यून् । अग्निः ।
विवाय । पूर्वः । चकार । अपरान् । अयज्यून् ॥ ३ ॥

अक्रतून् अयज्ञान् ग्रंथिनो जल्पकान् मृध्रवाचो हिंसितवचस्कान् पणीन् पणिनामकान् वार्धुषिकान् अश्रद्धान् यज्ञादिषु श्रद्धारहितान् अवृधान् स्तुतिभिरग्निमवर्धयतः अयज्ञान् यज्ञहीनान् तान् दस्यून् वृथा कालस्य नेतॄन् अग्निः प्रप्र अत्यन्तं निविचाय नितरां गमयेत्। तदेवाह अग्निः पूर्वो मुख्यःसन् अयज्यून् अयजमानान् अपरान् जघन्यान् चकार करोतीत्यर्थः ॥ ३ ॥

३. अग्नि यज्ञ-शून्य, जल्पक, हिंसित-वचन, श्रद्धा-रहित, वृद्धि-शून्य और यज्ञ-रहित पणिनायक दस्युओं को विदूरित करें। अग्नि मुख्य होकर अन्य यज्ञ-शून्यों को हेय बनावें।

योअपाचीनेतमसिमदन्तीःप्राचीश्चकारनृतमःशचीभिः ।
तमीशानंवस्वोअग्निंगृणीषेनानतंदमयन्तंपृतन्यून् ॥ ४ ॥

यः । अपाचीने । तमसि । मदन्तीः । प्राचीः । चकार ।
नृऽतमः । शचीभिः । तम् । ईशानम् । वस्वः । अग्निम् ।
गृणीषे । अनानतम् । दमयन्तम् । पृतन्यून् ॥ ४ ॥

नृतमो नेतृतमो योग्निः अपाचीने अप्रकाशमाने तमसि निमग्नाः प्रजाः मदन्तीः स्तुवन्तीः शचीभिस्ताभ्योदत्ताभिः प्रज्ञाभिः प्राचीः ऋजुगामिनीश्चकार । यद्वा नेतृतमो योग्निः अपाचीने तमसि निशायां मदन्तीर्मोदन्तीरुषसः शचीभिः प्रज्ञाभिः प्राचीश्चकारेत्यर्थः । तं वस्वो धनस्येशानं अनानतमप्रह्वं पृतन्यून् युद्धकामांश्च दमयन्तमग्निं गृणीषे स्तौमि ॥ ४ ॥

४. नेतृतम अग्नि ने अप्रकाशमान अन्धकार में निमग्न प्रजा को प्रसन्न करते हुए प्रज्ञा-द्वारा प्रजा को सरल-गामिनी किया था। मैं उन्हीं धनाधिपति, अनत और योद्धाओं का दमन करनेवाले अग्नि की स्तुति करता हूँ।

योदेह्योअनमयद्वधस्नैर्योअर्यपत्नीरुषसश्चकार ।
सनिरुध्यानहुषोयह्वोअग्निर्विशश्चक्रेबलिहृतःसहोभिः ॥ ५ ॥

यः । देह्यः । अनमयत् । वधऽस्नैः । यः । अर्यऽपत्नीः । उषसः ।
चकार । सः । निऽरुध्य । नहुषः । यह्वः । अग्निः । विशः ।
चक्रे । बलिऽहृतः । सहःऽभिः ॥ ५ ॥

योग्निर्दैह्यो देही रुपचिता आसुरीर्विद्याः वधस्नैः वधैरायुधैर्वा अनमयत् हीना अकरोत्। यश्च अर्यः पत्नीः अर्यः सूर्यः पतिर्यासां ताः अर्यपत्न्यः ता उषसश्चकार अकरोत्। स यह्वो महानग्निः विशः प्रजाः सहोभिः बलैः निरुध्य नहुषो राज्ञो बलिहृतः करप्रदाश्चक्रे ॥ ५ ॥

५. जिन्होंने आसुरी विद्या को आयुध से हीन किया है और जिन्होंने सूर्यपत्नी उषा की सृष्टि की है, उन्हीं अग्नि ने प्रजा को बल-द्वारा रोककर नहुष राजा को करदाता बनाया था।

यस्यशर्मन्नुपविश्वेजनासएवैस्तस्थुःसुमतिंभिक्षमाणाः।
वैश्वानरोवरमारोदस्योराग्निःससादपित्रोरुपस्थम् ॥ ६ ॥

यस्य। शर्मन्। उप। विश्वे। जनासः। एवैः। तस्थुः।
सुऽमतिम्। भिक्षमाणाः। वैश्वानरः। वरम्। आ। रोदस्योः।
आ। अग्निः। ससाद। पित्रोः। उपऽस्थम् ॥ ६ ॥

विश्वे सर्वे जनासो जनाः शर्मन् शर्मणि सुखनिमित्तं यस्य वैश्वानरस्य सुमतिं भिक्षमाणाः प्रार्थमानाः एवैः कर्मभिर्हविर्भिर्वा उपतस्थुः यमेवोपतिष्ठन्ते। सवैश्वानरो विश्वनरहितोग्निः सूर्यः सन् पित्रोः मातापित्रोः रोदस्योः द्यावापृथिव्योः वरमुत्कृष्टं उपस्थं मध्यमन्तरिक्षमाससाद आगच्छत् ॥ ६ ॥

६. सारे मनुष्य, सुख के लिए, जिनकी कृपा पाने के अर्थ हव्य के साथ उपस्थित होते हैं, वही वैश्वानर अग्नि पितृ-मातृ-तुल्य द्यावापृथिवी के बीच स्थित अन्तरिक्ष में आये हैं।

अथ सप्तमी—

आदेवोददेबुध्न्या३वसूनिवैश्वानरउदितासूर्यस्य।
आसमुद्रादवरादापरस्मादाग्निर्ददेदिवआपृथिव्याः ॥ ७ ॥ ९ ॥

आ। देवः। ददे। बुध्न्या। वसूनि। वैश्वानरः। उत्ऽइता।
सूर्यस्य। आ। समुद्रात्। अवरात्। आ। परस्मात्। आ।
अग्निः। ददे। दिवः। आ। पृथिव्याः ॥ ७ ॥ ९ ॥

वैश्वानरो विश्वनरहितोग्निः देवो द्योतमानः बुध्न्या बुध्न्यानि अन्तरिक्षाणि बुध्नमन्तरिक्षं तथा च यास्कः—बुध्नमरिक्षं बद्धा अस्मिन् धृता आप इति वेति[1]। वसूनि आच्छादकानि तमांसि वसआच्छादने इति धातुः सूर्यस्य उदिता उदितौ उदयेसति आददे समुद्रादन्तरिक्षात् सगरः

---

[1] नि० १०. ४४.।

समुद्र इत्यन्तरिक्ष नामसु पाठात् अवरात् पृथिव्याः तमांस्याददे समुद्रात्परस्माद्दिवोपि तमां स्याददे तदेव दर्शयति अग्निर्दिवस्तमांस्याददे पृथिव्याश्च तमांस्याददे ॥ ७ ॥

७. वैश्वानर अग्नि सूर्य के उदय होने पर अन्तरिक्ष के अन्धकार को लेते हैं। अग्नि निम्नस्थ अन्तरिक्ष का अन्धकार ग्रहण करते हैं। वे पर समुद्र से, द्युलोक से और पृथिवी से अन्धकार ग्रहण करते हैं।

॥ इति पंचमस्य द्वितीये नवमो वर्गः ॥ ९ ॥

प्रवोदेवमिति सप्तर्चं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं प्रवोदेवमित्यनुक्रान्तं। प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्ते उक्तोविनियोगः।

प्रवोदेवंचित्सहसानमग्निमश्वंनवाजिनंहिषेनमोभिः।
भवानोदूतोअध्वरस्यविद्वान्त्मनादेवेषुविविदेमितद्रुः ॥ १ ॥

प्र। वः। देवम्। चित्। सहसानम्। अग्निम्। अश्वम्।
न। वाजिनम्। हिषे। नमःऽभिः। भव। नः। दूतः। अध्वरस्य।
विद्वान्। त्मना। देवेषु। विविदे। मितऽद्रुः ॥ १ ॥

हेअग्ने वः त्वां देवं द्योतमानादिगुणयुक्तं सहसानं राक्षसानभिभवन्तं बलमाचरन्तं वा अग्निमग्रस्यनेतारं अश्वंन अश्वमिव वाजिनं वेगवन्तं बलवन्तं वा नमोभिः स्तुतिभिः हविर्भिर्वा प्रहिषे हे अग्ने त्वांचित् प्रहिणोम्येव। किं च हे अग्ने त्वं विद्वान् जानन् नोस्माकमध्वरस्य यज्ञस्य दूतो भव। अथ परोक्षस्तुतिः त्मना आत्मना स्वयमेव देवेषु मितद्रु दग्धद्रुमोग्निरिव विविदे प्रज्ञायते ॥ १ ॥

१. अग्निदेव, तुम राक्षसादिकों के अभिभविता और अश्व की तरह वेगशाली हो। अग्नि, तुम विद्वान् हो। हमारे यज्ञ के दूत बनो। तुम स्वयं देवों में "दग्धद्रुम" कहकर विख्यात हो।

अथ द्वितीया–

आयाह्यग्नेपथ्याउअनुस्वामन्द्रोदेवानांसख्यंजुषाणः।
आसानुशुष्मैर्नदयन्पृथिव्याजम्भेभिर्विश्वमुशधग्वनानि ॥ २ ॥

आ। याहि। अग्ने। पथ्याः। अनु। स्वाः। मन्द्रः। देवानाम्।
सख्यम्। जुषाणः। आ। सानु। शुष्मैः। नदयन्। पृथिव्याः।
जम्भेभिः। विश्वम्। उशधक्। वनानि ॥ २ ॥

हे अग्ने त्वं मन्द्रो मदयिता स्तुत्योवा देवानां सख्यं देवैः सह सख्यमित्यर्थः । जुषाणः सेवमानः सन् पृथिव्याः सानु समुच्छ्रितं तृणगुल्मादिकं शुष्मे शोषकैर्दाहकैस्तेजोभिः नदयन् शब्दायमानः दह्यमानं हि शब्दायते जंभेभिर्दंष्ट्राभिर्ज्वालाभिरित्यर्थः । विश्वं विश्वानि वनानि उशधक् कामयमानो दहन् स्वाः पथ्या अनु स्वैर्मार्गैरित्यर्थः । आ आयाहि आकारस्य पुनर्वचनमादरार्थं ॥ २ ॥

२. अग्नि, तुम स्तुति-योग्य हो और देवों के साथ तुम्हारी मित्रता है। तुम अपने तेजोबल से पृथिवी के तटप्रदेश (तृणगुल्मादि) को शब्दायमान करते हुए अपनी ज्वालाओं से सारे वन को जलाकर अपने मार्ग-द्वारा आओ।

**प्राचीनोयज्ञःसुधितंहिबर्हिःप्रीणीतेअग्निरीळितोनहोता ।**
**आमातराविश्ववारेहुवानोयतोयविष्ठजज्ञिषेसुशेवः ॥ ३ ॥**

**प्राचीनः । यज्ञः । सुऽधितम् । हि । बर्हिः । प्रीणीते । अग्निः । ईळितः । न । होता । आ । मातरा । विश्ववारे इतिविश्वऽवारे । हुवानः । यतः । यविष्ठ । जज्ञिषे । सुऽशेवः ॥ ३ ॥**

अयं यज्ञः प्राचीनः सम्यगनुष्ठीयतइत्यर्थः । यद्वा यज्ञो यष्टा होता प्राचीनः यद्वा यज्ञो हविः प्राचीनः प्राचीनं प्राङ्मुखमासन्नं बर्हिर्हि बर्हिश्च सुधितं सुनिहितं ईळितः स्तुतोग्निः प्रीणीते तृप्तश्च भवति । होतान होताच नेतिचार्थे । विश्ववारे विश्वैर्वरणीये मातरा द्यावापृथिव्याविडायामाहुवानोभवति । कदेत्यतआह यतो यदा यविष्ठ हे युवतमाग्ने त्वं सुशेवः सुखोजज्ञिषेजायसे ॥ ३ ॥

३. तरुणतम अग्नि, जिस समय तुम सुन्दर सुखवाले होकर उत्पन्न होते हो, उस समय यज्ञ किया जाता और कुश रक्खा जाता है। स्तुति-योग्य अग्नि और होता तृप्त होते हैं और सबके लिए स्वीकरणीय मातृभूत द्यावापृथिवी बुलाई जाती हैं।

**सद्योअध्वरेरथिरंजनन्तमानुषासोविचेतसोयएषाम् ।**
**विशामधायिविश्पतिर्दुरोणे३ग्निर्मन्द्रोमधुवचाऋतावा ॥ ४ ॥**

**सद्यः । अध्वरे । रथिरम् । जनन्त । मानुषासः । विऽचेतसः । यः । एषाम् । विशाम् । अधायि । विश्पतिः । दुरोणे । अग्निः । मन्द्रः । मधुऽवचाः । ऋतऽवा ॥ ४ ॥**

विचेतसो विविक्तप्रज्ञाः मानुषासो मनुष्याः अध्वरे यज्ञे रथिरं रथिनं नेतारमग्निं सद्यो-जनंत जनयन्ति । य एषां हविर्वहति सोयमग्निर्विश्पतिः विशांपतिः विश्वस्य पतिर्वा मन्द्रो म-दयिता मधुवचाः मादयितृवचस्कः ऋतवा यज्ञवान् विशां मनुष्याणां दुरोणे गृहे अधाहि आहितः ॥ ४ ॥

४. विद्वान् लोग यज्ञ में नेता, अग्नि को तुरत उत्पन्न करते हैं। जो इनका हव्य वहन करते हैं, वही विश्वपति, मादक, मधु-वचन और यज्ञवान् अग्नि मनुष्यों के घरों में निहित हैं।

असादिवृतोवह्निराजगन्वानग्निर्ब्रह्मानृषदनेविधर्ता ।
द्यौश्चयंपृथिवीवावृधातेआयंहोतायजतिविश्ववारम् ॥ ५ ॥

असादि । वृतः । वह्निः । आऽजगन्वान् । अग्निः । ब्रह्मा ।
नृऽसदने । विऽधर्ता । द्यौः । च । यम् । पृथिवी । वावृधाते इति ।
आ । यम् । होता । यजति । विश्वऽवारम् ॥ ५ ॥

वृतो होतृत्वेन वह्निर्हविषां वोढा ब्रह्मा परिवृढः विधर्ता विश्वस्य धारकोग्निः आजगन्वान् द्युलोकादागतः आगमनशीलोवा नृषदने होतुःस्थाने असादि उपविष्टः । यमग्निं द्यौश्च पृथि-वी च उभे वावृधाते वर्धयतः यं च विश्ववारं विश्वैर्वरणीयं होता मानुष आयजति ॥ ५ ॥

५. जिन अग्नि को द्युलोक और पृथिवी वर्द्धित करती हैं और जिन विश्व-स्वीकरणीय अग्नि का होता यज्ञ करता है, वही हव्यवाहक, ब्रह्मा और सबके धारक अग्नि द्युलोक से आकर मनुष्यों के घरों में बैठे हुए हैं।

अथ षष्ठी—

एतेद्युम्नेभिर्विश्वमातिरन्तमन्त्रंयेवारंनर्याअतक्षन् ।
प्रयेविशस्तिरन्तश्रोषमाणाआयेमेअस्यदीधयन्नृतस्य ॥ ६ ॥

एते । द्युम्नेभिः । विश्वम् । आ । अतिरन्त । मन्त्रम् । ये ।
वा । अरम् । नर्याः । अतक्षन् । प्र । ये । विशः । तिरन्त ।
श्रोषमाणाः । आ । ये । मे । अस्य । दीधयन् । ऋतस्य ॥ ६ ॥

एते मदीयाः पुरुषाः द्युम्नेभिरन्नैः विश्वं पोष्यवर्गं आतिरन्त वर्धयन्ति । अथवा द्युम्नेभिर्य-शोभिः विश्वं जगदातिरन्त अभ्यगच्छन्नित्यर्थः । क इत्यत आह ये नर्या मनुष्याः मन्त्रं स्तोत्रं स्तुत्यंवा अरं पर्याप्तं अतक्षन् समस्कुर्वन् । वेति समुच्चये ये च विशो जनाः श्रोषमाणाः श्रृणो-तेः सन्यङोरिति द्वित्वं इकोझलिति सनः कित्वं च सर्वे विधयश्छन्दसिविकल्पन्त इति नभवतः ज्ञाश्रुस्मृदृशां सनः इत्यात्मनेपदं च तिरन्त वर्धयन्ति । मे मदिया ये वा ऋतस्यास्य सत्यमिममग्नि कर्मणिषष्ठी मानुषाणामश्नीयादितिवत् आदीधयन् आदीपयन् ॥ ६ ॥

६. जिन मनुष्यों ने यथेष्ट मन्त्र-संस्कार किया है, जो श्रवणेच्छु होकर वर्द्धित करते हैं और जिन्होंने सत्यभूत अग्नि को प्रदीप्त किया है, वे अन्न-द्वारा सारे पोष्य वृन्द को वर्द्धित करते हैं।

नूत्वामग्नईमहेवसिष्ठाईशानंसूनोसहसोवसूनाम् ।
इषंस्तोतृभ्योमघवद्भ्यआनड्यूयंपातस्वस्तिभिःसदानः॥७॥१०॥

नु । त्वाम् । अग्ने । ईमहे । वसिष्ठाः । ईशानम् । सूनोइति ।
सहसः । वसूनाम् । इषम् । स्तोतृऽभ्यः । मघवत्ऽभ्यः । आनट् ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥ १० ॥

सहसःसूनो बलस्यपुत्राग्ने वसिष्ठा वयं वसूनामीशानं त्वां अस्मदीयेभ्यः स्तोतृभ्यो मघवद्भ्यो हविष्मद्भ्यश्च इषमन्नं नु क्षिप्रं अद्य वा आनट् प्रापयेः। नशेर्व्याप्तिकर्मणोंतर्णीतण्यर्थाल्लुङि छन्दस्यपि दृश्यते इत्यडागमः यूयं त्वत्परिवाराश्च सर्वे यूयं नोस्मान् सदा स्वस्तिभिः पात इत्येवं ईमहे याचामहे ॥ ७ ॥

७. बल के पुत्र अग्नि, तुम वसुओं के पति हो। वसिष्ठगण तुम्हारे स्तोता हैं। तुम स्तोता और हविष्मान् को अन्न-द्वारा शीघ्र व्याप्त करो। हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य द्वितीये दशमो वर्गः ॥ १० ॥

इन्धे राजेति सप्तर्चं अष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं इंधेराजेत्यनुक्रान्तं। प्रातरनुवाका श्विनशस्त्रयोरुक्तोविनियोगः। आतिथ्यायां प्रप्रायमग्निरिति स्विष्टकृतोयाज्या सूत्रितंच— प्रप्रायमग्निर्भरतस्यशृण्वइति संयाज्ये इति।

इन्धेराजासमर्योनमोभिर्यस्यप्रतीकमाहुतंघृतेन ।
नरोहव्येभिरीळतेसबाधआग्निरग्रंउषसामशोचि ॥ १ ॥

इन्धे । राजा । सम् । अर्यः । नमःऽभिः । यस्य । प्रतीकम् ।
आऽहुतम् । घृतेन । नरः । हव्येभिः । ईळते । सऽबाधः ।
आ । अग्निः । अग्रे । उषसाम् । अशोचि ॥ १ ॥

राजा दीप्तः अर्यःस्वामी हविषां प्रेरकोवाग्निः नमोभिः स्तुतिभिः सह समिन्धे समिध्यते। यस्याग्नेः प्रतीकं रूपं घृतेनाहुतं भवति। यं चनरोस्मदीयाः सबाधः संश्लिष्टाःसंजातबाधावा हव्येभिर्हव्यैः सार्धं ईळते स्तुवन्ति सोग्निरुषसामग्रे आ अशोचि आ दीप्यते ॥ १ ॥

१. जिन अग्नि का रूप घृत से आहूत होता है और हव्य के साथ बाधा-युक्त होकर जिनकी स्तुति नेता लोग करते हैं, वही राजा और स्वामी अग्नि स्तुति के साथ समिद्ध होते हैं। उषा के आगे अग्नि दीप्त होते हैं।

अयमु ष्य सुमहाँ अवेदि होता मन्द्रो मनुषो यह्वो अग्निः ।
विभा अंकः ससृजानः पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे ॥ २ ॥

अयम् । ऊँ इति । स्यः । सुऽमहान् । अवेदि । होता । मन्द्रः ।
मनुषः । यह्वः । अग्निः । वि । भाः । अकरित्यकः । ससृजानः ।
पृथिव्याम् । कृष्णऽपविः । ओषधीभिः । ववक्षे ॥ २ ॥

स्यः सोयं होता देवानामाह्वाता मन्द्रो मदयिता यह्वो महानग्निः मनुषो मनुष्यस्य सुमहानवेदि सुमहत्त्वेन मज्ञायते । अपि च सोयं भाः दीप्तिः व्यकः विकरोति अन्तरिक्षे । किं च सोयं कृष्णपविः कृष्णमार्गोग्निः पृथिव्यां ससृजानः सृज्यमानः सन्नोषधीभिर्ववक्षे वर्धयते ॥ २ ॥

२. यही होता, मादक और विशाल अग्नि मनुष्यों-द्वारा महान् गिने जाते हैं। अग्नि दीप्ति फैलाते हैं। यह कृष्णमार्ग अग्नि पृथिवी पर सृष्ट होकर ओषधियों-द्वारा परिवर्द्धित होते हैं ।

कया नो अग्ने वि वसः सुवृक्तिं कामु स्वधामृणवः शस्यमानः ।
कदा भवेम पतयः सुदत्र रायो वन्तारो दुष्टरस्य साधोः ॥ ३ ॥

कया । नः । अग्ने । वि । वसः । सुऽवृक्तिम् । काम् ।
ऊँ इति । स्वधाम् । ऋणवः । शस्यमानः । कदा । भवेम ।
पतयः । सुऽदत्र । रायः । वन्तारः । दुस्तरस्य । साधोः ॥ ३ ॥

हे अग्ने त्वं कया स्वधया हविषा नोस्माकं सुवृक्तिं स्तुतिं विवसः व्याप्नुषे आच्छादयसि-वा । कामु कांच स्वधां शस्यमानः स्तूयमानः त्वं ऋणवः प्राप्नुयाः हे सुदत्र शोभनदानाग्ने तथा च यास्कः—सुदत्रः कल्याणदानइति[1] । वयं कदा दुष्टरस्य शत्रुभिः दुर्हिंसकस्य साधोः समीचीनस्य रायो धनस्य पतयः स्वामिनो भवेम । वन्तारः संभक्तारश्च कदा भवेम ॥ ३ ॥

३. अग्नि, तुम किस हवि-द्वारा हमारी स्तुति को व्याप्त करोगे? स्तूयमान होकर तुम कौन स्वधा प्राप्त करोगे ? शोभन दानवाले अग्निदेव, हम कब दुस्तर समीचीन धन के पति और विभागकारी होंगे ?

---

१ नि० ६. १४. ।

अथ चतुर्थी—

प्रप्रायमग्निर्भरतस्यंशृण्वेवियत्सूर्योनरोचंतेबृहद्भाः ।
अभियःपूरुंपृतनासुतस्थौद्युतानोदैव्योअतिथिःशुशोच ॥ ४ ॥

प्रऽप्र । अयम् । अग्निः । भरतस्य । शृण्वे । वि । यत् । सूर्यः ।
न । रोचंते । बृहत् । भाः । अभि । यः । पूरुम् । पृतनासु ।
तस्थौ । द्युतानः । दैव्यः । अतिथिः । शुशोच ॥ ४ ॥

अयं प्रसिद्धोग्निः भरतस्य यजमानस्य मम प्रप्र अत्यन्तं शृण्वे प्रथितोभवति । कदेत्यत्राह यद्यदा सूर्योन सूर्यइव बृहद्भाः बृहद्भासमानो विरोचते प्रकाशते । किं च योग्निः पृतनासु संग्रामेषु पूरुं पुरुनामकमसुरं अभितस्थौ अभिबभूव । सोयं द्युता दीप्यमानो दैव्योतिथिः देवानामतिथिवत्पूज्यःसन् शुचोच जज्वाल ॥ ४ ॥

४. जिस समय ये अग्नि सूर्य की तरह विशाल प्रतापशाली होकर प्रकाश पाते हैं, उस समय वे भरत (यजमान) द्वारा प्रसिद्ध होते हैं। जिन्होंने युद्धों में पुरु को अभिभूत किया है, वही दीप्यमान और देवों के अतिथि अग्नि प्रज्वलित हुए।

असन्नित्त्वेआहवनानिभूरिभुवोविश्वेभिःसुमनाअनीकैः ।
स्तुतश्चिदग्नेशृण्विषेगृणानःस्वयंवर्धस्वतन्वंसुजात ॥ ५ ॥

असन् । इत् । त्वे इति । आऽहवनानि । भूरि । भुवः । विश्वेभिः ।
सुऽमनाः । अनीकैः । स्तुतः । चित् । अग्ने । शृण्विषे ।
गृणानः । स्वयम् । वर्धस्व । तन्वम् । सुऽजात ॥ ५ ॥

हे अग्ने त्वे त्वयि आहवनानि हवींषि आहुतयोवा भूरि बहूनि असन्नित् भवन्त्येव । त्वं च विश्वेभिर्विश्वैरनीकैस्तेजोभिः त्वद्विभूतिभिः अग्निभिर्वा सह सुमनाः भुवोभव । हे अग्ने स्तुतश्चित् स्तोतुः स्तौतीतिस्तुत स्तोत्रं शृण्विषे शृणु हे सुजात कल्याण प्रादुर्भावाग्ने गृणानः स्तूयमानस्त्वं स्वयं स्वयमेव तन्वं स्वांतनुं मम तनुं वा वर्धस्व वर्धयस्व ॥ ५ ॥

५. अग्नि, तुम्हें यथेष्ट हव्य प्रदत्त हुआ है। सारे तेजों के लिए प्रसन्न होओ और स्तोता का स्तोत्र सुनो। सुजन्मा अग्नि, स्तूयमान होकर स्वयं शरीर वर्द्धित करो। अथ षष्ठी—

इदंवचःशतसाःसंसहस्रमुदग्नयेजनिषीष्टद्विबर्हाः ।
शंयत्स्तोतृभ्यआपयेभवातिद्युमदमीवचातनंरक्षोहा ॥ ६ ॥

इदम् । वचः । शतऽसाः । सम्ऽसहस्रम् । उत् । अग्नये ।
जनिषीष्ट । द्विऽबर्हाः । शम् । यत् । स्तोतृऽभ्यः । आपये ।
भवाति । द्युऽमत् । अमीवऽचातनम् । रक्षःऽहा ॥ ६ ॥

शतसाः गवां शतस्य संभक्ता संसहस्रं गवां सहस्रेणच संयुतः द्विबर्हा द्वाभ्यां विद्याकर्मभ्यां बृहन् वसिष्ठाः द्वयोः स्थानयोर्द्युलोकयोः महान्वा तथा च यास्कः—द्विबर्हा द्वयोः स्थानयोः परिवृढइति । इदं वचः इदं स्तोत्रं अग्नये उज्जनिषीष्ट उदजीजनत् । किंतदित्यतआह यद्वचः द्युमत् दीप्तिमत् यशस्करमित्यर्थः अमीवचातनं रोगाणां निवारकं रक्षोहा रक्षसां हंतृ च स्तोतृभ्यः आपये तद्बंधवे पुत्रादिकायापि शं सुखदं भवाति भवेत् ॥ ६ ॥

६. सौ गौओं के विभागकारी और हज़ार गौओं से संयुक्त तथा विद्या और कर्म से महा वसिष्ठ ने इस स्तोत्र को अग्नि के लिए उत्पन्न किया है।

अथ सप्तमी

नूत्वामग्नईमहेवसिष्ठाईशानंसूनोसहसोवसूनाम् ।
इषंस्तोतृभ्योमघवंद्भ्यआनड्यूयंपातस्वस्तिभिःसदानः ॥७॥११॥

नु । त्वाम् । अग्ने । ईमहे । वसिष्ठाः । ईशानम् । सूनो इति ।
सहसः । वसूनाम् । इषम् । स्तोतृऽभ्यः । मघवत्ऽभ्यः ।
आनट् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥ ११ ॥

इयमृक् प्रागेव व्याख्याता ॥ ७ ॥

७. बल-पुत्र अग्नि, तुम वसुओं के पति हो। वसिष्ठगण तुम्हारे स्तोता हैं। तुम स्तोता और हविष्मान् को अन्न-द्वारा शीघ्र व्याप्त करो। हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य द्वितीये एकादशो वर्गः ॥ ११ ॥

अबोधिजारइति षळृचं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं अबोधिषळित्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्ये उक्तोविनियोगः ।

तत्र प्रथमा—

अबोधिजारउषसामुपस्थाद्धोतामन्द्रःकवितमःपावकः ।
दधातिकेतुमुभयस्यजन्तोर्हव्यादेवेषुद्रविणंसुकृत्सु ॥ १ ॥

---

१ नि० ६. १७. ।

अबोधि । जारः । उषसाम् । उपऽस्थात् होता । मन्द्रः ।
कविऽतमः । पावकः । दधाति । केतुम् । उभयस्य । जन्तोः ।
हव्या । देवेषु । द्रविणम् । सुकृतऽसु ॥ १ ॥

जारः सर्वेषां प्राणिनां जरयिता होता देवानामाह्वाता मन्द्रो मदयिता स्तुत्योवा कवितमः प्राज्ञतमः पावकः शोधकोग्निः उषसामुपस्थात् मध्ये अबोधि अबुध्यत । किं च उभयस्य द्विपदश्च चतुष्पदश्च दैव्यस्य मानुषस्यवा जन्तोः प्राणिनः केतुं प्रज्ञानं दधाति विदधाति । देवेषु च हव्या हव्यानि दधाति । सुकृत्सु यजमानेषु च द्रविणं धनं दधाति ॥ १ ॥

१. अग्नि सब प्राणियों के जार, होता, मदयिता, प्राज्ञतम और शोधक हैं। वह उषा के बीच जागे हैं। वह देवों और मनुष्यों की प्रज्ञा धारण करते हैं। देवों में हव्य और पुण्यात्माओं में धन धारण करते हैं।

ससुक्रतुर्योविदुरःपणीनांपुनानोअर्कंपुरुभोजसंनः ।
होतामन्द्रोविशांदमूनास्तिरस्तमोददृशेराम्याणाम् ॥ २ ॥

सः । सुऽक्रतुः । यः । वि । दुरः । पणीनाम् । पुनानः । अर्कम् ।
पुरुऽभोजसम् । नः । होता । मन्द्रः । विशाम् । दमूनाः । तिरः ।
तमः । ददृशे । राम्याणाम् ॥ २ ॥

सोग्निः सुक्रतुः सुकर्मा सुप्रज्ञो वा भवति योग्निः पणीनां असुराणां दुरो गवां द्वाराणि पिधानानि विवृतवान् पुरुभोजसं बहुक्षीरं अर्कमर्चनीयं गवां संघं नोस्मदर्थं पुनानः शोधयन् हरन् इत्यर्थः । होता देवानामाह्वाता मन्द्रो मदयिता स्तुत्योवा दमूनाः दममनावा दानमनावा दान्तमनावा रम्याणां रात्रीणां रमयित्रीणां वा विशां जनानां यजमानानां वा तमोंधकारं तिरः तिरस्कुर्वन् ददृशे दृश्यते । च यद्वा तमस्तिरोददृशे नाशयतीत्यर्थः ॥ २ ॥

२. जिन अग्नि ने पणियों का द्वार खोला था, वही सुकृती हैं। वे हमारे लिए बहु-क्षीर-युक्त और अर्चनीय गायों का हरण करते हैं। वे देवों को बुलानेवाले, मदयिता और शान्तमना हैं। अग्नि रात्रि और यजमान का अन्धकार दूर करते देखे जाते हैं।

अमूरःकविरदितिर्विवस्वान्त्सुसंसन्मित्रोअतिथिःशिवोनः ।
चित्रभानुरुषसांभात्यग्रेपांगर्भःप्रस्वं१आविवेश ॥ ३ ॥

अमूरः । कविः । अदितिः । विवस्वान् । सुऽसंसत् । मित्रः ।
अतिथिः । शिवः । नः । चित्रऽभानुः । उषसाम् । भाति ।
अग्रे । अपाम् । गर्भः । प्रऽस्वः । आ । विवेश ॥ ३ ॥

योग्निरमूरोमूढः कविः प्राज्ञः अदितिरदीनः विवस्वान् दीप्तिमान् सुसंसद् शोभनसदनः शोभनसंवेदनोवा मित्रः प्रमीतेस्त्राता सर्वेषां अतिथिः अतिथिवत्पूज्यः शिवः शिवकरोजगतः चित्रभानुः चित्रदीप्तिः उषसामग्रे मुखे भाति। सोयमपां गर्भःसन् प्रस्वः जायमानाः ओषधीराविवेश ॥ ३ ॥

३. असूढ़, प्राज्ञ (कवि), अदीन, दीप्तिमान्, शोभन गृह से युक्त, मित्र, अतिथि और हमारे मङ्गल-विधायक अग्नि, विशिष्ट दीप्ति से युक्त होकर, उषा के मुख में शोभा पाते और सलिल के गर्भ-रूप से उत्पन्न होकर ओषधियों में प्रवेश करते हैं।

ईळेन्योवोमनुंषोयुगेषुंसमनगाअंशुचज्जातवेदाः ।
सुसंदृशाभानुनायोविभातिप्रतिगावःसमिधानंबुधन्त ॥ ४ ॥

ईळेन्यः । वः । मनुंषः । युगेषुं । समनऽगाः । अशुचत् । जातऽवेदाः । सुऽसन्दृशा । भानुना । यः । विऽभाति । प्रति । गावः । समऽइधानम् । बुधन्त ॥ ४ ॥

हे अग्ने वस्त्वं अत्र विभक्तेर्वचनव्यत्ययः मनुषो मनुष्यस्य युगेषु यागकालेषु सर्वेष्वपि दिवसेषु वा ईळेन्यः स्तुत्यः अतः परं परोक्षस्तुतिः योग्निर्जातवेदाः जातधनः समनगाः युद्धेषु संगन्तःसन् अशुचत् दीप्यते सुसंदृशा सुसंदर्शनेन भानुना तेजसा विभातिच तमग्निं समिधानं समिध्यमानं गावः स्तुतयः प्रतिबुधन्त प्रतिबोधयन्ति ॥ ४ ॥

विश्वेदेवेपशावग्नेयाहीति हविषोयाज्या सूत्रितं च—अग्नेयाहिदूत्यंमारिषण्यइन्द्रंनरोनेमधिताहवन्तइति तिस्रइति ॥ ४ ॥

४. अग्नि, तुम मनुष्यों के यज्ञ-काल में स्तुति-योग्य हो। जातधन अग्नि युद्ध में सङ्गत होकर दीप्ति पाते हैं। वे दर्शनीय तेज-द्वारा शोभा पाते हैं। स्तुतियाँ समिद्ध अग्नि को प्रतिबोधित करती हैं।

अग्नेयाहिदूत्यं१मारिषण्योदेवाँअच्छांब्रह्मकृतागणेन ।
सरस्वतींमरुतोअश्विनापोयक्षिदेवान्रत्नधेयायविश्वान् ॥ ५ ॥

अग्ने । याहि । दूत्यम् । मा । रिषण्यः । देवान् । अच्छ । ब्रह्मऽकृता । गणेन । सरस्वतीम् । मरुतः । अश्विना । अपः । यक्षि । देवान् । रत्नऽधेयाय । विश्वान् ॥ ५ ॥

हे अग्ने दूत्यं दूतस्य कर्म हविर्वहनादि याहि देवानच्छाभिगच्छ। गणेन संघेन सह ब्रह्मकृता ब्रह्मकृतोस्मान् अस्मदीयांश्च तव स्तोतॄन् मारिषण्यः माहिंसीः सरस्वतीं मरुतो अश्विना अश्विनौ अपश्च एतान् देवान् रत्नधेयायास्मभ्यं रत्नदानाय यक्षिच ॥ ५ ॥

५. अग्नि, तुम देवों के सामने दूत-कार्य के लिए जाओ। संघ के साथ स्तोताओं को नहीं मारना। हमें रत्न देने के लिए तुम सरस्वती, मरुद्गण, अश्विद्वय, जल आदि सारे देवों का यज्ञ करते हो।

त्वामग्नेसमिधानोवसिष्ठोजरूथंहन्यक्षिरायेपुरंधिम्।
पुरुणीथाजातवेदोजरस्वयूयंपातस्वस्तिभिःसदानः॥ ६ ॥१२॥

त्वाम्। अग्ने। सम्ऽइधानः। वसिष्ठः। जरूथम्। हन्। यक्षि।
राये। पुरम्ऽधिम्। पुरुऽनीथा। जातऽवेदः। जरस्व।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ६ ॥ १२ ॥

हे अग्ने त्वां वसिष्ठऋषिः समिधानोभवति। त्वं च जरूथं परुषभाषिणं जरणीयं वा रक्षोगणं हन् जहि। राये धनवते यजमानाय पुरंधिं बहुधियं देवगणं तथा च यास्कः—पुरंधिर्बहुधीरिति[1] यक्षि यज। किं च हे जातवेदोग्ने पुरुणीथा बहुनीथेन बहुना स्तोत्रेण जरस्व देवान् स्तुहि। यद्वा पुरुणीथानेकमार्गाणि रक्षांसि जरयेत्यर्थः॥ ६ ॥

६. अग्नि, वसिष्ठ तुम्हें समिद्ध करते हैं। तुम कठोर-भाषी राक्षसों को मारो। जातवेद अग्नि, अनेक स्तोत्रों से देवों की स्तुति करो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य द्वितीये द्वादशो वर्गः॥ १२ ॥

उषोनजारइति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं तथाचानुक्रान्तं उषोनपञ्चेति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

तत्र प्रथमा—

उषोनजारःपृथुपाजोअश्रेद्दविद्युतद्दीद्यच्छोशुचानः।
वृषाहरिःशुचिराभातिभासाधियोहिन्वानउशतीरजीगः॥ १ ॥

उषः। न। जारः। पृथु। पाजः। अश्रेत्। दविद्युतत्।
दीद्यत्। शोशुचानः। वृषा। हरिः। शुचिः। आ। भाति।
भासा। धियः। हिन्वानः। उशतीः। अजीगरिति॥ १ ॥

अग्निः उषोन जारः उषसोजारः सूर्यः तद्वत् पृथु विस्तीर्णं पाजस्तेजः अश्रेव् श्रयति। किं च दविद्युतत् दीद्यत शोशुचानइति त्रयोपिशब्दा यद्यपि दीप्तिकर्माणः तथापि दीप्तेर्भूयस्त्वज्ञा-

---

[1] नि० ६. १३।

पनाय प्रयुक्ताइति न पुनरुक्तिः अत्यन्तं दीप्यमानइत्यर्थः। वृषा कामानां वर्षिता हरिर्हविषां प्रेरकः शुचिः शुद्धिकृदग्निः धियः कर्माणि हिन्वानः प्रेरयन् भासा दीप्त्या आभाति प्रकाशते। अपि च उशतीः कामयमानाः अजीगः जागरयति तमसा तिरोहिताः प्रजाः उद्गिरतिवा ॥१॥

१. उषा के जार सूर्य की तरह अग्नि विस्तीर्ण तेज का आश्रय ग्रहण करते हैं। अत्यन्त दीप्तिमान्, काम-वर्षी, हव्य-प्रेरक और शुद्ध अग्नि कर्मों को प्रेरित करके दीप्ति-द्वारा प्रकाश पाते हैं। अग्नि अभिलाषियों को जगाते हैं।

स्व१र्णवस्तोरुषसामरोचियज्ञंतन्वानाउशिजोनमन्म।
अग्निर्जन्मानिदेवआविविद्वान्द्रवद्दूतोदेवयावावनिष्ठः ॥ २ ॥

स्वः। न। वस्तोः। उषसाम्। अरोचि। यज्ञम्। तन्वानाः। उशिजः। न। मन्म। अग्निः। जन्मानि। देवः। आ। वि। विद्वान्। द्रवत्। दूतः। देवऽयावा। वनिष्ठः ॥ २ ॥

अग्नेः वस्तोरहनि वस्तोः द्युरित्यहर्नामसुपाठात् उषसामग्रे स्वर्णआदित्यइव तथा च यास्कः—स्वरादित्योभवति सुअरणः सुईरणइति[1]। अरोचि दीप्यते उशिजोन ऋत्विजश्च यज्ञं तन्वानाः विस्तारयन्तः मन्म मन्मानि मननीयानि स्तोत्राणि पठंतीतिशेषः। नेति संप्रत्यर्थे अपि च विद्वान् जानन् दूतो देवानां देवयावा देवान् प्रतिगच्छन् वनिष्ठो दातृतमोग्निः विआद्रवत् विविधमाद्रवति ॥ २ ॥

२. दिन में अग्नि उषा के आगे ही सूर्य की तरह शोभा पाते हैं। यज्ञ का विस्तार करते हुए ऋत्विक्‌गण मननीय स्तोत्रों का पाठ करते हैं। विद्वान्, दूत, देवों के पास गमनकर्त्ता और दातृ-श्रेष्ठ अग्निदेव प्राणियों को द्रवीभूत करते हैं।

अच्छागिरोमतयोदेवयन्तीरग्निंयन्तिद्रविणंभिक्षमाणाः।
सुसंदृशंसुप्रतीकंस्वञ्चंहव्यवाहमरतिंमानुषाणाम् ॥ ३ ॥

अच्छ। गिरः। मतयः। देवऽयन्तीः। अग्निम्। यन्ति। द्रविणम्। भिक्षमाणाः। सुऽसन्दृशम्। सुऽप्रतीकम्। सुऽअञ्चम्। हव्यऽवाहम्। अरतिम्। मानुषाणाम् ॥ ३ ॥

मतयः स्तुतिरूपाः देवयन्तीर्देवानिच्छन्त्यो द्रविणं धनं भिक्षमाणाः याचमानाः गिरोवाचः सुसंदृशं कल्याणसंदर्शनं सुप्रतीकं सुरूपं शोभनांगंवा स्वंचं सुष्ठु गच्छन्तं हव्यवाहं हव्यानां वोढारं मानुषाणामरतिं स्वामिनमग्निं अच्छाभियन्ति अभिगच्छन्ति ॥ ३ ॥

---

[1] नि० २. १४.।

३. देवाभिलाषी, धन-याचक और गतिशील स्तुति-रूप वाक्य अग्नि के सामने जाते हैं। वे अग्नि दर्शनीय, सुरूप, सुन्दर-गमनकारी, हव्य-वाहक और मनुष्यों के स्वामी हैं।

इन्द्रंनोअग्नेवसुभिःसजोषारुद्रंरुद्रेभिरावहाबृहन्तम्।
आदित्येभिरदितिंविश्वजन्यांबृहस्पतिमृक्वभिर्विश्ववारम् ॥ ४ ॥

इन्द्रम्। नः। अग्ने। वसुऽभिः। सऽजोषाः। रुद्रम्। रुद्रेभिः।
आ। वह। बृहन्तम्। आदित्येभिः। अदितिम्। विश्वऽजन्याम्।
बृहस्पतिम्। ऋक्वऽभिः। विश्वऽवारम् ॥ ४ ॥

हे अग्ने वसुभिर्देवैः सजोषाः संगतस्त्वं नोस्मदर्थमिन्द्रमावह। रुद्रेभिः रुद्रैः देवैः सङ्गतो बृहन्तं महान्तं रुद्रं चावह। आदित्येभिरादित्यैर्देवैः संगतो विश्वजन्यां विश्वजनहितां अदितिं चावह ऋक्वभिः स्तुत्यैरङ्गिरोभिर्देवैः संगतो विश्ववारं विश्वैः संभजनीयं बृहस्पतिं चावह ॥ ४ ॥

४. अग्नि, तुम वसुओं के साथ मिलकर हमारे लिए इन्द्र का आह्वान करो; रुद्रों के साथ संगत होकर महान् रुद्र का आह्वान करो; आदित्यों के साथ मिलकर विश्व-हितैषी अदिति को बुलाओ और स्तुत्य अङ्गिरा लोगों के साथ मिलकर सबके वरणीय बृहस्पति को बुलाओ।

मन्द्रंहोतारमुशिजोयविष्ठमग्निंविशईळतेअध्वरेषु।
सहिक्षपावाँअभवद्रयीणामतन्द्रोदूतोयजथायदेवान् ॥५॥१३॥

मन्द्रम्। होतारम्। उशिजः। यविष्ठम्। अग्निम्। विशः।
ईळते। अध्वरेषु। सः। हि। क्षपाऽवान्। अभवत्।
रयीणाम्। अतन्द्रः। दूतः। यजथाय। देवान् ॥ ५ ॥ १३ ॥

उशिजः कामयमानाः विशोमनुष्याः मन्द्रं स्तुत्यं होतारमाह्वातारं यविष्ठं युवतममग्निं अध्वरेषु यागेषु ईळते स्तुवन्ति। हि यस्मात् कारणात् सोग्निः क्षपावान् रात्रिमान् रात्रौ खल्वग्नये अग्निहोत्रं हूयते रयीणां सूर्यस्य रयिमतां हविष्मतां यजमानानां देवान् यजथाय यष्टुं अतन्द्रस्तन्द्रारहितोभवत्। तथा च श्रूयते यस्माद्दूतोभवत्तस्माद्विशस्तमध्वरेईळतइति ॥ ५ ॥

५. अभिलाषी मनुष्य स्तुत्य, होता और तरुणतम अग्नि की यज्ञ में स्तुति करते हैं। अग्नि रात्रिवाले हैं। वह देवों के यज्ञ के लिए हव्य-दाता के तन्द्रा-शून्य दूत हुए थे।

॥ इति पञ्चमस्य द्वितीये त्रयोदशो वर्गः ॥ १३ ॥

महाँअसीति पञ्चर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं महानित्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

तत्र प्रथमा—

म॒हाँ अ॑स्यध्व॒रस्य॑ प्रके॒तो न ऋ॒ते त्वद॒मृता॑ मादयन्ते।
आ विश्वे॑भिः स॒रथं॑ याहि दे॒वैर्न्य॑ग्ने॒ होता॑ प्रथ॒मः स॑दे॒ह ॥ १ ॥

म॒हान्। अ॒सि॒। अ॒ध्व॒रस्य॑। प्र॒ऽके॒तः। न। ऋ॒ते। त्वत्।
अ॒मृताः॑। मा॒द॒य॒न्ते॒। आ। विश्वे॑भिः। स॒ऽरथ॑म्। या॒हि॒। दे॒वैः।
नि। अ॒ग्ने॒। होता॑। प्र॒थ॒मः। स॒द॒। इ॒ह ॥ १ ॥

हे अग्ने त्वमध्वरस्य प्रकेतः प्रज्ञापकः सन् महानसि त्वदृते त्वयाविना अमृताः देवाः न मादयन्ते नमाद्यन्ति विश्वेभिः विश्वैर्देवैः सरथं यथा भवति आयाहि च इहास्तीर्णे बर्हिषि प्रथमो मुख्यो होता आह्वातासन् निषद निषीद च ॥ १ ॥

१. अग्नि, तुम यज्ञ के प्रज्ञापक होकर महान् हो, तुम्हारे बिना देव लोग मत्त नहीं होते। तुम सारे देवों के साथ रथ-युक्त होकर आओ और कुशों पर, मुख्य होता बनकर, बैठो।

वाजपेये बार्हस्पत्यचरोः स्विष्टकृतोनुवाक्या सूत्रितं च—त्वामीळतेअजिरंदूत्यायाग्निंसुदीतिंसुदृशंगृणन्तइति।

सैषात्र द्वितीया—

त्वामी॑ळते अजि॒रं दू॒त्या॑य ह॒विष्म॑न्तः॒ सद॒मिन्मानु॑षासः।
यस्य॑ दे॒वैरास॑दो ब॒र्हिर॒ग्नेऽहा॑न्यस्मै सु॒दिना॑ भवन्ति ॥ २ ॥

त्वाम्। ई॒ळ॒ते॒। अ॒जि॒रम्। दू॒त्या॑य। ह॒विष्म॑न्तः। सद॑म्। इत्।
मानु॑षासः। यस्य॑। दे॒वैः। आ। अस॑दः। ब॒र्हिः। अ॒ग्ने॒। अहा॑नि।
अ॒स्मै॒। सु॒ऽदिना॑। भ॒व॒न्ति॒ ॥ २ ॥

हे अग्ने अजिरं प्रगामिनं त्वां मानुषासो मानुषाः हविष्मन्तो यजमानाः सदमित् सदैव दूत्याय दूतकर्मणे हविर्वहनाय ईळते याचन्ते। किमर्थं इत्यतआह यस्य हविष्मतो बर्हिर्देवैः सार्धं आसदः त्वं अधितिष्ठसि अस्मै हविष्मते अहानि सुदिना सुदिनानि शोभनदिनानि भवन्ति॥२॥

२. अग्नि, तुम गमनशील हो। हविर्दाता मनुष्य तुमसे सदा दौत्य-कार्य के लिए प्रार्थना करते हैं। जिस यजमान के कुशों पर तुम देवों के साथ बैठते हो, उसके दिन शोभन होते हैं।

अथ तृतीया—

त्रिश्चि॑द॒क्तोः प्र चि॑कितु॒र्वसू॑नि॒ त्वे अ॒न्तर्दा॒शुषे॒ मर्त्या॑य।
म॒नु॒ष्वद॑ग्न इ॒ह य॑क्षि दे॒वान्भवा॑ नो दू॒तो अ॑भिशस्ति॒पावा॑ ॥ ३ ॥

त्रिः । चित् । अक्तोः । प्र । चिकितुः । वसूनि । त्वे इति ।
अन्तः । दाशुषे । मर्त्याय । मनुष्वत् । अग्ने । इह । यक्षि ।
देवान् । भव । नः । दूतः । अभिशस्तिऽपावा ॥ ३ ॥

हे अग्ने त्वे त्वयि अन्तर्मध्ये अक्तोअह्नः यद्यपि अक्तुरिति रात्रेर्नाम तथाप्यत्र अज्यन्ते व्यज्यन्ते रूपादीन्यस्मिन्नित्यह्नोनाम त्रिस्त्रिवारं त्रिषु सवनेषु वसूनि हवींषि दाशुषे हविषां प्रदात्रे मर्त्याय मनुष्याय तदर्थमित्यर्थः प्रचिकितुः प्रवेदयन्ति ऋत्विजः । यद्वा अक्तोरह्नि त्रिः त्रीनग्निमश्वमजं च त्वय्यन्तर्निहितानि प्रचिकितुरविदन्नित्यर्थः । अपि च मनुष्वत् मनोरिव इह ममास्मिन्यज्ञे दूतस्त्वं देवान् यक्षि यज । नोस्माकमभिशस्तिपावा अभिशस्तेः अभिशंसकात् शात्रवात् पावा रक्षिता भव चिदिति पूरणः ॥ ३ ॥

३. अग्नि, ऋत्विक् लोग दिन में तीन बार हव्यदाता मनुष्य के लिए तुम्हारे बीच हव्य फेंकते हैं। मनु की तरह तुम इस यज्ञ में दूत होकर यज्ञ करो और हमें शत्रुओं से बचाओ।

अग्निरीशेबृहतोअध्वरस्याग्निर्विश्वस्यहविषःकृतस्य ।
क्रतुंह्यस्यवसवोजुषन्ताथादेवादधिरेहव्यवाहम् ॥ ४ ॥

अग्निः । ईशे । बृहतः । अध्वरस्य । अग्निः । विश्वस्य । हविषः ।
कृतस्य । क्रतुम् । हि । अस्य । वसवः । जुषन्त । अथ । देवाः ।
दधिरे । हव्यऽवाहम् ॥ ४ ॥

बृहतो महतो अध्वरस्य कौटिल्यरहितस्य यज्ञस्य अग्निरीशे ईष्टे विश्वस्य सर्वस्य कृतस्य संस्कृतस्य हविषः चाग्निरेवेष्टे हियस्मादस्याग्नेः क्रतुं कर्म वसवो देवाः जुषन्त सेवन्ते अथापि च देवाः अग्निं हव्यवाहं हव्यानां वोढारं दधिरे चक्रिरे इत्यर्थः ॥ ४ ॥

४. अग्नि महान् यज्ञ के स्वामी हैं; अग्नि सारे संस्कृति हव्यों के पति हैं। वसु लोग इनके कर्म की सेवा करते हैं और देवों ने अग्नि को हव्यवाहक बनाया है। अथ पंचमी—

आग्नेवहहविरद्यायदेवानिन्द्रज्येष्ठासइहमादयन्ताम् ।
इमंयज्ञंदिविदेवेषुधेहियूयंपातस्वस्तिभिःसदानः ॥ ५ ॥ १४ ॥

आ । अग्ने । वह । हविःऽअद्याय । देवान् । इन्द्रऽज्येष्ठासः ।
इह । मादयन्ताम् । इमम् । यज्ञम् । दिवि । देवेषु । धेहि । यूयम् ।
पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥ १४ ॥

हे अग्ने हविरघाय हविषां भरणाय देवान् आवह। किमर्थं इत्यतआह इहास्मिन् यज्ञे इन्द्रज्येष्ठास इन्द्रप्रमुखादेवाः मादयन्तां इमं यज्ञं इदं यष्टव्यं हविः दिविस्थितेषु देवेषु धेहि निधेहि देवान्वा इहानय इदं हविर्वा देवेषु नयेति भावः। अन्तिमः पादोव्याख्यातचरः॥ ५॥

५. अग्नि, हव्य का भक्षण करने के लिए देवों को बुलाओ। इस यज्ञ में इन्द्र आदि देवों को प्रमत्त करो। इस यज्ञ को द्युलोक में, देवों के पास, ले जाओ। सदा तुम स्वस्ति-द्वारा हमारा पालन करो।

॥ इति पञ्चमस्य द्वितीये चतुर्दशो वर्गः॥ १४॥

अगन्ममहेति तृचात्मकं द्वादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयं तथाचानुक्रान्तं अगन्मतृचमिति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः। व्यूह्ळे दशरात्रे नवमेहनि इदं सूक्तमाज्यशस्त्रं सूत्रितंच—तृतीयस्यागन्ममहेत्याज्यमिति।

अगन्ममहानमसायविष्ठंयोदीदायसमिद्धःस्वेदुरोणे।
चित्रभानुंरोदसीअन्तरुर्वीस्वाहुतंविश्वतःप्रत्यञ्चम्॥ १॥

अगन्म। महा। नमसा। यविष्ठम्। यः। दीदाय। सम्ऽइद्धः। स्वे। दुरोणे। चित्रऽभानुम्। रोदसीइति। अन्तः। उर्वीइति। सुऽआहुतम्। विश्वतः। प्रत्यञ्चम्॥ १॥

योग्निः स्वेदुरोणे स्वेस्थाने आहवनीये समिद्धः काष्ठैः समिद्धःसन् दीदाय दीप्यते तमिमं यविष्ठं युवतमं उर्वी विस्तीर्णयोः रोदसी रोदस्योः द्यावापृथिव्योरन्तर्मध्येन्तरिक्षे चित्रभानुं चित्रज्वालं स्वाहुतं सुष्ठु आहुतिभिर्हुतं सन्तं विश्वतः सर्वतः प्रत्यञ्चं प्रतिगच्छन्तमग्निं महा महता नमस्कारेण अगन्म वयमुपगच्छाम॥ १॥

१. जो अपने गृह में समिद्ध होकर दीप्ति पाते हैं, उन्हीं तरुणतम, विस्तीर्ण, द्यावापृथिवी के मध्य में स्थित, विचित्र शिखावाले, सुन्दर रूप में आहूत और सर्वत्र जानेवाले अग्नि के पास हम नमस्कार के साथ गमन करते हैं।

अथ द्वितीया—

समह्नाविश्वादुरितानिसाह्वानग्निष्टवेदमआजातवेदाः।
सनोरक्षिषद्दुरितादवद्यादस्मान्गृणतउतनोमघोनः॥ २॥

सः। मह्ना। विश्वा। दुःऽइतानि। सह्वान्। अग्निः। स्तवे। दमे। आ। जातऽवेदाः। सः। नः। रक्षिषत्। दुःऽइतात्। अवद्यात्। अस्मान्। गृणतः। उत। नः। मघोनः॥ २॥

योग्निर्मह्ना महत्त्वेन विश्वा विश्वानि दुरितानि सह्वान् अभिभवन् जातवेदाः जातधनो जातप्रज्ञोवा दमे यज्ञगृहे स्तवे अस्माभिः स्तूयते सोग्निरस्मान् दुरितात् पापात् अवद्यात् निंदि-

ताच्च कर्मणोरक्षिषत् रक्षतु । अस्मान् गृणतः स्तुवतोपि रक्षिषत् । उतापिच सोग्निः नो मघोनो हविष्मतोरक्षिषत् ॥ २ ॥

२. जातधन अग्नि अपनी महिमा द्वारा सारे पापों का अभिभव करते हैं। वे यज्ञ-गृह में स्तुत होते हैं। वे हमें पाप और निन्दित कर्म से बचावें। हम उनकी स्तुति और यज्ञ करते हैं।

त्वंवरुणउतमित्रोअग्नेत्वांवर्धन्तिमतिभिर्वसिष्ठाः ।
त्वेवसुंसुषणनानिसन्तुयूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ १५ ॥

त्वम् । वरुणः । उत । मित्रः । अग्ने । त्वाम् । वर्धन्ति । मतिऽभिः ।
वसिष्ठाः । त्वे इति । वसु । सुऽसननानि । सन्तु । यूयम् ।
पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥ १५ ॥

हे अग्ने त्वं वरुणोसि उतापि च त्वं मित्रोसि जगतः प्रमीतेस्त्रातासि त्वां वसिष्ठाःमतिभिः स्तुतिभिः वर्धन्ति वर्धयन्ति त्वे त्वयि विद्यमानानि वसु वसूनि सुसननानि सुसंभजनानि संत्विति स्पष्टमन्यत् ॥ ३ ॥

३. अग्नि, तुम्हीं मित्र और वरुण हो। वसिष्ठवंशीय स्तुति-द्वारा तुम्हें वर्द्धित करते हैं। तुममें विद्यमान धन सुलभ हो। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य द्वितीये पञ्चदशो वर्गः ॥ १५ ॥

प्राग्नयइति तृचं त्रयोदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकं तथाचानुक्रान्तं— प्राग्नयेवैश्वानरीयमिति । विनियोगोलैंगिकः ।

तत्र प्रथमा—

प्राग्नयेविश्वशुचेधियंधेसुरघ्नेमन्मधीतिंभरध्वम् ।
भरेहविर्नबर्हिषिप्रीणानोवैश्वानरायथतयेमतीनाम् ॥ १ ॥

प्र । अग्नये । विश्वऽशुचे । धियम्ऽधे । असुरऽघ्ने । मन्म ।
धीतिम् । भरध्वम् । भरे । हविः । न । बर्हिषि । प्रीणानः ।
वैश्वानराय । यतये । मतीनाम् ॥ १ ॥

हे सखायः विश्वशुचे विश्वं यो दीपयति तस्मै धियंधे धियां कर्मणां यो धाता तस्मै असुरघ्ने असुराणां यो हन्ता तस्मै अग्नये मन्म मननीयं स्तोत्रं धीतिं कर्मच प्रभरध्वं । मतीनामभिमतानां कामानां यतये दात्रे वैश्वानराय विश्वनरहिताय अग्निविशेषाय बर्हिषि यज्ञे हविर्न

हविरिव स्तुतिं प्रीणानः प्रीयमाणोहं भरे भरामि । यद्वा हविः प्रीणानः प्रीणयन्नहं बर्हिषि ह- विर्भरे संभरामि नेति संप्रत्यर्थे ॥ १ ॥

१. सबके उद्दीपक, कर्म के धारक और असुर-विघातक अग्नि को लक्ष्य कर स्तोत्र और कर्म करो। मैं प्रसन्न होकर मनोरथ-दाता वैश्वानर अग्नि को लक्ष्य कर यज्ञ में, हव्य के साथ, स्तुति करता हूँ।

त्वमग्नेशोचिषाशोशुचानआरोदसीअपृणाजायमानः ।
त्वंदेवाँअभिशस्तेरमुञ्चोवैश्वानरजातवेदोमहित्वा ॥ २ ॥

त्वम् । अग्ने । शोचिषा । शोशुचानः । आ । रोदसी इति ।
अपृणाः । जायमानः । त्वम् । देवान् । अभिऽशस्तेः । अमुञ्चः ।
वैश्वानर । जातऽवेदः । महिऽत्वा ॥ २ ॥

हे अग्ने त्वं शोचिषा दीप्त्या शोशुचानो दीप्यमानो जायमानो जायमानएव रोदसी द्यावापृथिव्यौ आ अपृणाः आपूरयः। अपि च जातवेदो जातप्रज्ञ जातधनवा वैश्वानर विश्वनरहित हे अग्ने त्वं देवान् महित्वा महत्त्वेन अभिशस्तेः अभिशंसकाव् शत्रोरमुंचः अमोचयः॥२॥

२. अग्नि, तुमने दीप्ति-द्वारा दीप्त और उत्पन्न होकर द्यावापृथिवी को पूर्ण किया है। जातधन वैश्वानर, अपनी महिमा-द्वारा तुमने देवों को शत्रुओं से मुक्त किया है।

जातोयदग्नेभुवनाव्यख्यःपशून्नगोपाइर्यःपरिज्मा ।
वैश्वानरब्रह्मणेविन्दगातुंयूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ १६ ॥

जातः । यत् । अग्ने । भुवना । वि । अख्यः । पशून् । न ।
गोपाः । इर्यः । परिऽज्मा । वैश्वानर । ब्रह्मणे । विन्द । गातुम् ।
यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥ १६ ॥

हे अग्ने जातः सूर्यात्मनाजातः त्वं इर्य्यः स्वामी प्रेरयन्वा परिज्मा परितोगन्तासन् पशून्न गोपाः यथा गवां पालकः पशून् पश्यति तद्वत् । यद्यदा भुवना भूतानि व्यख्यः रक्षणार्थं पश्यसि तदा ब्रह्मणे ब्रह्मस्तोत्रं तदर्थं गातुं गतिं फलप्राप्तिं विंद। यद्वा ब्रह्मणे ब्राह्मणार्थं गातुं विन्द येन ब्रह्मणा उपद्रवान्निर्गच्छन्ति तं गातुं विन्देत्यर्थः। स्पष्टमन्यत् ॥ ३ ॥

३. अग्नि, तुम सूर्य-रूप से उत्पन्न हो, स्वामी हो, सर्वत्र गमनशील हो। जैसे गोपालक पशुओं का सन्दर्शन करता है, वैसे ही तुम जिस समय भूतों का सन्दर्शन करते हो, उस समय स्तोत्र-रूप फल प्राप्त करो। सदा तुम हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य द्वितीये षोडशो वर्गः ॥ १६ ॥

समिधा जातवेदसइति तृचं चतुर्दशं सूक्तं वसिष्ठस्यार्षमाग्नेयम् आद्या बृहती द्विती-या तृतीये त्रिष्टुभौ तथाचानुक्रम्यते--समिधा बृहत्यादीति विनीयोगोलैङ्गिकः।

समिधांजातवेदसेदेवायदेवहूतिभिः।
हविर्भिःशुक्रशोचिषेनमस्विनोवयंदाशेमाग्नये ॥ १ ॥

सम्ऽइधां। जातऽवेदसे। देवाय। देवहूतिऽभिः। हविःऽभिः।
शुक्रऽशोचिषे। नमस्विनः। वयम्। दाशेम। अग्नये ॥ १ ॥

जातवेदसे जातवेदसं जातप्रज्ञं अग्नये अग्निं समिधा वयं वसिष्ठाः दाशेम परिचरेम। देवाय देवं स्तुत्यमग्निं देवहूतिभिर्देवस्तुतिर्भि दाशेम। शुक्रशोचिषे शुभ्रशोचिषं शुभ्रदीप्तिं नम स्विनोहविष्मन्तोवयं हविर्भिर्दाशेम। अत्र दाशतियोगात् कर्मणि चतुर्थी प्रायेण सर्वत्र दाश-तियोगे कर्मणिचतुर्थी दृश्यते ॥ १ ॥

१. हम हविवाले हैं। हम समिधा-द्वारा जातवेदा अग्नि की सेवा करते हैं। देव-स्तुति-द्वारा हम अग्नि की सेवा करेंगे। हव्य-द्वारा शुभ्र दीप्ति अग्नि की सेवा करेंगे।

वयन्तेअग्नेसमिधांविधेमवयन्दाशेमसुष्टुतीयजत्र।
वयंघृतेनाध्वरस्यहोतर्वयंदेवहविषाभद्रशोचे ॥ २ ॥

वयम्। ते। अग्ने। सम्ऽइधा। विधेम। वयम्। दाशेम।
सुऽस्तुती। यजत्र। वयम्। घृतेन। अध्वरस्य। होतः।
वयम्। देव। हविषा। भद्रऽशोचे ॥ २ ॥

हे अग्ने ते त्वां वयं वसिष्ठाः समिधा विधेम परिचरेम। हे यजत्र यष्टव्याग्ने वयं सुष्टुती शोभनया स्तुत्या दाशेम त्वां परिचरेम। अध्वरस्य यज्ञस्य होतरग्ने वयं घृतेनाज्येन त्वां दाशे-म। हे भद्रशोचे कल्याणज्वाल देव द्योतमानाग्ने त्वां वयं हविषा दाशेम ॥ २ ॥

२. अग्नि, समिधा-द्वारा हम तुम्हारी सेवा करेंगे। हे यजनीय, हम स्तुति-द्वारा तुम्हारी सेवा करेंगे। हे कल्याणमयी ज्वालावाले अग्नि, हम हव्य-द्वारा तुम्हारी सेवा करेंगे।

आनोदेवेभिरुपदेवहूतिमग्नेयाहिवषट्कृतिंजुषाणः।
तुभ्यंदेवायदाशतःस्यामयूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ १७ ॥

आ। नः। देवेभिः। उप। देवऽहूतिम्। अग्ने। याहि। वषट्ऽकृतिम्।
जुषाणः। तुभ्यम्। देवाय। दाशतः। स्याम। यूयम्। पात।
स्वस्तिऽभिः। सदा। नः ॥ ३ ॥ १७ ॥

हे अग्ने नोस्माकं देवहूतिं स्तोत्रं यज्ञंवा देवेभिः देवैः साधं वषट्कृतिं हविः जुषाणः सेवमानस्त्वं उप आयाहि। देवाय द्योतमानाय तुभ्यं वयं दाशतः परिचरन्तः स्याम भवेम। सिद्धमन्यत् ॥ ३ ॥

३. अग्नि, तुम हव्य (वषट्कृति) का सेवन करते हुए देवों के संग हमारे यज्ञ में आओ। तुम प्रकाशमान हो; हम तुम्हारे सेवक बनें। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य द्वितीये सप्तदशो वर्गः ॥ १७ ॥

उपसद्यायेति पञ्चदशर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं गायत्रमाग्नेयं तथाचानुक्रान्तं—उपसद्याय पंचोना गायत्रमिति प्रातरनुवाके आग्नेयेक्रतौ गायत्रेछन्दसि आश्विनशस्त्रे चेदं सूक्तं सूत्रितं च—उपसद्याय त्वमग्नेयज्ञानामिति तिस्रउत्तमाउद्धरेदिति। उपसदि पौर्वाह्णिक्यां उपसद्याये-त्याद्यास्तिस्रऋचः सामिधेन्यः सूत्र्यते च—उपसद्यायमीळ्हुषइति तिस्रः एकैकां त्रिरनवानमिति। पवित्रेष्ट्यां अग्नेरक्षांसीत्येषा प्रथमाज्यभागानुवाक्या सूत्रितं च—पावकवन्तावाज्यभागावग्नी रक्षांसिसेधतीति। अन्वारंभणीयायां अग्नेर्भंगिनोयाज्या सूत्रितं च—आसवंसवितुर्यथा सनोराधांस्याभरेति। स्वस्त्ययन्यामिष्टौ अग्नेरक्षाणइतिप्रथमाज्यभागानुवाक्या सूत्रितं च—स्वस्त्ययन्यां-रक्षितवन्तावग्नेरक्षाणोअंहसइति।

उपसद्यायमीळ्हुषआस्येजुहुताहविः। योनोनेदिष्ठमाप्यम् ॥ १ ॥

उपसद्याय। मीळ्हुषे। आस्ये। जुहुत। हविः।
यः। नः। नेदिष्ठम्। आप्यम् ॥ १ ॥

हेअध्वर्यवः उपसद्याय उपसदनीयाय मीळ्हुषे कामानां वर्षित्रे अग्नये तत्प्रीत्यर्थं आस्ये तस्यैवमुखे हविर्जुहुत। योग्निः नेदिष्ठमासन्नतममाप्यं भवति आसन्नतमोवन्धुर्भवतीत्यर्थः आप्यमितिस्वार्थिकस्तद्धितः ॥ १ ॥

१. जो अग्नि हमारे समीपतप बन्धु हैं, उन्हीं के पास में बैठनेवाले और मनोरथवर्षक अग्नि के लिए, उनके मुख में, ऋत्विको, हव्य दो।

यःपञ्चचर्षणीरभिनिषसाददमेदमे। कविर्गृहपतिर्युवा ॥ २ ॥

यः। पञ्च। चर्षणीः। अभि। निऽससाद।
दमेऽदमे। कविः। गृहऽपतिः। युवा ॥ २ ॥

योग्निः कविः प्राज्ञो गृहपतिः गृहाणां पालयिता युवा नित्यतरुणःसन् पंचचर्षणीः पञ्चजनान् मनुष्यानभि अभिमुखं दमेदमे गृहेगृहे निषसाद निषीदति। उत्तरया वाक्यपरिसमाप्तिः ॥ २ ॥

२. प्राज्ञ, गृह-पालक और नित्य तरुण अग्नि पञ्चजनों (चार वर्णों और निषाद) के सामने घर-घर बैठते हैं।

अथ तृतीया—

सनोवेदोअमात्यमग्नीरक्षतुविश्वतः । उतास्मान्पात्वंहसः ॥ ३ ॥

सः । नः । वेदः । अमात्यम् । अग्निः । रक्षतु ।
विश्वतः । उत । अस्मान् । पातु । अंहसः ॥ ३ ॥

सोग्निर्नोस्माकं वेदोधनं अमात्यं अन्तिके भवं सह भूतंवा विश्वतः सर्वतोबाधकात् रक्षतु । उतापिच अस्मान्वसिष्ठानंहसः पापात् पातु रक्षतु ॥ ३ ॥

३. वेही अग्नि हमारे मन्त्री हैं। बाधा से सारे धन की रक्षा करें। हमें पाप से बचाओ।

अथ चतुर्थी—

नवंनुस्तोममग्नयेदिवःश्येनायजीजनम् । वस्वःकुविद्वनातिनः ॥ ४ ॥

नवम् । नु । स्तोमम् । अग्नये । दिवः । श्येनाय ।
जीजनम् । वस्वः । कुवित् । वनाति । नः ॥ ४ ॥

दिवो द्युलोकस्य श्येनाय श्येनसदृशाय नु क्षिप्रं गन्त्रे अग्नये यस्मै नवं नूतनं स्तोमं जीजनं जनयामि । सोग्निर्नोस्मभ्यं कुवित् बहु वस्वोवसु धनं कर्मणिषष्ठी वनाति ददात्वित्यर्थः ॥ ४ ॥

४. हम द्युलोक के, श्येन पक्षी की तरह शीघ्रगामी अग्नि को उद्देश कर नया मन्त्र उत्पन्न करते हैं। वे हमें बहुत धन दें।

अथ पंचमी—

स्पार्हायस्यश्रियोदृशेरयिर्वीरवतोयथा । अग्रेयज्ञस्यशोचतः ॥५॥१८॥

स्पार्हाः । यस्य । श्रियः । दृशे । रयिः । वीरऽवतः ।
यथा । अग्रे । यज्ञस्य । शोचतः ॥ ५ ॥ १८ ॥

यस्याग्रे पुरस्ताद्भागे शोचतो दीप्यमानस्य यस्याग्नेः श्रियो दीप्तयः वीरवतः पुत्रवतोरयिर्धनं यथा तद्वत् दृशे द्रष्टुं चक्षुषेवा स्पार्हाः स्पृहणीयाः भवन्ति । तस्मै नवं स्तोमं जीजनमित्यनुषंगः उत्तरत्र संबंधोवा ॥ ५ ॥

५. यज्ञ के अग्रभाग में दीप्यमान अग्नि की दीप्तियाँ पुत्रवान् मनुष्य के धन की तरह नेत्रों को स्पृहणीय होती हैं।

॥ इति पंचमस्य द्वितीयेष्टादशो वर्गः ॥ १८ ॥

अथ षष्ठी—

सेमांवेतुवषट्कृतिमग्निर्जुषतनोगिरः । यजिष्ठोहव्यवाहनः ॥ ६ ॥

सः । इमाम् । वेतु । वषट्ऽकृतिम् । अग्निः । जुषत ।
नः । गिरः । यजिष्ठः । हव्यऽवाहनः ॥ ६ ॥

यजिष्ठो यजनीयतमो यष्टृतमोवा हव्यवाहनो हव्यानां हविषां वोढा सोग्निरिमां वषट्कृतिं अस्माभिर्दीयमानामाहुतिं वेतु कामयतां भक्षयतु वा । नोस्माकं गिरः स्तुतीश्च जुषत सेवताम् ॥ ६ ॥

६. याज्ञिकों के उत्तम हव्य-वाहक अग्नि इस हव्य की अभिलाषा करें और हमारी स्तुति की सेवा करें।

नित्वानक्ष्यविश्पतेद्युमन्तंदेवधीमहि । सुवीरमग्नआहुत ॥ ७ ॥

नि । त्वा । नक्ष्य । विश्पते । द्युऽमन्तंम् । देव ।
धीमहि । सुऽवीरम् । अग्ने । आऽहुत ॥ ७ ॥

नक्ष्य उपगन्तव्य नक्षतिर्व्याप्तिकर्मा विश्पते विशांपते देव द्योतमान आहुत सर्वैर्यजमानैरभिहुत हे अग्ने द्युमन्तं दीप्तिमन्तं सुवीरं कल्याणस्तोतृकं त्वा त्वां वयं निधीमहि निहितवन्तः ॥ ७ ॥

७. हे समीप जाने योग्य, विश्व-पति और यजमानों-द्वारा बुलाये गये अग्निदेव, तुम प्रकाशमान और सुवीर हो। हमने तुम्हें स्थापित किया है।

क्षपंउस्रश्चंदीदिहिस्वग्नयस्त्वयावयम् । सुवीरस्त्वमस्मयुः ॥ ८ ॥

क्षपः । उस्रः । च । दीदिहि । सुऽअग्नयः । त्वया ।
वयम् । सुऽवीरः । त्वम् । अस्मऽयुः ॥ ८ ॥

हे अग्ने त्वं क्षपोरात्रीः उस्रः अहानि च सर्वदेतियावत् दीदिहि दीप्यस्व दीप्यमानेन त्वया वयं वसिष्ठाः स्वग्नयः शोभमानाग्नयो भवाम । अस्मयुः अस्मान् कामयमानः सुपआत्मनः-क्यजिति क्यचिकृते क्याच्छन्दसीति उ प्रत्ययः दकारलोपश्छान्दसः तथा च यास्कः—अस्मयुरस्मान्कामयमानइति । त्वं सुवीरः सुस्तोत्रिको भव ॥ ८ ॥

८. तुम दिन-रात प्रदीप्त होओ। इससे हम शोभन अग्निवाले होंगे। हमें चाहते हुए तुम सुवीर (सुन्दर स्तोत्रवाले) बनो।

अथ नवमी–

उपत्वासातयेनरोविप्रासोयन्तिधीतिभिः । उपाक्षरासहस्रिणी ॥९॥

उप । त्वा । सातये । नरः । विप्रासः । यन्ति ।
धीतिऽभिः । उप । अक्षरा । सहस्रिणी ॥ ९ ॥

हे अग्ने त्वा त्वां नरो नेतारो यजमानाः विप्रासो विप्राः मेधाविनः धीतिभिः कर्मभिः सातये धनाय कामानां लाभायवा उपयन्ति उपगच्छन्ति । सहस्रिणी सहस्रसंख्याका अक्षरा क्षयरहिता स्तुतिरूपा अस्मदीया वाक् त्वामुपयाति च ॥ ९ ॥

९. अग्नि, प्रतापी यजमान कर्म-द्वारा, धन-लाभ के लिए, तुम्हारे पास जाते हैं।

अथ दशमी–

अग्नीरक्षांसिसेधतिशुक्रशोचिरमर्त्यः । शुचिःपावकईड्यः ॥१०॥१९॥

अग्निः । रक्षांसि । सेधति । शुक्रऽशोचिः । अमर्त्यः ।
शुचिः । पावकः । ईड्यः ॥ १० ॥ १९ ॥

शुक्रशोचिः शुभ्रज्वालः अमर्त्यः मरणरहितो देवतात्मा शुचिः स्वयं शुद्धः पावकः अन्येषामपि शोधकः ईड्यः स्तुत्योग्निः रक्षांसि राक्षसान् सेधति बाधतां ॥ १० ॥

१०. शुभ्र शिखावाले, अमर, स्वयंशुद्ध, शोधक और स्तुति-योग्य अग्नि, राक्षसों को बाधा दो।

॥ इति पंचमस्य द्वितीये एकोनविंशो वर्गः ॥१९॥

सनोराधांस्याभरेशानःसहसोयहो । भगश्चदातुवार्यम् ॥ ११ ॥

सः । नः । राधांसि । आ । भर । ईशानः । सहसः ।
यहो इति । भगः । च । दातु । वार्यम् ॥ ११ ॥

हे सहसोयहो बलस्यपुत्राग्ने समसिद्धस्त्वं ईशानः सर्वस्य जगतः ईश्वरः सन् नोस्मभ्यं राधांसि धनानि रायःराधइति धननामसु पाठात् आभर आहर । भगश्च भगोदेवोपि वार्यं वरणीयं धनं दातु अस्मभ्यं ददातु । अभ्यासलोपश्छान्दसः भगोत्रसूक्ते निपातभागिनी देवता ॥ ११ ॥

११. बल के पुत्र, तुम जगदीश्वर होकर हमें धन दो। भग देवता भी वरणीय धन दान करें।

अथ द्वादशी–

त्वमग्नेवीरवद्यशोदेवश्चसवितांभगः । दितिश्चदातिवार्यम् ॥ १२ ॥

त्वम् । अग्ने । वीरऽवत् । यशः । देवः । च । सविता ।
भर्गः । दितिः । च । दाति । वार्यम् ॥ १२ ॥

हे अग्ने त्वं वीरवत् पुत्रपौत्रोपेतं यशोन्नं देहीति शेषः । देवश्च सविता सविता देवोपि वार्यं वरणीयं धनं दाति ददातु । भगश्च देवोपि ददातु । दितिश्च दितिरपि देवी ददातु । सवित्रादिः सूक्ते निपातभागिनी देवता ॥ १२ ॥

१२. अग्नि, तुम पुत्र-पौत्रादि से युक्त अन्न दो। सविता देव भी वरणीय धन दें। भग और अदिति भी दें।

अथ त्रयोदशी—

अग्नेरक्षाणोअंहसःप्रतिष्मदेवरीषतः । तपिष्ठैरजरोदह ॥ १३ ॥

अग्ने । रक्ष । नः । अंहसः । प्रति । स्म ।
देव । रिषतः । तपिष्ठैः । अजरः । दह ॥ १३ ॥

हे अग्ने त्वं नोस्मान् अंहसः पापात् रक्ष पाहि । संहितायां दीर्घश्छान्दसः अपिच हे देव द्योतमानाग्ने अजरो जरारहितस्त्वं रिषतो हिंसतः शत्रून् तपिष्ठैरतिशयेन तापकैस्तेजोभिः दह भस्मीकुरु ॥ १३ ॥

१३. अग्नि, हमें पाप से बचाओ। अजर देव, तुम हिंसकों को अत्यन्त तापक तेज-द्वारा जलाओ।

अथ चतुर्दशी—

अधामहीनआयस्यनाधृष्टोनृपीतये । पूर्भवाशतभुजिः ॥१४॥

अध । मही । नः । आयसी । अनाधृष्टः । नृऽपीतये ।
पूः । भव । शतऽभुजिः ॥ १४ ॥

अधा अधुना हे अग्ने अनाधृष्टः अप्रतिधर्षणीयः त्वं नोस्माकं नृपीतये नृणां रक्षणार्थं मही महती आयसी अयसा निर्मिता शतभुजिः अत्यन्तं विस्तृता शतगुणा पूः पुरी तद्रक्षा-साधनभूतप्राकारादिर्वा पूरुच्यते भव । यथा अयसा निर्मिता पुरी तद्रक्षासाधनभूतप्राकारादि-र्वा शत्रुभ्योभीतान्रक्षति तद्वद्राक्षसेभ्यो भीतानस्मान् पाहीत्यर्थः ॥ १४ ॥

१४. तुम दुर्द्धर्ष हो। इस समय तुम हमारे मनुष्यों की रक्षा के लिए महान् लौह से निर्मित शतगुणपुरी बनाओ (ताकि लौह-नगरी में शत्रु हमें न मार सकें)।

त्वंनःपाह्यंहसोदोषावस्तरघायतः । दिवानक्तमदाभ्य ॥१५॥२०॥

त्वम् । नः । पाहि । अंहसः । दोषाऽवस्तः । अघऽयतः ।
दिवा । नक्तम् । अदाभ्य ॥ १५ ॥ २० ॥

हे अदाभ्य अहिंस्य दोषा वस्तः रात्रेराच्छादयितः तमसोवारयितरित्यर्थः। अग्ने त्वं नोस्मान् अंहसः पापात् अघायतः पापमिच्छतः शत्रोश्च दिवानक्तं अहनि रात्रौ च सर्वदा पाहि रक्ष ॥ १५॥

१५. अहिंसनीय रात्रि को अथवा अन्धकार को हटानवाले अग्नि, तुम हमें पाप से और पाप-कामी व्यक्ति से दिन-रात बचाओ।

॥ इति पञ्चमस्य द्वितीये विंशो वर्गः॥ २०॥

एनावइति द्वादशर्चं षोडशं सूक्तं वसिष्ठस्यार्षमग्निदेवताकं अयुजो बृहत्यः युजः सतोबृहत्यः तथाचानुक्रान्तम्—एनावोद्वादश प्रागाथमिति। प्रातरनुवाके आग्नेये क्रतौ बार्हते छन्दसि आश्विनशस्त्रेचेदं सूक्तं सूत्रितं च—एनावोअग्निं प्रवोयह्वमिति। आग्निमारुतशस्त्रेदेवोवोद्रविणोदाइति प्रगाथोनुरूपः सूत्रितं च—देवोवोद्रविणोदाइति प्रगाथौ स्तोत्रियानुरूपाविति।

तत्र प्रथमा—

एनावोअग्निंनमसोर्जोनपातमाहुवे।
प्रियंचेतिष्ठमरतिंस्वध्वरंविश्वस्यदूतममृतम् ॥ १ ॥

एना। वः। अग्निम्। नमसा। ऊर्जः। नपातम्। आ। हुवे।
प्रियम्। चेतिष्ठम्। अरतिम्। सुऽअध्वरम्। विश्वस्य। दूतम्।
अमृतम् ॥ १ ॥

ऊर्जो बलस्य नपातं पुत्रं सूनुः नपादित्यपत्यनामसु पाठात् प्रियं प्रियमस्माकं चेतिष्ठं अतिशयेन ज्ञातारं प्रज्ञापकंवा अरतिं गन्तारं स्वामिनं वा स्वध्वरं सुयज्ञं विश्वस्य सर्वस्य यजमानस्य दूतममृतं नित्यमग्निमेना एनेन नमसा स्तोत्रेण यद्यप्यत्रान्वादेशोनास्ति तथापि छान्दसत्वादिदंशब्दस्यैनादेशः। यद्वा एना एनमित्यग्नेर्विशेषणं समानार्षत्वात् पूर्वेषु सूक्तेष्वादिष्टत्वाद्वसिष्ठेनान्वादिश्यते। वोयुष्मदर्थमाहुवे आह्वयामि ॥ १ ॥

१. तुम्हारे लिए बल के पुत्र, प्रिय विद्वच्छ्रेष्ठ, गतिशील सुन्दर यज्ञवाले, सबके दूत और नित्य अग्नि को, इस स्तोत्र के द्वारा, मैं बुलाता हूँ।

अथ द्वितीया—

सयोजतेअरुषाविश्वभोजसासदुद्रवत्स्वाहुतः।
सुब्रह्मायज्ञःसुशमीवसूनांदेवंराधोजनानाम् ॥ २ ॥

सः। योजते। अरुषा। विश्वऽभोजसा। सः। दुद्रवत्।
सुऽआहुतः। सुऽब्रह्मा। यज्ञः। सुऽशमी। वसूनाम्। देवम्।
राधः। जनानाम् ॥ २ ॥

सोऽग्निररुषा आरोचमानौ विश्वभोजसा विश्वस्य पालयितारौ अश्वौ योजते रथे युनक्तु। यद्वा सोऽग्निः अरुषा आरोचमानेन तेजसा विश्वभोजसा विश्वरक्षकेण योजते अयुज्यत । किं च सोऽग्निः दुद्रवत् आनेतुं देवान्प्रति भृशं द्रवतु द्रवतिवा । स्वाहुतः सुष्ठ्वाहुतः सुब्रह्मा सुस्तुतिः शोभनान्नोवा यष्टव्यः सुशमी सुकर्मा च भवति । तमिमं देवं द्योतमानं वसूनां वासकानां जनानां वसिष्ठानां राधो हविरभिगच्छत्वितिशेषः । यद्वा एवंगुणविशिष्टोऽग्निः वसूनां धनानां मध्ये देवमत्यन्तप्रकाशमानं राधो धनं जनानां यजमानानां धनवत्प्रियतमइत्यर्थः ॥ २ ॥

२. अग्नि रुचिकर और सबके पालक हैं। वे दोनों अश्वों को रथ में जोतते हैं। वे देवों के प्रति अत्यन्त द्रुत-गमन करते हैं। वे सुन्दर रूप से आहूत सुन्दर स्तुतिवाले, यजनीय और सुकर्मा हैं। वसिष्ठवंशियों का धन अग्नि के पास जाय।

उद॑स्य॒ शो॒चिर॑स्थादा॒जुह्वा॑नस्य मी॒ळ्हुषः॑ ।
उद्धू॒मासो॑ अरु॒षासो॑ दिवि॒स्पृशः॒ सम॒ग्निमि॑न्धते॒ नरः॑ ॥ ३ ॥

उत् । अ॒स्य॒ । शो॒चिः । अ॒स्था॒त् । आ॒ऽजुह्वा॑नस्य । मी॒ळ्हुषः॑ ।
उत् । धू॒मासः॑ । अ॒रु॒षासः॑ । दि॒वि॒ऽस्पृशः॑ । सम् । अ॒ग्निम् ।
इ॒न्ध॒ते॒ । नरः॑ ॥ ३ ॥

मीळ्हुषः कामानां वर्षितुः आजुह्वानस्याभिहूयमानस्याग्नेः शोचिस्तेजः उदस्थादुत्तिष्ठति अरुषासः आरोचमानाः दिविस्पृशोन्तरिक्षस्पृशो धूमासोधूमाश्च उदस्थुः अस्थात् इत्येकवचनान्तं बहुवचनान्ततया विपरिणतंसदत्रान्वेति । तमिममग्निं नरः कर्मणां नेतारः ऋत्विजः समिन्धते सम्यक् दीपयन्ति ॥ ३ ॥

३. अभीष्टकारी और बुलाये जानेवाले इन अग्नि का तेज ऊपर उठ रहा है। रुचिकर और आकाश छूनेवाले धुएँ उठ रहे हैं। मनुष्य अग्नि को जला रहे हैं।

अथ चतुर्थी—

तं त्वा॑ दू॒तं कृ॑ण्महे य॒शस्त॑मं दे॒वाँ आ वी॒तये॑ वह ।
विश्वा॑ सूनो सहसो मर्त॒भोज॑ना॒ रास्व॒ तद्यत्त्वेम॑हे ॥ ४ ॥

तम् । त्वा॒ । दू॒तम् । कृ॒ण्म॒हे॒ । य॒शःऽत॑मम् । दे॒वान् । आ ।
वी॒तये॑ । व॒ह॒ । विश्वा॑ । सू॒नो॒ इति॑ । स॒ह॒सः॒ । म॒र्त॒ऽभोज॑ना ।
रास्व॑ । तत् । यत् । त्वा॒ । ईम॑हे ॥ ४ ॥

हे सहसःसूनो बलस्यपुत्राग्ने यशस्तममतिशयेन यशस्विनं तं अग्निं यं त्वा त्वां दूतं कृण्महे कुर्मः । सः त्वं देवान् वीतये हविषां भक्षणाय आवह । किं च यदा त्वा त्वां ईमहे

याचामहे। तदैव विश्वा विश्वानि मर्तभोजनानि मनुष्याणां भोग्यानि कल्याणानि धनानि रास्वास्मभ्यं देहि ॥ ४ ॥

४. बल-पुत्र अग्नि, तुम यशः-शाली हो। हम तुम्हें दूत बनाते हैं। हव्य-भक्षण के लिए देवों को बुलाओ। जिस समय तुम्हारी हम याचना करते हैं, उस समय मनुष्यों के भोग-योग्य धन हमें दो।

अथ पंचमी—

त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे।
त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥ ५ ॥

त्वम्। अग्ने। गृहऽपतिः। त्वम्। होता। नः। अध्वरे।
त्वम्। पोता। विश्वऽवार। प्रऽचेताः। यक्षि। वेषि।
च। वार्यम् ॥ ५ ॥

हे विश्ववार विश्वैर्वरणीयाग्ने त्वं नोस्माकमध्वरे यागे गृहपतिरसि यजमानोसि। त्वं होता देवानामाह्वाता त्वं त्वमेव पोतासि। अतः प्रचेताः प्रकृष्टमतिस्त्वं वार्यं वरणीयं हविः यक्षि यज वेषि च कामयस्व भक्षयवा ॥ ५ ॥

५. विश्व-माननीय अग्नि, तुम हमारे यज्ञ में गृह-पति हो। तुम होता, पोता और प्रकृष्ट-बुद्धि हो। वरणीय हव्य का यज्ञ करो और भक्षण करो।

कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि।
आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्षते ॥ ६ ॥ २१ ॥

कृधि। रत्नम्। यजमानाय। सुक्रतो इति सुऽक्रतो। त्वम्।
हि। रत्नऽधाः। असि। आ। नः। ऋते। शिशीहि। विश्वम्।
ऋत्विजम्। सुऽशंसः। यः। च। दक्षते ॥ ६ ॥॥ २१ ॥

हे सुक्रतो शोभनकर्मन्नग्ने यजमानाय मह्यं रत्नं धनं श्वात्रं रत्नमिति धननामसु पाठात् कृधि कुरु देहीत्यर्थः। हि यस्मात्त्वं रत्नधाः रत्नस्य दातासि। नोस्माकमृते यज्ञे विश्वं सर्वं ऋत्विजं आशिशीहि तीक्ष्णीकुरु। किं च यः सुशंसः सुस्तुतिरस्मत्पुत्रो दक्षते वर्धते तं वर्धय यः सुशंसो होता वर्धते तं वर्धयेत्यर्थः। होतुः पृथगुपादानमादरार्थं ॥ ६ ॥

६. सुन्दरकर्मा अग्नि, तुम यजमान को रत्न दो। तुम रत्न-दाता हो। हमारे यज्ञ में सबको तेज बनाओ। जो होता बढ़ता है, उसे बढ़ाओ। ॥ इति पञ्चमस्य द्वितीये एकविंशो वर्गः ॥ २१ ॥

अथ सप्तमी—

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः।
यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ॥ ७ ॥

त्वे इति॑ । अ॒ग्ने॒ । सु॒ऽआ॒हु॒त॒ । प्रि॒यासः॑ । स॒न्तु॒ । सू॒रयः॑ ।
य॒न्तारः॑ । ये । म॒घऽवा॑नः । जना॑नाम् । ऊ॒र्वान् । दय॑न्त ।
गोना॑म् ॥ ७ ॥

हे अग्ने स्वाहुत यजमानैः सुष्ठु आहुत त्वे तव सूरयः प्रेरकाः स्तोतारोवा प्रियासः प्रियाःसन्तु भवन्तु । किं च ये मघवानो धनवन्तो यन्तारः प्रदातारः जनानामस्मदीयानामूर्वान् समूहान् गोनां गवां च ऊर्वान् दयन्त प्रयच्छन्दि ते च तव प्रियासःसन्त्विति पूर्वेण संबंधः ॥ ७॥

७. सुन्दर रूप से आहूत अग्नि, तुम्हारे स्तोता प्रिय हों। जो धनवान् दाता लोग जन-समुदाय और गो-समूह दान करते हैं, वे भी प्रिय हों।

येषा॒मिळा॑घृ॒तह॑स्तादुरो॒णआँअपि॑प्रा॒तानि॒षीद॑ति ।
ताँस्त्रा॑यस्वसहस्यद्रु॒होनि॒दोयच्छा॑नः॒शर्म॑दी॒र्घ॒श्रुत् ॥ ८ ॥

येषा॑म् । इळा॑ । घृ॒तऽह॑स्ता । दु॒रो॒णे । आ । अपि॑ ।
प्राता । नि॒ऽसीद॑ति । तान् । त्रा॒य॒स्व॒ । स॒ह॒स्य॒ । द्रु॒हः । नि॒दः ।
यच्छ॑ । न॒ः । शर्म॑ । दी॒र्घ॒ऽश्रुत् ॥ ८ ॥

येषां दुरोणे गृहे घृतहस्ता घृतयुक्तो हस्तो यस्याअसौ घृतहस्ता घृतेनाभिघारितेत्यर्थः। इळान्नरूपा हविर्लक्षणा देवी इरा इळेत्यन्ननामसु पाठाद्। प्राता पूर्णा आनिषीदति आसीदति।अपीतिपूरणः तान् हविष्मतो यजमानान् हे सहस्य सहसे बलाय हिताग्ने द्रुहो द्रोग्धुर्निदो-निन्दकाच्च शत्रोस्त्रायस्व । नोस्मभ्यं दीर्घश्रुत् दीर्घकालं श्रोतव्यं शर्म सुखं गृहं वा यच्छ च देहि ॥ ८ ॥

८. जिन घरों में घृतहस्ता, अन्न-रूपा और हविर्लक्षणा देवी पूर्णा होकर बैठी हैं, उनको, हे बलवान् अग्नि, द्रोहियों और निन्दकों से बचाओ। हमें बहुत समय तक स्तुति-योग्य सुख दो।

अथ नवमी—

सम॒न्द्रया॑चजि॒ह्वया॒वह्नि॑रा॒साविदु॒ष्ट॑रः ।
अग्ने॑र॒यिंम॒घव॑द्भ्योन॒आव॑हह॒व्यदा॑तिंच॒सूदय ॥ ९ ॥

सः । म॒न्द्रया॑ । च॒ । जि॒ह्वया॑ । वह्निः॑ । आ॒सा । वि॒दुः॒ऽतरः॑ ।
अग्ने॑ । र॒यिम् । म॒घव॑त्ऽभ्यः । न॒ः । आ । व॒ह॒ । ह॒व्यऽदा॑तिम् ।
च॒ । सू॒द॒य॒ ॥ ९ ॥

हे अग्ने मन्द्रया च मोदयित्र्या देवानामासा आस्यस्थानीयया जिह्वया ज्वालया वह्निर्हविषां वोढा विदुष्टरो विद्वत्तरः सप्रसिद्धस्त्वं मघवद्भ्यो हविष्मद्भ्यो नोस्मभ्यं रयिं धनं आवहच। हव्यदातिं हव्यानि ददातीतिहव्यदातिर्यजमानः तं तथाच वाजसनेयिनः आमि-नन्ति—यजमानोवै हव्यदातिरिति। सूदयच कर्मसु प्रेरयच॥ ९॥

९. अग्नि, तुम हव्य-वाहक और विद्वान् हो। मोदयित्री और मुख-स्थिता जिह्वा-द्वारा हमें धन दो। हम हव्य वाले हैं। हव्यदाता को कर्म में प्रेरित करो। अथ दशमी—

येराधांसिददत्यश्व्यामघाकामेनश्रवसोमहः।
ताँअंहसःपिपृहिपर्तृभिष्ट्वंशतंपूर्भिर्यविष्ठ्य॥ १०॥

ये। राधांसि। ददति। अश्व्या। मघा। कामेन। श्रवसः।
महः। तान्। अंहसः। पिपृहि। पर्तृऽभिः। त्वम्। शतम्।
पूःऽभिः। यविष्ठ्य॥ १०॥

हे यविष्ठ्य युवतमाग्ने त्वं ये यजमानाः महो महतः श्रवसो यशसः कामेन इच्छया यशस्कामाः सन्तइत्यर्थः। राधांसि साधकानि अश्व्या अश्वात्मकानि मघा मघानि ददति तान् दातॄन् अंहसः पापात् शत्रोर्वा पर्तृभिः रक्षासाधनभूतैः शतमपरिमिताभिः पूर्भिर्नगरीभिश्च पिपृहि पालय॥ १०॥

१०. तरुणतम अग्नि, जो यजमान महान् यश की इच्छा से साधक-रूप और अश्वात्मक हव्य दान करते हैं, उन्हें पाप से बचाओ और सौ नगरियों-द्वारा पालन करो।

देवोवोद्रविणोदाःपूर्णांविवष्ट्यासिचम्।
उद्वासिञ्चध्वमुपवापृणध्वमादिद्वोदेवओहते॥ ११॥

देवः। वः। द्रविणःऽदाः। पूर्णाम्। विवष्टि। आऽसिचम्।
उत्। वा। सिञ्चध्वम्। उप। वा। पृणध्वम्।
आत्। इत्। वः। देवः ओहते॥ ११॥

द्रविणोदाः धनानां दाता देवोग्निः वो युष्मदीयां पूर्णां हविषा आसिचं आसिक्तं स्रुचं विवष्टि कामयते अतउत्सिंचध्वं वा सोमेन पात्रमुपपृणध्वं वा सोमं वाशब्दौ समुच्चयार्थौ ध्रुवग्रहेण होतृचमसं पूरयत च अग्नये सोमं यच्छतचेत्यर्थः आदिदनंतरमेव देवोग्निर्वोयुष्मान् ओहते वहति॥ ११॥

११. धनदाता अग्निदेव तुम्हारे हविःपूर्ण स्रुक् वा चमस की इच्छा करते हैं। सोम-द्वारा तुम पात्र सिद्ध करो, सोमदान करो। अनन्तर अग्निदेव तुम्हें वहन करते हैं।

अथ द्वादशी–

तंहोतारमध्वरस्यप्रचेतसंवह्निंदेवाअकृण्वत ।
दधातिरत्नंविधतेसुवीर्यमग्निर्जनायदाशुषे ॥ १२ ॥ २२ ॥

तम् । होतारम् । अध्वरस्य । प्रऽचेतसम् । वह्निम् ।
देवाः । अकृण्वत । दधाति । रत्नम् । विधते ।
सुऽवीर्यम् । अग्निः । जनाय । दाशुषे ॥ १२ ॥ २२ ॥

देवाः प्रचेतसं प्रकृष्टमतिं अग्निमध्वरस्य यज्ञस्य वह्निं वोढारं होतारं चाकृण्वत अकुर्वन् । किमर्थमित्यत आह सचाग्निः विधते परिचरते दाशुषे हविषां प्रदात्रे जनाय सुवीर्यं शोभनवीर्योपेतं रत्नं रमणीयं धनं दधाति ददात्वित्यर्थः ॥ १२ ॥

१२. देवो, तुमने उत्तम-बुद्धि अग्नि को यज्ञ-वाहक और होता बनाया है । वे अग्नि परिचर्याकारी हव्यदाता जन को शोभन वीर्यवाला और रमणीय धन दें ।

॥ इति पञ्चमस्य द्वितीये द्वाविंशो वर्गः ॥ २२ ॥

अग्ने भव सुषमिधेति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षं अग्निदेवताकं सप्तापि द्विपदास्त्रिष्टुभः तथैवानुक्रम्यते–अग्नेभव सप्तद्वैपदं त्रैष्टुभमिति । अतिरात्रे षष्ठेहनि तृतीयसवने मैत्रावरुणशस्त्रे अग्नेभवेति तृचोनुरूपः सूत्र्यतेहि–अग्नेत्वन्नोअन्तमोग्नेभवसुषमिधासमिद्धइतिस्तोत्रियानुरूपाविति । तत्र प्रथमा–

अग्नेभवसुषमिधासमिद्धउतबर्हिरुर्वियाविस्तृणीताम् ॥ १ ॥

अग्ने । भव । सुऽसमिधा । सम्ऽइद्धः । उत । बर्हिः ।
उर्विया । वि । स्तृणीताम् ॥ १ ॥

हे अग्ने सुषमिधा शोभनया समिधा समिद्धोभव सम्यक्दीप्तोभव । उतापि च बर्हिरुर्विया विस्तीर्णं विस्तृणीतां उपस्तृणीतमध्वर्युः ॥ १ ॥

१. अग्नि, शोभन समिधा के द्वारा समिद्ध होओ । अध्वर्यु भली भाँति कुश फैलावें ।

अथ द्वितीया–

उतद्वारउशतीर्विश्रयन्तामुतदेवाँउशतआवहेह ॥ २ ॥

उत । द्वारः । उशतीः । वि । श्रयन्ताम् ।
उत । देवान् । उशतः । आ । वह । इह ॥ २ ॥

उतापि च उशतीर्देवान् कामयमानाः द्वारो यज्ञगृहस्य देव्योवा तथा च यास्कः—द्वारोजवते-र्वा द्रवतेर्वा वारयतेर्वेति[1]। विश्रयन्तां उतापिच उशतोयज्ञं कामयमानान् देवानिहयज्ञे आवह॥२॥

२. देव-कामी द्वारों को आश्रित करो और यज्ञाभिलाषी देवों को इस यज्ञ में बुलाओ।

अग्ने॑वी॒हिह॒विषा॒यक्षि॑दे॒वान्त्स्व॑ध्व॒राकृ॑णुहिजातवेदः ॥ ३ ॥

अग्ने॑। वी॒हि। ह॒विषा॑। यक्षि॑। दे॒वान्।

सु॒ऽअ॒ध्व॒रा। कृ॒णु॒हि॒। जा॒त॒ऽवे॒दः॥ ३ ॥

हे जातवेदः जातधनाग्ने वीहि देवानभिगच्छ हविषा देवान्यक्षि यजच स्वध्वरा स्वध्व-रान् शोभनयज्ञांश्च कृणुहि कुरु ॥ ३ ॥

३. जातधन अग्नि, देवों के सामने जाओ। हव्य-द्वारा देवों का यज्ञ करो और देवों को शोभन यज्ञवाले करो।

स्व॒ध्व॒राक॑रतिजा॒तवे॑दा॒यक्ष॑द्दे॒वाँअ॒मृता॑न्पि॒प्रय॑च्च ॥ ४ ॥

सु॒ऽअ॒ध्व॒रा। क॒र॒ति॒। जा॒तऽवे॑दाः। यक्ष॑त्।

दे॒वान्। अ॒मृता॑न्। पि॒प्रय॑त्। च॒॥ ४ ॥

जातवेदाः जातधनोग्निः अमृतान् मरणरहितान् देवान् स्वध्वरा स्वध्वरान् शोभनयज्ञान् करति करोतु यक्षत् हविषा यजतु च पिप्रयत् स्तोत्रैः प्रीणयतुच ॥ ४ ॥

४. जातधन अग्नि, अमर देवों को सुन्दर यज्ञ से युक्त करो। हव्य से यज्ञ करो और स्तोत्र से प्रसन्न करो।

अथ पञ्चमी—

वंस्व॒विश्वा॒वार्या॑णिप्रचे॑तःस॒त्याभ॑वन्त्वा॒शिषो॑नोअ॒द्य ॥ ५ ॥

वंस्व॑। विश्वा॑। वार्या॑णि। प्र॒चे॒त॒ इति॑ प्रऽचेतः।

स॒त्याः। भ॒व॒न्तु॒। आ॒ऽशिषः॑। नः॒। अ॒द्य ॥ ५ ॥

हे प्रचेतः प्रकृष्टमतिमन्नग्ने विश्वा विश्वानि वार्याणि वरणीयानि धनानि वंस्व अस्मभ्यं देहि नोस्माकमाशिषोद्य सत्यायथार्था भवन्तु ॥ ५ ॥

५. हे सुबुद्धि अग्नि, समस्त वरणीय धन हमें दान करो। हमारे आशीर्वाद आज सत्य हों।

अथ षष्ठी—

त्वामु॒तेद॑धिरेह॒व्य॒वाहं॑दे॒वासो॑अग्नऊ॒र्जआन॒पात॑म् ॥ ६ ॥

---

1 नि० ८. ९.

त्वाम् । ऊम् इति॑ । ते । दधिरे । हव्यऽवाह॑म् ।
देवास॑: । अग्ने । ऊर्जः । आ । नपा॑तम् ॥ ६ ॥

हे अग्ने ऊर्जोबलस्य नपातं पुत्रं सूनुः नपादित्यपत्यनामसु पाठात् त्वामु त्वामेव ते प्रसिद्धादेवासोदेवा हव्यवाहं हविषोवोढारं आदधिरे अकुर्वन्नित्यर्थः ॥ ६ ॥

६. अग्नि, तुम बल-पुत्र हो। तुम्हें उन्हीं देवों ने हव्यवाहक बनाया है।

अथ सप्तमी—

तेतेदेवायदाशतःस्याममहोनोरत्नाविदधइयानः ॥ ७ ॥ २३ ॥

ते । ते । देवाय॑ । दाश॑तः । स्याम । महः । नः ।
रत्ना॑ । वि । दधः । इयानः ॥ ७ ॥ २३ ॥

हे अग्ने देवाय द्योतमानाय ते तुभ्यं ते प्रसिद्धा वसिष्ठावयं दाशतः हवींषि ददतः स्याम भवेम । अतोमहोमहांस्त्वं इयानः उपगम्यमानो याच्यमानोवा नोस्मभ्यं रत्ना रत्नानि रमणीयानि धनानि विदधः विधत्स्व ॥ ७ ॥

७. तुम प्रकाशमान हो। तुम्हें हम हवि देंगे। तुम महान् और पास जाने योग्य हो। हमें रत्न (धन) दान करो।

॥ इति पञ्चमस्य द्वितीये त्रयोविंशो वर्गः ॥ २३ ॥

॥ इति सप्तमे मंडले प्रथमोनुवाकः ॥ १ ॥

द्वितीयेनुवाके षोडश सूक्तानि तत्र त्वेहयत्पितरइति पंचविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमिन्द्रदेवताकं द्वाविंशादिभिश्चतसृभिः सुदासनाम्नोराज्ञो दानंस्तूयते अतस्तास्तद्देवताकाः अनुक्रम्यतेहि—त्वेहपंचाधिकैंद्रं सुदासः पैजवनस्य चतस्रोन्त्या दानस्तुतिरिति । महाव्रते आदितः पंचदशर्चः शंसनीयाः तथैव पंचमारण्यके सूत्रितं—त्वेहयत्पितरश्चिन्नइन्द्रेतिपंचदशेति ।

तत्र प्रथमा—

त्वेहयत्पितरश्चिन्नइन्द्रविश्वावामाजरितारोअसन्वन् ।
त्वेगावःसुदुघास्त्वेह्यश्वास्त्वंवसुदेवयतेवनिष्ठः ॥ १ ॥

त्वे इति॑ । ह । यत् । पितर॑: । चित् । नः । इन्द्र । विश्वा॑ ।
वामा । जरितार॑: । अस॑न्वन् । त्वे इति॑ । गाव॑: । सुऽदुघा॑: ।
त्वे इति॑ । हि । अश्वा॑: । त्वम् । वसु॑ । देवऽयते । वनिष्ठः ॥ १ ॥

हे इन्द्र त्वेह त्वय्येव नोस्माकं पितरश्चिद् पितरोपि जरितारः स्तोतारः सन्तः यद्यस्मा-द् कारणात् विश्वा विश्वानि वामा वामानि वननीयानि धनानि तथा च यास्कः—वामं वननी-यंभवतीति । असन्वन् अलभन्त तस्माद्वयमपि धनकामास्त्वां स्तुमः तद्युक्तं । हि यस्माद् कारणात् त्वे त्वयि गावः सुदुघाः दोग्धुं सुशकाः सन्ति त्वे त्वयि अश्वाः सन्ति त्वं वसु धनं देवयते देवं त्वामिच्छते यजमानाय वनिष्ठो दातृतमोभवसि ॥ १ ॥

१. इन्द्र, हमारे पितरों ने, स्तुति करते हुए, तुमसे ही सारे मनोहर धनों को प्राप्त किया है। तुमसे ही गायें सरलता से दोहन में समर्थ होती हैं। तुममें अश्व हैं, देवाभिलाषी व्यक्ति को तुम प्रभूत धन देते हो।

राजेवहिजनिभिःक्षेष्येवावद्युभिरभिविदुष्कविःसन् ।
पिशागिरोमघवन्गोभिरश्वैस्त्वायतःशिशीहिरायेअस्मान् ॥ २ ॥

राजाऽइव । हि । जनिऽभिः । क्षेषि । एव । अव । द्युऽभिः ।
अभि । विदुः । कविः । सन् ॥ पिशा । गिरः । मघऽवन् । गोभिः ।
अश्वैः । त्वाऽयतः । शिशीहि । राये । अस्मान् ॥ २ ॥

हे इन्द्र त्वं जनिभिर्जायाभिः राजेव द्युभिर्दीप्तिभिः सह क्षेष्येव निवसस्येव हीति पूरणः किं च हे मघवन् धनवन्निन्द्र विदुर्विद्वान् कविः क्रान्तकर्मा क्रान्तप्रज्ञोवा सन् गिरः स्तोतृनस्मा-न् पिशा रूपेण हिरण्यादिना वा गोभिश्चाश्वैश्च अभि अभितो रक्ष त्वायतः त्वत्कामानस्मान् राये शिशीहि धनार्थं च संस्कुरु ॥ २ ॥

२. इन्द्र, पत्नियों के साथ राजा की तरह तुम दीप्ति के साथ रहते हो। इन्द्र, तुम विद्वान् और क्रान्त-कर्मा (कवि) होकर स्तोताओं को रूप दान करो और गौ तथा अश्व-द्वारा रक्षा करो। हम तुम्हारी कामना करते हैं। धन के लिए तुम हमें संस्कृत करो।

इमाउत्वापस्पृधानासोअत्रमन्द्रागिरोदेवयन्तीरुपस्थुः ।
अर्वाचीतेपथ्याराय एतुस्यामतेसुमताविन्द्रशर्मन् ॥ ३ ॥

इमाः । ऊम् इति । त्वा । पस्पृधानासः । अत्र । मन्द्राः । गिरः ।
देवऽयन्तीः । उप । स्थुः । अर्वाची । ते । पथ्या । रायः । एतु ।
स्याम । ते । सुऽमतौ । इन्द्र । शर्मन् ॥ ३ ॥

हे इन्द्र त्वा त्वां अत्र यज्ञे स्तोतरिवा प्रवर्तमानाः पस्पृधानासः स्पर्धमाना मन्द्राः मोद-मानाः इमागिरः स्तुतयः उपस्थुः उपविष्ठन्ति । अतस्ते तव रायोधनस्य पथ्या सृतिः अर्वाची अस्मदभिमुखी एतु गच्छतु । हे इन्द्र वयं च ते सुमतौ सुष्टुतौ वर्तमानाः शर्मन् शर्मणि सुखे स्याम भूयास्म ॥ ३ ॥

१ नि० ६. १७,।

३. इन्द्र, इस यज्ञ की स्पर्द्धमान और रमणीय स्तुतियाँ तुम्हारे पास जाती हैं। तुम्हारा धन हमारी ओर आवे। तुम्हारी कृपा प्राप्त कर हम सुखी होंगे।

अथ चतुर्थी—

धेनुंनत्वांसूयवंसेदुधुंक्षन्नुपब्रह्मांणिससृजेवसिंष्ठः।
त्वामिन्मेगोपंतिंविश्वंआहानइन्द्रंःसुमतिंगन्त्वच्छं ॥ ४ ॥

धेनुम्। न। त्वा। सुऽयवंसे। दुधुंक्षन्। उपं। ब्रह्मांणि। ससृजे। वसिंष्ठः। त्वाम्। इत्। मे। गोऽपंतिम्। विश्वंः। आह। आ। नः। इन्द्रंः। सुऽमतिम्। गन्तु। अच्छं ॥ ४ ॥

हे इन्द्र सुयवसे सुतृणे गोष्ठे वर्तमानां धेनुं न धेनुमिव सुहविष्के यज्ञगृहे दृष्टान्तसामर्थ्याद्दार्ष्टान्तिकलाभः वर्तमानं त्वां दुदुक्षन् दुधुक्षन् संहितायां व्यत्ययेन दकारः कामान् दोग्धुमिच्छन् वसिष्ठः ब्रह्माणि वत्सस्थानीयानि स्तोत्राणि उपससृजे उपसृजते मे मम विश्वः सर्वोजनः त्वामित् त्वामेव गोपतिं गवां स्वामिनमाह ब्रवीति। अथ परोक्षस्तुतिः नोस्माकं सुमतिं सुष्टुतिं अच्छाभि इन्द्रआगन्तु आगच्छतु ॥ ४ ॥

४. बढ़िया घासवाली गोशाला की गाय की तरह तुम्हें दूहने की इच्छा से वसिष्ठ वत्स-रूप स्तोत्र बनाते हैं। समस्त संसार तुम्हें ही गायों का पति कहता है। इन्द्र, हमारी सुन्दर स्तुति के पास आओ।

अर्णांसिचित्पप्रथानासुदासइन्द्रोगाधान्यंकृणोत्सुपारा।
शर्धन्तंशिम्युमुचथंस्यनव्यःशापंसिन्धूंनामकृणोदशंस्तीः ॥५॥२४॥

अर्णांसि। चित्। पप्रथाना। सुऽदासे। इन्द्रंः। गाधानि। अकृणोत्। सुऽपारा। शर्धन्तम्। शिम्युम्। उचथस्य। नव्यंः। शापंम्। सिन्धूंनाम्। अकृणोत्। अशंस्तीः ॥ ५ ॥ २४ ॥

नव्यः स्तुत्यइन्द्रः अर्णांसि शत्रुभिर्विदारितायाः परुष्ण्या उदकानि पप्रथाचित् प्रथमानान्यपि सुदासे राज्ञे गाधानि सुपारा सुपाराणि पारयितुं तर्तुं योग्यानि चाकृणोत् अकरोत् अपि च शर्धन्तं उत्साहमानं शिम्युं बोधमानं शापं विश्वरूपोद्भवमात्मनोभिशापं अशस्तीरभिशस्तीश्च उचथस्य स्तोतुः सिन्धूनां नदीनामकृणोदकरोत् ॥ ५ ॥

५. स्तवनीय इन्द्र, तुमने परुष्णी नदी के जल के विकट-धार होने पर भी, सुदास राजा के लिए जल को तलस्पर्श और पार करने के योग्य बना दिया था। स्तोता के लिए नदियों के तरंगायित और रोकनेवाले शाप को तुमने दूर किया था।

॥ इति पञ्चमस्य द्वितीये चतुर्विंशो वर्गः ॥ २४ ॥

पुरोळाइत्तुर्वशोयक्षुरासीद्राये मत्स्यांसोनिशिताअपीव ।
श्रुष्टिंचक्रुर्भृगवोद्रुह्यवश्चसखासखायमतरद्विषूचोः ॥ ६ ॥

पुरोळाः । इत् । तुर्वशः । यक्षुः । आसीत् । राये । मत्स्यासः ।
निऽशिताः । अपिऽइव । श्रुष्टिम् । चक्रुः । भृगवः ।
द्रुह्यवः । च । सखा । सखायम् । अतरत् । विषूचोः ॥ ६ ॥

यक्षुः यज्ञकुशलः यजेः सन्प्रत्ययोनतुसन्नन्तः अतोन द्विर्भावः पुरोळाः पुरोगामी पुरोदाता वा इदिति पूरणः तुर्वशोनाम राजा आसीत् सतुर्वशः राये धनप्राप्तये इन्द्रस्य सखायं सुदासं जगाम मत्स्यासइव जले निहितामत्स्याइव निशिता नियन्त्रिता अपि भृगवोद्रुह्यवश्च योधाश्च सुदासस्तुर्वशस्यच श्रुष्टिं आशु प्राप्तिं चक्रुः विषूचोर्विष्वगंचतोरुभयोर्मध्ये सखा सुदासश्चेंद्रः सखायं सुदासमतरत् अतारयत् तुर्वशं चावधीदित्यर्थः यद्वा यक्षुः यज्ञशीलः पुरोळाः पुरोदाता तुर्वशोनामराजासीत् तेन मत्स्यासो मत्स्यजनपदा निशिता बाधिता आसन् अपिच भृगवोद्रुह्यवश्च श्रुष्टिं सुखं तुर्वशस्य चक्रुः विषूचोर्विष्वगंचतोरुभयोर्मध्ये सखा तुर्वशस्यसखेन्द्रः सखायं राजानं अतरदतारयत् ॥ ६ ॥

६. याज्ञिक और पुरोदाता तुर्वश नाम के एक राजा थे । जल में मत्स्य की तरह बँधे रहने पर भी भृगुओं और द्रुह्युओं ने धन के लिए सुदास और तुर्वश का साक्षात्कार करा दिया । इन दोनों व्याप्ति-परायणों में एक (तुर्वश) का इन्द्र ने वध किया और अन्य (सुदास) को तार दिया ।

आपक्थासोभलानसोभनन्तालिनासोविषाणिनःशिवासः ।
आयोनयत्सधमाआर्यस्यगव्यातृत्सुभ्योअजगन्युधानॄन् ॥ ७ ॥

आ । पक्थासः । भलानसः । भनन्त । आ । अलिनासः ।
विषाणिनः । शिवासः । आ । यः । अनयत् । सधऽमाः ।
आर्यस्य । गव्या । तृत्सुऽभ्यः । अजगन् । युधा । नॄन् ॥ ७॥

पक्थासः पक्थाः हविषां पाचकाः भलानसः भद्रमुखाः भलेति भद्रवाची अलिनासः अलिनास्तपोभिरप्रवृद्धा इत्यर्थः । विषाणिनः कंडूयनार्थं कृष्णविषाणहस्ताः दीक्षिता इत्यर्थः शिवासः शिवाः यागादिना सर्वलोकस्य शिवकराः यागेन हि शिवं भवति लोकस्य आभनन्त अभिष्टुवन्ति तमिन्द्रं । भनतिः शब्दकर्मा नौति भनतीति शब्दकर्मसुपाठात् यइन्द्रः सधमाः सोमपानेन सह माद्यतीति सधमादः सधमादएव सधमाः आर्यस्य कर्मशीलस्य गव्या गोसंघान् तृत्सुभ्योहिंसकेभ्य आ अनयत् अजगन् अजगत् स्वयं च गोसंघान् लेभे युधा युद्धेन तान् नॄन् शत्रून् जघान चेतिशेषः ॥ ७ ॥

७. हव्यों के पाचक, कल्याण-मुख, तपस्या से अप्रवृद्ध, विषाण-हस्त (दीक्षित) और मंगलकारी व्यक्ति इन्द्र की स्तुति करते हैं। सोमपान से मत्त होकर इन्द्र आर्य की गायें हिंसकों से छुड़ा लाये थे। स्वयं गायों को प्राप्त किया था और युद्ध करके उन गो-तस्कर रिपुओं को मारा था।

दुराध्यो३ अदितिं स्रेवयन्तोचेतसो विजगृभ्रे परुष्णीम्।
मह्नाविव्यक्पृथिवींपत्यमानःपशुष्कविरशयच्चायमानः॥ ८॥

दुःऽआध्यः। अदितिम्। स्रेवयन्तः। अचेतसः। वि। जगृभ्रे। परुष्णीम्। मह्ना। अविव्यक्। पृथिवीम्। पत्यमानः। पशुः। कविः। अशयत्। चायमानः॥ ८॥

दुराध्यो दुष्टाभिसंधयोऽचेतसो मन्दमतयः सुदासः शत्रवः अदितिमदीनां परुष्णीं नदीं स्रेवयन्तः वि जगृभ्रे। विग्रहः कूलभेदः तमकुर्वन् परुष्ण्याः कूलं बिभिदुरित्यर्थः ससुदासः मह्ना इन्द्रप्रसादलब्धेन महिम्ना पृथिवीमविव्यक् तदेव व्यामोत् न पुनरुदकेनावाध्यत ततः सुदासः शत्रुः चायमानः चयमानस्य पुत्रः कविः कविनामा पत्यमानः पाल्यमानः पशुः यागे संज्ञप्तः पशुरिव आशयत् आशेत सुदासानिहतइत्यर्थः॥ ८॥

८. दुष्ट-मानस और मन्दमति शत्रुओं ने परुष्णी नदी को खोदते हुए उसके तटों को गिरा दिया था। इन्द्र की कृपा से सुदास विश्व-व्यापक हो गये थे। चयमान का पुत्र कवि, पालित पशु की तरह, सुदास-द्वारा सुला दिया गया अर्थात् मार दिया गया।

ईयुरर्थंनन्यर्थंपरुष्णीमाशुश्चनेदभिपित्वंजगाम।
सुदासइन्द्रःसुतुकाँअमित्रानरन्धयन्मानुषेवध्रिवाचः॥ ९॥

ईयुः। अर्थम्। न। निःऽअर्थम्। परुष्णीम्। आशुः। चन। इत्। अभिऽपित्वम्। जगाम। सुऽदासे। इन्द्रः। सुऽतुकान्। अमित्रान्। अरन्धयत्। मानुषे। वध्रिऽवाचः॥ ९॥

अथेन्द्रः परुष्ण्याः विच्छिन्नानि पर्वाणि सन्दधे ततः परुष्ण्या आपो यथापूर्वमर्थं गन्तव्यमेव प्रवणदेशं प्रति परुष्णीमीयुः आययांचक्रुः। इणूगताविति धातोरन्तर्भावितण्यर्थाल्लिटि ईयुरिति अतोद्विकर्मकमाख्यातं न्यर्थं अगन्तव्यं परुष्ण्याः पार्श्वयोः स्थितं निम्नं देशं प्रति परुष्णीं नेयुः आशुश्च न राज्ञः सुदासः अश्वोपि अभिपित्वमभिप्राप्तव्यमेव जगाम इन्द्रश्च सुदासे राज्ञे मानुषे लोके वध्रिवाचोजल्पकान् अमित्रान् शत्रून् सुतुकान् सुतोकान् तुक् तोकमित्यपत्यनामसु पाठात् अरन्धयत् वशमानयत्॥ ९॥

९. इन्द्र-द्वारा परुष्णी के तट ठीक कर दिये जाने पर उसका जल गन्तव्य स्थान की ओर, नदी में चला गया—इधर-उधर नहीं गया। सुदास राजा का घोड़ा भी अपने गन्तव्य स्थान को चला गया। सुदास के लिए इन्द्र ने मनुष्यों में सन्ततिवाले और बकवादी शत्रुओं को, उनकी सन्ततियों के साथ, वश में किया था।

ईयुर्गावोनयवंसादगोपायथाकृतमभिमित्रंचितासः।
पृश्निगावःपृश्निनिप्रेषितासःश्रुष्टिंचक्रुर्नियुतोरन्तंयश्च ॥१०॥२५॥

ईयुः। गावः। न। यवंसात्। अगोपाः। यथाऽकृतम्।
अभि। मित्रम्। चितासः। पृश्निऽगावः। पृश्निऽनिप्रेषितासः।
श्रुष्टिम्। चक्रुः। निऽयुतः। रन्तयः। च ॥ १० ॥ २५ ॥

यदा इन्द्रः सुदासोरक्षणार्थं आगच्छति तदा पृश्निनिप्रेषितासः पृश्निनिप्रेषिताः पृश्न्या मात्रा नितरांमहिताः चितासः संहताः जानन्तोवा पृश्निगावः पृश्निवर्णागावोऽश्वा येषान्ते पृश्निगावोमरुतः यथाकृतमिन्द्रस्यसाहाय्यं करवामेति यथापूर्वं समयः कृतः तं समयमनतिक्रम्य मित्रमिन्द्रं यवसात् निमित्तार्थे पञ्चमी यवसं निमित्तीकृत्य अगोपाः गोपालेनारक्षिताः गावो न गावइव अभीयुः अभिजग्मुः रन्तयोरममाणाः नियुतोमरुतामश्वाश्च श्रुष्टिं शीघ्रमार्तिं चक्रुः तस्मिन्युद्धे मरुतः इन्द्रं साहाय्यार्थं अभ्यगच्छन्नित्यर्थः ॥ १० ॥

१०. जैसे चरवाहों के बिना गायें जौ की ओर जाती हैं, वैसे ही माता-द्वारा भेजे गये और एकत्र मरुद्गण, अपनी पूर्व की प्रतिज्ञा के अनुसार, मित्र इन्द्र की ओर गये। मरुतों के नियुत् (घोड़े) भी प्रसन्न होकर गये।

॥ इति पञ्चमस्य द्वितीये पञ्चविंशो वर्गः ॥ २५ ॥

एकंचयोविंशतिंचश्रवस्यावैकर्णयोर्जनान्राजान्यस्तः।
दस्मोनसद्मन्निशिशातिबर्हिःशूरःसर्गमकृणोदिन्द्रएषाम् ॥ ११ ॥

एकम्। च। यः। विंशतिम्। च। श्रवस्या। वैकर्णयोः।
जनान्। राजा। नि। अस्तरित्यस्तः। दस्मः। न। सद्मन्। नि।
शिशाति। बर्हिः। शूरः। सर्गम्। अकृणोत्। इन्द्रः। एषाम् ॥११॥

यःसुदासोराजा श्रवस्या यशसइच्छया अन्नेच्छया वा परुष्ण्याः पार्श्वस्थयोः वैकर्णयोः जनपदयोर्विद्यमानान् एकं च विंशतिंचजनान् न्यस्तः आत्मना अहन् सराजा दस्मोन दर्शनीयो युवाऽध्वर्युरिव सद्मन् यज्ञगृहे बर्हिर्यस्मिन्युद्धे सपत्नान् निशिशाति नितरां लुनाति तस्मिन्युद्धे शूर इन्द्रः एषां मरुतां सर्गं प्रसवमकृणोत् सुदासः साहाय्यार्थमकरोत् ॥ ११ ॥

११. कीर्त्ति अर्जित करने के लिए राजा सुदास ने दो प्रदेशों के २१ मनुष्यों का वध कर डाला था। जैसे युवक अध्वर्यु यज्ञ-गृह में कुश काटता है, वैसे ही वह राजा शत्रुओं को काटता है। वीर इन्द्र ने सुदास की सहायता के लिए मरुतों को उत्पन्न किया था।

अधंश्रुतंकवषंवृद्धमप्स्वनुंद्रुह्युंनिवृंणग्वज्रंबाहुः।
वृणानाअत्रंसख्यायंसख्यंत्वायन्तोयेअमंदन्ननुंत्वा ॥ १२ ॥

अधं। श्रुतम्। कवषंम्। वृद्धम्। अप्ऽसु। अनुं। द्रुह्युम्। नि। वृणक्। वज्रंऽबाहुः। वृणानाः। अत्रं। सख्यायं। सख्यम्। त्वाऽयन्तंः। ये। अमंदन्। अनुं। त्वा ॥ १२ ॥

अधापिच वज्रबाहुरिन्द्रः श्रुतं कवषं च वृद्धं च त्रीन् तथा द्रुह्युं अनु आनुपूर्व्येण अप्सूदकेषु निवृणक् न्यमज्जयदित्यर्थः अत्रास्मिन्नवसरे ये त्वायन्तः त्वत्कामाः त्वा त्वां अन्वमदन् अस्तुवन् ते सखायः सख्याय सख्यार्थं त्वां वृणानाः सख्यं लेभिरइति शेषः ॥ १२ ॥

१२. इसके सिवा वज्रबाहु इन्द्र ने श्रुत, कवष, वृद्ध और द्रुह्यु नामक व्यक्तियों को पानी में डुबो दिया था। उस समय जिन लोगों ने उनकी इच्छा करके उनकी स्तुति की थी, वे सखा माने गये और मित्र बन गये।

विसद्योविश्वांदृंहितान्येषामिन्द्रःपुरःसहंसासप्तदर्दः।
व्यानंवस्यतृत्संवेगयंभाग्जेष्मंपूरुंविदथेमृध्रवांचम् ॥ १३ ॥

वि। सद्यः। विश्वां। दृंहितानि। एषाम्। इन्द्रः। पुरंः। सहंसा। सप्त। दर्दरीति दर्दः। वि। आनंवस्य। तृत्संवे। गयंम्। भाक्। जेष्मं। पूरुम्। विदथें। मृध्रऽवांचम् ॥ १३ ॥

एषां कवषादीनां विश्वा विश्वानि दृंहितानि दृढानि दुर्गाणि पुरोनगरीश्च तद्रक्षासाधनभूतान् सप्तप्रकारांश्च इन्द्रः सहसा बलेन सद्यएव विदर्दः विदारयामास। अपिच आनवस्य आनोः संबन्धिनोबलस्य आनोः पुत्रस्य वा गयं गृहं धनं वा तृत्सवे तृत्सुनामकाय राज्ञे तृत्सूनां गणाय वा विभाक् व्यभजत् अदादित्यर्थः इत्थमिन्द्रं स्तुवन्तोवयं विदथे युद्धे मृध्रवाचं बाधवाचं पूरुं मनुष्यं जेष्म जयेम ॥ १३ ॥

१३. अपनी शक्ति से इन्द्र ने उक्त श्रुत आदि की सुदृढ़ समस्त नगरियों को और सात प्रकार के रक्षा-साधनों को तुरत विदीर्ण किया था। अनु के पुत्र के गृह को तृत्सु को दे दिया था। इन्द्र, हम दुष्ट वचनवाले मनुष्य को जीत सकें—इन्द्र, ऐसी कृपा करो।

निगव्यवोनवोद्रुह्यवंश्चषष्टिःशतासुंषुपुःषट्सहस्रा।
षष्टिर्वीरासोअधिषड्दुवोयुविश्वेदिन्द्रस्यवीर्याकृतानि ॥ १४ ॥

नि । गव्यवः । अनवः । द्रुह्यवः । च । षष्टिः । शता । सुसुपुः ।
षट् । सहस्रा । षष्टिः । वीरासः । अधि । षट् । दुवःऽयु । विश्वा ।
इत् । इन्द्रस्य । वीर्या । कृतानि ॥ १४ ॥

गव्यवो गोकामाः अनवः अनोः संबन्धिनः द्रुह्यवो द्रुह्योः संबंधिनश्च वीरासोवीराः षष्टिः शता शतानि सहस्राणीत्यर्थः । षट्सहस्रा सहस्राणि च षष्टिश्च अधि षट् अधिकाः षट् च दुवोयु दुवोयुवे चतुर्थीलुक् परिचरणकामाय सुदासे नमस्यति दुवस्यतीति परिचरणकर्मसु पाठात नि सुषुपुः नितरां शेरते निहताइत्यर्थः तान्येतानि विश्वा विश्वानि कृतानि कार्याणि इन्द्रस्येत इन्द्रस्यैव वीर्या वीर्याणीति ॥ १४ ॥

१४. अनु और द्रुह्यु की गौओं को चाहनेवाले छियासठ हजार छियासठ सम्बन्धियों को, सेवाभिलाषी सुदास के लिए, मारा गया था। यह सब कार्य इन्द्र की शूरता के सूचक हैं।

इन्द्रेणैतेतृत्सवोवेविषाणाआपोनसृष्टाअधवन्तनीचीः ।
दुर्मित्रासःप्रकलविन्मिमानाजहुर्विश्वानिभोजनासुदासे ॥१५॥२६॥

इन्द्रेण । एते । तृत्सवः । वेविषाणाः । आपः । न । सृष्टाः ।
अधवन्त । नीचीः । दुःऽमित्रासः । प्रकलऽवित् । मिमानाः ।
जहुः । विश्वानि । भोजना । सुऽदासे ॥ १५ ॥ २६ ॥

कदाचिदिन्द्रेण रक्षिताअपि अन्यदा तेनैव बाध्यन्ते एते तृत्सवः दुर्मित्रासो दुष्टमित्राः प्रकलवित् अजानन्तः इन्द्रेण वेविषाणाः युद्धार्थं संगताः सृष्टाः पलायनार्थं उद्युक्ताः नीचीर्नीचीना आपोन आपइव अधवन्त अधावन्त ततोमिमानाः सुदासा बाध्यमाना विश्वा विश्वानि भोजना भोग्यानि धनानि सुदासे राज्ञे जहुः ॥ १५ ॥

१५. दुष्ट मित्रोंवाले ये अनाड़ी तृत्सुलोग इन्द्र के सामने युद्ध-भूमि में उतरने पर पलायन करने पर उद्यत होने पर निम्नगामी जल की तरह दौड़े थे; परन्तु बाधा प्राप्त होने पर उन लोगों ने सारी भोग्य वस्तुएं सुदास को दे दी थीं। ॥ इति पञ्चमस्य द्वितीये षड्विंशोवर्गः ॥ २६ ॥

अर्धवीरस्यशृतपामनिन्द्रंपराशर्धन्तंनुनुदेअभिक्षाम् ।
इन्द्रोमन्युंमन्युम्योमिमायभेजेपथोवर्तनिंपत्यमानः ॥ १६ ॥

अर्धम् । वीरस्य । शृतऽपाम् । अनिन्द्रम् । परा । शर्धन्तम् ।
नुनुदे । अभि । क्षाम् । इन्द्रः । मन्युम् । मन्युऽम्यः । मिमाय ।
भेजे । पथः । वर्तनिम् । पत्यमानः ॥ १६ ॥

इन्द्रः अभिक्षां भूमिमभि भूम्यामित्यर्थः। वीरस्य वीर्ययुक्तस्य सुदासः अर्धं हिंसकं अर्धे हिंसाकर्मणोर्धशब्दस्य निष्पत्तिः अनिन्द्रं यस्यबुद्धाविन्द्रोनास्त्यसावनिन्द्रः तमिन्द्रमगणयन्त-मित्यर्थः श्रृतपां श्रृतस्य क्षीरादेः हविषः पातारं शर्धतं उत्सहमानं परा नुनुदे किंच मन्युम्यो-मन्युकर्तुः मन्युना मिनतोहिंसतो वा शत्रोर्मन्युं क्रोधं मिमाय बबाधे अथ सुदासः शत्रुः पथो मार्गान् पत्यमानोगच्छन् वर्तनिं पलायनमार्गं भेजे प्राप ॥ १६ ॥

१६. वीर्य-शाली सुदास के हिंसक, इन्द्र-शून्य, हव्यदाता और उत्साही मनुष्यों को इन्द्र ने धराशायी किया था। इन्द्र ने क्रोधियों के क्रोध को चौपट किया था। मार्ग में जाते हुए सुदास के शत्रु ने पलायन-पथ का आश्रय लिया था।

आ॒ध्रेण॑चि॒त्तद्वेकं॑चकार॒सिं॒ह्यं॑चि॒त्पेत्वे॑नाजघान।
अव॑स्र॒क्तीर्वे॒श्या॑वृश्च॒दिन्द्र॒ःप्राय॑च्छ॒द्विश्वा॒भोज॑नासु॒दासे॑ ॥ १७ ॥

आ॒ध्रेण॑। चि॒त्। तत्। ऊँ इति॑। एक॑म्। च॒का॒र॒। सिं॒ह्य॑म्। चि॒त्। पेत्वे॑न। ज॒घा॒न॒। अव॑। स्र॒क्तीः। वे॒श्या॑। अ॒वृ॒श्च॒त्। इन्द्रः॑। प्र। अ॒य॒च्छ॒त्। विश्वा॑। भोज॑ना। सु॒ऽदासे॑ ॥ १७ ॥

इन्द्रः तत् तदा आध्रेणचित् दरिद्रेणापि सुदासे एकं मुख्यं दानकर्म चकार कारयामा-स। सिंह्यं चित् प्रवयाः सिंहः सिंह्यः तमपि पेत्वेन छागेन जघान घातयामास वेश्या वेशी सूची तया स्रक्तीः यूपादेरश्रीनवावृश्चत् अववृक्तवान् वेश्यादेः कृत्यं सूच्यैवाकरोदित्यर्थः तान्येतानि त्रीणि कर्माणि असंभावितानीति नाशंकनीयानि इन्द्रस्य महिम्नोधिकत्वात् विश्वा विश्वानि भोजना भोजनानि भोग्यानि धनानि सुदासे राज्ञे प्रायच्छददाच्च ॥ १७ ॥

१७. इन्द्र ने उस समय दरिद्र सुदास के द्वारा एक कार्य कराया था। प्रबल सिंह को छाग-द्वारा मरवाया था। सूई से यूपादि का कोना काट दिया था। सारा धन सुदास राजा को प्रदान किया था।

अथाष्टादशी—

शश्व॑न्तो॒हिशत्र॑वोरार॒धुष्टे॑भे॒दस्य॑चि॒च्छर्ध॑तोविन्द॒रन्धि॑म्।
मर्ताँ॒एनः॑स्तुव॒तोयः॑कृ॒णोति॑ति॒ग्मंतस्मि॒न्निज॑हि॒वज्र॑मिन्द्र ॥ १८ ॥

शश्व॑न्तः। हि। शत्र॑वः। र॒र॒धुः। ते॒। भे॒दस्य॑। चि॒त्। शर्ध॑तः। वि॒न्द॒। रन्धि॑म्। मर्ता॑न्। एनः॑। स्तु॒व॒तः। यः। कृ॒णोति॑। ति॒ग्मम्। तस्मि॑न्। नि। ज॒हि॒। वज्र॑म्। इ॒न्द्र॒ ॥ १८ ॥

हे इन्द्र ते तव शत्रवोरयः शश्वन्तोबहवः ररधुः वशमीयुः चिदपिच शर्धतः उत्सहमानस्य भेदस्य भिनत्ति मर्यादाइति भेदोनास्तिकः तस्य यद्वा भेदोनाम सुदासः शत्रुः कश्चित्तस्येत्यर्थः रन्धि वशीकरं विन्द लभ योभेदः स्तुवतस्त्वां स्तुवतोमर्तान् मर्त्यान् प्रति एनः पापं कृणोति करोति तस्मिन् भेदे तिग्मं निशितं योद्धारं उत्साहवन्तं तथा च यास्कः—तिग्मं तेजतेरुत्साहकर्मणइति[1]। वज्रं वजति गच्छत्येव शत्रुं न प्रतिहन्यतइति वज्रस्तं वज्रशब्दो वजेर्ऋज्रेन्द्राग्रवज्रविप्रेत्यादिनारन्प्रत्ययान्तो निपातितः। तं जहि वज्रेण भेदं प्रहरेत्यर्थः ॥ १८ ॥

१८. इन्द्र, तुम्हारे अधिकांश शत्रु वशी हो गये हैं। मनस्वी भेद (नास्तिक) को वश में करो। जो तुम्हारी स्तुति करता है, भेद उसी का अहित करता है। इसके विरोध में तेज योद्धा को उत्साहित करो (भेजो)। इसे वज्र से मारो।

आवदिन्द्रंयमुनातृत्सवश्चप्रात्रभेदंसर्वतातामुषायत्।
अजासश्चशिग्रवोयक्षवश्चबलिंशीर्षाणिजभ्रुरश्व्यानि ॥ १९ ॥

आवत्। इन्द्रम्। यमुना। तृत्सवः। च। प्र। अत्र। भेदम्।
सर्वऽताता। मुषायत्। अजासः। च। शिग्रवः। यक्षवः।
च। बलिम्। शीर्षाणि। जभ्रुः। अश्व्यानि ॥ १९ ॥

अत्रास्मिन् सर्वताता सर्वतातौ युद्धे यः इन्द्रोभेदं नास्तिकं भेदनामकं वा सुदासः शत्रुं प्रमुषायत् प्रामुष्णात् अवधीदित्यर्थः तमिन्द्रं यमुना आवत् अतोषयत् तत्तीरवासीजनः सर्वोप्यतोषयदित्यर्थः तृत्सवः तृत्सोः पुरुषाश्चावन् आवदित्येकवचनं बहुवचनान्ततया विपरिणतं सदत्रसंबध्यते। किंचाजासोऽजाः जनपदाः शिग्रवोजनपदाः यक्षवश्च जनपदाः अश्व्यान्यश्वसंबन्धीनि शीर्षाणि शिरांसि युद्धे हतानामश्वानां शिरांसीत्यर्थः बलिमुपहारं तस्मै इन्द्रायोपजभ्रुः उपजह्रुः। यद्वा अश्व्यानि शीर्षाणि युद्धे गृहीतान् मुख्यानश्वानिन्द्रायोपहारं जह्रुरित्यर्थः॥१९॥

१९. इस युद्ध में इन्द्र ने भेद का वध किया था। यमुना ने इन्द्र को सन्तुष्ट किया था। तृत्सुओं ने भी उन्हें सन्तुष्ट किया था। अज, शिग्रु और यक्षु नामक जनपदों ने इन्द्र को, अश्वों के सिर, उपहार में दिये थे।

नतइन्द्रसुमतयोनरायःसंचक्षेपूर्वाउषसोननूत्नाः।
देवकंचिन्मान्यमानंजघन्थावत्मनाबृहतःशम्बरंभेत् ॥२०॥२७॥

न। ते। इन्द्र। सुऽमतयः। न। रायः। सम्ऽचक्षे। पूर्वाः।
उषसः। न। नूत्नाः। देवकम्। चित्। मान्यमानम्।
जघन्थ। अव। त्मना। बृहतः। शम्बरम्। भेत् ॥ २० ॥ २७ ॥

---

1 नि० १०. ६.।

हे इन्द्र ते तव पूर्वाः पुरातनाः सुमतयः शोभनमतयो रायोधनानि च उषसोन उषसइव न संचक्षे संख्यातुं न शक्याः न नूत्नाः नूतनाश्च सुमतयोरायश्च न संचक्षे। किं च त्वं मान्यमानं मन्यमानस्य पुत्रं देवकं देवकनामानं शत्रुं जघन्थ अवधीः। त्मना स्वयमेव बृहतो महतः शैलाव् शंबरं च अवभेव् अवाभैत्सीरिरिति ॥ २० ॥

२० इन्द्र, तुम्हारी प्राचीन कृपायें और धन, उषा के समान, वर्णन करने योग्य नहीं हैं। तुम्हारी नई कृपायें और धन भी वर्णनातीत हैं। तुमने मन्यमान के पुत्र देवक का वध किया था। स्वयं विशाल शैल-खण्ड से शम्बर का वध किया था।

॥ इति पञ्चमस्य द्वितीये सप्तविंशो वर्गः ॥ २७ ॥

प्रयेगृहादमंमदुस्त्वायापराशरःशतयातुर्वसिष्ठः ।
नतेभोजस्यसख्यंमृषन्ताधासूरिभ्यःसुदिनाव्युच्छान् ॥ २१ ॥

प्र । ये । गृहात् । अमंमदुः । त्वाऽया । पराऽशरः । शतऽयातुः । वसिष्ठः । न । ते । भोजस्य । सख्यम् । मृषन्त । अध । सूरिऽभ्यः । सुऽदिना । वि । उच्छान् ॥ २१ ॥

हे इन्द्र पराशरः शतयातुः बहुरक्षाः बहूनि रक्षांसि बाधितुं यं कामयन्ते सशतयातुः बहूनां रक्षसां शातयिता वा शक्तिः वसिष्ठश्च एवमादयोये ऋषयः त्वाया त्वदिच्छया गृहाव् गृहं प्राप्य ल्यब्लोपे द्वितीयार्थे पञ्चमी। यद्वा गृहात् गृहे सप्तम्यर्थे पञ्चमी। प्राममदुः त्वां प्रतुष्टुवुः प्रकर्षेण तर्पितवन्तोवा ते पराशरप्रभृतयः भोजस्य भोजकस्य पालकस्य ते तव सख्यं सख्युः कर्म स्तोत्रं यजनं वा न मृषन्त न विस्मरन्ति मृषमर्षे मर्षोमर्षणं तन्नकुर्वन्तीत्यर्थः यतोन विस्मरंति अध अतो हेतोः सूरीभ्यः सूरीणां स्तोतृणामेषां अत्र विभक्तिव्यत्ययः सुदिना सुदिनानि व्युच्छान् व्युच्छन्ति निवसन्ति उपगच्छन्तीत्यर्थः ॥ २१ ॥

२१. इन्द्र, अनेक राक्षस जिनके वध की इच्छा करते हैं, उन्हीं पराशर, वसिष्ठ आदि ऋषियों ने, तुम्हारी इच्छा करके, अपने गृह की ओर जाते हुए, तुम्हारी स्तुति की थी। वे तुम्हारा सख्य नहीं भूले; क्योंकि तुम उनका पालन नहीं भूले, जिससे उनके दिन सदा सुन्दर रहते हैं।

द्वेनप्तुर्देववतःशतेगोर्द्वारथावधूमन्तासुदासः ।
अर्हन्नग्नेपैजवनस्यदानंहोतेवसद्मपर्येमिरेभन् ॥ २२ ॥

द्वे इति । नप्तुः । देवऽवतः । शते इति । गोः । द्वा । रथा । वधूऽमन्ता । सुऽदासः । अर्हन् । अग्ने । पैजऽवनस्य । दानम् । होताऽइव । सद्म । परि । एमि । रेभन् ॥ २२ ॥

देववतोराज्ञोनप्तुः पौत्रस्य पैजवनस्य पिजवनपुत्रस्य सुदासोराज्ञो गोर्गवां द्वेशते वधूमन्ता वधूसंयुक्तौ द्वा द्वौ रथा रथौ च देयं दानं दानभूतान् रेभन् इन्द्रः स्तुवन् अतएव अर्हन् योग्यो-हं वसिष्ठः हे अग्ने सद्म यज्ञगृहं होतेव वषट्कर्तेव पर्येमि अत्राग्नेः संबोधनं सर्वदेवमुख्यत्वप्र-तिपादनार्थं नतु देवतात्वज्ञापनार्थं अतस्तद्देवताकत्वादस्यसूक्तस्य ॥ २२ ॥

२२. देवों में श्रेष्ठ इन्द्र, देववान् राजा के पौत्र और पिजवन के पुत्र राजा सुदास की दो सौ गौओं और दो रथों को मैंने, इन्द्र की स्तुति करके, पाया है। जैसे होता यज्ञ-गृह में जाता है, वैसे ही मैं भी गमन करता हूँ।

अथ त्रयोविंशी—

चत्वारोमापैजवनस्यदानाःस्मद्दिष्टयःकृशनिनोनिरेके ।
ऋज्रासोमापृथिविष्ठाःसुदासस्तोकंतोकायश्रवसेवहन्ति ॥ २३ ॥

चत्वारः । मा । पैजऽवनस्य । दानाः । स्मत्ऽदिष्टयः । कृशनिनः । निरेके । ऋज्रासः । मा । पृथिविऽस्थाः । सुऽदासः । तोकम् । तोकाय । श्रवसे । वहन्ति ॥ २३ ॥

पैजवनस्य पिजवनपुत्रस्य सुदासोराज्ञः स्मद्दिष्टयः प्रशस्तातिसर्जनश्रद्धादिदानांगयुक्ताः कृशनिनो हिरण्यालंकारवन्तः निरेके दुर्गतौ सत्यां ऋज्रासो ऋजुगामिनः पृथिविष्ठाः पृथिव्यां सुप्रतिष्ठिताः दानाः देयभूताश्चत्वारोश्वाः तोकं पुत्रवत्पालनीयं मां वसिष्ठं रथे स्थितं तोकाय तोकस्य पुत्रस्य षष्ठ्यर्थे चतुर्थी श्रवसे अन्नाय यशसे वा वहन्ति पुनर्मेतिपूरणः ॥ २३ ॥

२३. पिजवनपुत्र सुदास राजा के श्रद्धा, दान आदि से युक्त, सोने के अलंकारों से सम्पन्न, दुर्गति के अवसर पर सरल-गामी और पृथिवी-स्थित चार घोड़े पुत्र की तरह पालनीय वसिष्ठ को पुत्र के अन्न या यश के लिए ढोते हैं।

अथ चतुर्विंशी—

यस्यश्रवोरोदसीअन्तरुर्वीशीर्ष्णेशीर्ष्णेविबभाजाविभक्ता ।
सप्तेदिन्द्रंनस्रवतोगृणन्तिनियुध्यामधिमशिशादभीके ॥ २४ ॥

यस्य । श्रवः । रोदसी इति । अन्तः । उर्वी इति । शीर्ष्णेऽशीर्ष्णे । विऽबभाज । विऽभक्ता । सप्त । इत् । इन्द्रम् । न । स्रवतः । गृणन्ति । नि । युध्यामधिम् । अशिशात् । अभीके ॥ २४ ॥

यस्य सुदासः श्रवो यशः उर्वी विस्तीर्णे रोदसी द्यावापृथिव्यौ अन्तः विस्तीर्णयोर्द्यावापृ-थिव्योर्मध्ये वर्ततइत्यर्थः । यश्च सुदाः विभक्ताधनस्य प्रदाता शीर्ष्णेशीर्ष्णे श्रेष्ठाय श्रेष्ठाय विबभाज धनं प्रददौ तं सुदासं सप्तेत् सप्तैव लोकाः इन्द्रं न इन्द्रमिव गृणन्ति स्तुवन्ति । किं च स्रवतो नद्यः अभीके युद्धे युध्यामधिं युध्यामधिनामकं सपत्नं नि अशिशात् न्यहन् ॥२४॥

२४. जिन सुदास का यश द्यावापृथिवी के बीच अवस्थित है और जो दातृ-श्रेष्ठ श्रेष्ठ-व्यक्ति को धन दान करते हैं, उनकी स्तुति, सातों लोक, इन्द्र की तरह, करते हैं। नदियों ने युद्ध में युध्यामधि नाम के शत्रु का विनाश किया था।

इमंनरोमरुतःसश्चतानुदिवोदासंनपितरंसुदासः।
अविष्टनापैजवनस्यकेतंदूणाशंक्षत्रमजरंदुवोयु ॥ २५ ॥२८॥

इमम्। नरः। मरुतः। सश्चत। अनु। दिवःऽदासम्। न। पितरम्। सुऽदासः। अविष्टन। पैजऽवनस्य। केतम्। दुःऽनशम्। क्षत्रम्। अजरम्। दुवःऽयु ॥ २५ ॥ २८ ॥

हे नरो नेतारो मरुतः इमं सुदासं राजानं सुदासो राज्ञः पितरं दिवोदासं न दिवोदासमिव दिवोदासइतिपिजनवनस्यैवनामान्तरं अनु सश्चत अनु सेवध्वं। किं च दुवोयु परिचरणकामस्य षष्ठ्यालुक् पैजवनस्य पिजवनपुत्रस्य सुदासः केतं मंत्रं गृहं वा अविष्टन रक्षत। अपि चास्य सुदासः क्षत्रं बलं दूणाशं दुर्नशं अविनाशि अजरं अशिथिलं चास्तु ॥ २५ ॥

२५. नेता मरुतो, यह सुदास राजा के पिता (पिजवन) हैं। दिवोदास अथवा पिजवन की ही तरह सुदास की भी सेवा करो। सुदास (दिवोदास-पुत्र) के घर की रक्षा करो। सुदास का बल अविनाशी और अशिथिल रहे।

॥ इति पञ्चमस्य द्वितीयेष्टाविंशो वर्गः ॥ २८॥

यस्तिग्मश्रृंग इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं तथाचानुक्रान्तं—यस्तिग्मश्रृंगएकादशेति। आभिप्लविके पञ्चमेहनि एतन्निविद्धानं सूत्रितंच—कयाशुभायस्तिग्मश्रृंगइति मध्यन्दिनइति। विषुवति निष्केवल्यशस्त्रेप्येतत्सूक्तं सूत्रितं च—यस्तिग्मश्रृंगोभित्यंमेषमिति। महाव्रते निष्केवल्येप्येतत्सूक्तं सूत्रितं च—यस्तिग्मश्रृंगोवृषभोनभीम उग्रोजज्ञेवीर्यायस्वधावानिति। आयुष्कामेष्टचां मातेअस्यामितीन्द्रस्य त्रातुर्याज्या सूत्रितं च—मातेअस्यांसहसावन्परिष्टौ पाहिनोअग्नेपायुभिरिति।

यस्तिग्मश्रृंगोवृषभोनभीमएकःकृष्टीश्च्यावयतिप्रविश्वाः।
यःशश्वतोअदाशुषोगयस्यप्रयन्तासिसुष्वितरायवेदः ॥ १ ॥

यः। तिग्मऽशृङ्गः। वृषभः। न। भीमः। एकः। कृष्टीः। च्यवयति। प्र। विश्वाः। यः। शश्वतः। अदाशुषः। गयस्य। प्रऽयन्ता। असि। सुस्विऽतराय। वेदः ॥ १ ॥

यइन्द्रस्तिग्मशृंगः तीक्ष्णशृंगो वृषभोन वृषभइव भीमो भयंकरःसन् एकोसहायएव विश्वाः सर्वान् कृष्टीः शत्रुजनान् स्थानात् प्रच्यावयति यश्चेन्द्रः अदाशुषोऽयजमानस्य शश्वतो बहोर्गयस्य गृहस्य धनस्य वापहर्ता भवतीतिशेषः। हे इन्द्र सत्वं सुष्वितराय अतिशयेन सोमाभिषवं कुर्वते जनाय वेदो धनं प्रयन्ता प्रदातासि। तृन्नन्तत्वादत्र षष्ठ्याभावः असीत्यस्याख्यातस्यानुदात्तत्वात् यद्वृत्तयोगाच्चानुदात्तत्वासंभवात् यद्वृत्तयुक्तमाख्यातांतरमध्याहृत्य योजना कृता॥ १॥

१. जो इन्द्र तीखी सींगवाले बैल की तरह भयंकर होकर अकेले ही सारे शत्रुओं को स्थान-च्युत करते हैं और जो हव्य-शून्य लोगों के घर को ले लेते हैं, वे ही इन्द्र अतीव सोमाभिषव-कर्त्ता को धनदान करें।

त्वंह॒त्यदि॑न्द्र॒कुत्स॑माव॒ःशुश्रू॑षमाणस्त॒न्वा॑सम॒र्ये॑।
दासं॒यच्छुष्णं॒कुय॑वं॒न्य॑स्मा॒अर॑न्धयआर्जुने॒या॒य॒शिक्ष॑न्॥ २॥

त्वम्। ह॒। त्यत्। इ॒न्द्र॒। कुत्स॑म्। आ॒व॒ः। शुश्रू॑षमाणः। त॒न्वा॑। स॒ऽम॒र्ये॑। दास॑म्। यत्। शुष्ण॑म् कुय॑वम्। नि। अ॒स्मै॒। अर॑न्धयः। आ॒र्जु॒ने॒याय॑। शिक्ष॑न्॥ २॥

हे इन्द्र त्वं ह त्वं खलु त्यत् तदा तन्वा शरीरेण शुश्रूषमाणः उपचरन् समर्ये मर्यैर्मर्त्यैः योद्धृभिः सहिते युद्धे कुत्समावः अरक्षः कदेत्यत्राह यद्यदा आर्जुनेयाय अर्जुन्याः पुत्रायास्मै कुत्साय शिक्षन् धनं प्रयच्छन् दासं दासनामकमसुरं शुष्णं च कुयवं च न्यरन्धयः नितरां वशमानयः॥ २॥

२. इन्द्र, जिस समय तुमने अर्जुनी के पुत्र कुत्स को धन देकर दास, शुष्ण और कुयव को वशीभूत किया था, उस समय शरीर से शुश्रूषमाण होकर युद्ध में कुत्स की रक्षा की थी।

त्वंधृ॑ष्णोधृष॒तावी॒तह॑व्यं॒प्रावो॒विश्वा॑भिरू॒तिभि॑ःसु॒दास॑म्।
प्रपौरु॑कुत्सिं॒त्रसद॑स्युमाव॒ःक्षेत्र॑साताव॒त्रह॒त्ये॑षुपू॒रुम्॥ ३॥

त्वम्। धृ॒ष्णो॒ इति॑। धृ॒ष॒ता। वी॒तऽह॑व्यम्। प्र। आ॒व॒ः। विश्वा॑भिः। ऊ॒तिऽभि॑ः। सु॒ऽदास॑म्। प्र। पौरु॑ऽकुत्सिम्। त्र॒सद॑स्युम्। आ॒व॒ः। क्षेत्र॑ऽसाता। वृ॒त्र॒ऽह॒त्ये॑षु। पू॒रुम्॥ ३॥

हे धृष्णो शत्रूणांधर्षकेन्द्र धृषता धर्षकेण वज्रेण बलेन वा वीतहव्यं दत्तहविष्कं प्रजनितहविष्कंवा सुदासंराजानं विश्वाभिः सर्वाभिः ऊतिभीरक्षाभिः प्रावः प्रकर्षेणारक्षः किंच वृत्रहत्येषु युद्धेषु क्षेत्रसाता क्षेत्रसातौ क्षेत्रस्य भूमेर्भजने निमित्ते पौरुकुत्सिं पुरुकुत्सस्यापत्यं त्रसदस्युं पूरुं च प्रावः॥ ३॥

३. हे धर्षक इन्द्र, हव्यदाता सुदास को वज्र के द्वारा सारी रक्षाओं के साथ बचाओ। भूमिलाभ के लिए युद्ध में पुरुकुत्स के पुत्र त्रसदस्यु और पुरु की रक्षा करो।

त्वंनृभिर्नृमणोदेववीतौभूरीणिवृत्राहर्यश्वहंसि।
त्वंनिदस्युंचुमुरिंधुनिंचास्वापयोदभीतयेसुहन्तु ॥ ४ ॥

त्वम्। नृऽभिः। नृऽमनः। देवऽवीतौ। भूरीणि। वृत्रा। हरिऽअश्व। हंसि। त्वम्। नि। दस्युम्। चुमुरिम्। धुनिम्। च। अस्वापयः। दभीतये। सुऽहन्तु ॥ ४ ॥

हे नृमणः नृभिर्यज्ञानां नेतृभिः स्तोतृभिः मननीय स्तोतव्येन्द्र नृषु मनोयस्येति बहुव्रीहिर्वा देववीतौ यज्ञे क्रियमाणे सति संग्रामेवा देवा विजिगीषवो यस्मिन् वियन्ति गच्छन्तीति संग्रामोदेववीतिः नृभिर्मरुद्भिः सह भूरीणि बहूनि वृत्रा वृत्राणि शत्रून् हंसि मारितवानसि। किं च हे हर्यश्वेन्द्र त्वं दभीतये दभीतिनामकाय राजर्षये तदर्थमित्यर्थः दस्युं चुमुरिं च धुनिं च सुहन्तु सुहन्तुना वज्रेण नि नितरां अस्वापयः मारितवानसीत्यर्थः ॥ ४ ॥

४. नेताओं की स्तुति के योग्य इन्द्र, मरुतों के साथ युद्ध में तुमने अनेक वृत्रों (शत्रुओं) को मारा था। हरि अश्व से युक्त इन्द्र, दभीति के लिए तुमने दस्यु, चुमुरि और धुनि का वध किया है।

तवच्यौत्नानिवज्रहस्ततानिनवयत्पुरोनवतिंचसद्यः।
निवेशनेशततमाविवेषीरहंश्चवृत्रंनमुचिमुताहन् ॥ ५ ॥ २९ ॥

तव। च्यौत्नानि। वज्रऽहस्त। तानि। नव। यत्। पुरः। नवतिम्। च। सद्यः। निऽवेशने। शतऽतमा। अविवेषीः। अहन्। च। वृत्रम्। नमुचिम्। उत। अहन् ॥ ५ ॥ २९ ॥

हे वज्रहस्त तव च्यौत्नानि बलानि तानि तादृशानि यद्यदा त्वं शंबरस्य नव नवतिंच पुरः सद्योयुगपदेव विदारितवानसीतिशेषः तदा निवेशने निवेशनार्थं शततमा शततमीं पुरं अविवेषीः व्यापोः वृत्रं चाहन् उतापिच नमुचिमहन् ॥ ५ ॥

५. वज्रहस्त इन्द्र, तुममें इतना बल है कि तुमने शम्बरासुर की निन्यानबे नगरियों को छिन्न-विच्छिन्न कर डाला था। अपने निवास के लिए सौवीं पुरी को अधिकृत कर रखा है। वृत्र और नमुचि का वध किया है।

॥ इति पञ्चमस्य द्वितीये एकोनत्रिंशो वर्गः ॥ २९ ॥

अथ षष्ठी—

सनातातइन्द्रभोजनानिरातहव्यायदाशुषेसुदासे ।
वृष्णेतेहरीवृषणायुनज्मिव्यन्तुब्रह्माणिपुरुशाकवाजम् ॥ ६ ॥

सना । ता । ते । इन्द्र । भोजनानि । रातऽहव्याय । दाशुषे ।
सुऽदासे । वृष्णे । ते । हरी इति । वृषणा । युनज्मि ।
व्यन्तु । ब्रह्माणि । पुरुऽशाक । वाजम् ॥ ६ ॥

हे इन्द्र ते तव रातहव्याय दाशुषे यजमानाय सुदासे ता तानि त्वया दत्तानि भोजनानि भोग्यानि धनानि सना सनानि सनातनानि बभूवुरितिशेषः । हे पुरुशाक बहुकर्मन्निन्द्र वृष्णे कामानां वर्षित्रे ते तुभ्यं त्वामानेतुमित्यर्थः । वृषणा वृषणौ हरी अश्वौ युनज्मि रथे योजयामि । ब्रह्माण्यस्मदीयानि स्तोत्राणि वाजं बलिनं त्वां व्यन्तु गच्छन्तु ॥ ६ ॥

६. इन्द्र, हव्यदाता यजमान सुदास के लिए तुम्हारी सम्पत्तियाँ सनातन हुईं । बहुकर्मा इन्द्र, तुम कामवर्षी हो, तुम्हारे लिए मैं दो अभिलाषादाता अश्वों को रथ में जोतता हूँ । तुम बलिष्ठ हो । तुम्हारे पास स्तोत्र जायें ।

अथ सप्तमी—

मातेअस्यांसहसावन्परिष्टावघायभूमहरिवःपरादै ।
त्रायस्वनोवृकेभिर्वरूथैस्तवप्रियासःसूरिषुस्याम ॥ ७ ॥

मा । ते । अस्याम् । सहसाऽवन् । परिष्टौ । अघाय ।
भूम । हरिऽवः । पराऽदै । त्रायस्व । नः । अवृकेभिः ।
वरूथैः । तव । प्रियासः । सूरिषु । स्याम ॥ ७ ॥

हे सहसावन् बलवन् हरिवो हरिवन्निन्द्र ते तव अस्यां स्तोत्रेणास्माभिः क्रियमाणायां परिष्टावन्वेषणायां परादै परादानाय अघाय अहन्त्रे वयं माभूम । किं च नोस्मान् अवृकेभिः अबाधैर्वरूथैः वारयन्त्युपद्रवेभ्यः इति वरूथानि रक्षणानि तैस्त्रायस्व पाहि । तव सूरिषु स्तोतृषु मध्ये वयं प्रियासः प्रियाः स्याम भूयास्म ॥ ७ ॥

७. बल और अश्ववाले इन्द्र, तुम्हारे इस यज्ञ में हम वरदान और पाप के भागी न बनें । हमें बाधा-शून्य रक्षा से बचाओ, ताकि हम स्तोताओं में प्रिय हों ।

अथाष्टमी—

प्रियासइत्तेमघवन्नभिष्टौनरोमदेमशरणेसखायः ।
नितुर्वशंनियादंशिशीह्यतिथिग्वायशंस्यंकरिष्यन् ॥ ८ ॥

प्रियासः । इत् । ते । मघऽवन् । अभिष्टौ । नरः । मदेम ।
शरणे । सखायः । नि । तुर्वशम् । नि । याद्वम् ।
शिशीहि । अतिथिऽग्वाय । शंस्यम् । करिष्यन् ॥ ८ ॥

हे मघवन् धनवन्निन्द्र ते तवाभिष्टावभ्येषणे नरःस्तोत्राणां नेतारो वयं सखायः समानख्यातयः प्रियासःप्रियाश्च सन्तः शरणे इव गृहे एव मदेम मोदेम । किं च अतिथिग्वाय पूजयातिथीन् गच्छतीत्यतिथिग्वः तस्मै सुदासे दिवोदासाय वास्मदीयाय राज्ञे शंस्यं शंसनीयं सुखं करिष्यन् कुर्वन् तुर्वशं राजानं निशिशीहि वशं कुरु याद्वं च राजानं नि शिशीहीत्यर्थः ॥८॥

८. धनपति इन्द्र, तुम्हारे यज्ञ में हम स्तोतृ-नेता, सखा और प्रिय होकर घर में प्रसन्न हों। अतिथि-वत्सल सुदास को सुख देते हुए तुर्वश और याद्व (यदुवशी) को वशीभूत करो।

सद्यश्चिन्नुतेमघवन्नभिष्टौनरःशंसन्त्युक्थशासउक्था ।
येतेहवेभिर्विपणीँरदाशन्नस्मान्वृणीष्वयुज्यायतस्मै ॥ ९ ॥

सद्यः । चित् । नु । ते । मघऽवन् । अभिष्टौ । नरः । शंसन्ति ।
उक्थऽशसः । उक्था । ये । ते । हवेभिः । वि । पणीन् ।
अदाशन् । अस्मान् । वृणीष्व । युज्याय । तस्मै ॥ ९ ॥

हेमघवन् धनवन्निन्द्र ते तव नु अद्य अभिष्टावभ्येषणे ये नरः उक्थशासः उक्थानां शंसितारः उक्था उक्थानि शस्त्राणि सद्यश्चित् सद्यएव शंसन्ति किं च ते तव हवेभिः स्तोत्रैः पणीन् अप्रदानशीलान् वणिजोपि व्यदाशन् धनानि विशेषेणादापयन्नित्यर्थः । तानस्मान् तस्मै युज्याय सख्याय तत्सख्यमनुवर्तयितुं वृणीष्वापरिगृहाण ॥ ९ ॥

९. धनवान् इन्द्र, तुम्हारे यज्ञ के हमीं नेता और उक्थ का (मंत्रों के) उच्चारण करनेवाले हैं। आज उक्थों का उच्चरण करते हैं और तुम्हारे हव्य के द्वारा पणियों (अदाता वणिकों) को भी धन देते हैं। हमें सख्य रूप से स्वीकार करो।

एतेस्तोमानरांनृतमतुभ्यमस्मद्र्यंचोददतोमघानि ।
तेषामिन्द्रवृत्रहत्येशिवोभूःसखाचशूरोविताचनृणाम् ॥ १० ॥

एते । स्तोमाः । नराम् । नृऽतम । तुभ्यम् । अस्मद्र्यञ्चः ।
ददतः । मघानि । तेषाम् । इन्द्र । वृत्रऽहत्ये । शिवः ।
भूः । सखा । च । शूरः । अविता । च । नृणाम् ॥ १० ॥

हे नृतम नेतृतमेन्द्र तुभ्यं नरां नेतॄणां यएते स्तोमाः संवाः मघानि मंहनीयानि हवींषि ददतो ददन्तः अस्मद्र्यंचोस्मदभिमुखाः अभूवन्निति शेषः। तेषां नृणां वृत्रहत्ये संग्रामे शिवः कल्याणकृत् भूः भव। सखाच भूः। शूरः वीरःसन् अविता रक्षिता च भूः॥ १०॥

१०. नेतृ-श्रेष्ठ इन्द्र, नेताओं की स्तुतियों ने तुम्हें पूजनीय हव्यदान करके हमारी ओर कर दिया है। युद्ध में इन्हीं नेताओं का तुम कल्याण करो और इनके सखा, शूर तथा रक्षक बनो।

अथैकादशी—

नूइंन्द्रशूरस्तवंमानऊतीब्रह्मंजूतस्तन्वांवावृधस्व।
उपंनोवाजांन्मिमीह्युपस्तीन्यूयंपांतस्वस्तिभिःसदांनः॥ ११॥ ३०॥

नु। इन्द्र। शूर। स्तवंमानः। ऊती। ब्रह्मंऽजूतः। तन्वां।
वावृधस्व। उपं। नः। वाजांन्। मिमीहि। उपं। स्तीन्।
यूयम्। पात। स्वस्तिऽभिः। सदां। नः॥ ११॥ ३०॥

हे शूरेन्द्र नु अद्य स्तवमानः स्तूयमानः ब्रह्मजूतो ब्रह्मणा स्तोत्रेण प्रेरितः तन्वा शरीरेण ववृधस्व अपि च नोस्मभ्यं वाजानन्नान् उपमिमीहि प्रयच्छेत्यर्थः। स्तीन् गृहांश्चोपमिमीहि। स्पष्टमन्यत्॥ ११॥

११. वीर इन्द्र, आज तुम स्तूयमान और स्तोत्रवाले होकर शरीर से वर्द्धित होओ। हमें अन्न और घर दो। तुम सदा स्वस्ति-द्वारा हमारी रक्षा करो।

॥ इति पञ्चमस्य द्वितीये त्रिंशोवर्गः॥ ३०॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः॥ १॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशेऋक्संहिताभाष्ये पञ्चमाष्टके द्वितीयोध्यायःसमाप्तः॥२॥

# ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदा योवेदेभ्योखिलंजगत्। निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ तृतीयोध्याय आरभ्यते। उग्रोजज्ञइति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं तथाचानुक्रम्यते—उग्रोदशेति। आभिप्लविके चतुर्थेहनि निष्केवल्ये एतत्सूक्तं निविद्धानं सूत्रितं च—चतुर्थस्योग्रोजज्ञइति निष्केवल्यमिति। महाव्रतेपि निष्केवल्येएतत्सूक्तं तथैव पंचमारण्यके सूत्रितं—उग्रोजज्ञेवीर्यायस्वधावानुदुब्रह्माण्यैरतश्रवस्येति। सौमिकचातुर्मास्येपु वैश्वदेवस्य स्थाने प्रथमं पृष्ठचमहः तत्रापि निष्केवल्ये एतत्सूक्तंनिविद्धानं सूत्रितं च—जनिष्ठाउग्र- उग्रोजज्ञइति मध्यंदिनइति।

तत्र प्रथमा—

ॐम् उ॒ग्रोज॑ज्ञे॒वी॒र्या॑यस्व॒धावा॒ञ्चक्रि॒रपो॒नर्यो॒यत्क॑रि॒ष्यन्।
जग्मि॒र्युवा॑नृ॒षद॑न॒मवो॑भिस्त्रा॒तान॒इन्द्र॒एन॑सोम॒हश्चि॑त्॥ १ ॥

उ॒ग्रः। ज॒ज्ञे। वी॒र्या॑य। स्व॒धाऽवा॑न्। च॒क्रिः। अपः॑। नर्यः॑। यत्। क॒रि॒ष्यन्। जग्मिः॑। युवा॑। नृ॒ऽसद॑नम्। अवः॑ऽभिः। त्रा॒ता। नः॒। इन्द्रः॑। एन॑सः। म॒हः। चि॒त्॥ १ ॥

स्वधावान् बलवान् उग्रओजस्वी ऊद्गूर्णोवा इन्द्रः वीर्याय वीर्यं कर्तुं जज्ञे बभूव। नर्यो नरहितःसन् यत्कर्म करिष्यन् भवति तदपः कर्म चक्रिः कर्तैव। चक्रिरिति क्रिन्प्रत्ययस्य लिङ्वद्भावात् नलोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठीप्रतिषेधः। अपिच नृषदनं यज्ञगृहं युवा नित्यतरुणःसन् अवोभीरक्षणैः सार्धं जग्मिः गन्ता महश्चित् महतोप्येनसः पापात् नोस्माकं त्राता रक्षिता च भवेति ॥ १ ॥

१. बली और ओजस्वी इन्द्र वीर्य (प्रकाश) के लिए उत्पन्न हुए हैं। मनुष्य के जिस हितकारी कार्य को करने की इच्छा इन्द्र करते हैं, उसे अवश्य ही करते हैं। तरुण और रक्षा के लिए यज्ञ-गृह को जानेवाले इन्द्र महापाप से हमें बचावें।

अथ द्वितीया—

हन्ता॑वृ॒त्रमिन्द्रः॒शूशु॑वानः॒प्रावी॒न्नुवी॒रोज॑रि॒तार॑मू॒ती।
कर्ता॑सु॒दासे॒अह॒वाउ॑लो॒कंदाता॒वसु॒मुहु॒रादा॒शुषे॑भूत्॥ २ ॥

हन्ता । वृत्रम् । इन्द्रः । शूशुवानः । प्र । आवीत् । नु । वीरः ।
जरितारम् । ऊती । कर्ता । सुऽदासे । अह । वै । ऊँ इति ।
लोकम् । दाता । वसु । मुहुः । आ । दाशुषे । भूत् ॥ २ ॥

इन्द्रः शूशुवानोवर्धमानःसन् वृत्रमसुरं हन्ता भवति । तृन्नन्तत्वादत्रषष्ठ्यभावः वीरो वीरःसन् जरितारं स्तोतारं नु क्षिप्रं ऊती ऊत्या रक्षया प्रावीत् प्रारक्षच्च । सुदासे राज्ञे लोकं जनपदं कर्ता च । यद्वा सुदासे कल्याणदानाय यजमानाय लोकं कर्ता च भवति इहाप्युत्तरत्रापि तृन्नन्तत्वात्षष्ठ्यभावः । अह वै उ इति त्रयः पूरणाः । दाशुषे यजमानाय वसु धनं मुहुर्भूयोभूयो दाताच भूदभूत् आइति चार्थे ॥ २ ॥

२. वर्द्धमान होकर इन्द्र वृत्र का वध करते हैं। वे वीर हैं। वे शीघ्र ही शरण देकर स्तोता की रक्षा करते हैं। उन्होंने सुदास राजा के लिए प्रदेश का निर्माण किया है। वे यजमान को लक्ष्य कर बार-बार धन देते हैं।

युध्मोअनर्वाखजकृत्समद्वाशूरःसत्राषाड्जनुषेमषाह्ळः ।
व्यासइन्द्रःपृतनाःस्वोजाअधाविश्वंशत्रूयन्तंजघान ॥ ३ ॥

युध्मः । अनर्वा । खजऽकृत् । समत्ऽवा । शूरः । सत्राषाट् ।
जनुषा । ईम् । अषाह्ळः । वि । आसे । इन्द्रः । पृतनाः ।
सुऽओजाः । अध । विश्वम् । शत्रुऽयन्तम् । जघान ॥ ३ ॥

युध्मो योद्धा अनर्वा अभिगन्तृरहितो युद्धेष्वपराङ्मुखोवा खजकृद्युद्धकृत् खले खजे इति युद्धनामसु पाठात् । समद्वा समत्कलहः तद्वान् शूरः शौर्योपेतः जनुषा जन्मना स्वभावतएव सत्राषाट् बहूनामभिभविता अषाह्ळः स्वयंच केनाप्यनभिभूतः स्वोजाः सुबलः ईमयमिन्द्रः पृतनाः शत्रूणां सेनाः व्यासे विक्षिपति । अध अपि च शत्रूयन्तं शात्रवमाचरन्तं विश्वं सर्वं जघान हन्ति ॥ ३ ॥

३. इन्द्र योद्धा, निष्पक्ष, युद्धकर्त्ता, कलह-तत्पर, शूर और स्वभावतः बहुतों का अभिभव करनेवाले हैं। वे शत्रुओं के लिए अजेय और उत्तम बलवाले हैं। इन्द्र ने ही शत्रु-सेना को बाधा दी है। जो लोग शत्रुता करते हैं, उनका वध इन्द्र ही करते हैं।

उभेचिदिन्द्ररोदसीमहित्वापप्राथतविषीभिस्तुविष्मः ।
निवज्रमिन्द्रोहरिवान्मिमिक्षन्त्समन्धसामदेषुवाउवोच ॥ ४ ॥

उभे इति । चित् । इन्द्र । रोदसी इति । महिऽत्वा । आ ।
पप्राथ । तविषीभिः । तुविष्मः । नि । वज्रम् । इन्द्रः ।
हरिऽवान् । मिमिक्षन् । सम् । अन्धसा । मदेषु । वै । उवोच ॥ ४ ॥

हे तुविष्मो बहुधनेन्द्र महित्वा महित्वेन तविषीभिर्बलैश्च उभे चित् उभे अपि रोदसी द्यावापृथिव्यौ आ पप्राथ आ पूरितवानसि। अथपरोक्षस्तुतिः हरिवानश्ववानिन्द्रो वज्रं निमिमिक्षन् शत्रुषु प्रापयन् मदेषु यज्ञेषु निवित्सुवा अन्धसा सोमेन समुवोच संसेव्यते संगच्छते वा। उचसमवाये इतिधातुः वा इति पूरणः ॥ ४ ॥

४. बहुधनशाली इन्द्र, तुमने अपने बल और महिमा से द्यावापृथिवी, दोनों को परिपूर्ण किया है। अश्ववाले इन्द्र, शत्रुओं के ऊपर वज्र फेंकते हुए यज्ञ में सोमरस-द्वारा सेवित होते हैं।

वृषांजजानवृषंणंरणांयतमुंचिन्नारीनर्यंससूव।
प्रयःसेनानीरधनृभ्योअस्तीनःसत्वांगवेषणःसधृष्णुः ॥ ५ ॥ १ ॥

वृषा । जजान । वृषणम् । रणाय । तम् । ऊँ इति । चित् ।
नारी । नर्यम् । ससूव । प्र । यः । सेनाऽनीः । अध । नृऽभ्यः ।
अस्ति । इनः । सत्वा । गोऽएषणः । सः । धृष्णुः ॥ ५ ॥ ॥ १ ॥

वृषा सेक्ता पिता कश्यपो वृषणं कामानां वर्षितारमिन्द्रं रणाय युद्धार्थं जजान।जनजनने इतिधातुः नर्यं नरहितं तमु तमेवेन्द्रं नारी चित् अदितिरपि ससूव सुषुवे।अधापि च यइन्द्रो नृभ्योनॄणां सेनानीः सेनानां नेता सन् प्रास्ति प्रभवति सइन्द्रः इनः सर्वस्य जगतः ईश्वरो भवति नियुत्वान् इन इतीश्वरनामसु पाठात् सत्वा शत्रूणां सादकश्च गवेषणः गवामन्वेष्टा च धृष्णुः शत्रूणां धर्षकश्च भवतीतिशेषः ॥ ५ ॥

५. युद्ध के लिए पिता (कश्यप) ने कामवर्षी इन्द्र को उत्पन्न किया है। नारी ने मनुष्य-हितैषी उन इन्द्र को उत्पन्न किया है। इन्द्र मनुष्यों के सेनापति होकर स्वामी बनते हैं। इन्द्र ईश्वर, शत्रुहन्ता, गौओं के अन्वेषक और शत्रुओं के पराभवकारी हैं।

॥ इति पंचमस्य तृतीये प्रथमो वर्गः ॥ १ ॥

अथ षष्ठी—

नूचित्सभ्रेषतेजनोनरेषन्मनोयोअस्यघोरमाविवांसात्।
यज्ञैर्यइन्द्रेदधतेदुवांसिक्षयत्सरायऋतपाऋतेजाः ॥ ६ ॥

नु । चित् । सः । भ्रेषते । जनः । न । रेषत् । मनः । यः ।
अस्य । घोरम् । आऽविवासात् । यज्ञैः । यः । इन्द्रे । दधते ।
दुवांसि । क्षयत् । सः । राये । ऋतऽपाः । ऋतेऽजाः ॥ ६ ॥

योजनः अस्येन्द्रस्य घोरं शत्रूणां बाधकं मनोयज्ञैराविवासात् परिचरति सजनः नु इति प्रतिषेधे वर्तते चिदेवकारार्थे नूचित् नैव भ्रेषते स्थानात् नभ्रश्यति नरेषत् नैव क्षीयेत अपिच

योजनोदुवांसि परिचरणसाधनानि स्तोत्रशस्त्राणीन्द्रे दधते निधत्ते तस्मै जनाय ऋतपाः यज्ञपाता ऋतेजाः यज्ञेजातश्च सइन्द्रो राये धनाय क्षयत् निवसति भवेदित्यर्थः ॥ ६ ॥

६. जो व्यक्ति इन्द्र के शत्रु-विनाशी मन की सेवा करता है, वह कभी भी स्थान-भ्रष्ट नहीं होता, कभी क्षीण नहीं होता। जो जन इन्द्र की स्तुति करता है, यज्ञोत्पन्न और यज्ञ-रक्षक इन्द्र उसे धन दें।

यदिन्द्रपूर्वोअपराय शिक्षन्नयज्ज्यायान्कनीयसोदेष्णम्।
अमृतइत्पर्यासीतदूरमाचित्रचित्र्यंभरारयिंनः ॥ ७ ॥

यत्। इन्द्र। पूर्वः। अपराय। शिक्षन्। अयत्। ज्यायान्।
कनीयसः। देष्णम्। अमृतः। इत्। परि। आसीत। दूरम्।
आ। चित्र। चित्र्यम्। भर। रयिम्। नः ॥ ७ ॥

हे चित्र चायनीयेन्द्र यद्धनं पूर्वःपिता ज्येष्ठोभ्राता वा अपराय पुत्राय कनीयसे वा शिक्षन् प्रयच्छन् शिक्षतिर्दानकर्मा मीणाति शिक्षति इति दानकर्मसु पाठात् भवतीति शेषः। यच्च देष्णं देयं धनं ज्यायान् ज्येष्ठः कनीयसः अयत् प्राप्नुयात् यच्चापि धनं पितृतोलब्ध्वा पुत्रोअमृतइत् अमृतएव सन् पितृगृहं विहाय दूरं पर्यासीत आस्ते तत्त्रिविधं चित्र्यं चायनीयं रयिं धनं नोस्मभ्यमाभर आहर ॥ ७ ॥

७. विचित्र इन्द्र, पूर्ववर्ती पिता या ज्येष्ठ भ्राता परवर्ती को जो दान करता है और जो धन कनिष्ठ से ज्येष्ठ प्राप्त करता है तथा जो धन पिता से अमृत की तरह, पुत्र प्राप्त कर, दूर देश जाता है, इन तीनों तरह के धनों को हमारे लिए ले आओ।

यस्तइन्द्रप्रियोजनोददाशदसन्निरेकेअद्रिवःसखाते।
वयंतेअस्यांसुमतौचनिष्ठाःस्यामवरूथेअघ्नतोनृपीतौ ॥ ८ ॥

यः। ते। इन्द्र। प्रियः। जनः। ददाशत्। असत्। निरेके।
अद्रिऽवः। सखा। ते। वयम्। ते। अस्याम्। सुऽमतौ।
चनिष्ठाः। स्याम। वरूथे। अघ्नतः। नृऽपीतौ ॥ ८ ॥

हे इन्द्र यः ते तुभ्यं प्रियः सखा जनो ददाशत् हवींषि दद्यात्। हे अद्रिवः ससखा ते तव निरेके दाने असत्स्यात् वयं च वसिष्ठाः अघ्नतोहिंसतः ते तव अस्यां सुमतौ अनुग्रहबुद्धौ वर्तमानाश्चनिष्ठाः स्तुतिमत्तराः अतिशयेनान्नवन्तोवा चनोन्नं नृपीतौ नृणां रक्षके वरूथे गृहे वरणीये वा धने स्याम वसेम भवेम वा ॥ ८ ॥

८. वज्रधर इन्द्र, तुम्हें जो प्रिय सखा हव्य देता है, वह तुम्हारे दान में ही अवस्थित रहे। हम, अहिंसक होकर, तुम्हारी दया प्राप्त करते हुए सबसे अधिक अन्नवान् होकर मनुष्यों के रक्षणशील गृह में रह सकें।

एषःस्तोमोअचिक्रद्वृषांतउतस्तामुर्मघवन्नक्रपिष्ट।
रायस्कामोजरितारंन्तआगन्त्वमङ्गशंक्रवस्वआशंकोनः ॥ ९ ॥

एषः। स्तोमः। अचिक्रदत्। वृषा। ते। उत। स्तामुः।
मघऽवन्। अक्रपिष्ट। रायः। कामः। जरितारम्। ते।
आ। अगन्। त्वम्। अङ्ग। शक्र। वस्वः। आ। शकः। नः ॥९॥

हे मघवन् धनवन्निन्द्र ते त्वदर्थं वृषा सेक्ता एषः स्तोमः सोमः सूयमानः अचिक्रदत् क्रन्दति उतापिच स्तामुः स्तोता अक्रपिष्ट अस्तौत् अपिच हे शक्र ते तव जरितारं स्तोतारं मां रायोधनस्य कामोभिलाष आगन् आगतः अतस्त्वं वस्वो धनं कर्मणिषष्ठी नोस्मभ्यं अंग क्षिप्रं आशकः धेहि ॥ ९ ॥

९. धनशाली इन्द्र, तुम्हारे लिए बरस कर यह सोम रो रहा है। स्तोता तुम्हारी स्तुति करता है। शक्र, मैं तुम्हारा स्तोता हूँ। हमें धन की अभिलाषा हुई है। इसलिए तुम शीघ्र हम लोगों को वासयोग्य धन दो।

अथ दशमी—

सनंइन्द्रत्वयंतायाइषेधास्त्मनांचयेमघवांनोजुनन्ति।
वस्वीषुतेजरित्रेअंस्तुशक्तिर्यूयंपांतस्वस्तिभिःसदांनः ॥१०॥२॥

सः। नः। इन्द्र। त्वऽयताये। इषे। धाः। त्मना। च। ये।
मघऽवानः। जुनन्ति। वस्वी। सु। ते। जरित्रे। अस्तु।
शक्तिः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः। ॥१०॥ ॥ २ ॥

हे इन्द्र सत्वं त्वयतायै इषे त्वया दत्तमन्नं भोक्तुं नोस्मान् धाः धारय। ये च मघवानो हविष्मन्तः त्मना स्वयमेव जुनन्ति हवींषि त्वां प्रति प्रेरयन्ति तानपि त्वयताया इषे धाः अपि च वस्वीषु अत्यंतं प्रशस्तासु स्तुतिषु ते तव जरित्रे स्तोत्रे मह्यं शक्तिः सामर्थ्यमस्तु। यद्वा जरित्रे मह्यं ते तव वस्वीषु प्रशस्ता शक्तिर्दानमस्तु स्पष्टमन्यत् ॥ १० ॥

१०. इन्द्र, अपने दिये हुए अन्न को भोगने के लिए हमें धारण करो। जो हव्यदाता स्वयमेव हव्य प्रदान करते हैं, उन्हें धारण करो। अतीव प्रशंसा-योग्य स्तुति-कार्य में हमारी शक्ति हो। मैं तुम्हारा स्तोता हूँ। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य तृतीये द्वितीयोवर्गः ॥ २ ॥

असाविदेवमिति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं तथाचानुक्रान्तं—असावीति। माध्यंदिनसवनेमैत्रावरुणस्योन्नीयमानमिदं सूक्तं सूत्रितं च—असाविदेवमिहोपयातेत्यनुसवनमिति। इन्द्रस्य वृत्रघ्नः पशावभिक्रत्वेति वपाया अनुवाक्या। सूत्रितं च—अभिक्रत्वेन्द्रभूरधज्मन् त्वंमहाँइन्द्रतुभ्यंहक्षाइति।

तत्र प्रथमा—

असाविदेवंगोऋजीकमन्धोन्यस्मिन्निन्द्रोजनुषेमुवोच।
बोधामसित्वाहर्यश्वयज्ञैर्बोधानःस्तोममन्धसोमदेषु॥ १॥

असावि। देवम्। गोऽऋजीकम्। अन्धः। नि। अस्मिन्।
इन्द्रः। जनुषा। ईम्। उवोच। बोधामसि। त्वा। हरिऽअश्व।
यज्ञैः। बोध। नः। स्तोमम्। अन्धसः। मदेषु॥ १॥

देवं दीप्तं गोऋजीकं गोभिः संस्कृतं गव्येन मिश्रितमित्यर्थः अंधः सोमरूपमन्नं असावि अभिषुतं। ईमयमिन्द्रोस्मिन्नभिषुते सोमरूपधसि जनुषा स्वभावतएव न्युवोच नितरां संगतो भवति। अथ प्रत्यक्षस्तुतिः हे हर्यश्व त्वा त्वां यज्ञैः स्तोत्रैः हविर्भिर्वा बोधामसि बोधयामः। अन्धसः सोमस्य मदेषु नोस्माकं स्तोमं स्तोत्रं बोध बुध्यस्व च॥ १॥

१. दीप्त और गव्य-मिश्रित सोम अभिषुत हुआ है। ये इन्द्र स्वभावतः इसमें संगत होते हैं। हर्यश्व, तुम्हें हम यज्ञ के द्वारा प्रबोधित करेंगे। सोमजात मत्तता के समय हमारे स्तोत्र को समझो।

प्रयन्तियज्ञंविपयन्तिबर्हिःसोममादोविदथेदुध्रवाचः।
न्युभ्रियन्तेयशसोगृभादादूरउपब्दोवृषणोनृषाचः॥ २॥

प्र। यन्ति। यज्ञम्। विपयन्ति। बर्हिः। सोमऽमादः। विदथे।
दुध्रऽवाचः। नि। ऊँ इति। भ्रियन्ते। यशसः। गृभात्। आ।
दूरेऽउपब्दः। वृषणः। नृऽसाचः॥ २॥

यज्ञंप्रयन्ति यष्टारःबर्हिश्च विपयन्ति स्तृणन्ति। विपिः स्तरणकर्मा विदथे यज्ञे सोममादोग्रावाणश्च दुध्रवाचः दुर्धरवाचोभवन्ति। अपि च यशसो यशस्विनो दूरउपब्दः दूरेउपब्दिः शब्दो येषां ते दूरउपब्दः नृषाचः नृन्नेतृनृत्विजः सचन्तइति नृषाचो वृषणो ग्रावाणो गृभात् गृहात् गृहमध्यमग्रावा तस्मात् आइति चार्थे निभ्रियन्ते अभिषववेलायां निगृह्यन्ते। उइति परणः॥ २॥

२. यजमान यज्ञ में जाते और कुश फैलाते हैं। यज्ञ-स्थान में पत्थर दुर्द्धर्ष शब्द करते हैं। अन्नवान्, दूर तक शब्द करनेवाले, ऋत्विकोंद्वारा संगत तथा वर्षक प्रस्तरगृह से गृहीत होते हैं।

अथ तृतीया—

त्वमिन्द्र स्रवितवा अपस्कः परिष्ठिता अहिना शूर पूर्वीः ।
त्वद्वावक्रे रथ्यो३ न धेना रेजन्ते विश्वा कृत्रिमाणि भीषा ॥ ३ ॥

त्वम् । इन्द्र । स्रवितवै । अपः । करिति कः । परिऽस्थिताः ।
अहिना । शूर । पूर्वीः । त्वत् । वावक्रे । रथ्यः । न । धेनाः । रेजन्ते ।
विश्वा । कृत्रिमाणि । भीषा ॥ ३ ॥

हे शूरेन्द्र त्वं अहिना वृत्रेण परिष्ठिता आक्रान्ताः पूर्वीर्बह्वीरपउदकानि स्रवितवै स्रवितुं कः अकार्षीः धेनाः नद्यश्च त्वत् त्वत्तोहेतोः रथ्योन रथिनइव वावक्रे निर्गच्छन्ति । वकिकौटिल्ये इति धातुः । विश्वा विश्वानि कृत्रिमाणि भुवनानि च भीषा त्वत्तोभीत्या रेजन्ते कंपन्ते॥३॥

३. हे शूर इन्द्र, तुमने वृत्र-द्वारा आक्रान्त बहुत जल भेजा था। तुम्हारे ही कारण नदियाँ, रथियों की तरह, निकलती हैं। तुमसे डर के मारे सारा विश्व काँपता है।

भीमो विवेषायुधेभिरेषामपांसि विश्वा नर्याणि विद्वान् ।
इन्द्रः पुरो जर्हृषाणो वि दूधोद्वि वज्रहस्तो महिना जघान ॥ ४ ॥

भीमः । विवेष । आयुधेभिः । एषाम् । अपांसि । विश्वा ।
नर्याणि । विद्वान् । इन्द्रः । पुरः । जर्हृषाणः । वि । दूधोत् । वि ।
वज्रऽहस्तः । महिना । जघान ॥ ४ ॥

इन्द्रो नर्याणि नरहितानि विश्वा विश्वानि अपांसि कर्माणि विद्वान् जानन् आयुधेभिरायुधैः भीमो भयंकरःसन् एषां कर्मणिषष्ठी एतानसुरान् विवेष व्याप्तवान् पुरश्च तेषां विदूधोदकंपयत् । अपि च जर्हृषाणः हृष्यन् महिना महिम्ना युक्तो वज्रहस्तःसन् तान्विजघान ॥ ४ ॥

४. इन्द्र ने मनुष्यों के सारे हितकर कार्यों को जानकर तथा आयुधों से भयंकर होकर असुरों को व्याप्त किया था और उनके सारे नगरों को कम्पित किया था। उन्होंने प्रसन्न, महिमान्वित और वज्रहस्त होकर उनका वध किया था।

अथ पञ्चमी—

न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥ ५ ॥ ३ ॥

न । यातवः । इन्द्र । जूजुवुः । नः । न । वन्दना । शविष्ठ । वेद्याभिः ।
सः । शर्धत् । अर्यः । विषुणस्य । जन्तोः । मा । शिश्नऽदेवाः ।
अपि । गुः । ऋतम् । नः ॥ ५ ॥ ३ ॥

हे इन्द्र यातवोराक्षसाः नोस्मान् न जूजुवुः न हिंस्युः । जूजुवुरिति हिंसाक्रियः पृथक्करणक्रियोवा। अपि च हेशविष्ठ बलवत्तमेन्द्र वन्दना वन्दनानि रक्षांसि वेद्याभिः वेद्याभ्यः प्रजाभ्योनोस्मान् नजूजुवुः नपृथक्कुर्वन्तु। किं च अर्यः स्वामी सइन्द्रः विषुणस्य विषमस्य जन्तोः प्राणिनः शासने शर्धत् उत्सहेत । अथच शिश्नदेवाः शिश्नेन दीव्यन्ति क्रीडन्तइति शिश्नदेवाः अब्रह्मचर्याइत्यर्थः नोस्माकं ऋतं यज्ञं सत्यं वा मापिगुः मापिगमन्।तथा च यास्कः—सउत्सहतां योविषुणस्यजन्तोर्विषमस्य माशिश्नदेवाअब्रह्मचर्याः शिश्नं श्नथतेः अपिगुर्ऋतंनः सत्यंवा यज्ञंवेति॑ ॥५॥

५. इन्द्र, राक्षस हमें न मारें । बलि-श्रेष्ठ इन्द्र, प्रजा से हमें राक्षस अलग न करें । स्वामी इन्द्र विषम जन्तु को मारने में उत्साहान्वित होते हैं । शिश्नदेव (अब्रह्मचारी) हमारे यज्ञ में विघ्न न डालें ।

॥ इति पंचमस्य तृतीयेतृतीयो वर्गः ॥ ३ ॥

अथ षष्ठी—

अभिक्रत्वेन्द्रभूरधज्मन्नतेविव्यङ्महिमानंरजांसि ।
स्वेनाहिवृत्रंशवसाजघन्थनशत्रुरन्तंविविदद्युधाते ॥ ६ ॥

अभि । क्रत्वा । इन्द्र । भूः । अध । ज्मन् । न । ते । विव्यक् । महिमानम् । रजांसि । स्वेन । हि । वृत्रम् । शवसा । जघन्थ । न । शत्रुः । अन्तम् । विविदत् । युधा । ते ॥ ६ ॥

हे इन्द्र त्वं क्रत्वा कर्मणा ज्मन् पृथिव्यां वर्तमानान् जन्तून्वा अभिभूः अभ्यभूः अधापिच ते तव महिमानं रजांसि सर्वेलोका न विव्यक् व्यचिर्व्याप्तिकर्मा न व्याप्नुवन्तित्यर्थः स्वेन हि आत्मीयेन च शवसा बलेन वृत्रं जघंथ त्वमवधीः शत्रुश्च युधा युद्धेन ते तवांतं हिंसां न विविदत् नलब्धवान् ॥ ६ ॥

६. इन्द्र, कर्म-द्वारा पृथिवी के सारे जीवों को अभिभूत करते हो। संसार तुम्हारी महिमा को व्याप्त नहीं कर सकता । तुमने अपने बाहु-बल से वृत्र का वध किया है । युद्ध से शत्रु तुम्हारा पार नहीं पा सके ।

देवाश्चित्तेअसुर्यायपूर्वेनुक्षत्रायममिरेसहांसि ।
इन्द्रोमघानिदयतेविषह्येन्द्रंवाजस्यजोहुवन्तसातौ ॥ ७ ॥

देवाः । चित् । ते । असुर्याय । पूर्वे । अनु । क्षत्राय । ममिरे । सहांसि । इन्द्रः । मघानि । दयते । विऽसह्य । इन्द्रम् । वाजस्य । जोहुवन्त । सातौ ॥ ७ ॥

---

१ नि० ४. १९ ।

पूर्वे देवाश्चित् असुरा अपि असुर्याय बलाय क्षत्राय क्षदिर्हिंसाकर्मा बलं हिंसां च उ-भे कर्तुमित्यर्थः। हे इन्द्र ते तव सहांसि बलानि अनुममिरे। हीने इत्यनुः कर्मप्रवचनीयः। तव बलेभ्योहीना ममिरे इत्यर्थः। तथा च निगमान्तरं—अनुतेद्यौर्बृहतीवीर्यंममईति। अथपरो-क्षस्तुतिः इन्द्रः शत्रून् विषह्य मघानि मंहनीयानि धनानि दयते भक्तेभ्यः प्रयच्छतिअपि चेन्द्रं वाजस्यान्नस्य सातौ लाभार्थं जोहुवन्त स्तुवन्ति स्तोतारआह्वयन्ति वा ॥ ७ ॥

७. इन्द्र, प्राचीन देवगण ने भी बल और शत्रु वध में इन्द्र के बल से अपने बल को कम समझा था। शत्रुओं को पराजित करके इन्द्र भक्तों को धन देते हैं। अन्न-प्राप्ति के लिए स्तोता इन्द्र को बुलाते हैं।

कीरिश्चिद्धित्वामवसेजुहावेशानमिन्द्रसौभगस्यभूरेः।
अवोबभूथशतमूतेअस्मेअभिक्षत्तुस्त्वावतोवरूता ॥ ८ ॥

कीरिः। चित्। हि। त्वाम्। अवसे। जुहाव। ईशानम्। इन्द्र। सौभगस्य। भूरेः। अवः। बभूथ। शतम्ऽऊते। अस्मे इति। अभिऽक्षत्तुः। त्वाऽवतः। वरूता ॥ ८ ॥

हे इन्द्र ईशानं त्वां कीरिः स्तोता कारुः कीरिरिति स्तोतृनामसु पाठात् वसिष्ठोऽवसे र-क्षणाय जुहाव हि स्तौति हि ह्वयति वा। चिदिति पूरणः अपि च हे शतमूते बहुरक्षेन्द्र अस्मे अस्माकं भूरेः प्रभूतस्य सौभगस्य धनस्य अवोरक्षा बभूथ बभूविथ अभिक्षत्तुरहिंसकस्य त्वावतः त्वत्सदृशस्य वरूता वारयितश्च भव ॥ ८

८. इन्द्र, तुम ईशान व ईश्वर हो। रक्षा के लिए स्तोता तुम्हें बुलाते हैं। बहुत्राता इन्द्र, तुम हमारे यथेष्ट धन के रक्षक हुए थे। तुम्हारे समान हमारा जो हिंसक हो, उसका निवारण करो।

अथ नवमी—

सखायस्तइन्द्रविश्वहस्यामनमोवृधासोमहिनातरुत्र।
वन्वन्तुस्मातेवसासमीकेऽभीतिमर्योवनुषांशवांसि ॥ ९ ॥

सखायः। ते। इन्द्र। विश्वह। स्याम। नमःऽवृधासः। महिना। तरुत्र। वन्वन्तु। स्म। ते। अवसा। समऽईके। अभिऽईतिम्। अर्यः। वनुषाम्। शवांसि ॥ ९ ॥

---

१ ऋ० सं० १. ४. २२.।

हे इन्द्र ते तव नमोवृधासो नमसा स्तुत्या हविषा वा वर्धयितारो वयं विश्वह सर्वदा सखायः स्याम भवेम महिना महिम्ना तरुत्रः अत्यंततारकेन्द्र ते तवावसा रक्षणेन समीके संग्रामे अर्योभीतिमभिगमनं वनुषां हिंसकानां शवांसि बलानि च वन्वन्तु स्तोतारो हिंसन्तु ॥ ९ ॥

९. इन्द्र, स्तुति-द्वारा हम तुम्हें वर्द्धित करते हुए सदा तुम्हारे सखा हों। अपनी महिमा के द्वारा तुम सबके तारक हो। तुम्हारे रक्षण से, आर्य स्तोता, संग्राम में आये हुए अनार्यों के बल की हिंसा करें।

सनंइन्द्रत्वयंतायाइषेधास्त्मनांचयेमघवानोजुनन्ति।
वस्वीषुतेजरित्रेअस्तुशक्तिर्यूयंपातस्वस्तिभिःसदानः ॥१०॥४॥

सः। नः। इन्द्र। त्वऽयंतायै। इषे। धाः। त्मना। च। ये।
मघऽवानः। जुनन्ति। वस्वी। सु। ते। जरित्रे। अस्तु। शक्तिः।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ १० ॥ ४ ॥

इयमृक् व्याख्यातचरा ॥ १० ॥

१०. इन्द्र, तुम हमें धारण करो, ताकि हम तुम्हारे दिये अन्न का भोग कर सकें। जो हव्यदाता स्वयं हव्य प्रदान करते हैं, उन्हें भी धारण करो। मैं तुम्हारा स्तोता हूँ। अतीव प्रशंसा-योग्य स्तुति-कर्म में मेरी शक्ति हो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य तृतीये चतुर्थो वर्गः ॥ ४ ॥

पिबासोममिन्द्रमन्दतुत्वेति नवर्चं पंचमं सूक्तं। अनुक्रम्यते च—पिबनव वैराजमृतेंत्यामिति। वसिष्ठऋषिः आदितोष्टौविराजः नवमीत्रिष्टुबिन्द्रोदेवता दशरात्रे चतुर्थेहनि निष्केवल्यशस्त्रे पिबासोममिन्द्रेतिषट् स्तोत्रियानुरूपौ सूत्रितं च—वैराजंचेत्पृष्ठं पिबासोममिन्द्रमन्दतुत्वेति षट्स्तोत्रियानुरूपाविति। महाव्रतेपि निष्केवल्येआद्याः षळृचः सूत्रितं च—पिबासोममिन्द्रमन्दतुत्वेति षळिति। आद्या निष्केवल्यशस्त्रयाज्या सूत्रितं च—पिबासोममिन्द्रमन्दतुत्वेति याज्येति। चतुर्थेहनि माध्यंदिने सवने होत्रकशस्त्रेषु सप्तविराजः त्रींस्तृचान्कृत्वाएकैकस्तृचः शंसनीयः तत्र नतेगिरइत्याद्याश्चतस्रऋचः सूत्रितं च—नतेगिरोअपिमृष्येतुरस्य प्रवोमहेमहिवृधेभरध्वमिति।

तत्र प्रथमा—

पिबासोममिन्द्रमन्दंतुत्वायन्तेसुषावहर्यश्वाद्रिः।
सोतुर्बाहुभ्यांसुयंतोनार्वा ॥ १ ॥

पिब। सोमम्। इन्द्र। मन्दतु। त्वा। यम्। ते। सुसाव। हरिऽअश्व।
अद्रिः। सोतुः। बाहुऽभ्याम्। सुऽयंतः। न। अर्वा ॥ १ ॥

हे इन्द्र सोम पिब ससोमस्त्वा त्वां मन्दतु मादयतु। हे हर्यश्व ते त्वदर्थं सोतुरभिषवकर्तुर्बाहुभ्यामर्वान रश्मिभ्यामश्वइव सुयतः सुष्ठु परिगृहीतोद्रिर्ग्रावा यं सोमं सुषाव ॥ १ ॥

१. इन्द्र, सोम पान करो। वह सोम तुम्हें मत्त करे। हरि नामक अश्ववाले इन्द्र, रस्सी-द्वारा संयत अश्व की तरह अभिषवकर्त्ता के दोनों हाथों में परिगृहीत पत्थर ने इस सोम का अभिषव किया है।

यस्तेमदोयुज्यश्चारुरस्तियेनवृत्राणिहर्यश्वहंसि।
सत्वामिन्द्रप्रभूवसोममत्तु ॥ २ ॥

यः। ते। मदः। युज्यः। चारुः। अस्ति। येन। वृत्राणि।
हरिऽअश्व। हंसि। सः। त्वाम्। इन्द्र। प्रभुवसो इति प्रभुऽवसो।
ममत्तु ॥२॥

हे हर्यश्व ते तव यः युज्योगुणः चारुः समीचीनो मदो मदकरः सोमोस्ति विद्यते येनच पीतेन सोमेन वृत्राणि हंसि। हे प्रभूवसो प्रभूतधनेन्द्र त्वां ससोमोममत्तु मादयतु ॥ २ ॥

२. हरि नाम के अश्ववाले और प्रभूत-धनी इन्द्र, तुम्हारा जो उपयुक्त और सम्यक् प्रस्तुत सोम है और जिसके द्वारा तुमने वृत्र आदि का वध किया है, वही सोम तुम्हें मत्त करे।

बोधासुमेमघवन्वाचमेमांयांतेवसिष्ठोअर्चतिप्रशस्तिम्।
इमाब्रह्मसधमादेजुषस्व ॥ ३ ॥

बोध। सु। मे। मघऽवन्। वाचम्। आ। इमाम्।
याम्। ते। वसिष्ठः। अर्चति। प्रऽशस्तिम्। इमा।
ब्रह्म। सधऽमादे। जुषस्व ॥ ३ ॥

हे मघवन् धनवन्निन्द्र ते तव प्रशस्तिं स्तुतिरूपां यां वाचं वसिष्ठः अर्चति तामिमां मे वसिष्ठस्य संबन्धिनीं वाचं स्वबोध सुष्ठु अभिबुध्यस्व। किं च इमा इमानि ब्रह्म ब्रह्माणि सधमादे यज्ञे जुषस्व सेवस्व ॥ ३ ॥

३. इन्द्र, तुम्हारी स्तुति-स्वरूपिणी जो बात वसिष्ठ कहते हैं, उन वसिष्ठ की (मेरी) इस बात को तुम जानो और यज्ञ में इन स्तुतियों की सेवा करो। अथ चतुर्थी—

श्रुधीहवंविपिपानस्याद्रेर्बोधाविप्रस्यार्चतोमनीषाम्।
कृष्वादुवांस्यन्तमासचेमा ॥ ४ ॥

श्रुधि। हवम्। विऽपिपानस्य। अद्रेः। बोध। विप्रस्य। अर्चतः।
मनीषाम्। कृष्व। दुवांसि। अन्तमा। सचा। इमा ॥ ४ ॥

हे इन्द्र विपिपानस्य विपीतवतो विपिबतोवा ममाद्रेर्ग्राव्णोहवमाह्वानं श्रुधि शृणु। तथाच निगमान्तरं—ग्रावभ्योवाचंवदतावदद्भ्यइति। विप्रस्य प्राज्ञस्य वसिष्ठस्यार्चतः स्तुवतो मनीषां स्तुतिं बोध बुध्यस्व च। इमा इमानि क्रियमाणानि दुवांसि परिचरणान्यन्तमान्तिकतमानि बुद्धिस्थानि सचा सह सहायभूतःसन् वा कृष्व कुरु च॥ ४॥

४. इन्द्र, मैंने सोमपान किया है। तुम मेरे इस पत्थर की पुकार सुनो। स्तोता विप्र की स्तुति जानो। यह जो मैं सेवा करता हूँ, वह सब, सहायक होकर, बुद्धिस्थ करो।

नतेगिरोअपिमृष्येतुरस्यनसुष्टुतिमसुर्यस्यविद्वान्।
सदातेनामस्वयशोविवक्मि॥ ५॥ ५॥

न। ते। गिरः। अपि। मृष्ये। तुरस्य। न। सुऽस्तुतिम्।
असुर्यस्य। विद्वान्। सदा। ते। नाम। स्वऽयशः। विवक्मि॥५॥५॥

हे इन्द्र तुरस्य शत्रूणां हिंसकस्य ते तव गिरः स्तुतीरसुर्यस्य द्वितीयार्थे षष्ठी त्वदीयमसुर्यं बलं विद्वान् जानन् अहं नापिमृष्ये मृषिर्मार्जनकर्मा न मार्जयामि नपरित्यजामीत्यर्थः। सुष्टुतिं शोभनां स्तुतिं च नापिमृष्ये मृषेर्मार्जनकर्मत्वमन्यत्रापिदृश्यते। तद्यथा—मानोअग्नेसख्यापित्र्याणिप्रमर्षिष्ठाइति। किंतु स्वयशः असाधारणयशस्ते तव नाम स्तोत्रं सदा सदैव विवक्मि ब्रवीति॥ ५॥

५. इन्द्र, तुम रिपुञ्जय हो। मैं तुम्हारा बल जानता हूँ। मैं तुम्हारी स्तुति करना नहीं छोड़ सकता। मैं सदा तुम्हारे यशस्वी नाम का उच्चारण करूँगा। ॥ इति पंचमस्य तृतीये पंचमो वर्गः॥ ५॥

अथ षष्ठी—

भूरिहितेसवनामानुषेषुभूरिमनीषीहवतेत्वामित्।
मारेअस्मन्मघवञ्ज्योक्कः॥ ६॥

भूरि। हि। ते। सवना। मानुषेषु। भूरि। मनीषी। हवते। त्वाम्।
इत्। मा। आरे। अस्मत्। मघऽवन्। ज्योक्। करिति कः॥ ६॥

हे मघवन् ते तव सवना सवनानि सोमाभिषवणानि भूरि भूरीणि मानुषेष्वस्मासु वर्तन्तइतिशेषः। हिः पूरणः मनीषी स्तोता त्वामित् त्वामेव भूरि हवते नितरांस्तौति आह्वयति। अतोस्मदस्मत्तआरेदूरे ज्योक् चिरकालं माकः आत्मानं माकार्षीः क्षिप्रमात्मानमस्मदासन्नं कुर्वित्यर्थः॥६॥

६. इन्द्र, मनुष्यों में तुम्हारे अनेक सवन हैं। मनीषी स्तोता तुम्हारा ही अत्यन्त आह्वान करता है। अपने को हमसे दूर नहीं रखना।

---

१ ऋ० सं० ८. ४. २९.। २ ऋ० सं० १. ५. १६.।

अथ सप्तमी—

तुभ्येदिमासवनाशूरविश्वातुभ्यंब्रह्माणिवर्धनाकृणोमि ।
त्वंनृभिर्हव्योविश्वधासि ॥ ७ ॥

तुभ्य । इत् । इमा । सवना । शूर । विश्वा । तुभ्यम् । ब्रह्माणि ।
वर्धना । कृणोमि । त्वम् । नृऽभिः । हव्यः । विश्वधा । असि ॥ ७ ॥

हे शूर तुभ्येत् तुभ्यमेव इमा इमानि विश्वा विश्वानि सवना सवनानि सोमाभिषवणानि मया क्रियन्तइति शेषः तुभ्यं त्वदर्थमेव वर्धना वर्धनानि ब्रह्माणि स्तोत्राणि कृणोमि करोमि । त्वमेव नृभिर्यज्ञानां नेतृभिः विश्वधा सर्वप्रकारैः हव्योह्वातव्यः स्तुत्योवासि ॥ ७ ॥

७. शूर इन्द्र, तुम्हारे ही लिए यह सब सवन है; तुम्हारे ही लिए यह वर्द्धक स्तोत्र करता हूँ । तुम सब तरह से मनुष्यों के आह्वान के योग्य हो ।

अथाष्टमी—

नूचिन्नुतेमन्यमानस्यदस्मोदश्नुवन्तिमहिमानमुग्र ।
नवीर्यमिन्द्रतेनराधः ॥ ८ ॥

नु । चित् । नु । ते । मन्यमानस्य । दस्म । उत् । अश्नुवन्ति ।
महिमानम् । उग्र । न । वीर्यम् । इन्द्र । ते । न । राधः ॥ ८ ॥

हे दस्म दर्शनीय मन्यमानस्य स्तूयमानस्य ते तव महिमानं नूचिदिति प्रतिषेधार्थः नु क्षिप्रं नूचिदुदश्नुवन्ति केचन न प्राप्नुवन्ति हे उग्र उद्गूर्ण ते तव राधो धनं हे इन्द्र ते वीर्यं सामर्थ्यं च नोदश्नुवन्ति ॥ ८ ॥

८. दर्शनीय इन्द्र, स्तुति करने पर तुम्हारी महिमा को कौन नहीं तुरत प्राप्त करेगा ? कौन नहीं तुम्हारा धन प्राप्त करेगा ?

अथ नवमी—

येचपूर्वऋषयोयेचनूत्नाइन्द्रब्रह्माणिजनयन्तविप्राः ।
अस्मेतेसन्तुसख्याशिवानियूयंपातस्वस्तिभिःसदानः ॥९॥६॥

ये । च । पूर्वे । ऋषयः । ये । च । नूत्नाः । इन्द्र । ब्रह्माणि ।
जनयन्त । विप्राः । अस्मे इति । ते । सन्तु । सख्या । शिवानि ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ९ ॥ ६ ॥

ये च पूर्वे प्राक्तना ऋषयः ये च नूत्नाः नूतनाः विप्रामेधाविनऋषयो ब्रह्माणि स्तोत्राणि जनयन्त अजनयन्त तेष्विविवास्मे अस्मास्वपि हे इन्द्र ते तव सख्या सख्यानि शिवानि भद्राणि सन्तु स्पष्टमन्यत् ॥ ९ ॥

९. जितने प्राचीन ऋषि हो गये हैं और जितने नवीन हैं, सभी तुम्हारे लिए स्तोत्र उत्पन्न करते हैं। हमारे लिए तुम्हारा सख्य मंगलमय हो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य तृतीये षष्ठो वर्गः ॥ ६ ॥

उदुब्रह्माणीति षळृचं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं अनुक्रम्यतेच—उदुषळिति। अग्निष्टोमे माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रे एतत्सूक्तं सूत्रितंच—उदुब्रह्माण्यृजीषीवज्रीवृषभस्तुराषाळिति याज्येति। चातुर्विंशिकेहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे एतदहरहः शस्य संज्ञकं सूक्तं। सूत्रितं च। उदुब्रह्माण्यभितष्टेवेतीतरावहरहःशस्येइति। अहर्गणेषु द्वितीयादिष्वहःस्वेतदेवसूक्तं महाव्रतेपि निष्केवल्येएतत्सूक्तं सूत्रितं च—उदुब्रह्माण्यैरतश्रवस्यातेमहइन्द्रोत्युग्रेति पंचसूक्तानीति।

**उदु॒ब्रह्मा॑ण्यैरतश्र॒व॒स्येन्द्रं॑सम॒र्ये॑मह॒यावसिष्ठ।**
**आयोविश्वा॑नि॒शव॑सात॒ताना॑प॒श्रो॒ताम॒ईव॑तो॒वचां॑सि ॥ १ ॥**

**उत्। ऊँ इति। ब्रह्मा॑णि। ऐ॒र॒त॒। श्र॒व॒स्या॒। इन्द्रं॑म्।**
**स॒ऽम॒र्ये॑। म॒ह॒य॒। व॒सि॒ष्ठ॒। आ। यः। विश्वा॑नि। शव॑सा।**
**त॒ताना॑। उ॒प॒ऽश्रो॒ता। मे॒। ईव॑तः। वचां॑सि ॥ १ ॥**

श्रवस्यान्नेच्छया ब्रह्माणि स्तोत्राणि हवींषि चेन्द्रार्थं उदैरत् सर्वेऋषयइति शेषः उइति पूरणः हे वसिष्ठ त्वमपि समर्ये यज्ञे इन्द्रं महय स्तोत्रेण हविषा च पूजय अपि च यइन्द्रो विश्वानि भुवनानि शवसा बलेन ततान व्याप्तवान् सईवतः उपगमनवतो मे मम वचांसि स्तुतिरूपाणि वाक्यानि उपश्रोता भवतु ॥ १ ॥

१. अन्न की इच्छा से सारे स्तोत्र कहे गये हैं। वसिष्ठ, तुम भी यज्ञ में इन्द्र की स्तुति करो। बल-द्वारा उन्होंने सारे लोकों को व्याप्त किया था। मैं उनके पास जाने की इच्छा करता हूँ। वे मेरे स्तुति-वचन का श्रवण करें।

अथ द्वितीया—

**अया॑मि॒घोष॑इन्द्रदे॒वजा॑मिरि॒र॒ज्यन्त॒यच्छु॒रुधो॒विवा॑चि।**
**न॒हिस्वमायु॑श्चिकि॒तेजने॑षु॒तानीदंहां॒स्यति॑पर्ष्य॒स्मान् ॥ २ ॥**

अयामि । घोषः । इन्द्र । देवऽजामिः । इरज्यन्त । यत् ।
शुरुधः । विऽवाचि । नहि । स्वम् । आयुः । चिकिते । जनेषु ।
तानि । इत् । अंहांसि । अति । पर्षि । अस्मान् ॥ २ ॥

यद्यदा शुरुधः शुचं संरुन्धन्तीति शुरुध ओषध्य इरज्यन्त वर्धन्ते तदा हे इन्द्र त्वदर्थं विवाचि स्तोतरि देवजामिर्देवानां बन्धुः घोषः स्तुतिरूपः शब्दः अयामि अकारि अपि च जनेषु मध्ये केनापि स्वमायुः स्वं जीवितं नहि चिकिते ज्ञायते यैरायुः क्षीयते तानीव तानि सर्वाण्येव अंहांसि पापान्यस्मानतिपर्षि अतिपारय ॥ २ ॥

२. जिस समय ओषधियाँ बढ़ती हैं, उस समय देवों के लिए प्रिय शब्द कहे जाते हैं। मनुष्यों में कोई भी तुम्हारी आयु नहीं जान सकता। हमें सारे पापों के पार ले जाओ।

युजेरथंगवेषणंहरिभ्यामुपब्रह्माणिजुजुषाणमस्थुः ।
विबाधिष्टस्यरोदसीमहित्वेन्द्रोवृत्राण्यप्रतीजघन्वान् ॥ ३ ॥

युजे । रथम् । गोऽएषणम् । हरिऽभ्याम् । उप । ब्रह्माणि ।
जुजुषाणम् । अस्थुः । वि । बाधिष्ट । स्यः । रोदसी इति ।
महिऽत्वा । इन्द्रः । वृत्राणि । अप्रति । जघन्वान् ॥ ३ ॥

गवेषणं गवां प्रापकं इन्द्रस्य रथं हरिभ्यामिन्द्रवाहाभ्यां युजे स्तोत्रैरहंयुनज्मि ब्रह्माणि स्तोत्राणि जुजुषाणं परिवारैः सेव्यमानमिन्द्रं उपास्थुरुपतिष्ठंत। स्यः सोयमिन्द्रोमहित्वा महत्वेन रोदसी द्यावापृथिव्यौ विबाधिष्ट व्यबाधिष्ट च अपि चेन्द्रोवृत्राणि शत्रून् अप्रतिद्वन्द्वानि जघन्वान् हतवान् ॥ ३ ॥

३. मैं हरि नाम के दोनों अश्वों के द्वारा इन्द्र के गोप्रापक रथ को जोतता हूँ। इन्द्र स्तोत्रों की सेवा करते हैं। सब लोग उनकी उपासना करते हैं। उन्होंने अपनी महिमा से द्यावापृथिवी को बाधित किया है। इन्द्र ने शत्रुओं के बलों का नाश किया है।

आपश्चित्पिप्युःस्तर्यो३नगावोनक्षन्नृतंजरितारस्तइन्द्र ।
याहिवायुर्ननियुतोनोअच्छात्वंहिधीभिर्दयसेविवाजान् ॥४ ॥

आपः । चित् । पिप्युः । स्तर्यः । न । गावः । नक्षन् । ऋतम् ।
जरितारः । ते । इन्द्र । याहि । वायुः । न । निऽयुतः । नः ।
अच्छ । त्वम् । हि । धीभिः । दयसे । वि । वाजान् ॥ ४ ॥

हे इन्द्र त्वत्प्रसादादापश्चित् आपः तर्योन गावः तर्योवशागावइव पिप्युः वर्धंतां। अप्रसूतागावोमांसलाभवन्ति हि। ते तव जरितारः स्तोतारश्च ऋतमुदकं नक्षन् व्याप्नुवन्। अपि च त्वं नोस्मान् नियुतोवायुर्न वायुरिव अच्छ याहि अभियाहि। त्वं हि धीभिः प्रज्ञाभिः कर्मभिर्वा वाजानन्नानि विदयसे स्तोतृभ्यः प्रयच्छसि॥ ४॥

४. इन्द्र, अप्रसूता गाय की तरह जल बढ़े। तुम्हारे स्तोता जल व्याप्त करें। जैसे वायु नियुत (अश्व) के पास आता है, वैसे ही तुम मेरे निकट आओ। कर्म-द्वारा तुम अन्न प्रदान करो।

तेत्वामदाइन्द्रमादयन्तुशुष्मिणंतुविराधसंजरित्रे।
एकोदेवत्रादयसेहिमर्तानस्मिञ्छूरसवनेमादयस्व॥ ५॥

ते। त्वा। मदाः। इन्द्र। मादयन्तु। शुष्मिणम्। तुविऽराधसम्। जरित्रे। एकः। देवऽत्रा। दयसे। हि। मर्तान्। अस्मिन्। शूर। सवने। मादयस्व॥ ५॥

हे इन्द्र त्वा त्वां तएते मदाः मदकराः सोमाः मादयन्तु अपि च जरित्रे स्तोत्रे शुष्मिणं बलवन्तं तुविराधसं बहुधनं पुत्रं प्रयच्छसीति शेषः। हे शूर त्वं देवत्रा देवेषु एकएव मर्तान् मनुष्यान् दयसे हि दयतिरनुकंपार्थः अस्मिन् सवने यज्ञे मादयस्व॥ ५॥

५. इन्द्र, मदकारी सोम तुम्हें मत्त करें। स्तोता को बलवान् और बहुधनवान् पुत्र दान करो। शूर, देवों में तुम्हें अकेले मनुष्यों के प्रति अनुकम्पा प्रदर्शित करते हो। इस यज्ञ में प्रमत्त होओ।

अथ षष्ठी—

एवेदिन्द्रंवृषणंवज्रबाहुंवसिष्ठासोअभ्यर्चन्त्यर्कैः।
सनःस्तुतोवीरवद्धातुगोमद्यूयंपातस्वस्तिभिःसदानः॥ ६॥ ७॥

एव। इत्। इन्द्रम्। वृषणम्। वज्रऽबाहुम्। वसिष्ठासः। अभि। अर्चन्ति। अर्कैः। सः। नः। स्तुतः। वीरऽवत्। धातु। गोऽमत्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ६॥ ७॥

वसिष्ठासोवसिष्ठाः वज्रबाहुं वज्रकल्पबाहुं वृषणं कामानां वर्षितारमिन्द्रं एवेत् उक्तेन प्रकारेणैव अर्कैरर्चनीयैःस्तोत्रैः अभ्यर्चन्ति अभिपूजयन्ति स्तुतः सइन्द्रोनोस्मभ्यं वीरवत्पुत्रादियुक्तं गोमत् गोयुक्तं च धनं धातु ददातु स्पष्टमन्यत्॥ ६॥

६. वसिष्ठ लोग इसी प्रकार अर्चनीय स्तोत्र-द्वारा वज्रबाहु अभीष्टवर्षी इन्द्र की पूजा करते हैं। स्तुत होकर वे हमें वीर और गौ से युक्त धन दें। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

योनिष्टइन्द्रसदनेअकारीति षळृचं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं अनुक्रम्यते च—योनिरिति। महाव्रते निष्केवल्येएतत्सूक्तं सूत्रितं च—योनिष्टइन्द्रसदनेअकारीत्येतस्यचतस्रः शस्त्वोत्तमामुपसंतत्योपोत्तमया परिदधातीति।

योनिष्टइन्द्रसदनेअकारितमानृभिःपुरुहूतप्रयाहि।
असोयथानोविताव्टधेचददोवसूनिममदश्चसोमैः॥ १॥

योनिः। ते। इन्द्र। सदने। अकारि। तम्। आ। नृऽभिः। पुरुऽहूत। प्र। याहि। असः। यथा। नः। अविता। वृधे। च। ददः। वसूनि। ममदः। च। सोमैः॥ १॥

हे इन्द्र ते तव सदने सदनार्थं योनिः स्थानमकारि। हे पुरुहूत नृभिर्मरुद्भिः सार्धं तं योनिमाप्रयाहि। नोस्माकं यथाविता रक्षिता असः भवसि नोस्माकं वृधे वर्धनाय चासः तथा च वसूनि ददः अस्मभ्यं देहि सोमैरस्मदीयैर्ममदः मादयस्व च॥ १॥

१. तुम्हारे गृह के लिए स्थान किया गया है। पुरुहुत इन्द्र, मरुतों के साथ वहाँ आओ। जैसे तुम हमारे रक्षक हुए हो, जैसे तुम हमारी वृद्धि के लिए हुए हो, वैसे ही धन दो। हमारे सोम के द्वारा मत्त होओ।

गृभीतंतेमनइन्द्रद्विबर्हाःसुतःसोमःपरिषिक्तामधूनि।
विसृष्टधेनाभरतेसुवृक्तिरियमिन्द्रंजोहुवतीमनीषा॥ २॥

गृभीतम्। ते। मनः। इन्द्र। द्विऽबर्हाः। सुतः। सोमः। परिऽसिक्ता। मधूनि। विसृष्टऽधेना। भरते। सुऽवृक्तिः। इयम्। इन्द्रम्। जोहुवती। मनीषा॥ २॥

हे इन्द्र द्विबर्हाः षष्ठ्यर्थे प्रथमा द्विबर्हसोद्वयोः स्थानयोः परिवृढस्य ते तवमनोगृभीतमस्माभिः परिगृहीतं सोमश्च सुतोभिषुतः मधूनि च परिषिक्तानि पात्रेषु परिषिक्तानि विसृष्टधेना विसृष्टजिह्वा मध्यमस्वरेणोच्चार्यमाणा सुवृक्तिः सुसमाप्तिरियं मनीषा स्तुतिरिन्द्रं जोहुवती भृशमाह्वयन्ती भरते संभ्रियते च॥ २॥

२. इन्द्र, तुम दोनों स्थानों में पूज्य हो। हमने तुम्हारे मन को ग्रहण किया है। सोम का हमने अभिषव किया है। हमने मधु को पात्र में परिषिक्त किया है। मध्यम स्वर में कही जानेवाली यह सुसमाप्त स्तुति बार-बार इन्द्र को आह्वान करके उच्चारित होती है।

॥ इति पंचमस्य तृतीये सप्तमोवर्गः॥ ७॥

अथ तृतीया—

आनोदिवआपृथिव्याऋजीषिन्निदंबर्हिःसोमपेयाययाहि ।
वहन्तुत्वाहरयोमद्र्यञ्चमाङ्गूषमच्छातवसंमदाय ॥ ३ ॥

आ । नः । दिवः । आ । पृथिव्याः । ऋजीषिन् । इदम् । बर्हिः ।
सोमऽपेयाय । याहि । वहन्तु । त्वा । हरयः । मद्र्यञ्चम् ।
आङ्गूषम् । अच्छ । तवसम् । मदाय ॥ ३ ॥

हे ऋजीषिन्निन्द्र नोस्माकमिदं बर्हिरिमं यज्ञं सोमपेयाय दिवः स्वर्गादायाह्यागच्छ पृथिव्या अन्तरिक्षाच्च आपः पृथिवीत्यन्तरिक्षनामसु पाठात् आयाहि अपि च तवसं प्रवृद्धं बलवन्तं वा मद्र्यंचं मदभिमुखं त्वा त्वां आंगूषं स्तोत्रं अच्छाभि मदाय मदार्थं हरयोश्वावहन्तु॥३॥

३. इन्द्र, तुम हमारे इस यज्ञ में सोमपान के लिए स्वर्ग और अन्तरिक्ष से आओ; और, आनन्द के लिए, हमारे पास, अश्वगण स्तोत्र की ओर ले जायें।

आनोविश्वाभिरूतिभिःसजोषाब्रह्मजुषाणोहर्यश्वयाहि ।
वरीवृजत्स्थविरेभिःसुशिप्रास्मेदधद्वृषणंशुष्ममिन्द्र ॥ ४ ॥

आ । नः । विश्वाभिः । ऊतिऽभिः । सऽजोषाः । ब्रह्म । जुषाणः ।
हरिऽअश्व । याहि । वरीवृजत् । स्थविरेभिः । सुऽशिप्र ।
अस्मे इति । दधत् । वृषणम् । शुष्मम् । इन्द्र ॥ ४ ॥

हे हर्यश्व हरिनामकाश्व सुशिप्र शोभनहनो इन्द्र विश्वाभिः सर्वाभिरूतिभीरक्षाभिः सजोषाः संगतः स्थविरेभिर्वृद्धैर्मरुद्भिः सह वरीवृजत् शत्रून् भृशं हिंसन् अस्मे अस्मभ्यं वृषणं कामानां वर्षितारं शुष्मं बलवन्तं पुत्रं दधत् प्रयच्छन् ब्रह्म स्तोत्रं जुषाणः सेवमानो नोस्मानायाहि ॥ ४ ॥

४. हरि अश्व और शोभन हनुवाले इन्द्र, तुम सब प्रकार की रक्षाओं के साथ वृद्ध मरुतों के संग शत्रुओं को मारते हुए हमें अभीष्टवर्षी तथा बलवान् पुत्र देते हुए एवम् स्तोत्र-सेवा करते हुए, हमारी ओर आओ।

अथ पञ्चमी—

एषःस्तोमोमहउग्रायवाहेधुरीवात्योनवाजयन्नधायि ।
इन्द्रत्वायमर्कईट्टेवसूनांदिवीवद्यामधिनःश्रोमतंधाः ॥ ५ ॥

एषः । स्तोमः । महे । उग्राय । वाहे । धुरिऽइव । अत्यः । न ।
वाजयन् । अधायि । इन्द्र । त्वा । अयम् । अर्कः । ईट्टे । वसूनाम् ।
दिविऽइव । द्याम् । अधि । नः । श्रोमतम् । धाः ॥ ५ ॥

महे महते उग्राय उद्गूर्णाय ओजस्विने वा वाहे विश्वस्य वोढ्रे इन्द्राय धुरीव रथस्य अत्यो-नाश्वइव वाजयन् बलं कुर्वन् एषः स्तोमः अधायि न्यधायि । अथ प्रत्यक्षस्तुतिः हेइन्द्र त्वा त्वां अयमर्कः स्तोता वसूनां वसूनि धनानि ईट्टे याचते सत्वं नोस्मासु द्यां दिवीव श्रोमतं श्रवणी-यमन्नं पत्रं वा अधि धाः अधि धेहि ॥ ५ ॥

५. रथ के घोड़े की तरह यह बलकर्त्ता मन्त्र महान् और ओजस्वी इन्द्र को लक्ष्य कर स्थापित हुआ है। इन्द्र, स्तोता तुमसे धन माँगता है। तुम हमें आकाश के स्वर्ग की तरह श्रीमान् पुत्र प्रदान करो।

एवानंइन्द्रवार्यस्यपूर्धिप्रतेमहींसुमतिंवेविदाम ।
इषंपिन्वमघवद्भ्यःसुवीरांयूयंपातस्वस्तिभिःसदानः ॥ ६ ॥ ८ ॥

एव । नः । इन्द्र । वार्यस्य । पूर्धि । प्र । ते । महीम् । सुऽमतिम् ।
वेविदाम । इषम् । पिन्व । मघवत्ऽभ्यः । सुऽवीराम् । यूयम् । पात ।
स्वस्तिऽभिः । सदा । नः ॥ ६ ॥ ८ ॥

हे इन्द्र नोस्मान् एव एवं वार्यस्य तृतीयार्थे षष्ठी वरणीयेन धनेन पूर्धि पूरय । ते तव महीं महतीं सुमतिं अनुग्रहबुद्धिं प्रवेविदाम भृशं लभेमहि मघवद्भ्यो हविष्मद्भ्योस्मभ्यं सुवीरां शोभ-नपुत्रादियुतां इषमन्नं पिन्व प्रयच्छेत्यर्थः । स्पष्टमन्यत् ॥ ६ ॥

६. इन्द्र, इस प्रकार तुम हमें वरणीय धन से परिपूर्ण करो। हम तुम्हारा महान् अनुग्रह प्राप्त करेंगे। हम हव्यवाले हैं। हमें वीर पुत्रवाला अन्न दो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य द्वितीयेष्टमो वर्गः ॥ ८ ॥

आतेमहइन्द्रेति षळृचमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं आतइत्यनुक्रान्तं । महाव्रते निष्केवल्ये इदमादीनि पंचसूक्तानि सूत्रितंच—आतेमहइन्द्रोत्युग्रेति पंचसूक्तानीति ।

तत्र प्रथमा—

आतेमहइन्द्रोत्युग्रसमन्यवोयत्समरन्तसेनाः ।
पतातिदिद्युन्नर्यस्यबाह्वोर्मातेमनोविष्वद्र्यग्विचारीत् ॥ १ ॥

आ। ते। महः। इन्द्र। ऊती। उग्र। सऽमन्यवः। यत्। सम्ऽअरन्त। सेनाः। पताति। दिद्युत्। नर्यस्य। बाह्वोः। मा। ते। मनः। विष्वद्र्यक्। वि। चारीत्॥ १॥

हे उग्र उद्गूर्ण ओजस्विन्निन्द्र यद्यदा समन्यवः समोमन्युरभिमानोयासां ताः समन्यवः सेनाः समरन्त युध्यन्ते युद्धार्थं संगच्छन्ते वा तदा नर्यस्य नरहितस्य महोमहतः ते तव बाह्वोः स्थितं विद्युदायुधं विद्युत् हेतिरिति वज्रनामसु पाठात् ऊती ऊत्यै अस्मद्रक्षार्थै आपताति आ पततु। ते तव विष्वद्र्यक् विष्वगगन्तृमनः माविचारीत् अस्मास्वेव स्थिरं भवतु॥ १॥

१. ओजस्वी इन्द्र, तुम महान् और मनुष्य-हितैषी हो। तुम्हारी सेनायें समान हैं—ऐसा अभिमान कर जब युद्ध किया जाता है, तब तुम्हारा हस्त-स्थित वज्र हमारे त्राण के लिए पतित हो। तुम्हारा सर्वतोगामी मन विचलित न हो। अथ द्वितीया—

निदुर्गइंन्द्रश्नथिह्यमित्राँनभियेनोमर्तासोअमन्ति।
आरेतंशंसंकृणुहिनिनित्सोरानोंभरसंभरणंवसूनाम्॥ २॥

नि। दुःऽगे। इन्द्र। श्नथिहि। अमित्रान्। अभि। ये। नः। मर्तासः। अमन्ति। आरे। तम्। शंसम्। कृणुहि। निनित्सोः। आ। नः। भर। सम्ऽभरणम्। वसूनाम्॥ २॥

हे इन्द्र दुर्गे युद्धे ये मर्तासो मर्ताः अभि अभिमुखाः सन्तो नोस्मानमन्ति अभिभवन्ति तानमित्रान् शत्रून् निश्नथिहि निजहि। अपि च निनित्सोः अस्मान्निन्दितुमिच्छतो नरस्य तं शंसं आशंसनं आरे दूरे कृणुहि। अपि च नोस्मभ्यं वसूनां धनानां संभरणं समूहमाभर आहर॥ २॥

२. इन्द्र, युद्ध में जो मनुष्य हमारे सामने आकर हमारा अभिभव करते हैं, वे ही शत्रुओं का विनाश करते हैं। जो हमारी निन्दा करने की इच्छा करते हैं, उनकी कथा दूर कर दो। हमारे लिए सम्पत्तियाँ लाओ।

शतंतेशिप्रिन्नूतयःसुदासेसहस्रंशंसाउतरातिरस्तु।
जहिवधर्वनुषोमर्त्यस्यास्मेद्युम्नमधिरत्नंचधेहि॥ ३॥

शतम्। ते। शिप्रिन्। ऊतयः। सुऽदासे। सहस्रम्। शंसाः। उत। रातिः। अस्तु। जहि। वधः। वनुषः। मर्त्यस्य। अस्मे इति। द्युम्नम्। अधि। रत्नम्। च। धेहि॥ ३॥

हे शिप्रिन् उष्णीषिन् इन्द्र ते त्वदीयाः शतं बह्वचः ऊतयो रक्षाः सुदासे शोभनदानाय मह्यं सन्तु । सहस्रं शंसाः शंसनीयाः कामाश्च सन्तु । उतापिच रातिर्धनमस्तु । वनुषो हिंसकस्य मर्त्यस्य वधः हिंसासाधनमायुधं च जहि अपिचास्मै अधि अस्मासु द्युम्नं दीप्तिमदन्नं यशोवा रत्नं च धेहि । तथाच यास्कः—द्युम्नं द्योततेर्यशोवान्नंवा अस्मे द्युम्नमधिरत्नंच धेहि अस्मासु द्युम्नं च रत्नं च धेहीति[1] ॥ ३ ॥

३. उष्णीष (चादर) वाले इन्द्र, मुझ सुदास के लिए तुम्हारी सैकड़ों रक्षायें हों। तुम्हारी सैकड़ों अभिलाषायें और धन मेरे हों। हिंसक के हिंसा-साधन हथियारों को विनष्ट करो। हमारे लिए दीप्त यश और रत्न दो। अथ चतुर्थी—

त्वावं॑तो॒ हीन्द्र॒ क्रत्वे॒ अस्मि॒ त्वावं॑तोऽवि॒तुः शू॑र रा॒तौ ।
विश्वेदहा॑नि तविषीव उग्र॒ँ ओकः॑ कृणुष्व हरिवो॒ न म॑र्धीः ॥ ४ ॥

त्वाऽवंतः । हि । इ॒न्द्र॒ । क्रत्वे॑ । अस्मि॑ । त्वाऽवंतः । अ॒वि॒तुः ।
शू॒र॒ । रा॒तौ । विश्वा॑ । इत् । अहा॑नि । त॒वि॒षी॒ऽव॒ः । उ॒ग्र॒ ।
ओकः॑ । कृ॒णु॒ष्व॒ । ह॒रि॒ऽव॒ः । न । म॒र्धीः॒ ॥ ४ ॥

हे इन्द्र त्वावतः त्वत्सदृशस्य क्रत्वे कर्मणे अस्मि भवामि हि । हे शूर अवितुः विश्वस्य रक्षितुस्त्वावतस्त्वत्सदृशस्य रातौ दाने च अस्मीतिशेषः । हे तविषीवोबलवन् उग्र ओजस्विन्निन्द्र विश्वेत् विश्वान्येव अहानि ओकोस्माकं स्थानं कृणुष्व कुरु । हे हरिवो हरिवन् नमर्धीः अस्मान्नहिंस्याः ॥ ४ ॥

४. इन्द्र, मैं तुम्हारे समान व्यक्ति के कर्म में नियुक्त हूँ। तुम्हारे समान रक्षक व्यक्ति के दान में नियुक्त हूँ। बलवान् और ओजस्वी इन्द्र, सारे दिन हमारे लिए स्थान बनाओ। हरिवाले इन्द्र, हमारी हिंसा नहीं करना। अथ पंचमी—

कुत्सा॑ ए॒ते हर्य॑श्वाय शू॒षमिन्द्रे॒ सहो॑ दे॒वजू॑तमिया॒नाः ।
स॒त्रा कृ॑धि सु॒हना॑ शूर वृ॒त्रा व॒यं तरु॑त्राः सनुयाम॒ वाज॑म् ॥ ५ ॥

कुत्सा॑ः । ए॒ते । हरि॑ऽअश्वाय । शू॒षम् । इन्द्रे॑ । सह॑ः । दे॒वऽजू॑तम् ।
इ॒या॒नाः । स॒त्रा । कृ॒धि । सु॒ऽहना॑ । शू॒र॒ । वृ॒त्रा । व॒यम् । तरु॑त्राः ।
स॒नु॒या॒म॒ । वाज॑म् ॥ ५ ॥

एते वयं वसिष्ठाः हर्यश्वाय हरिनामकाश्वायेन्द्राय शूषं सुखकरं स्तोत्रं कुत्साः कुर्वाणाः करोतेः कुत्सशब्दनिष्पत्तिः इन्द्रे देवजूतं देवैः प्रेरितं सहोबलमियानाः याचमानाः तरुत्राः दु-

---

1 नि० ५. ५.

र्गाणि तीर्णाः सन्तो वाजं बलं सनुयाम लभेमहि। अपि च हे शूर वृत्रा वृत्राणि शत्रून् सुहना हन्तुं सुशकानि सत्रा सर्वदा कृधि कुरु ॥ ५ ॥

५. हम हर्यश्व इन्द्र के लिए सुखकर स्तोत्र कहते हुए और इन्द्र से देव-प्रेरित बल की याचना करते हुए, सारे दुर्गों को लाँघकर, बल प्राप्त करेंगे। हम हविवाले हैं। हमें वीर पुत्रवाला अन्न दो। तुम हमें सदा स्वस्ति (कल्याण) द्वारा पालन करो।

एवानंइन्द्रवार्यस्यपूर्धिप्रतेमहींसुमतिंवेविदाम।
इषंपिन्वमघवंद्भ्यःसुवीरांयूयंपातस्वस्तिभिःसदानः ॥ ६ ॥ ९ ॥

एव। नः। इन्द्र। वार्यस्य। पूर्धि। प्र। ते। महीम्। सुऽमतिम्। वेविदाम। इषम्। पिन्व। मघवत्ऽभ्यः। सुऽवीराम्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ६ ॥ ९ ॥

इयं व्याख्यातचरा ॥ ६ ॥

६. **हे इन्द्र! हमें संरक्षण के योग्य भरपूर धन दे। तेरे आर्शीवाद से युक्त होकर हम आगे बढ़ें। उत्तर वीर जिसके साथ रहते हैं वह धन हमें मिले। तेरे अलावा सभी देव ही अपने संरक्षण के साधनों से युक्त होकर हमारी रक्षा करते रहें।**

॥ इति पंचमस्य तृतीये नवमो वर्गः ॥ ९ ॥

नसोमइन्द्रमिति पंचर्चं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं तथाचानुक्रम्यते—नसोमःपंचेति। महाव्रते उक्तोविनियोगः।

तत्र प्रथमा—

नसोमइन्द्रमसुतोममादनाब्रह्माणोमघवानंसुतासः।
तस्माउक्थंजनयेयज्जुजोषन्नृवन्नवीयःशृणवद्यथानः ॥ १ ॥

न। सोमः। इन्द्रम्। असुतः। ममाद। न। अब्रह्माणः। मघऽवानम्। सुतासः। तस्मै। उक्थम्। जनये। यत्। जुजोषत्। नृऽवत्। नवीयः। शृणवत्। यथा। नः ॥ १ ॥

मघवानं धनवन्तमिन्द्रमसुतोन अभिषुतः सोमोन ममाद न तर्पयति सुतासोभिषुताः अपि सोमा अब्रह्माणः स्तोत्रहीनाः न ममदुः ममादेत्येतदाख्यातं बहुवचनान्ततया विपरिणतं सदत्रसंबध्यते अतएव त्रिष्वपि सवनेषु पावमानैः स्तोत्रैः स्तुताएव सोमाहूयन्ते। अपि च नोस्मदीयं यदुक्थं इन्द्रोजुजोषत् सेवेत यथा च नृवत् राजेव आदरेण शृणवत् शृणुयात् तथा नवीयोनवतरमुक्थं शस्त्रं तस्माइन्द्राय जनये पठामीत्यर्थः ॥ १ ॥

१. जो सोम धनाधिपति इन्द्र के लिए अभिषुत नहीं है, उससे तृप्ति नहीं होती। अभिषुत होने पर भी स्तोत्र-हीन सोम तृप्तिकर नहीं होता। हम लोगों का जो उक्थ इन्द्र की सेवा करता है और राजा जिसे श्रवण करता है, उसी नवीन उक्थ का पाठ, इन्द्र के लिए, मैं करता हूँ।

उक्थउक्थेसोमइन्द्रंममादनीथेनीथेमघवानंसुतासः।
यदींसबाधःपितरंनपुत्राःसमानदक्षाअवसेहवन्ते ॥ २ ॥

उक्थेऽउक्थे। सोमः। इन्द्रम्। ममाद। नीथेऽनीथे।
मघऽवानम्। सुतासः। यत्। ईम्। सऽबाधः। पितरम्। न। पुत्राः।
समानऽदक्षाः। अवसे। हवन्ते ॥ २ ॥

यद्यस्मात् उक्थेउक्थे शस्त्रेशस्त्रे क्रियमाणे सोमोमघवानमिन्द्रं ममाद मादयति नीथेनीथे स्तोत्रेस्तोत्रे क्रियमाणे सुतासोभिषुताः सोमाः मादयन्ति तस्मादीमेनमिन्द्रं सबाधः परस्परं मिलिताः समानदक्षाः समानोत्साहा ऋत्विजः। पुत्राः पितरं न पितरमिव अवसे तर्पणाय स्वरक्षणाय वा हवन्ते शस्त्रैः स्तोत्रैश्च स्तुवन्ति ॥ २ ॥

२. प्रत्येक उक्थ-स्तुति-पाठ-काल में सोम धनवान् इन्द्र को तृप्त करता है। प्रत्येक स्तोत्रपाठ-काल में अभिषुत सोम इन्द्र को तृप्त करता है। जैसे पुत्र पिता को बुलाता है, वैसे ही, रक्षा के लिए, परस्पर मिलित और समान उत्साहवाले ऋत्विक् लोग इन्द्र को बुलाते हैं।

चकारताकृणवन्नूनमन्यायानिब्रुवन्तिवेधसःसुतेषु।
जनीरिवपतिरेकःसमानोनिमामृजेपुरइन्द्रःसुसर्वाः ॥ ३ ॥

चकार। ता। कृणवत्। नूनम्। अन्या। यानि। ब्रुवन्ति।
वेधसः। सुतेषु। जनीःऽइव। पतिः। एकः। समानः। नि।
ममृजे। पुरः। इन्द्रः। सु। सर्वाः ॥ ३ ॥

वेधसः स्तोत्राणां विधातारः सुतेषु अभिषुतेषु सोमेषु यानि कर्माणि ब्रुवन्ति ता तानि वृत्रवधादीनि कर्माणीन्द्रः पूर्वस्मिन्काले चकार नूनं। संप्रति अन्या अन्यान्यपि कर्माणि कृणवत् कुर्यात्। अपि च सइन्द्रः सर्वाः पुरः शत्रुनगरीः समानः समवृत्तिः एकः असहायः पतिः जनीरिव जायाइव सु निमामृजे सम्यगशोधयेत्॥ ३ ॥

३. सोम के अभिषुत होने पर स्तोता लोग जिन सब कर्मों की बातें कहते हैं, उस सारे कर्मों को, प्राचीन काल में, इन्द्र ने किया था। इस समय अन्य कर्म भी करते हैं। जैसे पति पत्नी का परिमार्जन करता है, वैसे ही समवृत्ति और सहायक-शून्य इन्द्र ने शत्रु-नगरियों का परिमार्जन (संशोधन) किया था।

एवातमाहुरुतशृण्वइन्द्रएकोविभक्तातरणिर्मघानाम् ।
मिथस्तुरऊतयोयस्यपूर्वीरस्मेभद्राणिसश्चतप्रियाणि ॥ ४ ॥

एव । तम् । आहुः । उत । शृण्वे । इन्द्रः । एकः । विऽभक्ता ।
तरणिः । मघानाम् । मिथःऽतुरः । ऊतयः । यस्य । पूर्वीः ।
अस्मे इति । भद्राणि । सश्चत । प्रियाणि ॥ ४ ॥

यस्येन्द्रस्य मिथः तुरो बाधनाः संश्लिष्टावा पूर्वीः पूर्व्योबह्वयः ऊतयो रक्षाः सन्ति तं एव एवमुक्तगुणमाहुः पूर्वे ऋषयः। उतापिचाद्यापि सइन्द्रो मघानां मंहनीयानां धनानां विभक्ता दातेति एको मुख्यः तरणिरापदस्तारयितेति शृण्वे श्रूयते तस्य च प्रसादादस्मे अस्मान् भद्राणि मंगलानि प्रियाणि कल्याणानि सश्चत सेवन्तां ॥ ४ ॥

४. परस्पर मिली इन्द्र की अनेक रक्षायें हैं—ऋत्विकों ने इन्द्र के बारे में ऐसा कहा है। यह भी सुना जाता है कि इन्द्र पूजनीय धन को देनेवाले और आपद् से उद्धार करनेवाले हैं। उनकी कृपा से हमें प्रीतिप्रद कल्याण आश्रित करें।

एवावसिष्ठइन्द्रमूतयेनॄन्कृष्टीनांवृषभंसुतेगृणाति ।
सहस्रिणउपनोमाहिवाजान्यूयंपातस्वस्तिभिःसदानः ॥५॥१०॥

एव । वसिष्ठः । इन्द्रम् । ऊतये । नॄन् । कृष्टीनाम् । वृषभम् ।
सुते । गृणाति । सहस्रिणः । उप । नः । माहि । वाजान् । यूयम् ।
पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥ १० ॥

वसिष्ठोनॄन्। नृणां षष्ठयर्थे द्वितीया। ऊतये रक्षार्थं कृष्टीनां प्रजानां वृषभं कामानां वर्षितारमिन्द्रं सुते अभिषुते सति एव एवं पूर्वोक्तप्रकारेण गृणाति स्तौति । अथ प्रत्यक्षस्तुतिः हे इन्द्र नोस्मभ्यं सहस्रिणः सहस्रसंख्याकान् वाजान् अन्नान्युपमाहि प्रयच्छेत्यर्थः । स्पष्टमन्यत् ॥५॥

५. रक्षा के लिए और प्रजा के अभीष्ट-वर्षण के लिए सोमाभिषव में वसिष्ठ इन्द्र की ऐसी स्तुति करते हैं। इन्द्र, हमें नाना प्रकार के अन्न दो। तुम हमें सदा स्वति-द्वारा पालन करो।

॥ इति पंचमस्य तृतीये दशमो वर्गः ॥ १० ॥

इन्द्रं नरइति पंचर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं इन्द्रंनरइत्यनुक्रान्तं महाव्रते निष्केवल्ये एतत्सूक्तं उक्तं तृतीयत्वेनेन्द्रपशौ वपापुरोडाशहविषां आद्यास्तिस्रः क्रमेणानुवाक्याः । सूत्रितं च—इन्द्रंनरोनेमधिताहवन्तउरुंनोलोकमनुनेषिविद्वानिति ।

इन्द्रंनरोनेमधिताहवन्तेयत्पार्यायुनजतेधियस्ताः ।
शूरोनृषाताशवसश्चकानआगोमतिव्रजेभजात्वंनः ॥ १ ॥

इन्द्रम् । नरः । नेम॑ऽधिता । ह॒वन्ते॒ । यत् । पार्याः । यु॒नज॑ते ।
धिय॑ः । ताः । शूर॑ः । नृऽसा॑ता । शव॑सः । च॒का॒नः । आ ।
गोऽम॑ति । व्र॒जे । भ॒ज॒ । त्वम् । न॒ः ॥ १ ॥

—यद्यदा पार्याः युद्धभरणनिमित्तास्ताः प्रसिद्धा धियः कर्माणि युनजते प्रयुज्यन्ते तदा-नरो नेतारः यमिन्द्रं नेमधिता नेमधितौ संग्रामे हवन्ते ह्वयन्ति स त्वं शूरः नृषाता नृणां संभ-क्ता च शवसो बलस्य बलं चकानः कामयमानश्च सन् गोमति गावः संत्यस्मिन्निति गोमत् तस्मिन् व्रजे गोष्ठे समूहे नोस्मान् आभज प्रापय ॥ १ ॥

१. जिस समय युद्ध की तैयारी के कार्य किये जाते हैं, उस समय लोग युद्ध में इन्द्र को बुलाते हैं। इन्द्र, तुम मनुष्यों के लिए धनदाता और बलाभिलाषी होकर हमें गो-पूर्ण गोष्ठ में ले जाओ।

यइ॑न्द्र॒शुष्मो॑मघवन्ते॒अस्ति॒शिक्षा॒सखि॑भ्यःपुरुहूत॒नृभ्य॑ः ।
त्वंहि॒दृ॒ळ्हाम॑घव॒न्विचे॑ता॒अपा॑वृधि॒परि॑वृत॒ंनराध॑ः ॥ २ ॥

यः । इ॒न्द्र॒ । शुष्म॑ः । म॒घ॒ऽव॒न् । ते॒ । अस्ति॑ । शिक्ष॑ । सखि॑ऽभ्यः ।
पु॒रु॒ऽहू॒त॒ । नृऽभ्य॑ः । त्वम् । हि । दृ॒ळ्हा । म॒घ॒ऽव॒न् । विऽचे॑ताः ।
अप॑ । वृ॒धि॒ । परि॑ऽवृतम् । न । राध॑ः ॥ २ ॥

हे पुरुहूत बहुभिराहूतेन्द्र ते तव यः शुष्मोबलमस्ति तं शुष्मं सखिभ्यः स्तोतृभ्यो-नृभ्यः शिक्ष देहि अपि च हे मघवन् हि यस्मात् दृळ्हा दृढानि पुरां द्वाराणि बिभेदिथेतिशे-षः तस्मात्त्वं विचेताः विविक्तप्रज्ञः सन् परिवृतं तिरोहितं राधो धनं अपवृधि अस्मभ्यम-पवृणु नेति संप्रत्यर्थे ॥ २ ॥

२. पुरुहूत इन्द्र, तुम्हारे पास जो बल है, उसे स्तोताओं को दो। इन्द्र, तुमने सुदृढ़ पुरियों को छिन्न-भिन्न किया है; इसलिए, प्रज्ञा का प्रकाश करते हुए, छिपाये धन को प्रकट कर दो।

अथ तृतीया—

इन्द्रो॒राजा॒जग॑तश्चर्षणी॒नाम॒धि॒क्षमि॒विषु॑रूप॒ंयदस्ति॑ ।
ततो॑ददातिदा॒शुषे॒वसू॑नि॒चोद॒द्राधउप॑स्तुतश्चि॒द॒र्वाक् ॥ ३ ॥

इन्द्र॑ः । राजा॑ । जग॑तः । च॒र्ष॒णी॒नाम् । अधि॑ । क्षमि॑ । विषु॑ऽरूपम् ।
यत । अस्ति॑ । तत॑ः । द॒दा॒ति॒ । दा॒शुषे॑ । वसू॑नि । चोद॑त् । राध॑ः ।
उप॑ऽस्तुतः । चि॒त् । अ॒र्वाक् ॥ ३ ॥

सइन्द्रो जगतो जंगमस्य पश्वादेः यतोराजा ईश्वरोभवति चर्षणीनां मनुष्याणां च राजा भवति अधिक्षमि क्षमायां विषुरूपं नानारूपं यद्धनमस्ति तस्यापि राजा भवति ततोदाशुषे यजमानाय वसूनि धनानि ददाति सइन्द्रोस्माभिरुपस्तुतएवसन् राधो धनमर्वागस्मदभिमुखं चोदत् प्रेरयतु चिदवधारणे ॥ ३ ॥

३. इन्द्र जङ्गम जगत् और मनुष्यों के राजा हैं। पृथिवी में तरह-तरह के जो धन हैं, उनके भी राजा इन्द्र ही हैं। इन्द्र हव्यदाता को धन देते हैं। वही इन्द्र हमारे द्वारा स्तुत होकर हमारे सामने धन भेजें।

नूचिन्नइन्द्रोमघवासहूतीदानोवाजन्नियमतेनऊती।
अनूनायस्यदक्षिणापीपायवामंनृभ्योअभिवीतासखिभ्यः ॥४॥

नु। चित्। नः। इन्द्रः। मघऽवा। सऽहूती। दानः। वाजम्।
नि। यमते। नः। ऊती। अनूना। यस्य। दक्षिणा।
पीपाय। वामम्। नृऽभ्यः। अभिऽवीता। सखिऽभ्यः ॥ ४ ॥

मघवा धनवान् दानोददानः सइन्द्रोनोस्माकं सहूती सहूत्या मरुद्भिः सहाह्वानेन वाजमन्नं नोस्मभ्यं ऊती ऊत्यै रक्षायै नूचित् क्षिप्रमेव नियमते प्रयच्छतु यस्येन्द्रस्य अनूना संपूर्णा अभिवीता अभिप्राप्ता दक्षिणा दानं सखिभ्यः स्तोतृभ्यो नृभ्यो वामं वननीयं धनं पीपाय दोग्धि ॥ ४ ॥

४. धनी और दानी इन्द्र को हमने, मरुतों के साथ, बुलाया है; इसलिए वह हमारी रक्षा के लिए शीघ्र अन्न भेजें। ये इन्द्र ही सखाओं को जो सम्पूर्ण और सर्वव्यापी दान करते हैं, वही मनुष्यों के लिए मनोहर धन दूहता है।

अथ पंचमी—

नूइन्द्ररायेवरिवस्कृधीनआतेमनोववृत्याममघाय।
गोमदश्वावद्रथवद्व्यन्तोयूयंपातस्वस्तिभिःसदानः ॥ ५ ॥ ११ ॥

नु। इन्द्र। राये। वरिवः। कृधि। नः। आ। ते। मनः।
ववृत्याम। मघाय। गोऽमत्। अश्वऽवत्। रथऽवत्। व्यन्तः।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ५॥ ११ ॥

हे इन्द्र नोस्मभ्यं राये धनप्राप्तये नु क्षिप्रं वरिवोधनं वेदः वरिवइति धननामसु पाठात् त्वं कृधि देहि वयं ते तव मनः मघाय मंहनीयाय स्तुत्या आववृत्याम आवर्तयाम। स्पष्टमन्यत् ॥ ५ ॥

५. इन्द्र, धन-प्राप्ति के लिए शीघ्र हमें धन दो। पूज्य स्तुति-द्वारा

हम तुम्हारे मन को खींच लेंगे। तुम गौ, अश्व, रथ और धनवाले हो। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य तृतीये एकादशो वर्गः ॥ ११ ॥

ब्रह्माणइन्द्रेति पंचर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं ब्रह्माणइत्यनुक्रान्तं महाव्रते निष्केवल्ये पंचमत्वेनास्य सूक्तस्य विनियोगउक्तः अष्टमेहनि प्रउगशस्त्रे आद्यस्तृचऐन्द्रः।

ब्रह्मा॑णइन्द्रोप॑याहिवि॒द्वान॒र्वाञ्च॑स्ते॒हर॑यःसन्तुयुक्ताः।
विश्वे॑चि॒द्धित्वा॑वि॒हव॑न्त॒मर्ता॑अ॒स्माक॒मिच्छृ॑णुहि॒विश्वमिन्व ॥१॥

ब्रह्म॑। न॒ः। इ॒न्द्र॒। उप॑। या॒हि॒। वि॒द्वान्। अ॒र्वाञ्चः॑। ते॒।
हर॑यः। स॒न्तु॒। यु॒क्ताः। विश्वे॑। चि॒त्। हि। त्वा॒। वि॒ऽहव॑न्त।
मर्ताः॑। अ॒स्माक॑म्। इत्। शृ॒णु॒हि॒। वि॒श्व॒म्ऽइ॒न्व॒ ॥ १ ॥

हे इन्द्र त्वं विद्वान् जानन् नोस्माकं ब्रह्म स्तोत्रं उपयाहि ते तव हरयोश्वाश्चार्वांचोस्मदभिमुखा युक्ताः सन्तु। हे विश्वमिन्व विश्वप्रीणयितरिन्द्र त्वा त्वां विश्वे सर्वे मर्ता मनुष्याः चिद्धि यद्यपि विहवंत पृथक् हवन्ते तथाप्यस्माकमित् अस्माकमेव हवं शृणुहि शृणु ॥१॥

१. इन्द्र, तुम जानकर हमारे स्तोत्र की ओर आओ। तुम्हारे घोड़े हमारे सामने जोते जायँ। सबके हर्षकारी इन्द्र, यद्यपि अलग-अलग सारे मनुष्य तुम्हें बुलाते हैं, तथापि तुम हमारा ही आह्वान सुनते हो।

हवं॑तइन्द्रमहि॒मा व्या॑न॒ड्ब्रह्म॒यत्पासि॑शवसि॒न्नृषी॑णाम्।
आयद्वज्रं॑दधि॒षेहस्त॑उग्रघो॒रःसन्क्रत्वा॑जनिष्ठा॒अषा॑ळ्हः ॥ २॥

हव॑म्। ते॒। इ॒न्द्र॒। म॒हि॒मा। वि। आ॒न॒ट्। ब्रह्म॑। यत्। पासि॑।
श॒व॒सि॒न्। ऋषी॑णाम्। आ। यत्। वज्र॑म्। द॒धि॒षे। हस्ते॑।
उ॒ग्र॒। घो॒रः। सन्। क्रत्वा॑। ज॒नि॒ष्ठा॒ः। अषा॑ळ्हः ॥ २ ॥

हे शवसिन् बलवन्निन्द्र यद्यदा ऋषीणां ब्रह्म स्तोत्रं पासि रक्षसि स्तोत्रस्य रक्षणं नाम फलप्रदानं तदा ते तव महिमा हवं हवः स्तोता तं व्यानट् व्याप्नोतु। हे उग्र ओजस्विन्निन्द्र यद्यदा हस्ते पाणौ वज्रमादधिषे धारयसि तदा क्रत्वा शत्रुवधादिना कर्मणा घोरः सन् अषाळ्हः शत्रुभिरनभिभूतोजनिष्ठाः अजनिष्ठाः अभवः ॥ २ ॥

२. बली इन्द्र, जिस समय तुम ऋषियों के स्तोत्रों की रक्षा करते हो, उस समय तुम्हारी महिमा स्तोता को व्याप्त करे। ओजस्वी इन्द्र, जिस समय हाथ में वज्र धारण करते हो, उस मसय कर्म-द्वारा भयङ्कर होकर शत्रुओं के लिए दुर्द्धर्ष हो जाते हो।

तव॒प्रणी॑तीन्द्र॒जोहु॑वाना॒न्त्संयन्नॄन्नरोद॑सीनि॒नेथ॑।
म॒हेक्ष॒त्रायश॒व॑से॒हिज॒ज्ञेतूतु॑जिंचि॒त्तूतु॑जिरशिश्नत् ॥ ३ ॥

तव॑ । प्रऽनी॑ती । इ॒न्द्र॒ । जोहु॑वानान् । सम् । यत् । नॄन् ।

न । रोद॑सी॒ इति॑ । नि॒नेथ॑ । म॒हे । क्ष॒त्राय॑ । शव॑से । हि । ज॒ज्ञे ।

अतू॑तुजिम् । चि॒त् । तूतु॑जिः । अ॒शि॒श्न॒त् ॥ ३ ॥

हे इन्द्र यद्यस्त्वं तव प्रणीती प्रणीत्या प्रणयनेन जोहुवानान् भृशंस्तुवतोनॄन् स्तोतॄनिव रोदसी द्यावापृथिव्यौ सन्निनेथ संगमयसि दिवि पृथिव्यां च स्तोतॄन्प्रतिष्ठापयसीत्यर्थः। सत्वं महे महते क्षत्राय धनाय रयिः क्षत्रमिति धननामसु पाठात् शवसे बलाय च यजमानेभ्योमहद्धनं बलं च दातुमित्यर्थः जज्ञे जज्ञिषे । हीति हेत्वर्थे यतएवमतः कारणात् अतूतुजिं अदातारं अयजमानं तूतुजिः दाता यजमानः अशिश्नत् श्नथतिर्हिंसाकर्मा तस्माल्लडर्थेलुङ् हिनस्ति चिदित्येवकारार्थे ॥ ३ ॥

३. इन्द्र, तुम्हारे उपदेश के अनुसार जो लोग बार-बार स्तव करते हैं, उन्हें द्युलोक और भूलोक में सुप्रतिष्ठित करते हो। तुम महाबल और महाधन के लिए उत्पन्न हुए हो; इसलिए जो तुम्हारे उद्देश्य से यज्ञ करता है, वह अयाज्ञिकों को मारने में समर्थ होता है।

ए॒भिर्न॑इन्द्राह॑भिर्दशस्यदु॒र्मि॒त्रासो॒हिक्षि॒तय॒ःपव॑न्ते ।

प्रति॒यच्चष्टे॒अनृ॑तमने॒नाअव॑द्वि॒तावरु॑णोमा॒यीनः॑सात् ॥ ४ ॥

ए॒भिः । नः॒ । इ॒न्द्र॒ । अह॑ऽभिः । द॒श॒स्य॒ । दुः॒ऽमि॒त्रासः॑ ।

हि । क्षि॒तयः॑ । पव॑न्ते । प्रति॑ । यत् । चष्टे॑ । अनृ॑तम् ।

अ॒ने॒नाः । अव॑ । द्वि॒ता । वरु॑णः । मा॒यी । नः॒ । सा॒त् ॥ ४ ॥

हे इन्द्र दुर्मित्रासो दुष्टमित्रभूता बाधकाः क्षितयोजनाः पवन्ते अभिगच्छन्ते । हिः पूरणः पवतिर्गतिकर्मा तेभ्योधनमाच्छिद्य नोस्मभ्यं एभिः सात्विकैः अहभिरहोभिर्दशस्य देहि किंच अनेनाः एनसां निहन्ता मायी प्रज्ञावान् वरुणोयदनृतं नोस्मासु प्रतिचष्टे अभिपश्यति तदनृतं । हे इन्द्र त्वत्प्रसादात् द्विता द्विधा अवसात् अवस्यतु विमोचयतु । तथाचयास्कः—स्यतिरुपसृष्टोविमोचनइति ॥ ४ ॥

४. इन्द्र, दुष्ट मित्रभूत मनुष्य आते हैं। उनसे धन लेकर इन सारे दिनों में हमें दान करो। पाप-घातक और बुद्धिमान् वरुण हमारे सम्बन्ध में जो पाप देख पावें, उसे दो तरह से छुड़ावें।

वो॒चेमेदिन्द्रं॑म॒घवा॑नमेनं॑म॒हो॒रा॒योराध॑सो॒यद्दद॑न्नः ।

योअर्च॑तो॒ब्रह्म॑कृति॒मवि॑ष्ठोयू॒यंपा॑तस्व॒स्तिभि॒ःसदा॑नः ॥५॥१२॥

वो॒चेम॑ । इत् । इन्द्र॑म् । म॒घऽवा॑नम् । ए॒न॒म् । म॒हः । रा॒यः ।

राध॑सः । यत् । दद॑त् । नः॒ । यः । अर्च॑तः । ब्रह्म॑ऽकृतिम् ।

अवि॑ष्ठः । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ५ ॥ १२ ॥

यत् इन्द्रो महो महतो राधसः संराधकस्य रायो धनस्य द्वितीयार्थेषष्ठी संराधकं महद्धनं नोस्मभ्यं ददत् प्रायच्छत्। यश्चेन्द्रःअर्चतः स्तुवतोब्रह्मकृतिं क्रियमाणं ब्रह्मस्तोत्रं अविष्ठोतिशयेन रक्षिता गन्ता भवति। तमेनं मघवानं धनवन्तमिन्द्रं वोचेमेत् स्तुवेमैव। स्पष्टमन्यत् ॥ ५ ॥

५. जिन इन्द्र ने हमें भली भाँति आराध्य महाधन दिया है और जो स्तोता के स्तोत्र-कार्य की रक्षा करते हैं, उस धनी इन्द्र की हम स्तुति करते हैं। तुम हमें सदा स्वति-द्वारा पालन करो।

॥ इति पंचमस्य तृतीये द्वादशो वर्गः ॥ १२ ॥

अयं सोमइन्द्रेति पंचर्चं द्वादशंसूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं। अयंसोमइत्यनुक्रान्तं। व्यूढ्ळेदशरात्रे नवमेहनि अयंसोमइन्द्रेति प्रउगशस्त्रे ऐन्द्रस्तृचः सूत्रितंच—अयंसोमइन्द्रतुभ्यं-सुन्वआतु प्रब्रह्माणइति षोडशिशस्त्रे ब्रह्मन्वीरइत्येषा त्रिष्टुप् सूत्रितंच—ब्रह्मन्वीरब्रह्मकृतिजुषाण-इतित्रिष्टुबिति।

अयंसोमइन्द्रतुभ्यंसुन्वआतुप्रयाहिहरिवस्तदोकाः।
पिबात्वं१स्यसुषुतस्यचारोर्ददोमघानिमघवन्नियानः ॥ १ ॥

अयम्। सोमः। इन्द्र। तुभ्यम् सुन्वे। आ। तु। प्र। याहि।
हरिऽवः। तत्ऽओकाः। पिब। तु। अस्य। सुऽसुतस्य। चारोः।
ददः। मघानि। मघऽवन्। इयानः ॥ १ ॥

हे इन्द्र तुभ्यं त्वदर्थमयमेषसोमः सुन्वे अभिषुतोभवत् हे हरिवन्निन्द्र तदोकाः तत् सेवनीयोयस्यासौ तदोकाः तु क्षिप्रं आ प्रयाहि सुषुतस्य सम्यगभिषुतस्य चारोः शोभनस्यास्य द्वितीयार्थेषष्ठी सम्यगभिषुतं शोभनमित्यर्थः तु क्षिप्रं पिब च। अपि च हे मघवन् इयानः उपगम्यमानोयाच्यमानोवा त्वं मघानि धनानि ददः अस्मभ्यं देहि ॥ १ ॥

१. इन्द्र, तुम्हारे लिए यह सोम अभिषुत हुआ है। हरि अश्ववाले इन्द्र, उस सोम की सेवा के लिए तुरत आओ। भली भाँति अभिषुत चारु सोम का पान करो। इन्द्र, हम याचना करते हैं, हमें धन दो।

अथ द्वितीया—

ब्रह्मन्वीरब्रह्मकृतिंजुषाणोर्वाचीनोहरिभिर्याहितूयम्।
अस्मिन्नूषुसवनेमादयस्वोपब्रह्माणिशृणवइमानः ॥ २ ॥

ब्रह्मन्। वीर। ब्रह्मऽकृतिम्। जुषाणः। अर्वाचीनः। हरिऽभिः॥
याहि। तूयम्। अस्मिन्। ऊँ इति। सु। सवने। मादयस्व।
उप। ब्रह्माणि। शृणवः। इमा। नः ॥ २ ॥

हे ब्रह्मन् परिवृढ वीरेन्द्र ब्रह्मकृतिं क्रियमाणं स्तोत्रं जुषाणः सेवमानः अर्वाचीनोस्मदभिमुखः सन् हरिभिरश्वैस्तूयं क्षिप्रं याहि अस्मिन्नु अस्मिन्नेव सवने यज्ञे सु सुष्ठु मादयस्व च। नोस्मदीयानि इमा इमानि ब्रह्माणि स्तोत्राणि चोपश्रृणवः उपश्रृणु ॥ २ ॥

२. हे ब्रह्मन् और वीर इन्द्र, स्तोत्र-कार्य का सेवन करते हुए अश्वों पर सवार होकर शीघ्र हमारी ओर आओ। इस यज्ञ में ही भली भाँति प्रसन्न होओ। हमारे इन स्तोत्रों को सुनो।

**कार्तेअस्त्यरंकृतिःसूक्तैःकदानूनंतेमघवन्दाशेम।**
**विश्वामतीराततनेत्वायाधामइन्द्रश्रृणवोहवेमा ॥ ३ ॥**

का। ते। अस्ति। अरम्ऽकृतिः। सुऽउक्तैः। कदा। नूनम्।
ते। मघऽवन्। दाशेम। विश्वाः। मतीः। आ। ततने।
त्वाऽया। अध। मे। इन्द्र। श्रृणवः। हवा। इमा ॥ ३ ॥

हे इन्द्र ते तव सूक्तैरस्माभिः क्रियमाणैः स्तोत्रैः अरंकृतिः अलंकृतिः कास्ति कीदृशीभवति हे मघवन् ते तव कदा नूनं कदा खलु दाशेम प्रीतिमुत्पादयेम त्वाया त्वत्कामनयैव विश्वाः मतीः सर्वाः स्तुतीराततने करोमि। अध अतः कारणात् हे इन्द्र मे मदीयानि इमा इमानि हवा हवानि स्तोत्राणि श्रृणु ॥ ३ ॥

३. इन्द्र, हम जो सूक्तों-द्वारा तुम्हारी स्तुति करते हैं, उससे कैसी अलंकृति (शोभा) होती है? हम कब तुम्हारी प्रसन्नता उत्पन्न करें? तुम्हारी अभिलाषा से ही मैं सारी स्तुति करता हूँ; इसलिए, हे इन्द्र, मेरी ये स्तुतियाँ सुनो।

**उतोघातेपुरुष्याइदासन्येषांपूर्वेषामश्रृणोर्ऋषीणाम्।**
**अधाहंत्वामघवञ्जोहवीमित्वंनइन्द्रासिप्रमतिःपितेव ॥ ४ ॥**

उतो इति। घ। ते। पुरुष्याः। इत्। आसन्। येषाम्।
पूर्वेषाम्। अश्रृणोः। ऋषीणाम्। अध। अहम्। त्वा। मघऽवन्।
जोहवीमि। त्वम्। नः। इन्द्र। असि। प्रऽमतिः। पिताऽइव ॥ ४ ॥

उतो अपि च घेति पूरणः हे मघवन् येषां पूर्वेषामृषीणां स्तुतीरश्रृणोः ते पूर्वे ऋषयः पुरुष्याइत् पुरुषेभ्योहिताएवासन् अध अथोहं त्वा त्वां जोहवीमि भृशं स्तौमि अपि च हे इन्द्र त्वं नोस्माकं पितेव जनकइव प्रमतिः बन्धुरसि ॥ ४ ॥

४. इन्द्र, तुमने जिन सब ऋषियों की स्तुति सुनी है, वे प्राचीन ऋषि लोग मनुष्यों के हितैषी थे। फलतः मैं तुम्हारा बार-बार आह्वान करता हूँ। इन्द्र, पिता की तरह तुम हमारे हितैषी हो।

अथ पंचमी–

वोचेमेदिन्द्रंमघवानमेनंमहोरायोराधसोयद्ददन्नः ।
योअर्चतोब्रह्मकृतिमविष्ठोयूयंपातस्वस्तिभिःसदानः ॥ ५॥१३॥

वोचेम । इत् । इन्द्रम् । मघऽवानम् । एनम् । महः । रायः ।
राधसः । यत् । ददत् । नः । यः । अर्चतः । ब्रह्मऽकृतिम् । अविष्ठः ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥१३ ॥

इयंव्याख्यातचरा ॥५॥

५. जिन इन्द्र ने हमें भली भाँति आराध्य महाधन दिया है और जो स्तोता के स्तोत्रकार्य की रक्षा करते हैं, उन धनी इन्द्र की हम स्तुति करते हैं। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य तृतीये त्रयोदशो वर्गः ॥१३ ॥

आनोदेवेति पंचर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं । आनोदेवेत्यनुक्रान्तं । प्रथमेछन्दोमे प्रउगशस्त्रे आनइत्ययमैन्द्रस्तृचः सूत्र्यतेहि–आनोदेवशवसायाहिशुष्मिन् प्रवोयज्ञेषुदेवयन्तोअर्चन्निति ।

आनोदेवशवसायाहिशुष्मिन्भवावृधइन्द्ररायोअस्य ।
महेनृम्णायनृपतेसुवज्रमहिक्षत्रायपौंस्यायशूर ॥ १ ॥

आ । नः । देव । शवसा । याहि । शुष्मिन् । भव । वृधः । इन्द्र ।
रायः । अस्य । महे । नृम्णाय । नृऽपते । सुऽवज्र । महि ।
क्षत्राय । पौंस्याय । शूर ॥ १ ॥

हे देव द्योतमान शुष्मिन् बलवन्निन्द्र नोस्मान् शवसा बलेन सार्धमायाहि । अस्यास्मभ्यं देयस्य रायोधनस्यवृधो वर्धयिता च भव । हे नृपते सुवज्र महे महते नृम्णाय बलाय च भव। बाधः नृम्णमिति बलनामसु पाठात्। हे शूर महि महते क्षत्राय शत्रूणां हिंसकाय क्षदिर्हिंसाकर्मा पौंस्याय वीर्याय च भव ॥ १ ॥

१. बली और ज्योतिष्मान् इन्द्र, बल के साथ हमारे पास आओ। हमारे धन के वर्द्धक बनो। सुवज्र और नृपति इन्द्र, महाबली होओ और शत्रुमारक महापुरुषत्व प्राप्त करो।

हवन्तउत्वाहव्यंविवाचितनूषुशूराःसूर्यस्यसातौ ।
त्वंविश्वेषुसेन्योजनेषुत्वंवृत्राणिरन्धयासुहन्तु ॥ २ ॥

हवन्ते । ऊँ इति । त्वा । हव्यम् । विऽवाचि । तनूषु । शूराः ।
सूर्यस्य । सातौ । त्वम् । विश्वेषु । सेन्यः । जनेषु । त्वम् । वृत्राणि ।
रन्धय । सुऽहन्तु ॥ २ ॥

हे इन्द्र हव्यं ह्वातव्यं त्वा त्वां विवाचि विविधावाचोयस्मिन् प्रादुर्भवन्ति तस्मिन् युद्धे शूराः पुरुषाः तनूष्वंगेषु रक्षणीयासु सूर्यस्य सातौ संभजने सरति गच्छतीत्यायुरत्रसूर्यः विवक्षितः तस्य चिरकालं प्राप्त्यर्थं हवन्ते ह्वयन्ति । उः पूरणः । विश्वेषु सर्वेषु जनेषु त्वमेव सेन्यः सेनार्होसि । अपि च त्वं वृत्राणि शत्रून् सुहन्तु सुहन्तुनाम्ना वज्रेण रन्धय अस्मभ्यं वशीकुरु॥२॥

२. इन्द्र, तुम आह्वान के योग्य हो। महाकोलाहल के समय शरीर-रक्षा के लिए और सूर्य को पाने के लिए लोग तुम्हें बुलाते हैं। सब मनुष्यों में तुम्हीं सेना के योग्य हो। सुहन्त नाम के वज्र-द्वारा शत्रुओं को हमारे अधिकार में करो।

अहायदिन्द्रसुदिनाव्युच्छान्दधोयत्केतुमुपमंसमत्सु ।
न्यग्निःसीददसुरोनहोताहुवानोअत्रसुभगायदेवान् ॥ ३ ॥

अहा । यत् । इन्द्र । सुऽदिना । विऽउच्छान् । दधः । यत् ।
केतुम् । उपऽमम् । समत्ऽसु । नि । अग्निः । सीदत् । असुरः ।
न । होता । हुवानः । अत्र । सुऽभगाय । देवान् ॥ ३ ॥

हे इन्द्र यद्यदा अहा अहानि सुदिना सुदिनानि व्युच्छान् व्युच्छेयुः यद्यदा च समत्सु संग्रामेषु केतुं ज्ञानमुपमं अन्तिकं दधः धारयेः तदा नेति संप्रत्यर्थे असुरोबलवान् होता देवानामाह्वाताग्निः सुभगायास्माकं शोभनधनप्राप्तये देवान् हुवानो ह्वयन् अत्रास्मिन्यज्ञे निषीदत् न्यसीदत् ॥ ३ ॥

३. इन्द्र, जब दिन अच्छे होते हैं, जब तुम अपने को युद्ध के समीपवर्त्ती जानते हो, तब होताग्नि, हमें उत्तम धन देने के लिए, देवों को बुलाते हुए, इस यज्ञ में बैठते हैं।

वयंतेतइन्द्रयेचदेवस्तवन्तशूरददतोमघानि ।
यच्छासूरिभ्यउपमंवरूथंस्वाभुवोजरणामश्नवन्त ॥ ४ ॥

वयम् । ते । ते । इन्द्र । ये । च । देव । स्तवन्त । शूर । ददतः ।
मघानि । यच्छ । सूरिऽभ्यः । उपऽमम् । वरूथम् । सुऽआभुवः ।
जरणाम् । अश्नवन्त ॥ ४ ॥

हे देव शूरेन्द्र ते तव वयं वसिष्ठाः स्वभूता ये जनाः मदीयपुत्रपौत्रादयो मघानि मंहनीयानि हवींषि ददतः प्रयच्छन्तः स्तवन्त स्तुवन्ति तेपि तव स्वभूताः तेभ्यः उभयेभ्यः सू-

रिभ्यः स्तोतृभ्यः उपमं श्रेष्ठं वरूथं गृहं यच्छ प्रयच्छ अपि च ते उभे स्वाभुवः सुसमृद्धाः सन्तः जरणां जरां अश्नवन्त प्राप्नुवन्तु ॥ ४ ॥

४. इन्द्र, हम तुम्हारे हैं। जो तुम्हें पूजनीय हव्य देते हुए स्तुति करते हैं, वे भी तुम्हारे ही हैं। उन्हें श्रेष्ठ गृह दो। वे सुसमृद्ध होकर बूढ़े होने पावें।

वोचेमेदिन्द्रं॑मघवा॑नमेनं॑म॒हो॒रा॒योराध॑सो॒यद्दद॑न्नः।
योअर्च॑तो॒ब्रह्म॑कृति॒मवि॑ष्ठोयू॒यंपा॑तस्व॒स्तिभिः॒सदा॑नः ॥५॥१४॥

वो॒चेम॑। इत्। इन्द्र॑म्। म॒घऽवा॑नम्। ए॒न॒म्। म॒हः। रा॒यः। राध॑सः। यत्। दद॑त्। नः॒। यः। अर्च॑तः। ब्रह्म॑ऽकृतिम्। अवि॑ष्ठः। यू॒यम्। पा॒त॒। स्व॒स्तिऽभिः॑। सदा॑। नः॒॥ ५॥ १४॥

एषासिद्धा ॥ ५ ॥

५. जिन इन्द्र ने हमें भली भाँति आराध्य महाधन दिया है और जो स्तोता के स्तोत्र-कार्य की रक्षा करते हैं, उन्हीं धनी इन्द्र की हम स्तुति करते हैं। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य तृतीये चतुर्दशो वर्गः ॥ १४ ॥

प्रवइन्द्रायेति द्वादशर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षंत्रैष्टुभमैन्द्रं दशम्याद्यास्तिस्रोविराजः शिष्टागायत्र्यः तथाचानुक्रान्तं—प्रवोद्वादशगायत्रं त्रिविराळन्तमिति। सूक्तविनियोगोलैंगिकः। प्रथमेरात्रिपर्याये मैत्रावरुणशस्त्रे प्रवइन्द्रायेत्याद्यस्तृचः स्तोत्रियः। सूत्रितं च—प्रवइन्द्रायमादनं प्रकृतान्यृजीषिणइति। अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे वयमिन्द्रत्वायवोभीत्यनुरूपस्तृचः तथा च सूत्रितं—वयमिन्द्रत्वायवोभिवार्त्रहत्यायेत्युत्तमामुद्धरेदिति। चतुर्थेहनि माध्यंदिनसवने होत्रकशस्त्रे आरंभणीयाभ्यऊर्ध्वंवैराजकएकस्तृचआहवनीयःतदर्थाः प्रवोमहे महिवृधे भरध्वमित्याद्यास्तिस्रः सूत्रितं च—प्रवोमहेमहिवृधेभरध्वमिति चतस्रस्तिस्रश्च विराजइति।

प्रवइन्द्रा॑यमाद॑नं॒हर्य॑श्वायगायत। सखा॑यःसोम॒पाव्ने॑ ॥ १॥

प्र। वः॒। इन्द्रा॑य। माद॑नम्। हरि॑ऽअश्वाय। गा॒य॒त॒। सखा॑यः। सो॒म॒ऽपाव्ने॑ ॥ १॥

हे सखायो वोयूयं हर्यश्वाय सोमपाव्ने सोमानां पात्रे इन्द्राय मादनं मदकरं स्तोत्रं प्रगायत ॥ १ ॥

१. सखा लोग, तुम लोग हर्यश्व और सोमपायी इन्द्र के लिए मदकर स्तोत्र गाओ।

अथ द्वितीया—

शंसेदुक्थंसुदानवउतद्युक्षंयथानरः । चकृमासत्यराधसे ॥ २ ॥

शंस । इत् । उक्थम् । सुऽदानवे । उत । द्युक्षम् । यथा । नरः ।
चकृम । सत्यऽराधसे ॥ २ ॥

उतापि च हे स्तोतः सुदानवे शोभनदानाय सत्यराधसे सत्यधनायेन्द्राय उक्थं स्तोमं यथा नरोन्ये स्तोतारः द्युक्षं दीप्तेः साधनभूतं स्तोत्रं शंसन्ति तद्वत् त्वमपि शंस उच्चारय । इ-दितिपूरणः वयं चकृम स्तोत्रं करवाम ॥ २ ॥

२. शोभन-दानी और सत्यधन इन्द्र के लिए जैसे स्तोता दीप्त स्तोत्र पाठ करता है, वैसे ही तुम भी करो; हम भी करेंगे।

त्वंनइन्द्रवाजयुस्त्वंगव्युःशतक्रतो । त्वंहिरण्ययुर्वसो ॥ ३ ॥

त्वम् । नः । इन्द्र । वाजऽयुः । त्वम् । गव्युः । शतक्रतो इति
शतऽक्रतो । त्वम् । हिरण्यऽयुः । वसो इति ॥ ३ ॥

हे इन्द्र त्वं नोस्माकं वाजयुरन्नकामो भव हे शतक्रतो त्वं नोस्माकं गव्युर्गोकामोभव हे वसो वासयितरिन्द्र त्वं हिरण्ययुः हिरण्यकामोपि भव । छन्दसि परेच्छायामपिदृश्यते क्य-जितिक्यच् ॥ ३ ॥

३. इन्द्र, तुम हमारे लिए अन्नाभिलाषी होओ। सौ यज्ञ करनेवाले इन्द्र, तुम हमारे लिए गो-कामी होओ। हे वास-दाता इन्द्र, तुम हिरण्य-दाता होओ।

अथ चतुर्थी—

वयमिन्द्रत्वायवोभिप्रणोनुमोवृषन् । विद्धीत्वस्यनोवसो ॥ ४ ॥

वयम् । इन्द्र । त्वाऽयवः । अभि । प्र । नोनुमः । वृषन् । विद्धि ।
तु । अस्य । नः । वसो इति ॥ ४ ॥

हे वृषन् कामानां वर्षितरिन्द्र त्वायवः त्वत्कामाः वयं वसिष्ठाः त्वामभि प्रणोनुमः प्रकर्षे-ण स्तुमः। हे वसो वासयितरिन्द्र अस्य इदं नः अस्मदीयं स्तोत्रं तु क्षिप्रं विद्धि अवधारय॥४॥

४. अभीष्ट-वर्षक इन्द्र, तुम्हारी इच्छा करके हम विशेष रूप से स्तुति करते हैं। वासप्रद इन्द्र, तुम शीघ्र हमारी स्तुति का अवधारण करो।

अथ पञ्चमी—

मानोनिदेचवक्तवेर्योरन्धीरराव्णे । त्वेअपिक्रतुर्मम ॥ ५ ॥

मा । नः । निदे । च । वक्तवे । अर्यः । रन्धीः । अराव्णे ।
त्वे इति । अपि । क्रतुः । मम ॥ ५ ॥

हे इन्द्र अर्यः स्वामी त्वं वक्तवे परुषवाक्यानां वक्के निदे निन्दित्रे अराव्णे अदात्रे च नोस्मान् मारन्धीः वशं माकार्षीः । अपि अपिच ते त्वयि मम क्रतुः मदीयं स्तोत्रलक्षणं कर्म गच्छत्वितिशेषः अस्मदीयं स्तोत्रं भवच्चित्ते प्रविशत्वित्यर्थः ॥ ५ ॥

५. आर्य इन्द्र, जो कठोर वचन बोलता है जो निन्दा करता है और जो दान नहीं करता, उसके वश में हमें नहीं करना। मेरा स्तोत्र तुम्हारे ही पास जाय।

त्वंवर्मासिसप्रथःपुरोयोधश्चवृत्रहन् । त्वयाप्रतिब्रुवेयुजा॥६॥१५॥

त्वम् । वर्म । असि । सऽप्रथः । पुरःऽयोधः । च । वृत्रऽहन् ।

त्वया । प्रति । ब्रुवे । युजा ॥ ६ ॥१५॥

हे वृत्रहन् शत्रूणां हिंसकेन्द्र त्वं वर्म अस्माकं कवचमसि कवचवद्रक्षकोसीत्यर्थः। सप्रथः सर्वतः पृथुश्चासि पुरोयोधश्च पुरोयोद्धाचासि त्वया युजा त्वया सहायेन प्रति ब्रुवे शत्रून् प्रति ब्रवीमि प्रतिहन्मीत्यर्थः ॥ ६ ॥

६. वृत्रघातक इन्द्र, तुम हमारे कवच हो। तुम सर्वत्र प्रसिद्ध हो। तुम सम्मुख युद्ध करनेवाले हो। तुम्हारी सहायता से मैं वत्रु-वध करूँगा। ॥ इति पंचमस्य तृतीये पंचदशो वर्गः ॥१५॥

अथ सप्तमी—

महाँउतासियस्यतेनुस्वधावरीसहः । मम्नातेइन्द्ररोदसी ॥ ७ ॥

महान् । उत । असि । यस्य । ते । अनु । स्वधावरी इति स्वधाऽवरी

सहः । मम्नाते इति । इन्द्र । रोदसी इति ॥ ७ ॥

उतापिच हे इन्द्र त्वं महानसि सर्वाधिकोसि हे इन्द्र यस्य ते तव सहो बलं स्वधावरी-अन्नवत्यौ रोदसी द्यावापृथिव्यौ अनुमम्नाते अनुमन्येते। त्वदीयं सहः सर्वाधिकमित्यत्रोभा-वपि लोकौ विसंवादं न कुरुत इत्यर्थः ॥ ७ ॥

७. अन्नवाली द्यावापृथिवी को जिन इन्द्र के बल का लोहा मानना है, वह तुम इन्द्र, महान् हुए हो।

तंत्वामरुत्वतीपरिभुवद्वाणीसयावरी । नक्षमाणासहद्युभिः ॥ ८ ॥

तम् । त्वा । मरुत्वती । परि । भुवत् । वाणी । सऽयावरी ।

नक्षमाणा । सह । द्युऽभिः ॥ ८ ॥

हे इन्द्र तमुक्तगुणविशिष्टं त्वा त्वां सयावरी त्वयासहगंत्री यत्रयत्र त्वं यासि तत्रतत्र यांतीत्यर्थः द्युभिस्तेजोभिः सह नक्षमाणा व्याप्नुवन्ती मरुत्वती मरुतः स्तोतारः तद्वती वाणी स्तुतिः परिभुवत् परिभवतु परिभवतिरत्रपरिग्रहार्थीयः परिगृह्णात्वित्यर्थः ॥ ८ ॥

८. इन्द्र, तुम्हारी सहचरी, तेजोयुक्त और स्तोतृ-सम्पन्ना स्तुति तुम्हें चारों ओर से ग्रहण करे।

अथ नवमी—

ऊर्ध्वासस्त्वान्विन्दवोभुवन्दस्ममुपद्यवि । सन्तेनमन्तकृष्टयः ॥ ९ ॥

ऊर्ध्वासः । त्वा । अनु । इन्दवः । भुवन् । दस्मम् । उप । द्यवि ।
सम् । ते । नमन्त । कृष्टयः ॥ ९ ॥

हे इन्द्र उपद्यवि द्युलोकसमीपे स्थितं दस्मं दर्शनीयं त्वा त्वां अनूद्दिश्य ऊर्ध्वासः ऊर्ध्वा इन्दवःअस्मदीयाः सोमाः भुवन् भवन्ति । कृष्टयः प्रजाश्च ते तुभ्यं सन्नमन्त । भुवि सोमास्त्वदर्थमेव जायन्ते । प्रजाश्च त्वामेव प्रणमन्तीतीन्द्रस्तुतिः ॥ ९ ॥

९. तुम स्वर्ग के पास स्थित और दर्शनीय हो। हमारे सब सोम तुम्हारे उद्देश से उद्यत हैं। सती प्रजा तुम्हें नमस्कार करती है।

प्रवोमहेमहिवृधेभरध्वंप्रचेतसेप्रसुमतिंकृणुध्वम् ।
विशःपूर्वीःप्रचराचर्षणिप्राः ॥ १० ॥

प्र । वः । महे । महिऽवृधे । भरध्वम् । प्रऽचेतसे । प्र ।
सुऽमतिम् । कृणुध्वम् । विशः । पूर्वीः । प्र । चर । चर्षणिऽप्राः ॥ १० ॥

हे मदीयाः पुरुषाः वोयूयं महिवृधे महतां धनानां वर्धयित्रे महे महते इन्द्राय प्रभरध्वं सोमान्प्रणयत। प्रचेतसे प्रकृष्टमतये इन्द्राय सुमतिं सुष्टुतिं च प्रकृणुध्वं प्रकुरुत। अथ प्रत्यक्षस्तुतिः हे इन्द्र चर्षणिप्राः कामैः प्रजानां पूरयिता त्वं पूर्वीः हविषां पूरयित्रीर्विशः प्रजाः प्रचर अभिगच्छ ॥ १० ॥

१०. मेरे पुरुषो, तुम महाधन के वर्द्धक हो। महान् इन्द्र के उद्देश से सोम बनाओ। प्रकृष्ट-बुद्धि को लक्ष्य कर प्रहृष्ट स्तुति करो। प्रजाओं के अभिलाषापूरक तुम उन लोगों के अभिमुख आगमन करो, जो तुम्हें हव्य-द्वारा पूर्ण करते हैं। अथैकादशी—

उरुव्यचसेमहिनेसुवृक्तिमिन्द्रायब्रह्मजनयन्तविप्राः ।
तस्यव्रतानिनमिनन्तिधीराः ॥ ११ ॥

उरुऽव्यचसे । महिने । सुऽवृक्तिम् । इन्द्राय । ब्रह्म । जनयन्त ।
विप्राः । तस्य । व्रतानि । न । मिनन्ति । धीराः ॥ ११ ॥

उरुव्यचसे पृथुव्याप्तये महिने महते यस्माइन्द्राय सुवृक्तिं स्तुतिं ब्रह्म अन्नं हविश्च विप्राः प्राज्ञाः जनयन्त जनयन्ति तस्येन्द्रस्य व्रतानि रक्षणादीनि कर्माणि धीराः प्राज्ञाः देवाः अपि न मिनन्ति हिंसन्ति ॥ ११ ॥

११. जो इन्द्र अतीव व्यापक और महान् हैं, उन्हें लक्ष्य कर मेधावी

लोग स्तुति और हव्य का उत्पादन करते हैं। उन इन्द्र के व्रत आदि कर्मों को धीर लोग हिंसित नहीं कर सकते।

इन्द्रंवाणीरनुत्तमन्युमेवसत्राराजानंदधिरेसहध्यै।
हर्यश्वायबर्हयासमापीन् ॥ १२ ॥ ॥१६ ॥

इन्द्रम्। वाणीः। अनुत्तऽमन्युम्। एव। सत्रा। राजानम्। दधिरे। सहध्यै। हरिऽअश्वाय। बर्हय। सम्। आपीन् ॥ १२ ॥ १६ ॥

सत्रा राजानं सर्वतः जगतईश्वरं अनुत्तमन्युंकेनाप्यनुत्तोबाधितोमन्युः क्रोधो यस्य तमेवेन्द्रं वाणीः स्तुतयः सहध्यै स्तोत्राणि शत्रूणां अभिभवितुं दधिरे। अतोहेतोः हे स्तोतः त्वमपि हर्यश्वायेन्द्राय हर्यश्वमिन्द्रं स्तोतुमित्यर्थः आपीन् बन्धून् संवर्हय उत्साहय ॥ १२ ॥

१२. सब प्रकार से सारे जगत् के ईश्वर और अबाधित क्रोध इन्द्र की सारी स्तुतियां शत्रुओं को दबाने के लिए हैं। इसलिए हे स्तोता, इन्द्र की स्तुति के लिए बन्धुओं को उत्साहित करो।

॥ इति पंचमस्य तृतीये षोडशो वर्गः ॥१६॥

मोषुत्वेति सप्तविंशत्यृचं पंचदशं सूक्तं। अत्रेयमनुक्रमणिका—मोषुसप्ताधिका प्रागाथं तृतीया द्विपदा। सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरंत्यां प्रगाथमालेभे सोर्धर्चउक्ते दग्धस्तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकं। वसिष्ठस्यैव हतपुत्रस्यार्षमिति तांडकमिति। मंडलद्रष्टावसिष्ठऋषिः इन्द्रक्रतुंनइति प्रगाथस्यार्धर्चस्य वसिष्ठपुत्रः शक्तिर्वसिष्ठोवा। इन्द्रोदेवता अयुजोबृहत्यः युजः सतोबृहत्यः तृतीयातु द्विपदाविराट् महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तं तत्रद्विपदामभित्वाशूरेत्येतं राथंतरं प्रगाथं नकिःसुदासइति प्रगाथंच वर्जयेत्। तथैव पंचमारण्यके सूत्रितम्—मोषुत्वावाघतश्चनेत्येतस्य द्विपदांचोद्धरति राथंतरंच प्रगाथमथहास्यनकिःसुदासोरथमित्येतं प्रगाथमुद्धृत्य त्वामिदाह्योनर इत्येतं प्रगाथं प्रत्यवदधातीति। चातुर्विंशिकेहनि पंचमेहनिच निष्केवल्ये मोषुत्वावाघतइतिप्रगाथःसद्विपदः सूत्रितंच—मोषुत्वावाघतश्चनेति सद्विपदउपसमस्येद्विपदामिति। चातुर्विंशिकेहनि मरुत्वतीये प्रकृतान्मरुत्वतीयात्प्रगाथादनन्तरं नकिःसुदासइति प्रगाथंशंसेत् पृष्ठ्याभिप्लवषडहयोस्तृतीयेषष्ठेहनिचायंप्रगाथः तथैवसूत्रितं—नकिःसुदासोरथमिति। मरुत्वतीयादूर्ध्वं नित्यादिति एवंस्थितान्प्रगाथान् पृष्ठ्याभिप्लवयोरन्वहं पुनः पुनरावर्तयेयुरिति। अग्निष्टोमे माध्यंदिनसवनेच्छावाकशस्त्रे उदिन्न्वस्यरिच्यतइति प्रगाथः। तथाच सूत्रितम्—उदिन्न्वस्यरिच्यते भूयइदिति। अग्निष्टोमेमाध्यंदिनसवने मैत्रावरुणशस्त्रे कस्तमिन्द्रेति प्रगाथः सूत्रितं च—कस्तमिन्द्रत्वावसुं सद्योहजातइति। चातुर्विंशिकेहनि माध्यंदिनसवने मैत्रावरुणशस्त्रस्यायंप्रगाथः अहर्गणेष्वपि द्वितीयादिष्वहस्सु सूत्रितंच—कस्तमिन्द्रत्वावसुंकन्न-

व्योअतसीनामिति आरंभणीयाः पर्यासान् कद्वतोहरहःशस्यानीति होत्रकाइति । पृष्ठ्यषडहस्य तृतीयेहनि निष्केवल्येवैरूपसामपक्षे यदिन्द्रयावतइत्यनुरूपस्तृचः सूत्रितंच—यदिन्द्रयावतस्त्व-मिति प्रगाथौस्तोत्रियानुरूपाविति ।अग्निष्टोमे चातुर्विंशिकेहनि माध्यंदिनसवनेच्छावाकशस्त्रे तरणिरित्सिषासतीति वैकल्पिकस्तृचः सूत्रितं च—तरोभिर्वोविदद्वसुं तरणिरित्सिषासतीति प्रगा-थौस्तौत्रियानुरूपाविति। अग्निष्टोमे निष्केवल्यशस्त्रे रथंतरसामपक्षे अभित्वाशूरेति प्रगाथःस्तो-त्रियः सूत्रितंच—अभित्वाशूरनोनुमोभित्वापूर्वपीतयइति स्तोत्रियानुरूपाविति । आश्विनशस्त्रे-प्ययंप्रगाथः तथैवसूत्रितं च—अभित्वाशूरनोनुमोबह्वःसूरचक्षसइति प्रगाथाइति । महाव्रते निष्केवल्ये दक्षिणपक्षेयंप्रगाथः तथैवपंचमारण्यकेसूत्रितम्—अभित्वाशूरनोनुमोभित्वापूर्वपी-तयइति रथंतरस्यस्तोत्रियानुरूपौ प्रगाथाविति।आश्विनशस्त्रे इन्द्रक्रतुंनइति प्रगाथः । सूत्रितं च—इन्द्रक्रतुंनआभराभित्वाशूरनोनुमइति । चातुर्विंशेहनि माध्यंदिनेसवने ब्राह्मणाच्छंसि-शस्त्रेऽयं वैकल्पिकः स्तोत्रियःप्रगाथः सूत्रितंच—इन्द्रक्रतुंनआभरेन्द्रज्येष्ठंनआभरेति ।

तत्र प्रथमा—

मोषुत्वावाघतश्चनारेअस्मन्निरीरमन् ।
आरात्ताच्चित्सधमादंनआगहीहवासन्नुपश्रुधि ॥ १ ॥

मो इति । सु । त्वा । वाघतः । चन । आरे । अस्मत् । नि ।
रीरमन् । आरात्तात् । चित् । सधऽमादम् । नः । आ ।
गहि । इह । वा । सन् । उप । श्रुधि ॥ १ ॥

हे इन्द्र त्वा त्वया वाघतश्चन यजमाना अप्येतेस्मदस्मत्त आरे दूरे मोनिरीरमन् न नि-तरां रमयन्तु । अतः त्वं आरात्ताच्चित् दूरेपि वर्तमानोस्मदीयं सधमादं यज्ञमागह्यागच्छ इह वा अत्रापिवा सन् विद्यमानः उपश्रुधि अस्मदीयं स्तोत्रमुपश्रृणु ॥ १ ॥

१. इन्द्र, हमसे दूर ये यजमानगण भी तुम्हारे साथ रमण न करें। तुम दूर रहने पर भी हमारे यज्ञ में आओ। यहाँ आकर श्रवण करो।

अथ द्वितीया—

इमेहितेब्रह्मकृतःसुतेसचामधौनमक्षआसते ।
इन्द्रेकामंजरितारोवसूयवोरथेनपादमादधुः ॥ २ ॥

इमे । हि । ते । ब्रह्मऽकृतः । सुते । सचा । मधौ । न । मक्षः ।
आसते । इन्द्रे । कामम् । जरितारः । वसुऽयवः । रथे ।
न । पादम् । आ । दधुः ॥ २ ॥

हे इन्द्र ते त्वदर्थं सुते अभिषुते सोमे इमे ब्रह्मकृतः मधौन मधुनीव मक्षोमक्षिकाः स-चासह आसते उपविशन्ति हीति प्रसिद्धौ। अथ परोक्षस्तुतिः वसूयवो धनकामाः जरितारः स्तोतारः काममिष्टमिन्द्रे रथे न पादं रथेपादमिव आदधुः समर्पयन्ति ॥ २ ॥

२. जैसे मधु पर मधुमक्षिका बैठती है, वैसे ही स्तोता लोग, तुम्हारे लिए, सोम के तैयार होने पर, बैठते हैं। जैसे रथ पर पैर रक्खा जाता है, वैसे ही धनकामी स्तोता लोग इन्द्र पर स्तुति समर्पण करते हैं।

रायस्कामोवज्रहस्तंसुदक्षिणंपुत्रोनपितरंहुवे ॥ ३ ॥

रायःऽकामः। वज्रऽहस्तम्। सुऽदक्षिणम्।

पुत्रः। न। पितरम्। हुवे ॥ ३ ॥

रायस्कामोधनकामोहं सुदक्षिणं शोभनदानं वज्रहस्तं इन्द्रं पुत्रोन पुत्रइव पितरं हुवे ह्वयामि ॥ ३ ॥

३. जैसे पुत्र पिता को बुलाता है, वैसे ही मैं, धनाभिलाषी होकर, सुन्दर दानवाले इन्द्र को बुलाता हूँ।

इमइन्द्रायसुन्विरेसोमासोदध्याशिरः।

ताँआमदायवज्रहस्तपीतयेहरिभ्यांयाह्योकआ ॥ ४ ॥

इमे। इन्द्राय। सुन्विरे। सोमासः। दधिऽआशिरः। तान्।

आ। मदाय। वज्रऽहस्त। पीतये। हरिऽभ्याम्।

याहि। ओकः। आ ॥ ४ ॥

हे वज्रहस्त दध्याशिरो दधिमिश्रणा इमे सोमासः सोमाः इन्द्राय तुभ्यं सुन्विरे सुता-बभूवुः। तान् सोमान् मदाय मदार्थं पीतये पानाय ओको यज्ञसदनं आअभि हरिभ्यामश्वा-भ्यां आयाहि आगच्छ ॥ ४ ॥

४. दही मिले ये सोम इन्द्र के लिए प्रस्तुत हुए हैं। हे वज्रहस्त इन्द्र, आनन्द के लिए उस सोम-पान के निमित्त, अश्व के साथ, यज्ञ-मण्डप की ओर आओ।

अथ पंचमी—

श्रवच्छ्रुत्कर्णईयतेवसूनांनूचिन्नोमर्धिषद्गिरः।

सद्यश्चिद्यःसहस्राणिशतादददन्नकिर्दित्सन्तमामिनत् ॥ ५ ॥१७॥

श्रवत्। श्रुत्ऽकर्णः। ईयते। वसूनाम्। नु। चित्। नः।

मर्धिषत्। गिरः। सद्यः। चित्। यः। सहस्राणि। शता।

ददत्। नकिः। दित्सन्तम्। आ। मिनत् ॥ ५ ॥ १७ ॥

श्रुत्कर्णं याञ्चाश्रवणरूपकर्णं इन्द्रो वसूनां वसूनि ईयते याच्यते नोस्मदीयाः गिरोयाञ्चावाक्यानि श्रवत् श्रृणोतु नूचित् नैव मार्धिषत् हिनस्तु अश्रवणेन याञ्चावाक्यानि निष्फलानि नकरोत्वित्यर्थः। अपि च यः इन्द्रः सद्यश्चित् सद्यएव याञ्चानन्तरमेव सहस्राणि शतानि च ददत् प्रयच्छेत् दित्सन्तं दातुमिच्छन्तं तमिन्द्रं नकिरामिनत् नहिंस्यात् कश्चिदपि नवारयेदित्यर्थः ॥ ५ ॥

५. याचना सुनने के कर्णवाले इन्द्र के पास हम धन की याचना करते हैं। वे हमारे वाक्य को सुनें, वाक्य निष्फल न करें। जो इन्द्र, याचना करते ही, तुरत सैकड़ों और सहस्रों दान करते हैं, उन दानाभिलाषी इन्द्र को कोई मना न करे।

॥ इति पंचमस्य तृतीये सप्तदशोवर्गः ॥ १७ ॥

सवीरोअप्रतिष्कुतइन्द्रेणशूशुवेनृभिः ।
यस्तेगभीरासवनानिवृत्रहन्त्सुनोत्याचधावति ॥ ६ ॥

सः । वीरः । अप्रतिऽस्कुतः । इन्द्रेण । शूशुवे । नृऽभिः । यः । ते । गभीरा । सवनानि । वृत्रऽहन् । सुनोति । आ । च । धावति ॥ ६ ॥

हे वृत्रहन् ते त्वदर्थं यः पुमान् गभीरा गभीराणि सवनानि सोमान् सुनोति आधावतिच त्वां स्तुतिभिरुपधावतिच सवीरइन्द्रेण हेतुना अप्रतिष्कुतः केनाप्यप्रतिगतः अप्रतिशब्दितोवाभवेत् नृभिः परिचारकैः शूशुवे उपगम्यतेच श्वयतिर्गतिकर्मा ॥ ६ ॥

६. वृत्रघातक इन्द्र, जो तुम्हारे लिए गंभीर सोम का अभिषव करता और तुम्हारा अनुगमन करता है, वह वीर है। उसके विरुद्ध कोई कुछ नहीं बोल सकता। वह परिचारकों के द्वारा घिरा रहता है।

भवावरूथंमघवन्मघोनांयत्समजासिशर्धतः ।
वित्वाहतस्यवेदनंभजेमह्यादूणाशोभरागयम् ॥ ७ ॥

भव । वरूथम् । मघऽवन् । मघोनाम् । यत् । सम्ऽअजासि । शर्धतः । वि । त्वाऽहतस्य । वेदनम् । भजेमहि । आ । दुःऽनशः । भर । गयम् ॥ ७ ॥

हे मघवन् धनवन्निन्द्र मघोनां हविष्मतां वरूथं उपद्रवाणां वारकं वर्म भव यद्यस्त्वं शर्धत उत्सहमानान् शत्रून् समजासि संप्रेरयेः अपि च त्वा हतस्य त्वया हतस्य शत्रोः वेदनं धनं विभजेमहि विशेषेण लभेमहि। किं च दुर्नशोनाशयितुमशक्यस्त्वं गयं गृहं धनं वा आभर अस्मभ्यमाहर ॥ ७ ॥

७. हे धनवान् इन्द्र, तुम हव्यदाताओं के उपद्रव-निवारक वर्म बनो। उत्साही शत्रुओं का विनाश करो। तुमने जिस शत्रु का विनाश किया है, उसका धन हम बाँट लें। तुम्हें कोई विनष्ट नहीं कर सकता। तुम हमारे लिए धन ले आओ।

सुनोतासोमपाव्नेसोममिन्द्रायवज्रिणे ।
पचंतापक्तीरवसेकृणुध्वमित्पृणन्नित्पृणतेमयः ॥ ८ ॥

सुनोत । सोमऽपाव्ने । सोमम् । इन्द्राय । वज्रिणे । पचत । पक्तीः ।
अवसे । कृणुध्वम् । इत् । पृणन् । इत् । पृणते । मयः ॥ ८ ॥

हे मदीयाः पुरुषाः वज्रिणे सोमपाव्ने सोमस्यपात्रे इन्द्राय सोमं सुनोत अभिषुणुत अवसे इन्द्रं तर्पयितुं पक्तीः पक्वव्यान् पुरोडाशादीन् पचत च कृणुध्वमित् इन्द्रप्रियकराणि कर्माणि च कुरुतैव । इन्द्रो हि मयः सुखं पृणन्नित् यजमानाय प्रयच्छन्नेव पृणते हवींषीति शेषः॥८॥

८. मेरे पुरुषो, वज्रधर और सोमपाता इन्द्र के लिए सोम का अभिषव करो। इन्द्र की तृप्ति के लिए पचाये जाने योग्य पुरोडाश आदि पकाओ और किये जाने योग्य कार्य का सम्पादन करो। यजमान को सुख देते हुए इन्द्र हव्य को पूर्ण करते हैं।

मास्रेधतसोमिनोदक्षतामहेकृणुध्वंरायआतुजे ।
तरणिरिज्जयतिक्षेतिपुष्यतिनदेवासःकवत्नवे ॥ ९ ॥

मा । स्रेधत । सोमिनः । दक्षत । महे । कृणुध्वम् । राये । आऽतुजे ।
तरणिः । इत् । जयति । क्षेति । पुष्यति । न । देवासः । कवत्नवे ॥ ९ ॥

हे मदीयाः जनाः सोमिनः सोमवतोयागात् मास्रेधत माहिंसिष्ट । दक्षत यागादिकं कर्तुमुत्सहध्वं च । महे महते आतुजे तुजिर्हिंसाकर्मा दानकर्मा वा शत्रूणामभिहिंसकाय धनानां प्रदात्रेवेन्द्राय राये धनार्थं कृणुध्वं कर्माणि कुरुतच । तरणिरित् कर्मसु त्वरितएव जयति शत्रून् क्षेति गृहे निवसति च पुष्यति प्रजया पशुभिश्च पुष्टो भवति कवत्नवे कुत्सितक्रियायै कवोपसृष्टस्य अतेः सातत्यगमनकर्मणोरूपं कवत्नुरिति । देवासो देवानभवन्तीतिशेषः सुखप्राप्तये भवन्तीत्यर्थः ॥ ९ ॥

९. सोमवाले यज्ञ का विनाश नहीं करना। उत्साही बनो। महान् और रिपुघातक इन्द्र को लक्ष्य करके, धन-प्राप्ति के लिए, कर्म करो। क्षिप्र-कर्त्ता व्यक्ति ही विजय करता, निवास करता और पुष्ट होता है। कुत्सित कर्म-कर्त्ता के देवता नहीं हैं।

नकिःसुदासोरथंपर्यासनरीरमत् ।
इन्द्रोयस्याविितायस्यमरुतोगमत्सगोमतिव्रजे ॥ १० ॥ ॥ १८ ॥

नकिः । सुऽदासः । रथम् । परि । आस । न । रीरमत् । इन्द्रः ।
यस्य । अविता । यस्य । मरुतः । गमत् । सः । गोऽमति । व्रजे १०॥१८

सुदासः शोभनदानस्य यजमानस्य रथं नकिः पर्यास कश्चिन्नपर्यस्यति नरीरमत् नरमयति च आत्मार्थं नकश्चिदेनं गृह्णातीत्यर्थः । अपि च यस्येन्द्रोविता रक्षिता यस्य च मरुतोवितारः सगोमति गोयुक्ते व्रजे गोष्ठे गमत् गच्छेत् ॥ १० ॥

१०. सुन्दर दानवाले व्यक्ति का रथ कोई दूर पर नहीं फेंक सकता और उसे कोई रोक भी नहीं सकता। जिसके रक्षक इन्द्र और मरुद्गण हैं, वह गौओंवाले गोष्ठ में जाता है।

गमद्वाजंवाजयन्निन्द्रमर्त्योयस्यत्वमविताभुवः।
अस्माकंबोध्यवितारथानामस्माकंशूरनृणाम् ॥ ११ ॥

गमत्। वाजम्। वाजयन्। इन्द्र। मर्त्यः। यस्य। त्वम्। अविता। भुवः। अस्माकम्। बोधि। अविता। रथानाम्। अस्माकम्। शूर। नृणाम् ॥ ११ ॥

हे इन्द्र त्वं यस्य मर्त्यस्य अविता रक्षिता भुवः भवेः समर्त्यो वाजयन् स्तोत्रेण त्वां बलिनं कुर्वन् वाजमन्नं गमत् गच्छेत् अपि च हे शूर अस्माकं वासिष्ठानां रथानां अविता रक्षिता बोधि भव भवतेर्लोटिरूपं भकारस्यबकारश्छान्दसः अस्माकं नृणां पुत्रादीनां चाविता भव ॥ ११ ॥

११. इन्द्र, तुम जिस मनुष्य के रक्षक बनोगे, वह स्तोत्र-द्वारा तुम्हें बली करते हुए अन्न प्राप्त करेगा। शूर, हमारे रथ के रक्षक होओ; हमारे पुत्रादि के भी रक्षक होओ।

उदिन्न्वस्यरिच्यतेंशोधनंनजिग्युषः।
यइन्द्रोहरिवान्नदभन्तितंरिपोदक्षंदधातिसोमिनि ॥ १२ ॥

उत्। इत्। नु। अस्य। रिच्यते। अंशः। धनम्। न। जिग्युषः। यः। इन्द्रः। हरिऽवान्। न। दभन्ति। तम्। रिपः। दक्षम्। दधाति। सोमिनि ॥ १२ ॥

अस्येन्द्रस्य अंशो यज्ञे सोमस्य भागोतिरिच्यते अन्येभ्योपि देवेभ्यः इन्द्रस्य त्रिष्वपि सवनेषु सोमपानमस्ति माध्यंदिनं हि सर्वमैन्द्रमिति जिग्युषोजितवतो धनं न धनमिव उदिन्विति त्रयःपूरणाः अपि च योहरिवानिन्द्रः सोमिनि यजमाने दक्षं बलं दधाति संदधाति तं रिपोरिपवोनदभन्ति नहिंसन्ति ॥ १२ ॥

१२. जो हरिवाले इन्द्र सोमवाले यजमान को बल देते हैं, उसे शत्रु नहीं मार सकते। विजयी व्यक्ति की तरह इन्द्र का भाग सभी देवों से बढ़ा-चढ़ा है। अथ त्रयोदशी—

मंत्रमखर्वंसुधितंसुपेशसंदधातयज्ञियेष्वा।
पूर्वीश्चनप्रसितयस्तरन्तितंयइन्द्रेकर्मणाभुवत् ॥ १३ ॥

मन्त्रंम् । अर्खर्वम् । सुऽधिंतम् । सुऽपेशसम् । दधांत । यज्ञियेषु ।
आ । पूर्वीः । चन । प्रऽसिंतयः । तरन्ति । तम् । यः । इन्द्रे ।
कर्मणा । भुवंत् ॥ १३ ॥

हे जनाः अखर्वं अनल्पं सुधितं सुविहितं सुपेशसं शोभनरूपं मंत्रं स्तोत्रं यज्ञियेषु यजनीयेषु देवेषु मध्ये इन्द्राय दधात विधत्त यो जनः कर्मणा स्तुत्यादिरूपेण इन्द्रे इन्द्रस्य चित्ते भुवद् भवेद् तं जनं पूर्वीर्बह्वयः प्रसितयः पाशादीनि बंधनानि चनेति समुदायोनेत्यर्थे वर्तते नतरन्ति नव्याप्नुवन्ति इत्यर्थः ॥ ॥ १३ ॥

१३. देवों में से इन्द्र को ही अनल्प, सुविहित और शोभन स्तोत्र अर्पण करो। जो व्यक्ति कर्मानुष्ठान-द्वारा इन्द्र के चित्त को आकृष्ट कर सकता है, उसके पास अनेकानेक बन्धन नहीं जाते।

कस्तमिन्द्रत्वावंसुमामर्त्यौदधर्षति ।
श्रद्धाइत्तेंमघवन्पार्येदिविवाजीवाजंसिषासति ॥ १४ ॥

कः । तम् । इन्द्र । त्वाऽवंसुम् । आ । मर्त्यः । दधर्षति । श्रद्धा । इत् ।
ते । मघऽवन् । पार्ये । दिवि । वाजी । वाजंम् । सिसासति ॥ १४ ॥

हे इन्द्र तव चित्ते योभवेद् त्वावसुं त्वंवसुर्व्यापकोयस्येति बहुव्रीहिः तं जनं कोमर्त्यआ दधर्षति आधर्षेद् हे मघवन् ते त्वदर्थं यः श्रद्धाइव श्रद्धया युक्तः सन् वाजी हविष्मान् भवेद् पार्येदिवि सौत्येहनि वाजमन्नं बलं वासिषासति सेवते ॥ १४ ॥

१४. इन्द्र, तुम जिसे व्याप्त करते हो, उसे कौन दबा सकता है? धनी इन्द्र, तुम्हारे प्रति श्रद्धा-युक्त होकर जो हविवाला होता है, वह द्युलोक और दिवस में धन पाता है।

मघोनःस्मवृत्रहत्येषुचोदययेददंतिप्रियावसुं ।
तवप्रणीतीहर्यश्वसूरिभिर्विश्वांतरेमदुरिता ॥ १५ ॥ १९ ॥

मघोनः । स्म । वृत्रऽहत्येषु । चोदय । ये । ददंति । प्रिया । वसुं ।
तवं । प्रऽनीती । हरिऽअश्व । सूरिऽभिः । विश्वा । तरेम ।
दुःऽइता ॥ १५ ॥ १९ ॥

हे इन्द्र मघोनोधनवतस्ते त्वदर्थमित्यर्थः प्रिया प्रियाणि वसु वसूनि धनानि ये जनाः ददति प्रयच्छन्ति स्मेतिपूरणः तान् जनान् वृत्रहत्येषु संग्रामेषु चोदय प्रेरय हे हर्यश्व तवप्र-

णीती प्रणीत्या प्रणयनेन सूरिभिः स्तोतृभिः पुत्रादिभिः साधं विश्वा विश्वानि दुरिता दुरितानि तरेम ॥ १५ ॥

१५. इन्द्र, तुम धनी हो। जो तुम्हें प्रिय धन देते हैं, उन्हें रण-भूमि में भेजो। हर्यश्व इन्द्र, हम तुम्हारे उपदेशानुसार, स्तोताओं के साथ सारे पापों के पार जायँगे।

॥ इति पंचमस्य तृतीये एकोनविंशो वर्गः ॥ १९ ॥

तवेदिन्द्रावमंवसुत्वंपुष्यसिमध्यमम् ।
सत्राविश्वंस्यपरमस्यंराजसिनकिष्ट्वागोषुंवृण्वते॥ १६ ॥

तवं । इत् । इन्द्र । अवमम् । वसुं । त्वम् । पुष्यसि । मध्यमम् । सत्रा । विश्वंस्य । परमस्यं । राजसि । नकिः । त्वा । गोषुं । वृण्वते ॥ १६ ॥

हे इन्द्र अवमं अधमं त्रपुसीसादिकं वसु धनं यद्वा भौमंवस्ववमंतवेत् तवैव त्वं त्वमेव मध्यमं वसु रजतहिरण्यादिकं आन्तरिक्षं वा पुष्यसि विश्वस्य सर्वस्य परमस्योत्तमस्यापि रत्नादेर्दिव्यस्य वा वसुनो राजसि ईशिषे सत्रा सत्यमेव अपि च त्वा त्वां गोषु निमित्तेषु नकिर्वृण्वते केपि न वारयन्ति ॥ १६ ॥

१६. इन्द्र, पृथिवीस्थ (अधम) धन तुम्हारा ही है। अन्तरिक्षस्थ (मध्यम) धन तुम्हारी ही है। तुम सारे उत्तम धनों के कर्त्ता हो—यह बात सच्ची है। गौ के सम्बन्ध में तुम्हें कोई भी नहीं हटा सकता।

त्वंविश्वंस्यधनदाअंसिश्रुतोयईंभवंन्त्याजयंः ।
तवायंविश्वंःपुरुहूतपार्थिवोवस्युर्नामंभिक्षते॥ १७ ॥

त्वम् । विश्वंस्य । धनऽदाः । असि । श्रुतः । ये । ईम् । भवंन्ति । आजयंः । तवं । अयम् । विश्वंः । पुरुऽहूत । पार्थिवः । अवस्युः । नामं । भिक्षते ॥ १७ ॥

हे इन्द्र त्वं विश्वस्य सर्वस्य स्तोतुर्यजमानस्य वा धनदाः धनस्य दाता सन् श्रुतःप्रसिद्धोसि यईं यएते आजयो युद्धानि भवन्ति तेष्वपि धनदाः श्रुतोसि हे पुरुहूत विश्वः सर्वोप्ययं पार्थिवो जनः तव त्वत्तइत्यर्थः अवस्युः रक्षामिच्छन् नाम अन्नमुदकं वा बर्हिः नामेत्युदकनामसु पाठात् भिक्षते याचते त्वामेवेतिशेषः ॥ १७ ॥

१७. इन्द्र, तुम संसार के धनदाता हो। ये सब जो युद्ध होते हैं, उनमें भी आप धनद कहकर प्रसिद्ध हैं। पुरुहूत, इन्द्र, रक्षा के लिए, ये सब पार्थिव मनुष्य तुमसे अन्न की भिक्षा चाहते हैं।

अथाष्टादशी-

यदिन्द्रयावतस्त्वमेतावदहमीशीय।

स्तोतारमिद्दिधिषेयरदावसोनपापत्वायरासीय॥ १८॥

यत्। इन्द्र। यावतः। त्वम्। एतावत्। अहम्। ईशीय। स्तोतारम्।

इत्। दिधिषेय। रदवसो इति रदऽवसो। न। पापऽत्वाय। रासीय॥ १८

हे इन्द्र यद्यतो यावतो धनस्य त्वं ईशिषे एतावत् षष्ठ्यालुक् एतावतोधनस्याहमीशीय ईश्वरो भवेयं हे रदवसो रदति ददाति वसूनीति रदवसुः ततोहमस्मदीयस्तोतारमिद्दिधिषेय धनप्रदानेन धारयेयमेव पापत्वाय नरासीय नदद्याम्॥ १८॥

१८. इन्द्र, तुम जितने धन के ईश्वर हो, उतने के हम भी स्वामी बनें। धनद, मैं स्तोता की रक्षा करूँगा। पाप के लिए मैं धन नहीं दूँगा।

शिक्षेयमिन्महयतेदिवेदिवेरायआकुहचिद्विदे।

नहित्वदन्यन्मघवन्नआप्यंवस्योअस्तिपिताचन॥ १९॥

शिक्षेयम्। इत्। महऽयते। दिवेऽदिवे। रायः। आ।

कुहचित्ऽविदे। नहि। त्वत्। अन्यत्। मघऽवन्। नः।

आप्यम्। वस्यः। अस्ति। पिता। चन॥ १९॥

कुहचिद्विदे कुत्रचिद्विद्यमानः कुहचिद्वित् तस्मै यत्र क्वापि विद्यमानायेत्यर्थः महयते पूजयते जनाय दिवेदिवे प्रतिदिनं रायो धनानि शिक्षेयमित् दद्यामेव आकारः पूरणः। एवमिन्द्रस्य वाक्यं श्रुत्वा संतुष्टऋषिर्वदति हे मघवन् त्वत् त्वत्तोन्यत् नः अस्माकं आप्यं ज्ञातेयं नह्यस्ति वस्यः प्रशस्यः पिताचन पालयिताच त्वदन्योनास्तीत्यर्थः॥ १९॥

१९. जिस किसी भी स्थान में विद्यमान पूजक पुरुष को लक्ष्य कर प्रतिदिन दान करूँगा। इन्द्र, तुम्हारे बिना न तो हमारा कोई बन्धु है, न प्रशंसनीय पिता है। अथ विंशी-

तरणिरित्सिषासतिवाजंपुरन्ध्यायुजा।

आवइन्द्रंपुरुहूतंनमेगिरानेमिंतष्टेवसुद्र्वम्॥ २०॥ २०॥

तरणिः। इत्। सिसासति। वाजम्। पुरम्ऽध्या।

युजा। आ। वः। इन्द्रम्। पुरुऽहूतम्। नमे।

गिरा। नेमिम्। तष्टाऽइव। सुऽद्र्वम्॥ २०॥ ॥ २०॥

तरणिरित् स्तुत्यादौ कर्मणि त्वरितएव पुमान् पुरंध्या महत्या धिया युजा सहायभूतया वाजमन्नं सिषासति संभजते पुरुहूतं बहुभिराहूतमिन्द्रं वः त्वां गिरा स्तुत्या अहं आनमे नेमिं चक्रस्य वलयं सुद्र्वं शोभनदारुं तष्टेव यथावर्धकिः दारुनेमिं आनमयते तद्वदित्यर्थः ॥ २० ॥

२०. क्षिप्रकर्म-कारी व्यक्ति ही महान् कर्म के बल से अन्न का भोग करता है। जैसे विश्वकर्मा (बढ़ई) उत्तम काष्ठवाले चक्र को नवाता है, वैसे ही स्तुति-द्वारा पुरुहूत इन्द्र को मैं नवाऊँगा।

॥ इति पंचमस्य तृतीये विंशो वर्गः ॥ २० ॥

अथैकविंशी—

नदुंःष्टुतीमर्त्योंविन्दतेवसुनस्रेधंन्तंरयिर्नशत् ।
सुशक्तिरिन्मंघवन्तुभ्यंमावंतेदेष्णंयत्पार्येदिवि॥ २१ ॥

न । दुःऽस्तुती । मर्त्यः । विन्दते । वसुं । न । स्रेधंन्तम् ।
रयिः । नशत् । सुऽशक्तिः । इत् । मघऽवन् । तुभ्यंम् ।
माऽवंते । देष्णम् । यत् । पार्ये । दिवि ॥ २१ ॥

मर्त्यो मनुष्यो दुष्टुती दुष्टुत्या वसु धनं न विन्दते इन्द्रं स्तुवन्नेव वसु लभतइत्यर्थः स्रेधन्तं हिंसन्तं इन्द्रविषयस्तुत्यादि कर्माण्यकुर्वन्तं इत्यर्थः रयिः धनं न नशत् नव्याप्नोति। हे मघवन्-त्वया पार्ये दिवि सौत्ये दिवसे मावते मत्सदृशाय देष्णं दातव्यं यद्धनमस्ति तत्तुभ्यं त्वत्तः सुशक्तिरित् सुकर्मैव विंदत इति व्यवहितमप्यनुषज्यते अध्याहारस्यान्तिकत्वात् ॥ २१ ॥

२१. मनुष्य दुष्ट स्तुति से धन लाभ नहीं कर सकता। हिंसक के पास धन नहीं जाता। धनवान् इन्द्र, द्युलोक और दिन में मेरे समान मनुष्य के प्रति जो कुछ तुम्हारा दातव्य है, उसे सुन्दर कर्मवाला व्यक्ति ही पा सकता है।

अभित्वांशूरनोनुमोदुंग्धाइवधेनवंः ।
ईशांनमस्यजगंतःस्वर्दृशमीशांनमिन्द्रतस्थुषंः ॥ २२ ॥

अभि । त्वा । शूर । नोनुमः । अदुंग्धाःऽइव । धेनवंः । ईशांनम् ।
अस्य । जगंतः । स्वःऽदृशंम् । ईशांनम् । इन्द्र । तस्थुषंः ॥ २२ ॥

हे शूरेन्द्र अस्य जगतो जंगमस्येशानमीश्वरं तस्थुषः स्थावरस्य चेशानं ईशानमिति पदस्यावृत्तिरादरार्थां स्वर्दृशं सर्वदृशं त्वा त्वां अदुग्धाइव धेनवः यथा अदुग्धा धेनवः क्षीरपूर्णोधस्त्वेन वर्तन्ते तद्वत्सोमपूर्णचमसत्वेन वर्तमानावयं अभिनोनुमो भृशमभिष्टुमः ॥ २२॥

२२. वीर इन्द्र, तुम इस जङ्गम पदार्थ के स्वामी हो। तुम स्थावर पदार्थों के ईश्वर और सर्वदर्शक हो। हम न दोही गई गाय की तरह तुम्हारी स्तुति करते हैं।

नत्वावाँअन्योदिव्योनपार्थिवोनजातोनजनिष्यते।
अश्वायन्तोमघवन्निन्द्रवाजिनोगव्यन्तस्त्वाहवामहे॥ २३ ॥

न। त्वाऽवान्। अन्यः। दिव्यः। न। पार्थिवः। न। जातः।
न। जनिष्यते। अश्वऽयन्तः। मघऽवन्। इन्द्र।
वाजिनः। गव्यन्तः। त्वा। हवामहे॥ २३॥

हे मघवन् इन्द्र दिव्यो दिविभवः त्वावान् त्वत्सदृशोन्यो न जायते पार्थिवः पृथिव्यां भवोपि त्वावानन्यो नजायते दिव्यः पार्थिवोवा त्वावानन्योनजातः नचजनिष्यते पृथिव्यां दिविच त्रिष्वपि लोकेषु त्वत्सदृशः कश्चिन्नास्तीत्यर्थः। अश्वायन्तोश्वानिच्छन्तो वाजिनो वाजमिच्छन्तः इच्छायामिनिप्रत्ययः हविष्मन्तोवा गव्यन्तोगाइच्छन्तश्च वयं त्वा त्वां हवामहे ह्वयामः॥ २३॥

२३. धनी इन्द्र, तुम्हारे समान न तो पृथिवी में कोई जन्मा, न जन्मे। हम अश्व, अन्न और गौ चाहते हैं। तुम्हें बुलाते हैं।

अभीषतस्तदाभरेन्द्रज्यायःकनीयसः।
पुरूवसुर्हिमघवन्त्सनादसिभरेभरेचहव्यः॥ २४॥

अभि। सतः। तत्। आ। भर। इन्द्र। ज्यायः। कनीयसः।
पुरुऽवसुः। हि। मघऽवन्। सनात्। असि। भरेऽभरे। च। हव्यः॥२४॥

हे ज्यायो ज्यायन्निन्द्र आमंत्रितं पूर्वमविद्यमानवदिति इन्द्रपदस्याविद्यमानवद्भावात् ज्यायइत्यस्य सर्वानुदात्तत्वाभावः नकारस्यरुत्वं व्यत्ययाल्लुमभावोवा। कनीयसः सतो मम तत्प्रसिद्धं धनं अभ्याभर हे मघवन् त्वं सनाच्चिरादेवारभ्य पुरूवसुर्हि बहुधनोह्यसि भरेभरे संग्रामे यज्ञेवा हव्यः आह्वातव्यः हविष्यश्चासि॥ २४॥

२४. इन्द्र, तुम ज्येष्ठ हो और मैं कनिष्ठ हूँ। मेरे लिए उस धन को ले आओ। बहुत दिनों से तुम प्रभूत-धनी हो और प्रत्येक युद्ध में हव्य-लाभ के योग्य हो।  अथ पंचविंशी—

पराणुदस्वमघवन्नमित्रान्त्सुवेदानोवसूकृधि।
अस्माकंबोध्यविताभहाधनेभवावृधःसखीनाम्॥ २५॥

परा। नुदस्व। मघऽवन्। अमित्रान्। सुऽवेदा। नः।
वसु। कृधि। अस्माकम्। बोधि। अविता।
महाऽधने। भव। वृधः। सखीनाम्॥ २५॥

हे मघवन् परा पराचीनानमित्रान् शत्रून् नुदस्व प्रेरय नोस्मभ्यं वसु वसूनि सुवेदा सुलभानि कृधि कुरु। महाधने संग्रामे वाजसातौ महाधनइति संग्रामनामसु पाठात् सखीनां स्तोतॄणामस्माकं वसिष्ठानामविता रक्षिता बोधि भव वृधोवर्धयिता च भव ॥ २५ ॥

२५. मघवन्, शत्रुओं को पराङ्मुख करके हटाओ। हमारे लिए धन को सुलभ करो। युद्ध में हमारे रक्षक बनो। हम तुम्हारे सखा हैं। हमारे वर्द्धक बनो।

इन्द्रक्रतुंनआभंरपितापुत्रेभ्योयथा ।
शिक्षाणोअस्मिन्पुंरुहूतयामंनिजीवाज्योतिरशीमहि ॥ २६ ॥
इन्द्रं । क्रतुम् । नः । आ । भर । पिता । पुत्रेभ्यः । यथा ।
शिक्षं । नः । अस्मिन् । पुरुऽहूत । यामंनि ।
जीवाः । ज्योतिः । अशीमहि ॥ २६ ॥

हे इन्द्र नोस्मभ्यं क्रतुं कर्म प्रज्ञानं वा आभर आहर । अपि च यथा पिता पुत्रेभ्योधनं प्रयच्छति तथा नोस्मभ्यं शिक्ष धनं देहि । हे पुरुहूत बहूभिराहूत अस्मिन् यामनि यज्ञे जीवाः वयं ज्योतिः सूर्यमशीमहि प्रतिदिनं प्राप्नुयाम ॥ २६ ॥

२६. इन्द्र, हमारे लिए प्रज्ञान ले आओ। जैसे पिता पुत्र को देता है, वैसे ही तुम हमें धन दो। हम यज्ञ के जीव हैं। हम प्रतिदिन सूर्य को प्राप्त करें।

मानोअज्ञातावृजनादुराध्यो३माशिवासोअवंक्रमुः ।
त्वयावयंप्रवतःशश्वंतीरपोतिंशूरतरामसि ॥ २७ ॥ २१ ॥
मा । नः । अज्ञाताः । वृजनाः । दुःऽआध्यः । मा । अशिवासः ।
अवं । क्रमुः । त्वया । वयम् । प्रऽवतः । शश्वंतीः ।
अपः । अति । शूर । तरामसि ॥ २७ ॥ २१ ॥

हे इन्द्र अज्ञाताः अज्ञातगमनाः वृजनाः हिंसकाः दुराध्यः अशिवासः नोस्मान् मावक्रमुः मावचक्रमुः हे शूर त्वया वयं वसिष्ठाः प्रवतः प्रवणकाः संतः शश्वतीर्बह्वीरपोतितरामसि अतितरामः ॥ २७ ॥

२७. इन्द्र, अज्ञात-गति, हिंसक, दुराराध्य और अशुभ शत्रु हमें आक्रमण न करें। शूर, हम तुम्हारे निकट नम्र होकर अनेक कार्यों में उत्तीर्ण होंगे।

॥ इति पंचमस्य तृतीये एकविंशो वर्गः ॥ २१॥

श्वित्यंचइति चतुर्दशर्चं षोडशं सूक्तं अत्रेयमनुक्रमणिका—श्वित्यंचः षळूनासंस्तवो-वसिष्ठस्य सपुत्रस्येन्द्रेणवासंवादइति । आदितो नवानां वसिष्ठऋषिः वसिष्ठपुत्राणां स्तूयमानत्वात् तएवदेवता विद्युतोज्योतिरित्यादिभिः दशम्यादिभिः सपुत्रैर्वसिष्ठःस्तूयते अतोवसिष्ठो देवता तएवऋषयः यातेनोच्यतइतिन्यायात् अनुक्तत्वात्त्रिष्टुप् ।

तत्र प्रथमा—

श्वित्यञ्चौमादक्षिणतस्कंपर्दाधियंजिन्वासोअभिहिप्रमन्दुः।
उत्तिष्ठन्वोचेपरिबर्हिषोनॄन्नमेदूरादवितवेवसिष्ठाः ॥ १ ॥

श्वित्यञ्चः । मा । दक्षिणतःऽकंपर्दाः । धियम्ऽजिन्वासः ।
अभि । हि । प्रऽमन्दुः । उत्ऽतिष्ठन् । वोचे । परि ।
बर्हिषः । नॄन् । न । मे । दूरात् । अवितवे । वसिष्ठाः ॥ १ ॥

श्वित्यंचः श्वित्यं श्वेतवर्णं अंचंतीति श्वित्यंचः श्वेतवर्णाइत्यर्थः धियं जिन्वासः कर्मणां पूरयितारो दक्षिणतस्कपर्दाः दक्षिणेशिरसोभागे कपर्दाः चूडा येषां ते दक्षिणतस्कपर्दाः चूडाकर्मणि दक्षिणतोवसिष्ठानामितिस्मर्यंते। मा मां अभिप्रमन्दुः विद्यावलेनाभिप्रहर्षयन् हिःपूरणः यतोमामभिप्रमन्दुरतोबर्हिषोयज्ञाव् परीति पंचम्यर्थानुवादः उत्तिष्ठन् अहं नॄन् यज्ञस्य नेतॄन् वोचे ब्रवीमि मेमत्तोदूरात् वसिष्ठाः वसिष्ठस्य ममपुत्राः सुदासराजानं अवितवे गन्तुं न अर्हन्तीतिशेषः ॥ १ ॥

१. श्वेतवर्ण और कर्म-पूरक वसिष्ठ-पुत्रगण अपने शिर के दक्षिण भाग में चूड़ा धारण करनेवाले हैं। वे हमें प्रसन्न करते हैं; क्योंकि यज्ञ से उठते हुए मैं सबको कहता हूँ कि, वसिष्ठ-पुत्रगण मुझसे दूर न जायँ।

अथ द्वितीया—

दूरादिन्द्रमनयन्नासुतेनतिरोवैशन्तमतिपान्तमुग्रम्।
पाशद्युम्नस्यवायतस्यसोमात्सुतादिन्द्रोवृणीतावसिष्ठान् ॥ २ ॥

दूरात् । इन्द्रम् । अनयन् । आ । सुतेन । तिरः । वैशन्तम् ।
अति । पान्तम् । उग्रम् । पाशऽद्युम्नस्य । वायतस्य ।
सोमात् । सुतात् । इन्द्रः । अवृणीत । वसिष्ठान् ॥ २ ॥

यदा वसिष्ठस्य पुत्राः सुदासं राजानमयाजन् तदैव पाशद्युम्नाख्योपि राजा सोमान्यष्टुमुद्यमंचकार तदा ते वसिष्ठपुत्राः पाशद्युम्नं तिरस्कृत्य तदीये यागे सोमं पिबन्तमिन्द्रं मंत्रबलेन तस्मादाच्छिद्य सुदासयज्ञे स्थापयामासुः तदेतद्वृत्तान्तं कीर्तयन् वसिष्ठः स्वसुताननेन मंत्रेण स्तौति वैशंतं चेशन्तःपल्वलं अत्रवेशन्तशब्देन सोमाधारश्चमसो लक्ष्यते तत्स्थं सोमं पांतं पिबन्तं उग्रमुद्गूर्णमिन्द्रं सुतेन सुदासोयज्ञेभिषुतेन सोमेन हेतुना तिरः पाशद्युम्नं तिरस्कृत्य दूरादानयन् वसिष्ठामंत्रबलेनानीतवन्तः। इन्द्रोपि वायतस्य वयतः पुत्रस्य पाशद्युम्नस्य द्वितीयार्थेषष्ठी वायतं

पाशद्युम्नं अतिहाय सुदासोयज्ञे सुतात् अभिषुतात् सोमाद्धेतोः वसिष्ठान् वसिष्ठस्य पुत्रान् अवृणीत पाशद्युम्नस्य सोमयागे चमसस्थं सोमं पिबन्नपीन्द्रस्तं पाशद्युम्नं तिरस्कृत्य मंत्रसामर्थ्यबलेन सुदासो यज्ञे आह्वनकाले वसिष्ठानाजगामेत्यर्थः ॥ २ ॥

२. वयत् के पुत्र पाशद्युम्न का दूर से ही तिरस्कार करके चमस-स्थित सोम का पान करते हुए इन्द्र को वसिष्ठ-पुत्रगण ले आये थे। इन्द्र ने भी वयत् के पुत्र पाशद्युम्न को छोड़कर सोमाभिषव करनेवाले वसिष्ठों को वरण किया था।

एवेन्नुकंसिन्धुमेभिस्ततारेवेन्नुकंभेदमेभिर्जघान।
एवेन्नुकंदाशराज्ञेसुदासंप्रावदिन्द्रोब्रह्मणावोवसिष्ठाः ॥ ३ ॥

एव। इत्। नु। कम्। सिन्धुम्। एभिः। ततार। एव। इत्। नु। कम्। भेदम्। एभिः। जघान। एव। इत्। नु। कम्। दाशऽराज्ञे। सुऽदासम्। प्र। आवत्। इन्द्रः। ब्रह्मणा। वः। वसिष्ठाः ॥ ३ ॥

एवेत् यथा पाशद्युम्नस्य सवाख्ये सोमयागे चमसस्थं सोमं पिबन्तमपीद्रं वसिष्ठैः सुदाः प्राप्तवान् एवमेव सिन्धुं नदीं एभिर्वसिष्ठैः कं सुखेन ततार तीर्णआसीत् नुइतिपूरणः तथाचनिगमान्तरं— अर्णांसिचित्पप्रथानासुदासइति। एवेत् एवमेव भेदं भेदनामकं शत्रुमपि एभिर्वसिष्ठैरेव जघान। अथप्रत्यक्षस्तुतिः एवेत् एवमेव हे वसिष्ठाः वोयुष्मदीयेनब्रह्मणा स्तोत्रेण दाशराज्ञे दशभीराजभिः सह युद्धे प्रवृत्तेसति सुदासं राजानमिन्द्रः प्रावत् प्रारक्षत् तथाचनिगमान्तरं— दशराजानःसमिताअयज्यवः। सुदासमिन्द्रावरुणानयुयुधुरिति। दाशराज्ञेपरियत्ताय विश्वतइतिच ॥ ३ ॥

३. इसी प्रकार वसिष्ठ-पुत्रों ने अनायास ही नदी (सिन्धु) को पार किया था। इसी प्रकार भेद नाम के शत्रु का भी इन्होंने विनाश किया था। वसिष्ठपुत्रो, इसी प्रकार प्रसिद्ध "दाशराज्ञयुद्ध" में तुम्हारे ही मन्त्रबल से इन्द्र ने सुदास राजा की रक्षा की थी।

जुष्टीनरोब्रह्मणावःपितॄणामक्षमव्ययंनकिलारिषाथ।
यच्छक्वरीषुबृहतारवेणेन्द्रेशुष्ममदधातावसिष्ठाः ॥ ४ ॥

जुष्टी। नरः। ब्रह्मणा। वः। पितॄणाम्। अक्षम्। अव्ययम्। न। किल। रिषाथ। यत्। शक्वरीषु। बृहता। रवेण। इन्द्रे। शुष्मम्। अदधात। वसिष्ठाः ॥ ४ ॥

---

१ ऋ० सं० ५. ३. २४। २ ऋ० सं० ५. ६. ५। ३ ऋ० सं० ५. ६. ५।

हे नरो वो युष्मदीयेन ब्रह्मणा स्तोत्रेण पितॄणां जुष्टी प्रीतिर्भवति पितॄणामित्यनेन पारोक्ष्येण वसिष्ठस्यैवकीर्तनं अहं प्रीतोभवामीत्यर्थः । अथेदानीं स्वमाश्रमं गन्तुमुद्यतोहं अक्षं रथस्याक्षं अव्ययं व्ययामि लडर्थेलङ् चालयामीत्यर्थः । यूयं न किल रिषाथ नचक्षीणाभवथ हे वसिष्ठाः यद्यस्माच्छक्करीष्वृक्षु बृहता श्रेष्ठेन रवेण साम्ना इन्द्रे शुष्मं बलं अदधात अधारयत ॥ ४ ॥

४. मनुष्यो, तुम्हारे स्तोत्र (ब्रह्म) से पित्तरों की तृप्ति होती है। मैं रथ की धुरी को चलाता हूँ। तुम क्षीण नहीं होना। वसिष्ठगण, तुमने शक्वरी ऋचाओं और श्रेष्ठ शब्द-द्वारा इन्द्र का बल पाया था।

उद्यामिवेत्तृष्णजोनाथितासोदीधयुर्दाशराज्ञेवृतासः ।
वसिष्ठस्यस्तुवतइन्द्रोअश्रोदुरुंतृत्सुभ्योअकृणोदुलोकम् ॥५॥२२॥

उत् । द्याम्ऽइव । इत् । तृष्णऽजः । नाथितासः । अदीधयुः ।
दाशऽराज्ञे । वृतासः । वसिष्ठस्य । स्तुवतः । इन्द्रः । अश्रोत् ।
उरुम् । तृत्सुऽभ्यः । अकृणोत् । ऊँ इति । लोकम् ॥ ५ ॥ २२ ॥

तृष्णजोजाततृष्णाः वृतासः तृत्सुभीराजभिर्वृताः नाथितासोवृष्टिं याचमाना वसिष्ठाः द्यामिव आदित्यमिवेन्द्रं दाशराज्ञे दशानां राज्ञां संग्रामे उददीधयुः उददीधयन् स्तुवतोवसिष्ठस्य स्तोत्रमिन्द्रः अश्रोदश्रृणोच्च उरुं विस्तीर्णं लोकं तृत्सुभ्योराजभ्यः अकृणोदकरोच्च अददाच्चेत्यर्थः इदपरणौ ॥ ५ ॥

५. ज्ञात-तृष्ण राजाओं-द्वारा घिरे हुए और वृष्टि-याचक वसिष्ठ पुत्रों ने दस राजाओं के साथ संग्राम में, सूर्य की तरह, इन्द्र को ऊपर उठाया था। स्तोता वसिष्ठ का स्तोत्र इन्द्र ने सुना था और तृत्सु राजाओं के लिए विस्तृत लोक दिया था।

॥ इति पञ्चमस्य तृतीये द्वाविंशो वर्गः ॥ २२ ॥

अथ षष्ठी—

दण्डाइवेद्गोअजनासआसन्परिच्छिन्नाभरताअर्भकासः ।
अभवच्चपुरएतावसिष्ठआदित्तृत्सूनांविशोअप्रथन्त ॥ ६ ॥

दण्डाःऽइव । इत् । गोऽअजनासः । आसन् । परिऽछिन्नाः ।
भरताः । अर्भकासः । अभवत् । च । पुरःऽएता ।
वसिष्ठः । आत् । इत् । तृत्सूनाम् । विशः । अप्रथन्त ॥ ६ ॥

गोअजनासो गवां प्रेरका दंडाइव यथादंडाः परिच्छिन्नपत्नोपशाखाभवन्ति तद्वद्भरताः तृत्सूनामेव राज्ञां भरता इतिनामान्तरेणोपादानं शत्रुभिः परिच्छिन्ना एवासन् इत् एवकारार्थः

अर्भकासोर्भका अल्पाश्चासन् आदिवपरिच्छिन्नत्वादनन्तरमेव तेषां तृत्सूनां वसिष्ठः पुरएता पुरोहितोभवच्च तत्पौरोहित्यसामर्थ्याद् तृत्सूनां विशः प्रजाः अप्रथन्त अवर्धयन्त ॥ ६ ॥

६. गो-प्रेरक दण्डों की तरह (तृत्सुओं के) भरतगण शत्रुओं के बीच ससीम और अल्पसंख्यक थे। अनन्तर वसिष्ठ ऋषि भरतों के पुरोहित हुए और तृत्सुओं की प्रजा बढ़ने लगी।

त्रयः꣡कृण्वन्ति꣡भुव꣡नेषु꣡रेत꣡स्ति꣡स्रः꣡प्र꣡जाआर्या꣡ज्योति꣡रग्राः ।
त्रयो꣡घ꣡र्मासंउ꣡षसं꣡सचन्ते꣡सर्वाँ꣡इत्ताँअनु꣡विदु꣡र्वसिष्ठाः ॥ ७ ॥

त्रयः꣡ । कृ꣡ण्व꣡न्ति꣡ । भुव꣡नेषु꣡ । रेतः꣡ । ति꣡स्रः꣡ । प्र꣡ऽजाः । आर्याः꣡ ।
ज्योतिः꣡ऽअग्राः । त्रयः꣡ । घ꣡र्मासः꣡ । उ꣡षसं꣡म् । स꣡च꣡न्ते꣡ ।
सर्वान् । इत् । तान् । अनु꣡ । वि꣡दुः꣡ । वसिष्ठाः ॥ ७ ॥

भुवनेषु पृथिव्यंतरिक्षद्युक्षु त्रयोग्निवायुसूर्याः यथाक्रमेण रेतो विश्वस्य धारकमुदकं कृण्वन्ति कुर्वन्ति तेषां त्रयाणां ज्योतिरग्रा आदित्यप्रमुखा आर्याः श्रेष्ठाः तिस्रः प्रजाभवन्ति तेच त्रयोग्निवायुसूर्याः घर्मासो दीप्यमानाः उषसं सचन्ते समवयन्ति दुर्ज्ञानात् सर्वानित् सर्वानेव तान् वसिष्ठा अनुविदुः अभिजानन्ति तेषां रहस्यविज्ञानादियमपि वसिष्ठानामेवस्तुतिः तथाच शाट्यायनकं—त्रयःकृण्वन्ति भुवनेषुरेतइत्यग्निः पृथिव्यां रेतःकृणोति वायुरन्तरिक्ष आदित्योदिवि तिस्रः प्रजाआर्याज्योतिरग्राइति वसवोरुद्राआदित्यास्तासां ज्योतिर्यदसावादित्यः त्रयोघर्मासउषसंसचन्तइत्यग्निरुषसं सचते वायुरुषसं सचते आदित्यउषसं सचतइति ॥ ७ ॥

७. अग्नि, वायु और सूर्य ही संसार में जल देते हैं। उनमें आदित्य आदि तीन श्रेष्ठ आर्य-प्रजा हैं। दीप्तिमान् वे तीनों उषा का वयन करते हैं। वसिष्ठ लोग उन सबको जानते हैं।

सूर्य꣡स्येववक्ष꣡थोज्योति꣡रेषांसमु꣡द्रस्येवमहि꣡मागभीरः꣡ ।
वात꣡स्येवप्रज꣡वोनान्येन꣡स्तोमो꣡वसिष्ठा꣡अन्वे꣡तवेवः ॥ ८ ॥

सूर्य꣡स्यऽइव । व꣡क्षथः꣡ । ज्योतिः꣡ । ए꣡षाम् । स꣡मु꣡द्रस्य꣡ऽइव ।
म꣡हि꣡मा । ग꣡भी꣡रः꣡ । वात꣡स्यऽइव । प्र꣡ऽज꣡वः꣡ । न । अ꣡न्येन꣡ ।
स्तोमः꣡ । व꣡सि꣡ष्ठाः । अनु꣡ऽएतवे । वः꣡ ॥ ८ ॥

हे वसिष्ठाः एषां वोयुष्माकं स्तोमोमहिमापिवा सूर्यस्यज्योतिरिव वक्षथः प्रकाशोस्ति हे वसिष्ठावोयुष्माकं महिमा स्तोमोपिवा समुद्रस्येव गभीरोस्ति तथा हे वसिष्ठाः एषां युष्माकं स्तोमोऋक्समूहः महिमापिवा वातस्येव प्रजवः यथा वातस्य प्रवेगोन्येनान्वेतुं नशक्यः तद्वदन्येन तव महिमाअन्वेतवेअन्वेतुं न शक्यः ॥ ८ ॥

८. वसिष्ठ-पुत्रो, तुम्हारी महिमा (वा स्तोम) सूर्य की ज्योति की तरह प्रकाशित होती है। तुम्हारी महिमा समुद्र की तरह गम्भीर है। वायु-वेग के समान तुम्हारे स्तोत्र का कोई दूसरा अनुगमन नहीं कर सकता।

अथ नवमी–

**तइन्निण्यंहृदयस्यप्रकेतैःसहस्रवल्शमभिसंचरन्ति ।**
**यमेनततंपरिधिंवयन्तोप्सरसउपसेदुर्वसिष्ठाः ॥ ९ ॥**

ते । इत् । निण्यम् । हृदयस्य । प्रऽकेतैः । सहस्रऽवल्शम् ।
अभि । सम् । चरन्ति । यमेन । ततम् । परिऽधिम् । वयन्तः ।
अप्सरसः । उप । सेदुः । वसिष्ठाः ॥ ९ ॥

तइत् तएव वसिष्ठाः निण्यं तिरोहितं दुर्ज्ञानं निण्यं सस्वरित्यंतर्हितनामसु पाठात् सहस्रवल्शं सहस्रशाखं संसारं हृदयस्य प्रकेतैः प्रज्ञानैरभिसंचरन्ति एवं स्वाच्छन्द्येनाभिसंचरन्तस्तेवसिष्ठाः यमेनकारणात्मना सर्वनियंत्रा ततं विस्तृतं परिधिं वस्त्रं परिधिरित्येनन जन्मादिप्रवाहोविवक्षितः तं वयंतोऽप्सरसो जननीत्वेनोपसेदुः । अत्र वसिष्ठाइति बहुवचनं पूजायां वसिष्ठः पूर्वं प्रजापतेरुत्पन्नं देहमुत्सृज्याप्सरस्सु जायेयेति बुद्धिमकरोदितिभावः ॥ ९ ॥

९. वे वसिष्ठगण (वसिष्ठ) ज्ञान-द्वारा तिरोहित सहस्र शाखाओं-वाले संसार में विचरण करने लगे। वे सर्व-नियन्ता (यम) द्वारा विस्तृत वस्त्र (विश्व-प्रवाह) को बुनते हुए मातृ-रूप से अप्सरा के निकट गये।

**विद्युतोज्योतिःपरिसंजिहानंमित्रावरुणायदपश्यतांत्वा ।**
**तत्तेजन्मोतैकंवसिष्ठागस्त्योयत्त्वाविशआजभार ॥ १० ॥२३॥**

विऽद्युतः । ज्योतिः । परि । सम्ऽजिहानम् । मित्रावरुणा ।
यत् । अपश्यताम् । त्वा । तत् । ते । जन्म । उत । एकम् । वसिष्ठ ।
अगस्त्यः । यत् । त्वा । विशः । आऽजभार ॥ १० ॥ २३ ॥

एतास्वृक्षु वसिष्ठस्यैव देहपरिग्रहः प्रतिपाद्यते एताश्चेन्द्रस्य वाक्यमित्येके वर्णयन्ति अपरे वसिष्ठपुत्राणामिति । हे वसिष्ठ यद्यदा विद्युतोविद्युतइव स्वीयं ज्योतिः देहान्तरपरिग्रहार्थं परिसंजिहानं परित्यजन्तं त्वा त्वां छान्दसमात्मनेपदं यद्वा जिघृक्षितदेहार्थं स्वीयं ज्योतिः परिसंजिहानं परिजिघृक्षन्तमित्यर्थः । अस्मिन्पक्षे जहातेर्गत्यर्थत्वादात्मनेपदं छान्दसं न भवति । मित्रावरुणा मित्रावरुणौ अपश्यतां आवाभ्यामयंजायेतेति समकल्पतामित्यर्थः तत्तदा ते तवैकं

जन्म उतापिच यद्यदा आगस्त्योविशोनिवेशनान्मित्रावरुणावावां जनयिष्याव इत्येतस्मा-त्पूर्वावस्थानात् त्वा त्वामाजभार आजहार ॥१०॥

१०. वसिष्ठ, विद्युत् की तरह (देह धारण करने के लिए) अपनी ज्योति का परित्याग करते हुए तुम्हें मित्र और वरुण ने देखा था। उस समय तुम्हारा एक जन्म हुआ। इसके अतिरिक्त वासस्थान से अगस्त्य भी तुम्हें ले आये थे।

॥ इति पंचमस्य तृतीये त्रयोविंशोवर्गः ॥ २३ ॥

अथैकादशी—

उतासिमैत्रावरुणोवसिष्ठोर्वश्यांब्रह्मन्मनसोधिजातः ।
द्रप्संस्कन्नंब्रह्मणादैव्येनविश्वेदेवाःपुष्करेत्वाददन्त ॥ ११ ॥
उत । असि । मैत्रावरुणः । वसिष्ठ । उर्वश्याः । ब्रह्मन् ।
मनसः । अधि । जातः । द्रप्सम् । स्कन्नम् । ब्रह्मणा ।
दैव्येन । विश्वे । देवाः । पुष्करे । त्वा । अददन्त ॥ ११ ॥

उतापिच हे वसिष्ठ मैत्रावरुण मित्रावरुणयोः पुत्रोसि हे ब्रह्मन् वसिष्ठ उर्वशयाअप्सर-सोमनसोममायं पुत्रःस्यादिति ईदृशात्संकल्पात् द्रप्सं रेतोमित्रावरुणयोरुर्वशीदर्शनात् स्कन्नमा-सीत् तस्मादधिजातोसि । तथा च वक्ष्यते सत्रेहजातावित्यृचि । एवं जातं त्वा त्वां दैव्येन देवसंब-न्धिना ब्रह्मणा वेदराशिना अहंभुवा युक्तं पुष्करे विश्वेदेवा अददन्तअधारयंत । तथा चादितेर्मित्रावरुणौ जज्ञाते इति प्रकृत्य पठ्यते—तयोरादित्ययोःसत्रेदृष्ट्वाप्सरसमुर्वशीं । रेतश्च-स्कंदतत्कुंभेन्यपतद्वासतीवरे ॥ १ ॥ तेनैवतुमुहूर्तेन वीर्यवंतौतपस्विनौ । अगस्त्यश्ववसिष्ठश्च-तत्रर्षीसंबभूवतुः ॥ २ ॥ बहुधापतितं रेतः कलशेचजलेस्थले । स्थलेवसिष्ठस्तुमुनिः संभूतऋषि-सत्तमः ॥ ३ ॥ कुंभेत्वगस्त्यः संभूतो जलेमत्स्योमहाद्युतिः । उदियायततोगस्त्यः शम्यामात्रो-महातपाः ॥ ४ ॥ मानेनसंमितोयस्मात्तस्मान्मान्यइहोच्यते । यद्वा कुंभादृषिर्जातः कुंभेना-पिहिमीयते ॥ ५ ॥ कुंभइत्यभिधानंच परिमाणंचलक्ष्यते । ततोप्सुगृह्यमाणासु वसिष्ठःपुष्करे-स्थितः ॥ ६ ॥ सर्वतःपुष्करेतंहि विश्वेदेवाअधारयन्निति ॥ ११ ॥

११. और, हे वसिष्ठ, तुम मित्र और वरुण के पुत्र हो। हे ब्रह्मन्, तुम उर्वशी के मन से उत्पन्न हो। उस समय मित्र और वरुण का वीर्य-स्खलन हुआ था। विश्वदेवगण ने दैव्य स्तोत्र-द्वारा पुष्कर के बीच तुम्हें धारण किया था।

अथ द्वादशी—

सप्रकेतउभयस्यप्रविद्वान्त्सहस्रदानउतवासदानः ।
यमेनततंपरिधिंवयिष्यन्नप्सरसःपरिजज्ञेवसिष्ठः ॥ १२ ॥

सः । प्रऽकेतः । उभयस्य । प्रऽविद्वान् । सहस्रऽदानः । उत । वा । सऽदानः । यमेन । ततम् । परिऽधिम् । वयिष्यन् । अप्सरसः । परि । जज्ञे । वसिष्ठः ॥ १२ ॥

सः वसिष्ठः प्रकेतः प्रकृष्टज्ञानः उभयस्य उभयं दिवं च पृथिवीं च विद्वान् प्रकर्षेण जानन् सहस्रदानोभवत् किमनेन सहस्रदानइति विशेषणेन उत वा अपि वा सदानः सर्वदानसहितएवाभवत् । किं च वसिष्ठोयमेनकारणात्मना सर्वनियंत्रा ततं विस्तृतं परिधिं वस्त्रं परिधिरित्यनेन संसारप्रवाहोविवक्षितः तं वयिष्यन् अप्सरसः उर्वश्याः परीतिपंचम्यर्थानुवादः जज्ञे-जातः ॥ १२ ॥

१२. प्रकृष्ट ज्ञानवाले वसिष्ठ दोनों लोकों को (पृथिवी और स्वर्ग को) जानकर सहस्रदान वा सर्वदानवाले हुए थे। सर्व-नियन्ता (यम) द्वारा विस्तीर्ण वस्त्र (संसार-प्रवाह) को बुनने की इच्छा से वसिष्ठ उर्वशी से उत्पन्न हुए थे।

सत्रेहजाताविषितानमोभिःकुम्भेरेतःसिषिचतुःसमानम् ।
ततोहमानउदियायमध्यात्ततोजातमृषिमाहुर्वसिष्ठम् ॥ १३ ॥

सत्रे । ह । जातौ । इषिता । नमःऽभिः । कुम्भे । रेतः । सिसिचतुः । समानम् । ततः । ह । मानः । उत् । इयाय । मध्यात् । ततः । जातम् । ऋषिम् । आहुः । वसिष्ठम् ॥ १३ ॥

सत्रे बहुकर्तृके यागे हेतिपूरणः जातौ दीक्षितौ मित्रावरुणौ इषिताध्येषितौ स्वयमन्यैर्जनैर्नमोभिः स्तुतिभिः कुंभेवासतीवरे कलशे समानमेकदैव रेतः सिषिचतुः असिंचतां ततोवासतीवरात् कुंभात् मध्यादगस्त्योमानः शमीप्रमाणउदियाय प्रादुर्बभूव ततएव कुंभाद्वसिष्ठमप्यृषिंजातमाहुः हेतिपूरणः ॥ १३ ॥

१३. यज्ञ में दीक्षित मित्र और वरुण ने, स्तुति-द्वारा प्रार्थित होकर, कुम्भ (वसतीवर कलस) के बीच एक साथ ही रेतः-स्खलन किया था। अनन्तर मान (अगस्त्य) उत्पन्न हुए। लोग कहते हैं कि ऋषि वसिष्ठ उसी कुम्भ से जन्मे थे।

उक्थभृतंसामभृतंबिभर्तिग्रावाणंबिभ्रत्प्रवदात्यग्रे ।
उपैनमाध्वंसुमनस्यमानाआवोगच्छातिप्रतृदोवसिष्ठः ॥१४॥२४॥

उक्थऽभृतम् । सामऽभृतम् । बिभर्ति । ग्रावाणम् । बिभ्रत् । प्र । वदाति । अग्रे । उप । एनम् । आध्वम् । सुऽमनस्यमानाः । आ । वः । गच्छाति । प्रऽतृदः । वसिष्ठः ॥ १४ ॥ २४ ॥

हे प्रतृदः प्रतृदइति तृत्सवएवाभिधीयन्ते नामान्तरेण वोयुष्मान् वसिष्ठआगच्छाति आ गच्छति एनं वसिष्ठं सुमनस्यमानाः सुमनसःसन्त उपाध्वं उपतिष्ठत आगतश्चासौवसिष्ठोयज्ञे

अग्ने पुरोहितोब्रह्मासन् उक्थभृतं शस्त्राणां संभक्तारं बिभर्ति सामभृतं उद्गातारं बिभर्ति ग्रावाणमभिषवणं बिभ्रत् बिभ्रतं अध्वर्युं च बिभर्ति प्रवदाति यज्ञे यत्प्रवदितव्यं प्रेषादिनिमित्ते कर्तव्यमस्ति तदपि वदतीति तृत्सून् प्रतीन्द्रोब्रवीति ॥ १४ ॥

१४. तृत्सुओ, तुम्हारे पास वसिष्ठ आ रहे हैं। प्रसन्नचित्त से तुम इनकी पूजा करो। वसिष्ठ अग्रवर्ती होकर उक्थ और सोम के धारणकर्त्ता तथा प्रस्तर से अभिषव करनेवाले (अध्वर्यु) को धारण करते और कर्त्तव्य भी बताते हैं।

॥ इति पंचमस्य तृतीये चतुर्विंशोवर्गः ॥ २४ ॥

॥ इति सप्तमे मंडले द्वितीयोनुवाकः ॥ २ ॥

तृतीयेनुवाके द्वाविंशतिसूक्तानि तत्रप्रशुक्रेति पंचविंशत्यृचं प्रथमं सूक्तं अत्रेयमनुक्रमणिका—प्रशुक्रा पंचाधिका वैश्वदेवं हाद्याएकविंशतिर्द्विपदा अब्जामहेरर्धर्चं उत्तरोहिर्बुध्न्यायेति। वसिष्ठऋषिः आद्याएकविंशतिर्द्विपदा विंशत्यक्षराविराजः द्वाविंशाद्याश्चतस्रस्त्रिष्टुभः विश्वेदेवादेवता। व्यूळ्हेदशरात्रे चतुर्थेहनि वैश्वदेवशस्त्रे सूक्तं वैश्वदेवनिविद्धानं सूत्रितंच—प्रशुक्रैत्विति वैश्वदेवमिति। षोडशिनि आधूर्ष्वस्माइति द्विपदाइति। महाव्रतेप्येषा द्विपदा तथैवपंचमारण्यकेसूत्रितं—आधूर्ष्वस्माइत्येका सूददोहा इति।

तत्र प्रथमा—

प्रशुक्रैतुदेवीमनीषाअस्मत्सुतष्टोरथोनवाजी ॥ १ ॥

प्र। शुक्रा। एतु। देवी। मनीषा। अस्मत्। सुऽतष्टः। रथः। न। वाजी ॥१॥

शुक्रा दीप्ता देवी सर्वेषां कामानां प्रदात्री मनीषा स्तुतिरस्मदस्मत्तोस्मिन्सूक्ते स्तोष्यमाणान् देवान् वाजी वेगवान् सुतष्टः सुसंस्कृतोरथोन रथइव प्रैतु गच्छतु ॥ १ ॥

१. दीप्त और अभीष्टप्रद स्तुति, वेगशाली और सुसंस्कृत रथ की तरह, हमारे पास से देवों के पास जाय।

विदुःपृथिव्यादिवोजनित्रंशृण्वन्त्यापोअधक्षरन्तीः ॥ २ ॥

विदुः। पृथिव्याः। दिवः। जनित्रम्। शृण्वन्ति। आपः। अध। क्षरन्तीः॥२॥

अस्यामृच्यापः स्तूयन्ते क्षरन्तीः क्षरन्त्यआपोदिवः पृथिव्याश्च उभयोरपिलोकयोरित्यर्थः जनित्रमुत्पत्तिं विदुर्जानन्ति अधापिच शृण्वन्ति स्तोत्राणीति शेषः ॥ २ ॥

२. क्षरण-शील जल स्वर्ग और पृथिवी की उत्पत्ति जानता है। जल स्तुति सुनता है।

आपश्चिदस्मैपिन्वन्तपृथ्वीर्वृत्रेषुशूरामंसन्तउग्राः ॥ ३ ॥

आपः। चित्। अस्मै। पिन्वन्त। पृथ्वीः।

वृत्रेषु। शूराः। मंसन्ते। उग्राः ॥ ३ ॥

इन्द्रोस्मिन्नृचे स्तूयते पृथ्वीः पृथ्व्यः प्रथमाना आपश्चिदापोप्यस्माइन्द्राय पिन्वन्त प्यायन्ते वृत्रेषूपद्रवेषु सत्सूग्राउद्गूर्णास्तेजस्विनोवा शूरायोद्धारोपि मंसन्ते इममेवेन्द्रंस्तुवन्ति ॥ ३ ॥

३. विस्तीर्ण जल इन्द्र को आप्यायित करता है। उपद्रव उठने पर उग्र शूर लोग इन्द्र की ही स्तुति करते हैं।

अथ चतुर्थी—

आधूर्ष्वस्मैदधाताश्वानिन्द्रोनवज्रीहिरण्यबाहुः ॥ ४ ॥

आ। धूःऽसु। अस्मै। दधात। अश्वान्।

इन्द्रः। न। वज्री। हिरण्यऽबाहुः ॥ ४ ॥

अस्मै षष्ठ्यर्थेचतुर्थी अस्येन्द्रस्यागमनायाश्वान् धूर्षु रथस्य आदधात इन्द्रोन नेतिचार्थे इन्द्रःवज्री वज्रवान् हिरण्यबाहुः हिरण्यहस्तश्च भवति। षोडशिनिशस्यमानत्वादस्याऐन्द्रत्वं गम्यते आधूर्ष्वस्माइत्यत्रास्माइत्यस्य पदस्यानुदात्तत्वं पूर्वस्यामिन्द्रस्य प्रकृतत्वात् अतएव पूर्वाप्यैन्द्रीति विज्ञायते पूर्वस्यामप्यृचि अस्माइत्यत्रानुदात्तत्वं अल्पीयोर्थतरमनुदात्तमिति। तथाच यास्कः—अस्येतिचोदात्तं प्रथमादेशेनुदात्तमन्वादेशेतीव्रार्थतरमनुदात्तमल्पीयोर्थतरमनुदात्तमिति[1]। अल्पीयस्त्वं चेदंशब्दप्रवृत्तिनिमित्तस्य संनिधानस्य दूरस्थत्वेनेत्यवगन्तव्यम् ॥ ४ ॥

४. इन्द्र के आगमन के लिए अश्वों को रथ के आगे जोतो। इन्द्र वज्रधर और सोने के हाथवाले हैं।

अभिप्रस्थाताहेवयज्ञंयातेवपत्मन्त्मनाहिनोत ॥ ५ ॥

अभि। प्र। स्थात। अहाऽइव। यज्ञम्।

याताऽइव। पत्मन्। त्मना। हिनोत ॥ ५ ॥

यज्ञस्तुतिरियं हे जनाः यज्ञमभिप्रस्थात अभिक्रमत अहेवेतिपूरणौ अपि च पत्मन् पत्मनि यज्ञमार्गे त्मना स्वयमेव यातेव गन्तेव हिनोत गच्छत। हिगतावितिधातुः ॥ ५ ॥

५. मनुष्यो, यज्ञ के सामने गमन करो। गन्ता की तरह स्वयमेव यज्ञमार्ग पर जाओ।

अथ षष्ठी—

त्मनासमत्सुहिनोतयज्ञंदधातकेतुंजनायवीरम् ॥ ६ ॥

त्मना। समत्ऽसु। हिनोत। यज्ञम्।

दधात। केतुम्। जनाय। वीरम् ॥ ६ ॥

उक्तस्यैवविवरणमत्र हे मदीयाजनाः समत्सु संग्रामेषु त्मना स्वयमेव हिनोत गच्छत अपिच केतुं प्रज्ञापकं वीरं पापानां वारयितारं नाशकमित्यर्थः यज्ञं जनाय लोकाय तद्रक्षार्थमित्यर्थः दधात विधत्त ॥ ६ ॥

६. मेरे पुरुषो, संग्राम में स्वयमेव जाओ। लोगों के लिए प्रज्ञापक और पापों के नाशक यज्ञ करो।

---

१ नि० ४.२५।

अथ सप्तमी–

उदस्यशुष्माद्भानुर्नार्तविभर्तिभारंपृथिवीनभूम ॥ ७ ॥

उत् । अस्य । शुष्मात् । भानुः । न । आर्त ।

बिभर्ति । भारम् । पृथिवी । न । भूम ॥ ७ ॥

अस्य यज्ञस्य शुष्माद्बलाद्भानुः सूर्यउदार्त उद्गच्छति भूम भूतानि पृथिवीन पृथिवीव भारं लोकस्यायं यज्ञोविभर्ति चन पूरणः ॥ ७ ॥

७. इस यज्ञ के बल से ही सूर्य उगते हैं। जैसे पृथिवी जीवों को ढोती हैं, वैसे ही यज्ञ भी भार वहन करता है।

ह्वयामिदेवाँअयातुरग्नेसाधन्नृतेनधियंदधामि ॥ ८ ॥

ह्वयामि । देवान् । अयातुः । अग्ने । साधन् ।

ऋतेन । धियम् । दधामि ॥ ८ ॥

अस्मिंस्तृचे देवाः स्तूयन्ते–हे अग्ने अयातुरहिंसादिनियमयुक्तेन ऋतेन यज्ञेन साधन् कामान् साधयन् देवान् ह्वयामि अपि च धियं देवानां परिचरणात्मकं कर्म दधामि करोमीत्यर्थः॥८

८. हे अग्नि, अहिंसा आदि विषयों से युक्त यज्ञ-द्वारा मनोरथ पूर्ण करते हुए में देवों को बुलाता हूं और उनके लिए कर्म करता हूं।

अथ नवमी–

अभिवोदेवींधियंदधिध्वंप्रवोदेवत्रावाचंकृणुध्वम् ॥ ९ ॥

अभि । वः । देवीम् । धियम् । दधिध्वम् ।

प्र । वः । देवऽत्रा । वाचम् । कृणुध्वम् ॥ ९ ॥

हे जनावोयूयं अभि देवानुद्दिश्य देवीं दीप्तां धियं कर्म दधिध्वं विधत्तं । अपि च वोयूयं देवत्रा देवेषु वाचं स्तुतिरूपां प्रकृणुध्वं प्रकर्षेण कुरुध्वं ॥ ९ ॥

९. मनुष्यो, देवों को लक्ष्य करके दीप्त कर्म करो। देवों के लिए स्तुति करो।

अथ दशमी–

आचष्टआसांपाथोनदीनांवरुणउग्रःसहस्रचक्षाः ॥ १० ॥ २५॥

आ । चष्टे । आसाम् । पाथः । नदीनाम् ।

वरुणः । उग्रः । सहस्रऽचक्षाः ॥ १० ॥ २५ ॥

सहस्रचक्षाः बहुचक्षुः वरुणः आसां नदीनां पाथोजलमाचष्टेभिपश्यति कीदृशोवरुणः उग्रः उद्गूर्णओजस्वी वा ॥ १० ॥

१०. ओजस्वी और अनेक आंखोंवाले वरुण नदियों के जल को देखते हैं।

॥ इति पंचमस्य तृतीये पंचविंशोवर्गः ॥ २५ ॥

अथैकादशी—

राजा॑ रा॒ष्ट्राना॒ं पेशो॑ न॒दीना॒मनु॑त्तमस्मै क्ष॒त्रं वि॒श्वायु॑ ॥ ११ ॥

राजा॑ । रा॒ष्ट्राना॑म् । पेशः॑ । न॒दीना॑म् । अनु॑त्तम् ।
अ॒स्मै॒ । क्ष॒त्रम् । वि॒श्वऽआ॑यु ॥ ११ ॥

राष्ट्रानां राष्ट्राणां णत्वाभावश्छान्दसः ईश्वराणामपि वरुणोराजा ईश्वरोभवति नदीनां पेशोरूपं रूपकृदपि भवतीत्यर्थः अस्मै षष्ठयर्थेचतुर्थी अस्य वरुणस्य क्षत्रं बलं अनुत्तं अन्यैरबाधितं विश्वायु सर्वतोगन्तृ भवतीति ॥ ११ ॥

११. वरुण राष्ट्रों के राजा और नदियों के रूप हैं। उनका बल अप्रतिहत और सर्वत्रगामी है।

अथ द्वादशी—

अवि॑ष्टो अ॒स्मान्विश्वा॑सु वि॒क्ष्वद्युं॑ कृणोत॒ शंसं॑ निनि॒त्सोः ॥ १२ ॥

अवि॑ष्टो॒ इति॑ । अ॒स्मान् । विश्वा॑सु । वि॒क्षु । अद्यु॑म् ।
कृ॒णो॒त॒ । शंस॑म् । नि॒नि॒त्सोः ॥ १२ ॥

अयं द्व्चोदैवः हे देवाः अस्मान् विश्वासु सर्वासु विक्षु प्रजासु । अविष्ट उइति समुदितमविष्टोइति । अविष्ट रक्षत शंसं निनित्सोः निन्दितुमिच्छतः शत्रोः अद्युं अदीप्तिं कृणोत कुरुत च ॥ १२

१२. देवो, सारी प्रजा में हमारी रक्षा करो। निन्दा करने की इच्छा-वाले शत्रु को दीप्ति-शून्य करो।

अथ त्रयोदशी—

व्ये॑तु दि॒द्युद्द्वि॒षामशे॑वा यु॒योत॒ विष्व॒ग्रप॑स्त॒नूना॑म् ॥ १३ ॥

वि । ए॒तु॒ । दि॒द्युत् । द्वि॒षाम् । अशे॑वा । यु॒योत॑ ।
विष्व॑क् । रपः॑ । त॒नूना॑म् ॥ १३ ॥

द्विषां शत्रूणां दिद्युदायुधमशेवा असुखकरी विष्वक् सर्वतोव्येतु अपगच्छतु तनूनामंगानां रपः पापं हे देवाः युयोत अस्मत्तः पृथक्कुरुत ॥ १३ ॥

१३. शत्रुओं के अमंगल-जनक आयुध चारों ओर हट जायें। देवो, शरीर का पाप हमसे अलग करो।

अवी॑न्नो अ॒ग्निर्ह॒व्यान्नमो॑भिः॒ प्रेष्ठो॑ अस्मा अधायि॒ स्तोमः॑ ॥ १४ ॥

अवी॑त् । नः॒ । अ॒ग्निः । ह॒व्य॒ऽअत् । नमः॑ऽभिः ।
प्रेष्ठः॑ । अ॒स्मै॒ । अ॒धा॒यि॒ । स्तोमः॑ ॥ १४ ॥

हव्याद् हव्यानामत्ताग्निः नमोभिरस्मदीयैर्नमस्कारैः प्रेष्ठः प्रियतमः सन् नोस्मान् अवीत रक्षतु । अस्मैअग्नये स्तोमः स्तोत्रमधायि अस्माभिर्न्यधायि ॥ १४ ॥

१४. हव्यभोजी अग्नि हमारे नमस्कारों-द्वारा प्रियतम होकर हमारी रक्षा करें। हम अग्नि के लिए स्तुति करते हैं।

सजूर्देवेभिरपांनपातंसखायंकृध्वंशिवोनोअस्तु॥ १५ ॥

सऽजूः । देवेभिः । अपाम् । नपातम् । सखायम् ।

कृध्वम् । शिवः । नः । अस्तु ॥ १५ ॥

हे स्तोतः अपामुदकानां नपातं पुत्रमग्निं सूनुः नपादित्यपत्यनामसु पाठात् देवेभिर्देवैः सजूः सह सखायं मित्रं स्तुतिभिः कृध्वं कुरुध्वं । सचापांनपात् नोस्मभ्यं शिवः सुखकरोस्तुभवतु॥ १५॥

१५. देवों के सहचर अग्नि को सखा बनाओ। वे हमारे लिए मङ्गल-कर हों।

अथ षोडशी—

अब्जामुक्थैरहिंगृणीषेबुध्नेनदीनांरजःसुषीदन्॥ १६ ॥

अप्ऽजाम् । उक्थैः । अहिम् । गृणीषे । बुध्ने ।

नदीनाम् । रजःऽसु । सीदन् ॥ १६ ॥

अहिं मेघानां हन्तारं नदीनामुदकानां बुध्ने स्थाने बुध्नमन्तरिक्षं बद्धाअस्मिन् धृताआप-इतिव्युत्पत्तेः तस्मिन् रजःसु उदकेषु सीदन् सीदन्तं अब्जां अप्सुजातं इममग्निं उक्थैः स्तोत्रैः गृणीषे । तथाचयास्कः—बुध्नेनदीनां रजस्सु उदकेषु सीदन् बुध्नमन्तरिक्षं बद्धाअस्मिन्धृता आपइतीति[1] ॥ १६ ॥

१६. मेघों के घातक, नदी-स्थान (जल) में बैठे हुए और जल से उत्पन्न अग्नि की स्तोत्र-द्वारा स्तुति की जाती है।

मानोहिर्बुध्न्योरिषेधान्मायज्ञोअस्यस्रिधदृतायोः ॥ १७॥

मा । नः । अहिः । बुध्न्यः । रिषे । धात् । मा । यज्ञः ।

अस्य । स्रिधत् । ऋतऽयोः ॥ १७ ॥

अहिर्बुध्न्यः बुध्नेन्तरिक्षे भवोबुध्न्यः अहिश्चासौ बुध्न्यश्चेत्यहिर्बुध्न्योग्निः नोस्मान्रिषे हिंसकाय माधात् माददातु अस्य ऋतायोर्यज्ञकामस्य यजमानस्य यज्ञोमा च स्रिधत् नक्षीयेत यद्वा अस्याहिर्बुध्न्यस्य इममहिर्बुध्न्यमुद्दिश्य ऋतयोर्यज्ञकामस्य योयज्ञः सनक्षीयेतेत्यर्थः ॥ १७ ॥

१७. अहिर्बुध्न्य (अग्नि) हमें हिंसक के हाथ में समर्पण नहीं करें। याज्ञिक का यज्ञ क्षीण न हो।

अथाष्टादशी—

उतनंएषुनृषुश्रवोधुःप्ररायेयन्तुशर्धन्तोअर्यः ॥ १८ ॥

उत । नः । एषु । नृषु । श्रवः । धुः । प्र । राये । यन्तु ।

शर्धन्तः । अर्यः ॥ १८ ॥

---

1 नि० १०, ४४ ।

अयं द्वचोदैवोमारुतोवा उतापिच नोस्मदीयेषु एषु नृषु पुरुषेषु श्रवोन्नं धुर्देवामरुतोवा धारयन्तु। राये धनार्थं शर्धन्तः उत्सहमानाः मीयमाणावा अर्यः अरयः मयन्तु प्रगच्छन्तु म्रियन्तामित्यर्थः ॥ १८ ॥

१८. देवता लोग हमारे लोगों के लिए अन्न धारण करते हैं। धन के लिए उत्साही शत्रु मर जायें।

तपन्तिशत्रुंस्व१र्णभूमामहासेनासोअमेभिरेषाम्॥ १९ ॥

तपन्ति। शत्रुम्। स्वः। न। भूमं। महाऽसेनासः।
अमेभिः। एषाम् ॥ १९ ॥

महासेनासोमहासेनाराजानः एषां मरुतां देवानां वा अमेभिर्बलैः भूमा भुवनानि स्वर्ण आदित्यइव शुक्रं स्वकीयं तपन्ति बाधन्ते महान्तोपि राजानः अमैर्बलैः शत्रून् बाधन्ते तानि बलानि देवानामेवेत्यर्थः ॥ १९ ॥

१९. जैसे सूर्य सारे भुवनों को तप्त करते हैं, वैसे ही महासेनावाले राजा लोग देवों के बल से शत्रुओं को ताप देते हैं।

आयन्नःपत्नीर्गमन्त्यच्छात्वष्टासुपाणिर्दधातुवीरान्॥ २०॥२६॥

आ। यत्। नः। पत्नीः। गमन्ति। अच्छ। त्वष्टा।
सुऽपाणिः। दधातु। वीरान् ॥ २० ॥ २६ ॥

अस्यां देवपत्न्यः त्वष्टाच देवता यद्यदा पत्नीर्देवानां पत्न्योनोस्मानच्छाभ्यागमंति आगच्छन्ति तदा सुपाणिः शोभनहस्तः त्वष्टा देवोवीरान् पुत्रान् दधातु अस्मभ्यं ददातु ॥ २० ॥

२०. जिस समय देव-स्त्रियाँ हमारे सामने आती हैं, उस समय उत्तम हाथवाले त्वष्टा हमें वीर पुत्र प्रदान करें।

॥ इति पंचमस्य तृतीये षड्विंशो वर्गः ॥ २६ ॥

अथैकविंशी—

प्रतिनःस्तोमन्त्वष्टाजुषेतस्यादस्मेअरमतिर्वसूयुः ॥ २१ ॥

प्रति। नः। स्तोमम्। त्वष्टा। जुषेत। स्यात्।
अस्मे इति। अरमतिः। वसुऽयुः ॥ २१ ॥

नोस्माकं स्तोमं स्तोत्रं त्वष्टा प्रतिजुषेत प्रतिसेवेत। अपि च अरमतिः पर्याप्तबुद्धिः सर्वविषयव्यापिबुद्धिर्वा त्वष्टा अस्मे अस्मदर्थं वसूयुः धनकामः स्यात् भूयात्॥ २१॥

२१. त्वष्टा हमारे स्तोत्रों की सेवा करते हैं। पर्याप्त-बुद्धि त्वष्टा हमारे धनाभिलाषी हों।

**तानो॑रासन्राति॒षाचो॒वसू॒न्यारोद॑सीवरुणा॒नीशृ॑णोतु।**
**वरू॑त्रीभिः॒सुश॒र॒णोनो॑अस्तु॒त्वष्टा॑सु॒दत्रो॒विद॑धातु॒राय॑ः॥ २२॥**

ता। नः॒। रा॒स॒न्। रा॒ति॒ऽसाच॑ः। वसू॑नि। आ।
रोद॑सी॒ इति॑। व॒रु॒णा॒नी। शृ॒णो॒तु।
वरू॑त्रीभिः। सु॒ऽश॒र॒णः। नः॒। अ॒स्तु॒। त्वष्टा॑। सु॒ऽदत्र॑ः।
वि। द॒धा॒तु॒। राय॑ः। २२॥

ता यान्यस्माकमभीष्टानि तानि वसूनि धनानि रातिषाचो दानसमवेता देवपत्न्योनोस्मभ्यं रासन् प्रयच्छन्तु। अपि च वरुणानी वरुणस्य पत्नी आशृणोत्वस्मदीयं स्तोत्रमभिशृणोतु। रोदसी द्यावापृथिव्यौ चाभिशृणुतां। सुदत्रः कल्याणदानः त्वष्टाच वरूत्रीभिरुपद्रवानांवारयित्रीभिर्देवपत्नीभिः सह नोस्मभ्यं सुशरणः सुशरणप्रदोस्तु रायोधनानिच विदधातु॥ २२॥

२२. दान-निपुण देव-पत्नियां हमारा मनोरथ हमें प्रदान करें। द्यावा-पृथिवी और वरुण-पत्नी भी श्रवण करें। कल्याणकर और दान-शील त्वष्टा, उपद्रव-निवारिणी देव-स्त्रियों के साथ, हमारे लिए शरण्य हों।

**तन्नो॒रायः॒पर्व॑ता॒स्तन्न॒आप॒स्तद्रा॑ति॒षाच॒ओष॑धीरु॒तद्यौः।**
**वन॒स्पति॑भिः॒पृ॒थि॒वीस॒जोषा॑उ॒भेरोद॑सी॒परि॑पासतोनः॥ २३॥**

तत्। नः॒। राय॑ः। पर्व॑ताः। तत्। नः॒। आप॑ः। तत्। रा॒ति॒ऽसाच॑ः।
ओष॑धीः। उ॒त। द्यौः। व॒न॒स्पति॑ऽभिः। पृ॒थि॒वी। स॒ऽजोषा॑ः।
उ॒भेइति॑। रोद॑सी॒ इति॑। परि॑। पा॒स॒तः॒। नः॒॥ २३॥

नोस्माकं तदित्यव्ययः ता रायोधनानि पर्वताः परिपान्तु नोस्माकं तत् ता रायः आपश्च परिपान्तु तद्रातिषाचोदानसहितादेवपत्न्यश्च परिपान्तु ओषधीरोषधयश्च तत्परिपान्तु उतापिच द्यौस्तत्परिपातु वनस्पतिभिः सजोषाः सहिता पृथिव्यन्तरिक्षं च तत्परिपातु आपः पृथिवीत्यन्तरिक्षनामसु पाठात् नोस्माकं तदुभेरोदसी द्यावापृथिव्यावपि परिपासतः परिरक्षतां॥२३॥

२३. हमारे उस धन का पालन पर्वतगण करें। सारे जल भी हमारे उस धन का पालन करें। दान-परायणा देव-पत्नियां भी उसका पोषण करें। ओषधियां और द्युलोक भी पालन करें। वनस्पतियों के साथ अन्तरिक्ष भी उसका पालन करें। द्यावापृथिवी हमारी रक्षा करें।

अथ चतुर्विंशी—

अनुतदुर्वीरोदसीजिहातामनुद्युक्षोवरुणइन्द्रसखा ।
अनुविश्वेमरुतोयेसहासोरायःस्यामधरुणंधियध्यै ॥ २४ ॥

अनु । तत् । उर्वीइति । रोदसीइति । जिहाताम् । अनु । द्युक्षः ।
वरुणः । इन्द्रऽसखा । अनु । विश्वे । मरुतः । ये ।
सहासः । रायः । स्याम । धरुणम् । धियध्यै ॥ २४ ॥

तद्वक्ष्यमाणमुर्वी विस्तीर्णे रोदसी द्यावापृथिव्यावनुजिहातां अनुगच्छताम् अनुमन्येतामित्यर्थः द्युक्षोदीप्तेर्निवासभूतः इन्द्रसखा इन्द्रसखः इन्द्रः सखा यस्येति बहुव्रीहिः वरुणश्च तदनुजिहातां द्विवचनान्तस्यैकवचनान्ततया विपरिणामः । येसहासः शत्रूणामभिभवितारस्ते मरुतोपि तदनुजिहतां अत्र बहुवचनान्ततया विपरिणामः । यदनुमन्तव्यं तदाह—धियध्यै धरणीयं धारयितुं रायोधनस्य धरुणं धाम स्थानं वयं स्याम भवेमेति ॥ २४ ॥

२४. हम धारणीय धन के आश्रय होंगे। विस्तृत द्यावापृथिवी उसका अनुमोदन करें। दीप्ति के आधार इन्द्र और सखा वरुण भी उसका समर्थन करें। पराजय करनेवाले मरुद्गण भी अनुमोदन करें।

तन्नइन्द्रोवरुणोमित्रोअग्निरापओषधीर्वनिनोजुषन्त ।
शर्मन्त्स्याममरुतामुपस्थेयूयंपातस्वस्तिभिःसदानः ॥२५॥ २७॥

तत् । नः । इन्द्रः । वरुणः । मित्रः । अग्निः । आपः । ओषधीः ।
वनिनः । जुषन्त । शर्मन् । स्याम । मरुताम् । उपऽस्थे ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ २५ ॥ २७ ॥

नोस्मभ्यं तदिदं स्तोत्रमिन्द्रोवरुणश्च मित्रश्चाग्निश्चापश्चौषधीरोषधयश्च वनिनोवृक्षाश्च जुषन्त जुषन्तां सेवन्तां । वयं च मरुतामुपस्थे उपस्थाने वर्तमानाः शर्मन् शर्मणि सुखे गृहे वा स्याम भवेम सिद्धमन्यत् ॥ २५ ॥

२५. इन्द्र, वरुण, मित्र, अग्नि, जल, ओषधियाँ और वृक्ष भी, हमारे लिए, इस स्तोत्र का सेवन करें। मरुतों के पास निवास कर हम सुख से रहेंगे। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य तृतीये सप्तविंशोवर्गः ॥२७॥

शंनइन्द्राग्नीति पंचदशर्चं द्वितीयं सूक्तं अत्रेयमनुक्रमणिका—शंनः पंचोना शान्तिरिति । वसिष्ठऋषिः त्रिष्टुप्छन्दः वैश्वदेवंहेत्युक्तत्वादिदमपि वैश्वदेवं। महानाम्नीव्रते एतत्सूक्तंजप्यं तथाचसूत्रितं—भद्रंकर्णेभिःशृणुयामदेवाः शंनइन्द्राग्नीभवतामवोभिरिति एवमेताश्च ।

तत्र प्रथमा—

शंनइन्द्राग्नीभवतामवोभिःशंनइन्द्रावरुणारातहव्या।
शमिन्द्रासोमासुवितायशंयोःशंनइन्द्रापूषणावाजसातौ॥ १ ॥

शम्। नः। इन्द्राग्नी इति। भवताम्। अवःऽभिः। शम्। नः।
इन्द्रावरुणा। रातऽहव्या। शम्। इन्द्रासोमा। सुविताय। शम्।
योः। शम्। नः। इन्द्रापूषणा। वाजऽसातौ॥ १॥

नोस्माकमस्मभ्यं वा इन्द्राग्नी अवोभीरक्षणैः शंशांत्यै भवतां। राहतव्या रातहव्यौ यजमानैर्दत्तहविष्काविन्द्रावरुणेन्द्रावरुणावपि नोस्मभ्यं शंशांत्यै भवतां। इन्द्रासोमा इन्द्रासोमावपि नः शं शांत्यै सुविताय कल्याणाय च भवतां शं शांत्यै सुखाय च पुनरुक्तिरादरार्था अथवा शं शमनहेतुकं सुखं योः विषययोगनिमित्तं सुखमित्यपुनरुक्तिः। इन्द्रापूषणा इन्द्रापूषणावपि वाजसातौ युद्धे अन्नलाभे निमित्ते वा नः शं शांत्यै भवतामित्यर्थः॥ १॥

१. इन्द्र और अग्नि, हमारे लिए रक्षण-द्वारा शान्तिप्रद होओ। इन्द्र और वरुण, यजमान ने हव्य प्रदान किया है। तुम लोग हमारे लिए शान्तिप्रद होओ। इन्द्र और सोम हमारे लिए शान्ति और कल्याण देनेवाले हों। इन्द्र और पूषा हमारे लिए शान्ति और सुख दें।

शंनोभगःशमुनःशंसोअस्तुशंनःपुरंधिःशमुसन्तुरायः।
शंनःसत्यस्यसुयमस्यशंसःशंनोअर्यमापुरुजातोअस्तु॥ २ ॥

शम्। नः। भगः। शम्। ऊँ इति। नः। शंसः। अस्तु।
शम्। नः। पुरम्ऽधिः। शम्। ऊँ इति। सन्तु। रायः। शम्। नः।
सत्यस्य। सुऽयमस्य। शंसः। शम्। नः। अर्यमा। पुरुऽजातः। अस्तु॥२॥

नोस्माकं शं शांत्यै भगोदेवोस्तु भवतु नोस्माकं शमु शांत्यै एव शंसोनराशंसोस्तु भवतु नोस्माकं शं शांत्यै पुरंधिर्बहुधीरप्यस्तु रायोधनान्यपिशमु शांत्यै एव सन्तु नोस्माकं सुयमस्य शोभनयमयुक्तस्य सत्यस्य शंसोवचनमपि शमस्तु नोस्माकं शं शांत्यै पुरुजातोबहुप्रादुर्भावोर्यमादेवोप्यस्तु॥ २॥

२. भग देवता हमारे लिए शान्ति दें। हमारे लिए नराशंस शान्तिप्रद हों। हमारे लिए पुरन्धि शान्तिप्रद हों। सारे धन हमारे लिए शान्तिप्रद हों। उत्तम और यम-युक्त सत्य का वचन हमारे लिए शान्ति दे। बहु बार आविर्भूत अर्यमा हमारे लिए शान्तिदाता हों।

शंनोधाताशमुधर्तानोअस्तुशंनउरूचीभवतुस्वधाभिः।
शंरोदसीबृहतीशंनोअद्रिःशंनोदेवानांसुहवानिसन्तु॥ ३ ॥

शम् । नः । धाता । शम् । ॐ इति । धर्ता । नः । अस्तु । शम् ।
नः । उरूची । भवतु । स्वधाभिः । शम् । रोदसी इति । बृहती इति ।
शम् । नः । अद्रिः । शम् । नः । देवानाम् । सुऽहवानि । सन्तु ॥३॥

नोस्माकं शं शांत्यै धातादेवोस्तु नोस्माकं शमु शांत्यै एव विधर्ता पुण्यपापानां विधारयिता वरुणोदेवोप्यस्तु नोस्माकं शं शांत्यै उरूचीविवर्तगमनापृथिव्यपि स्वधाभिरन्नैः सहास्तु बृहतीमहत्यौ रोदसी द्यावापृथिव्यावपि शं भवतां अद्रिः पर्वतोपि नोस्माकं शं शांत्यै भवतु । शं शांत्यै नोस्माकंदेवानांसुहवानि सुष्टुतयःसन्तु भवन्तु ॥ ३ ॥

३. धाता हमारे लिए शान्ति दें। धर्त्ता वरुण हमारे लिए शान्ति दें। अन्न के साथ पृथिवी हमारे लिए शान्ति दे। महती द्यावापृथिवी हमारे लिए शान्ति दें। पर्वत हमारे लिए शान्ति दें। देवों की सारी उत्तम स्तुतियाँ हमें शान्ति दें।

शंनोअग्निर्ज्योतिरनीकोअस्तुशंनोमित्रावरुणावश्विनाशम् ।
शंनःसुकृतांसुकृतानिसन्तुशंनइषिरोअभिवातुवातः ॥ ४ ॥

शम् । नः । अग्निः । ज्योतिःऽअनीकः । अस्तु । शम् । नः ।
मित्रावरुणौ । अश्विना । शम् । शम् । नः । सुऽकृताम् । सुऽकृतानि ।
सन्तु । शम् । नः । इषिरः । अभि । वातु । वातः ॥ ४ ॥

ज्योतिरनीकोज्योतिर्मुखोग्निः नोस्माकं शं शांत्यै अस्तु भवतु मित्रावरुणा मित्रावरुणावपि नोस्माकं शं शांत्यै भवतां अश्विना अश्विनावपि शं भवतां सुकृतां पुण्यकर्मणां पुरुषाणां सुकृतानि पुण्यकर्माणि अपि नोस्माकं शं शांत्यै सन्तु भवंतु । इषिरोगमनशीलोपि वातोवायुरपि नोस्माकं शं शांत्यै अभिवातु ॥ ४ ॥

४. ज्वाला-मुख अग्नि हमारे लिए शान्ति दें। मित्र और वरुण हमें शान्ति दें। अश्विनीकुमार हमें शान्ति दें। पुण्यात्माओं के पुण्यकर्म हमें शान्ति दें। गति-शील वायु भी हमारी शान्ति के लिए बहें।

शंनोद्यावापृथिवीपूर्वहूतौशमन्तरिक्षंदृशयेनोअस्तु ।
शंनओषधीर्वनिनोभवन्तुशंनोरजसस्पतिरस्तुजिष्णुः ॥५॥२८॥

शम् । नः । द्यावापृथिवीऽइति । पूर्वऽहूतौ । शम् । अन्तरिक्षम् ।
दृशये । नः । अस्तु । शम् । नः । ओषधीः । वनिनः । भवन्तु ।
शम् । नः । रजसः । पतिः । अस्तु । जिष्णुः ॥ ५ ॥ २८ ॥

नोस्माकं शं शांत्यै द्यावापृथिवी द्यावापृथिव्यौ पूर्वहूतौ प्रथमाह्वाने भवतां अन्तरिक्षमपि नोस्माकं दृशये दर्शनाय शमस्तु नोस्माकं शं शांत्यै ओषधीरोषधयोपि भवन्तु वनिनोवृक्षाश्च शं भवन्तु जिष्णुः जयशीलो रजसोलोकस्य पतिरिन्द्रोपि नोस्माकं शं शांत्यै अस्तु ॥ ५॥

५. प्रथम आह्वान में द्यावापृथिवी हमारे लिए शान्ति दें। दर्शनार्थ अन्तरिक्ष हमारे लिए शान्ति दे। ओषधियाँ और वृक्ष हमें शान्ति दें। विजय-परायण लोकपति इन्द्र भी हमें शान्ति दें।

॥ इति पंचमस्य तृतीयेष्टाविंशोवर्गः ॥ २८ ॥

शंनइन्द्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः।
शंनोरुद्रोरुद्रेभिर्जलाषःशनस्त्वष्टाग्नाभिरिहशृणोतु॥ ६ ॥

शम्। नः। इन्द्रः। वसुऽभिः। देवः। अस्तु। शम्। आदित्येभिः। वरुणः। सुऽशंसः। शम्। नः। रुद्रः। रुद्रेभिः। जलाषः। शम्। नः। त्वष्टा। ग्नाभिः। इह। शृणोतु ॥ ६ ॥

देवोद्योतनादिगुणयुक्तइन्द्रोवसुभिर्देवैः सार्धं नोस्माकं शंशांत्यै भवतु सुशंसः शोभनस्तुतिर्वरुणोदेवः आदित्येभिः आदित्यैर्देवैः सार्धं शं शांत्यै अस्तु भवतु जलाषः सुखरूपोरुद्रोदुःखद्रावकोदेवः रुद्रेभिः रुद्रैः सार्धं शं शांत्यै नोस्माकं भवतु इहयज्ञे त्वष्टादेवः ग्नाभिर्देवपत्नीभिः सार्धं नः शं शांत्यै भवतु इहयज्ञे नः स्तोत्रं शृणोतुच ॥ ६॥

६. वसुओं के साथ इन्द्रदेव हमें शान्ति दें। आदित्यों के साथ शोभन स्तुतिवाले वरुण हमें शान्ति दें। रुद्रगण के लिए रुद्रदेव हमें शान्ति दें। देव-स्त्रियों के साथ त्वष्टा हमें शान्ति दें। यज्ञ हमारा स्तोत्र सुने।

शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसन्तुयज्ञाः।
शंनःस्वरूणांमितयोभवन्तुशंनःप्रस्व१ःशम्वस्तुवेदिः ॥ ७ ॥

शम्। नः। सोमः। भवतु। ब्रह्म। शम्। नः। शम्। नः। ग्रावाणः। शम्। ऊँ इति। सन्तु। यज्ञाः। शम्। नः। स्वरूणाम्। मितयः। भवन्तु। शम्। नः। प्रऽस्वः। शम्। ऊँ इति। अस्तु। वेदिः ॥ ७ ॥

नोस्माकं शं शांत्यै सोमोदेवतारूपः भवतु ब्रह्म स्तोत्रमपि नोस्माकं शं शांत्यै भवतु ग्रावाणोभिषवसाधनभूताः पाषाणाअपि नोस्माकं शं शांत्यै भवन्तु यज्ञाश्च नः शमु शांत्यै एव सन्तु स्वरूणां यूपानां मितयः उन्मानान्यपि नोस्माकं शं शांत्यै भवन्तु प्रस्वः ओषधयोपि नोस्माकं शं शांत्यै भवन्तु वेदिरपि नः शमु शांत्यै एवास्तु ॥ ७ ॥

७. सोम हमें शान्ति दे। स्तोत्र हमें शान्ति दे। पत्थर हमें शान्त दे। यज्ञ हमें शान्ति दे। यूपों का माप हमें शान्ति दें। ओषधियाँ हमें शान्ति दें। वेदी हमें शान्ति दे।

शंनःसूर्यउरुचक्षाउदेतुशंनश्चतंस्रःप्रदिशोभवन्तु ।
शंनःपर्वताध्रुववयोभवन्तुशंनःसिन्धवःशमुसन्त्वापः ॥ ८ ॥

शम् । नः । सूर्यः । उरुऽचक्षाः । उत् । एतु । शम् । न । चतंस्रः ।
प्रऽदिशः । भवन्तु । शम् । न । पर्वताः । ध्रुवयः ।
भवन्तु । शम् । नः । सिन्धवः । शम् । ऊँ इतिं । सन्तु । आपः ॥ ८ ॥

नोस्माकं शं शांत्यै सूर्यउरुचक्षाः विस्तीर्णतेजाः सन् उदेतु उदयं प्राप्नोतु। चतस्रः प्रदिशो-महादिशोपि नोस्माकं शं शांत्यै भवन्तु नोस्माकं शं शांत्यै पर्वताध्रुवयो ध्रुवाभवन्तु नोस्माकं शं शांत्यै सिन्धवोनद्योपि भवन्तु आपश्च नः शमु शांत्यै एव सन्तु ॥ ८ ॥

८. विस्तीर्ण-तेजा सूर्य हमारी शान्ति के लिए उदित हों। चारों महादिशायें हमें शान्ति दें। स्थिर पर्वत हमें शान्ति दें। नदियाँ हमें शान्ति दें। जल हमें शान्ति दे।

शंनोअदितिर्भवतुव्रतेभिःशंनोभवन्तुमरुतःस्वर्काः ।
शंनोविष्णुःशमुपूषानोअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥ ९ ॥

शम् । नः । अदितिः । भवतु । व्रतेभिः । शम् । नः । भवन्तु । मरुतः ।
सुऽअर्काः । शम् । नः । विष्णुः । शम् । ऊँ इतिं । पूषा । नः अस्तु ।
शम् । नः । भवित्रम् । शम् । ऊँ इतिं । अस्तु । वायुः ॥ ९ ॥

अदितिर्देवी व्रतेभिर्व्रतैः कर्मभिः सार्धं नोस्माकं शं शांत्यै भवतु स्वर्काः शोभनस्तुतयो-मरुतोपि नोस्माकं शं शांत्यै सन्तु विष्णुः व्यापकः नोस्माकं शं शांत्यै अस्तु पूषादेवोपि नोस्मा-कं शमु शांत्यै एवास्तु भवित्रं भुवनमन्तरिक्षं उदकंवा नोस्माकं शं शांत्यै अस्तु वायुरपि नः शमु शांत्यै एवास्तु ॥ ९ ॥

९. कर्म-द्वारा अदिति हमें शान्ति दें। शोभन स्तुतिवाले मरुद्गण हमें शान्ति दें। विष्णु हमें शान्ति दें। पूषा हमें शान्ति दें। अन्तरिक्ष हमें शान्ति दे। वायु हमें शान्ति दे।

शंनोदेवःसवितात्रायमाणःशंनोभवन्तूषसोविभातीः ।
शंनःपर्जन्योभवतुप्रजाभ्यःशंनःक्षेत्रस्यपतिरस्तुशंभुः ॥१०॥२९॥

शम् । नः । देवः । सविता । त्रायमाणः । शम् । नः । भवन्तु ।
उषसः । विऽभातीः । शम् । नः । पर्जन्यः । भवतु । प्रऽजाभ्यः ।
शम् । नः । क्षेत्रस्य । पतिः । अस्तु । शम्ऽभुः ॥ १० ॥ २९ ॥

देवः क्रीडनादिगुणयुक्तः सविता त्रायमाणो रक्षन् नोस्माकं शं शांत्यै भवतु विभाती व्युंच्छंत्यःउषसोपिनोस्माकंशं शांत्यै भवन्तु नोस्माकं प्रजाभ्यः पर्जन्योपि शं भवतु शंभुः सुख-स्यभावयिता क्षेत्रस्य पतिर्नोस्माकं शं शांत्यै अस्तु ॥ १०॥

१०. रक्षण करते हुए सविता हमें शान्ति दें। अन्धकार-विनाशिनी उषायें हमें शान्ति दें। हमारी प्रजा के लिए पर्जन्य शान्ति दें। क्षेत्रपति शम्भु हमें शान्ति दें।

॥ इति पंचमस्य तृतीये एकोनत्रिंशोवर्गः ॥ २९॥

शंनोदेवाविश्वदेवाभवन्तुशंसरस्वतीसहधीभिरस्तु ।
शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थिवाःशंनोअप्याः ॥ ११ ॥

शम् । नः । देवाः । विश्वऽदेवाः । भवन्तु । शम् । सरस्वती । सह ।
धीभिः । अस्तु । शम् । अभिऽसाचः । शम् । ऊँ इति । रातिऽसाचः ।
शम् । नः । दिव्याः । पार्थिवाः । शम् । नः । अप्याः ॥ ११ ॥

विश्वदेवा बहुस्तोत्रकादेवाः नोस्माकं शं शांत्यै भवन्तु सरस्वतीच धीभिः स्तुतिभिः कर्मभिर्वा सह नोस्माकं शं शांत्यै अस्तु अभिषाचोयज्ञमभितः सेवमानाश्च नः शं शांत्यै भवन्तु रातिषाचो दानं सेवमानाअपि शमु शांत्यै एव भवन्तु दिव्यादिविभवाश्च नोस्माकं शं शांत्यै भवन्तु पार्थिवाः पृथिव्यां संभूताश्च नः शं भवन्तु अप्या अप्स्वंतरिक्षेभवाश्च आकाशं आपइ-यन्तरिक्षनामसु पाठात् नोस्माकं शं शांत्यै भवन्तु ॥ ११ ॥

११. प्रकाशमान विश्वदेवगण हमें शान्ति दें। कर्म के साथ सरस्वती हमें यज्ञ-सेवक शान्ति दें। दान-निपुण हमें शान्ति दें। भूलोक, द्युलोक और अन्तरिक्ष लोक में उत्पन्न प्राणी हमें शान्ति दें।

शंनःसत्यस्यपतयोभवन्तुशंनोअर्वन्तःशमुसन्तुगावः ।
शंनऋभवःसुकृतःसुहस्ताःशंनोभवन्तुपितरोहवेषु ॥ १२ ॥

शम् । नः । सत्यस्य । पतयः । भवन्तु । शम् । नः । अर्वन्तः । शम् ।
ऊँ इति । सन्तु । गावः । शम् । नः । ऋभवः । सुऽकृतः । सुऽहस्ताः ।
शम् । नः । भवन्तु । पितरः । हवेषु ॥ १२ ॥

सत्यस्य पतयः पालकाः सत्यशीलादेवानोस्माकं शं शांत्यै भवंतु अर्वन्तोश्वाश्चनोस्माकं शं शांत्यै भवन्तु गावोपि नः शं शांत्यै सन्तु भवन्तु सुकृतः सुकर्माणः सुहस्ताः शोभनहस्ताः ऋभवोपि नोस्माकं शं शांत्यै सन्तु हवेषु स्तोत्रेषु सत्सु पितरोपि नोस्माकं शं शांत्यै भवन्तु॥१२॥

**१२. सत्य-पालक देवता हमें शान्ति दें। अश्वगण हमें शान्ति दें। गायें हमारे लिए सुखदात्री हों। सुकर्म-कर्त्ता और सुन्दर हाथवाले ऋभुगण हमें शान्ति दें। स्तोत्र करने पर हमारे पितर भी हमारे लिए शान्ति दें।**

शंनोअजएकंपाद्देवोअंस्तुशंनोहिर्बुध्न्य१ःशंसंमुद्रः।
शंनोअपांनपात्पेरुरंस्तुशंनःपृश्निर्भवतुदेवगोपा ॥ १३ ॥

शम् । नः । अजः । एकंऽपात् । देवः । अस्तु । शम् । नः । अहिः । बुध्न्यः । शम् । समुद्रः । शम् । नः । अपाम् । नपात् । पेरुः । अस्तु । शम् । नः । पृश्निः । भवतु । देवऽगोपा ॥ १३ ॥

अजएकपात् अजएकपान्नामधेयो देवोनोस्माकं शं शांत्यै अस्तु अहिर्बुध्न्यश्च नोस्माकं शं शांत्यै अस्तु समुद्रोपि नः शं शांत्यै अस्तु पेरुः उपद्रवेभ्यः पारयिता अपांनपात् अपांनपान्नामधेयोपि देवोनोस्माकं शं शांत्यै अस्तु देवगोपा देवागोपायितारो यस्यांसापृश्निर्मरुतां माता नोस्माकं शं शांत्यै भवतु ॥ १३ ॥

**१३. अज-एकपाद देव हमें शान्ति दें। अहिर्बुध्न्य देव हमें शान्ति दें। समुद्र हमें शान्ति दे। उपद्रव शान्ति करनेवाले "अपां नपात्" देव हमें शान्ति दें। देव-पालिका पृश्नि हमें शान्ति दें।**

आदित्यारुद्रावसंवोजुषन्तेदंब्रह्मंक्रियमाणंनवींयः।
शृण्वन्तुंनोदिव्याःपार्थिवासोगोजाताउतयेयज्ञियासः ॥ १४ ॥

आदित्याः । रुद्राः । वसंवः । जुषन्त । इदम् । ब्रह्म । क्रियमाणम् । नवींयः । शृण्वन्तु । नः । दिव्याः । पार्थिवासः । गोऽजाताः । उत । ये । यज्ञियासः ॥ १४ ॥

नवीयोनवतरमस्माभिः क्रियमाणमिदं ब्रह्मस्तोत्रं आदित्यादिव्याः अदितिर्द्यौरितिश्रुतेः। रुद्राआन्तरिक्षाः वसवः पार्थिवाश्च जुषन्त जुषन्तां सेवन्तां अन्येच दिव्याःदिविभवाःपार्थिवासः पार्थिवाः गोजाताः गोः पृश्नेर्जाताः नाकः गौरिति साधारणनामसु पाठात् उतापिच ये यज्ञियासोयज्ञार्हाः ते सर्वेपि नोस्माकं हवं शृण्वन्तु ॥ १४ ॥

**१४. हम यह नया स्तोत्र बनाते हैं। आदित्यगण, रुद्रगण और वसुगण इसका सेवन करें। द्युलोक, पृथिवी और पृश्नि से उत्पन्न तथा अन्य भी जितने यज्ञीय हैं, सब हमारा आह्वान सुनें।**

---

१ ऋ० सं० १. ६. १६. ।

अथ पंचदशी–

येदे॒वानां॒यज्ञियां॒यज्ञियानां॒मनो॒र्यजंत्राअ॒मृतां॑ऋत॒ज्ञाः।
तेनो॑रासन्तामुरुगा॒यम॒द्ययू॒यंपा॑तस्व॒स्तिभि॒ःसदा॑नः ॥ १५ ॥३०॥

ये। दे॒वाना॑म्। य॒ज्ञियाः॑। य॒ज्ञिया॑नाम्। मनोः॑। यज॑त्राः। ।
अ॒मृताः॑। ऋ॒त॒ऽज्ञाः। ते। नः॒। रा॒स॒न्ता॒म्। उ॒रु॒ऽगा॒यम्। अ॒द्य।
यू॒यम्। पा॒त॒। स्व॒स्तिऽभिः॑। सदा॑। नः॒ ॥ १५ ॥ ३० ॥

यज्ञियानां यजनीयानां देवानामपि यज्ञियायजनीया मनोः प्रजापतेश्च यजत्रायजनीया अमृता मरणरहिता ऋतज्ञाः सत्यज्ञाये देवाः सन्ति ते सर्वे उरुगायं बहुकीर्तिं पुत्रमद्य नोसमभ्यं रासंतां प्रयच्छन्तु प्रसिद्धएवोत्तमः पादः ॥ १५ ॥

१५. यज्ञयोग्य देवो, यजनीय मनु प्रजापति और यजनीय अमर सत्यज्ञ जो देवगण हैं, वे हमें आज बहुकीर्त्तिवाला पुत्र प्रदान करें। तुम सदा हमें कल्याण द्वारा पालन करो।

॥ इति पंचमस्य तृतीये त्रिंशोवर्गः ॥ ३० ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके तृतीयोध्यायःसमाप्तः॥३॥

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितंवेदा योवेदेभ्योखिलंजगत्। निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम्॥१॥

अथ पंचमाष्टके चतुर्थोध्यायआरभ्यते तत्र षडनुवाकात्मकस्य वासिष्ठस्य सप्तममंडलस्य तृतीयेनुवाके द्वाविंशतिसूक्तानि तत्र प्रब्रह्मेतिनवर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं पूर्ववद्वैश्वदेवं अनुक्रान्तंच—प्रब्रह्मनवेति। विनियोगोलैंगिकः।

तत्र प्रथमा—

ॐम् प्र ब्रह्मैतु सदनादृतस्य वि रश्मिभिः ससृजे सूर्यो गाः।
वि सानुना पृथिवी सस्र उर्वी पृथु प्रतीकमध्येधे अग्निः ॥ १ ॥

प्र। ब्रह्म। एतु। सदनात्। ऋतस्य। वि। रश्मिऽभिः।
ससृजे। सूर्यः। गाः। वि। सानुना। पृथिवी। सस्रे।
उर्वी। पृथु। प्रतीकम्। अधि। आ। ईधे। अग्निः॥ १ ॥

ऋतस्य यज्ञस्य सदनात् स्थानात् देवयजनदेशात् ब्रह्म स्तोत्रं स्तुत्यान् सूर्यादीन् प्रैतु प्रकर्षेण गच्छतु। किं तत् ब्रह्मेति तदाह सूर्यः सर्वस्य प्रेरकः शोभनवीर्योवा देवः रश्मिभिरात्मीयैः किरणैः गाः अपोवृष्ट्युदकानि विससृजे विसृजति विमुंचति प्रवर्षति। श्रूयतेहि—याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्योवर्षतीति। स्मृतिश्चभवति—आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति। अतईदृशं माहात्म्यं सूर्यस्यैव विद्यते नान्यस्य चिदित्यनेन पादेन सूर्यः स्तूयते। अपिच पृथिवी प्रथिताभूमिः सानुना समुच्छ्रितेन पर्वतादिना उर्वी विस्तीर्णा सती विसस्रे विसरति व्याप्नोति तथा अग्निः पृथु विस्तीर्णं प्रतीकं पृथिव्या अवयवं देवयजनलक्षणं स्थानमधि अधिपरी अनर्थकाविति अधेः कर्मप्रवचनीयसंज्ञायां कर्मप्रवचनीययुक्तइतिसप्तम्यर्थे द्वितीया ईदृशे स्थाने आईधे आदीप्यते॥ १ ॥

१. यज्ञस्थान से स्तोत्र, उत्तमता से, सूर्य आदि के पास जाय। किरणों के द्वारा सूर्य ने वृष्टि का जल बनाया है। पृथिवी अपने सानुओं (पर्वतादि तटों) को विस्तृत करके व्याप्त हुई है। पृथिवी के विस्तृत अङ्गों के ऊपर अग्नि जलते हैं।

अथ द्वितीया—

इमांवांमित्रावरुणासुवृक्तिमिषंनकृण्वेअसुरानवीयः ।
इनोवामन्यःपदवीरदब्धोजनंचमित्रोयततिब्रुवाणः ॥ २ ॥

इमाम् । वाम् । मित्रावरुणा । सुऽवृक्तिम् । इषम् । न ।
कृण्वे । असुरा । नवीयः । इनः । वाम् । अन्यः । पदऽवीः ।
अदब्धः । जनम् । च । मित्रः । यतति । ब्रुवाणः ॥ २ ॥

हे असुरा असुरौ बलवन्तौ हे मित्रावरुणा मित्रावरुणौ वां युवाभ्यां इषं न हवीरूपमन्नमिव नवीयो नवीयसीं इमामस्मदीयां पुरोवर्तिनीं सुवृक्तिं स्तुतिं कृण्वे अहं स्तोता करोमि । युवयोरन्यः अन्यतरः इनः प्रभुः अदब्धः शत्रुभिरहिंसितोवरुणः पदवीः पदस्य स्थानस्य प्रजनयिता वरुणोहि धर्माधर्मयोर्धारयितेति पदवीरित्युच्यते । ब्रुवाणः अस्माभिः स्तूयमानो मित्रश्च जनं सर्वं प्राणिजातं यतति यातयति प्रवर्तयति । तथाच श्रूयते—मित्रोजनान्यातयतिब्रुवाणईति ॥ २ ॥

२. बली मित्र और वरुण, हव्य-रूप अन्न की तरह तुम्हारे लिए नई स्तुति करता हूँ। तुम लोगों में एक स्वामी वरुण हैं, जो स्थान के उत्पादक (धर्माधर्म के धारक) हैं और मित्र, स्तुति किये जाने पर, प्राणियों को प्रवर्तित करते हैं।

आवातस्यध्रजतोरन्तइत्याअपीपयन्तधेनवोनसूदाः ।
महोदिवःसदनेजायमानोचिक्रदद्वृषभःसस्मिन्नूधन् ॥ ३ ॥

आ । वातस्य । ध्रजतः । रन्ते । इत्याः । अपीपयन्त । धेनवः ।
न । सूदाः । महः । दिवः । सदने । जायमानः । अचिक्रदत् ।
वृषभः । सस्मिन् । ऊधन् ॥ ३ ॥

ध्रजतो गच्छतो वातस्य वायोः इत्याः गतयः आरन्ते अभितोरमन्ते तथा सूदाः सूदप्रेरणे इतिधातुः क्षीरस्य प्रेरयित्र्यः धेनवो न नेतिचार्थे गावश्च अपीपयन्त प्यायन्ते एधन्ते । अपि च महो महतः दिवो द्योतमानस्यादित्यस्य सदने स्थानेन्तरिक्षे जायमानः उत्पद्यमानः वृषभोवर्षणशीलः पर्जन्यः सस्मिन् ऊधन् सस्मिन्नन्तरिक्षे अचिक्रदत् ॥ ३ ॥

३. गति-परायण वायु की गति चारों ओर शोभा पाती है। दूध देनेवाली गाय बढ़ती हैं। महान् और प्रकाशमान आदित्य के स्थान (अन्तरिक्ष) में उत्पन्न और वर्षणशील मेघ उस अन्तरीक्ष में क्रन्दन (गर्जन) करता है।

---

१ ऋ० सं० ३. ४. ५. ।

गिरायएतायुनजद्धरीतइन्द्रप्रियासुरथाशूरधायू ।
प्रयोमन्युंरिरिक्षतोमिनात्यासुक्रतुंमर्यमणंववृत्याम् ॥ ४ ॥

गिरा । यः । एता । युनजंत् । हरी इति । ते । इन्द्र ।
प्रिया । सुऽरथा । शूर । धायू इति । प्र । यः । मन्युम् । रिरिक्षतः ।
मिनाति । आ । सुऽक्रतुम् । अर्यमणम् । ववृत्याम् ॥ ४ ॥

अस्याः पूर्वोर्धर्चे इन्द्रस्तुतिः । अपरोर्यम्णः स्तुतिः । हे शूर विक्रान्तेन्द्र तव प्रिया प्रियौ सुरथा सुष्ठुरंहणौ धायू धारकौ एता एतौ हरी त्वदीयावश्वौ योजनः गिरास्तुतिरूपयावाचा युनजत् रथे युंज्यात् हे इन्द्र त्वमस्य यागमायाहीति शेषः योर्यमा रिरिक्षतः हिंसितुमिच्छतः शत्रोः संबन्धिनं मन्युं कोपं प्रमिनाति प्रकर्षेण हिनस्ति सुक्रतुं शोभनकर्माणं अर्यमणं आववृत्यां स्तुत्या आवर्तयामि ॥ ४ ॥

४. शूर इन्द्र, जो मनुष्य तुम्हारे प्रिय, सुन्दर गमनवाले और धारक इन हरि नाम के दोनों घोड़ों को, स्तुति-द्वारा, रथ में जोतता है, उसके यज्ञ में आओ। अर्यमा हिंसा की इच्छा करनेवाले शत्रु का कोप विनष्ट करते हैं। उन्हीं शोभन कर्मवाले अर्यमा को स्तुति से आवर्त्तित करता हूँ।

यजन्तेअस्यसख्यंवयश्चनमस्विनःस्वऋतस्यधामन् ।
विपृक्षोबाबधेनृभिस्तवानइदंनमोरुद्रायप्रेष्ठम् ॥ ५ ॥ १ ॥

यजन्ते । अस्य । सख्यम् । वयः । च । नमस्विनः । स्वे ।
ऋतस्य । धामन् । वि । पृक्षः । बाबधे । नृऽभिः ।
स्तवानः । इदम् । नमः । रुद्राय । प्रेष्ठम् ॥ ५ ॥ १ ॥

अनया रुद्रः स्तूयते नमस्विनः हविर्लक्षणान्नवन्तः स्वे स्वकीये ऋतस्य यज्ञस्य धामन् धामनि स्थाने स्वकीययज्ञगृहे स्थिताइत्यर्थः वयश्च गन्तारः कर्माणि कुर्वाणाः यजमानाः अस्य रुद्रस्य सख्यं सखित्वमुद्दिश्य यजन्ते पूजयन्तु नृभिः नेतृभिः स्तवानः स्तूयमानोरुद्रः पृक्षोन्नं स्तोतृषु विबाबधे विबध्नाति ददातीत्यर्थः प्रेष्ठं रुद्रस्य प्रियतमं इदं नमस्तस्मै रुद्राय मया क्रियते ॥ ५ ॥

५. यजमान लोग, अन्नवाले होकर और यज्ञ-स्थल में अवस्थित रहकर, रुद्र का सख्य चाहते हैं। नेताओं-द्वारा स्तुत होने पर रुद्र अन्न देते हैं। मैं रुद्र का प्रिय नमस्कार करता हूँ।

॥ इतिपञ्चमस्यचतुर्थेप्रथमोवर्गः ॥ १ ॥

आयत्साकंयशसोवावशानाःसरस्वतीसप्तथीसिन्धुमाता ।
याःसुष्वयन्तसुदुघाःसुधाराअभिस्वेनपयसापीप्यानाः ॥ ६ ॥

आ । यत् । साकम् । यशसः । वावशानाः । सरस्वती ।
सप्तथी । सिन्धुऽमाता । याः । सुस्वयन्त । सुऽदुघाः ।
सुऽधाराः । अभि । स्वेन । पयसा । पीप्यानाः ॥ ६ ॥

यद् यासां गंगादीनां मध्ये सिन्धुमाता अपां मातृभूता सरस्वती एतदाख्यानदी सप्तथी सप्तमी भवति सुदुघाः कामान्दोग्धुं सुशक्याः सुधाराः शोभनधारोपेताश्च नद्यः सुष्वयन्त सुष्वयन्ते गतिकर्मैतत् प्रवहन्ति स्वेन स्वकीयेन पयसोदकेन अभि पीप्यानाःयाश्चाभिवर्धयंत्यः यशसोन्नवत्यः वावशाना कामयमानानद्यः साकं युगपदेव आगच्छन्तु आइत्युपसर्गस्य योग्यक्रियाध्याहारः ॥ ६ ॥

६. जिन नदियों में सिन्धु (नदी) माता है और सरस्वती (नदी) सप्तमी है, वे ही मनोरथपूर्ण करनेवाली और सुन्दर धारोंवाली नदियाँ प्रवाहित होती हैं। अपने जल से बढ़नेवाली, अन्नवाली और इच्छा करनेवाली नदियाँ एक साथ ही आवें।

उतत्येनोमरुतोमन्दसानाधियंतोकंचवाजिनोवन्तु ।
मानःपरिख्यदक्षराचरन्त्यवीवृधन्युज्यन्तेरयिंनः ॥ ७ ॥

उत । त्ये । नः । मरुतः मन्दसानाः । धियम् । तोकम् । च ।
वाजिनः । अवन्तु । मा । नः । परि । ख्यत् । अक्षरा । चरन्ती ।
अवीवृधन् । युज्यम् । ते । रयिम् । नः ॥ ७ ॥

उतापिच मन्दसानाः मोदमानाः वाजिनोवेगवन्तः त्ये ते मरुतो नोस्मदीयं धियं यज्ञाख्यं कर्म तोकं च अस्मदीयं पुत्रं च अवन्तु रक्षन्तु। अक्षरा व्याप्ता चरन्ती वाग्देवता च युज्यं नोस्मान्परित्यक्त्वा अस्मद्व्यतिरिक्तानन्यान् माख्यत् माद्राक्षीत्। ते पूर्वोक्तामरुतो वाक्च युक्तमपि नोस्मदीयं रयिं धनं अवीवृधन् वर्धयन्तु ॥ ७ ॥

७. प्रसन्न और वेगवान् मरुद्गण हमारे यज्ञ-कर्म और पुत्र की रक्षा करें। व्याप्त और विचरनेवाली वाग्देवता (सरस्वतीदेवी) हमें छोड़कर दूसरे को न देखें। मरुत् और वाक् हमारा धन नियत रहने पर भी उसे बढ़ावें।

अथाष्टमी—

प्रवोमहीमरमतिंकृणुध्वंप्रपूषणंविदथ्यं१नवीरम् ।
भगंधियोवितारंनोअस्याःसातौवाजंरातिषाचंपुरंन्धिम् ॥ ८ ॥

प्र । वः । मुहीम् । अरमतिम् । कृणुध्वम् । प्र । पूषणम् ।
विदथ्यम् । न । वीरम् । भगम् । धियः । अवितारम् । नः ।
अस्याः । सातौ । वाजम् । रातिऽसाचम् । पुरम्ऽधिम् ॥ ८ ॥

हे स्तोतारो वो यूयं अरमतिं उपरतिरहितां महीं महतीं भूमिं प्रकृणुध्वं आह्वयत तथा विदथ्यं यज्ञार्हं वीरं न सर्वेषां प्रेरकं च पूषणं एतन्नामकं देवं प्रकृणुध्वं तथा अस्याधियः नोस्मदीयस्यास्यकर्मणः अवितारं रक्षितारं भगं देवं च आह्वयत अपि च सातौ अस्मदीये यज्ञे युद्धेवा वाजं ऋभूणामन्यतमं देवं आह्वयत कीदृशं वाजं रातिषाचं दानसेचकं पुरंधिं पुराणां धारयितारं ॥ ८ ॥

८. तुम असीम और महती पृथिवी को बुलाओ। यज्ञ-योग्य वीर पूषा को बुलाओ। हमारे कर्म-रक्षक भग देवता को बुलाओ। दान-निपुण और प्राचीन (ऋभुओं में से एक) वाजदेव को यज्ञ में बुलाओ।

यज्ञपुच्छे अच्छायंवइतिचमसिनः स्वंस्वंचमसमभिमृशेयुः सूत्रितंच—अच्छायंवोमरुतः श्लोकएत्विति एतयाभिमृशंतीति।

अच्छायंवोमरुतःश्लोकएत्वच्छाविष्णुंनिषिक्तपामवोभिः ।
उतप्रजायैगृणतेवयोधुर्यूयंपातस्वस्तिभिःसदानः ॥ ९ ॥ २ ॥

अच्छ । अयम् । वः । मरुतः । श्लोकः । एतु । अच्छ ।
विष्णुम् । निसिक्तऽपाम् । अवःऽभिः । उत । प्रऽजायै ।
गृणते । वयः । धुः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥९॥२॥

हे मरुतो वो युष्मान् अयं श्लोकः अस्मदीयमिदं स्तोत्रं अच्छैतु अभिगच्छतु निषिक्तपां निषिक्तस्य गर्भस्य रक्षितारं यद्वा चमसे निषिक्तानां सोमानां पातारं अवोभिरस्मद्विषयरक्षणैर्युक्तं विष्णुंच अस्मदीयं स्तोत्रमच्छैतु उतापिच मरुतोविष्णुश्च गृणते स्तुवते मह्यं प्रजायै पुत्ररूपां प्रजां वयोन्नंच धुः अधुः दधतु। हे मरुतः हे विष्णो यूयं स्वस्तिभिरविनाशैर्नोस्मान् सदा सर्वदा पात रक्षत ॥ ९ ॥

९. मरुतो, हमारा यह श्लोक (स्तोत्र) तुम्हारे सामने जाय। आश्रय-दाता और गर्भपालक विष्णु के निकट भी जाय। वे स्तोता को पुत्र और अन्न दें। तुम हमें सदा कल्याण (स्वस्ति) द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे द्वितीयो वर्गः ॥ २ ॥

आवोवाहिष्ठइत्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवं अनुक्रम्यतेच—आवोष्टाविति । विनियोगोलैंगिकः ।

तत्र प्रथमा—

आवोवाहिष्ठोवहतुस्तवध्यैरथोवाजाऋभुक्षणोअमृक्तः ।
अभित्रिपृष्ठैःसवनेषुसोमैर्मदेसुशिप्रामहभिःपृणध्वम् ॥ १ ॥

आ । वः । वाहिष्ठः । वहतु । स्तवध्यै । रथः । वाजाः ।
ऋभुक्षणः । अमृक्तः । अभि । त्रिऽपृष्ठैः । सवनेषु ।
सोमैः । मदे । सुऽशिप्राः । महऽभिः । पृणध्वम् ॥ १ ॥

अनेन द्वृचेन ऋभवः स्तूयन्ते ऋभुक्षणः विस्तीर्णस्य तेजसोनिवासभूता हे वाजाः ऋभवः वाहिष्ठोवोढ्तमः स्तवध्यै स्तोतुमर्हं अमृक्तः केनाप्यहिंसितः युष्मदीयोरथः वो युष्मान् आवहतु आसमन्तात् अस्मदीयं यज्ञं प्रापयतु हेसुशिप्राः शोभनहनवः यूयं तेन रथेनागत्य सवनेष्वस्मदीययज्ञेषु मदे मदनिमित्ते त्रिपृष्ठैः क्षीरदधिसक्तुमिश्रैः महभिर्महद्भिः सोमैः अभि पृणध्वं युष्मदीयं जठरमभिपूरयत सरथः युष्मानावहत्विति पूर्वेणान्वयः ॥ १ ॥

१. विस्तृत तेज के आधार ऋभुओ (वाजो), वाहक, प्रशस्य और अहिंसक रथ तुम्हें ढोवे। सुन्दर जबड़ोंवाले ऋभुओ, यज्ञ में आनन्द के लिए दूध, दही और सत्तू में मिले सोमरस-द्वारा उदर-पूर्त्ति करो।

यूयंहरत्नंमघवत्सुधत्थस्वर्दृशऋभुक्षणोअमृक्तम् ।
संयज्ञेषुस्वधावन्तःपिबध्वंविनोराधांसिमतिभिर्दयध्वम् ॥ २ ॥

यूयम् । ह । रत्नम् । मघवत्ऽसु । धत्थ । स्वःऽदृशः । ऋभुक्षणः ।
अमृक्तम् । सम् । यज्ञेषु । स्वधाऽवन्तः । पिबध्वम् ।
वि । नः । राधांसि । मतिऽभिः । दयध्वम् ॥ २ ॥

हे ऋभुक्षणः हे ऋभवः स्वर्दृशः स्वर्गं पश्यन्तोयूयं ह यूयमेव मघवत्सु हविर्लक्षणान्नवत्सु अस्मासु निमित्तेषु अमृतं अहिंसितं चोरादिभिर्नापहृतमित्यर्थः रत्नं रमणीयं धत्थ धारयथ तदनन्तरं स्वधावन्तोबलवन्तस्ते यूयं यज्ञेषु अस्मदीययज्ञेषु संपिबध्वं सम्यक् सोमंपिबत अपिच यूयं मतिभिर्धनहेतुभिः नोस्मभ्यं राधांसि धनानि विदयध्वं विशेषेणदत्त ॥ २ ॥

२. स्वर्गदर्शी ऋभुओ, तुम लोग हविष्मान् लोगों के लिए अहिंसक (चोरों आदि से न चुराया जानेवाला) रत्न धारण करो। अनन्तर बलवान् होकर यज्ञ में सोमपान करो। कृपा-द्वारा हमें विशेष रूप से धन दो।

अथ तृतीया—

उवोचिथहिमघवन्देष्णंमहोअर्भस्यवसुनोविभागे।
उभातेपूर्णावसुनागभस्तीनसूनृतानियमतेवसव्या ॥ ३ ॥

उवोचिथ। हि। मघऽवन्। देष्णम्। महः। अर्भस्य। वसुनः।
विऽभागे। उभा। ते। पूर्णा। वसुना। गभस्ती इति।
न। सूनृता। नि। यमते। वसव्या ॥ ३ ॥

उवोचिथेत्याद्याः पंचचंइन्द्रदेवताकाः हे मघवन् धनवन्निन्द्र त्वं महोमहतः अर्भस्याल्पस्यच वसुनोधनस्य विभागे परिचरणानुकूलेदाननिमित्ते देष्णं धनं उवोचिथहि सेवसेखलु उचतिःसेवाकर्मा तथा ते त्वदीयौ उभा उभौ गभस्ती बाहू वसुना धनेन पूर्णा पूर्णौ भवतः ते त्वदीयासूनृतावाक् वसव्या वसूनि धनानि ननियमते ननियच्छति यद्वा वसव्या वसुषु धनेषु साधुः सूनृतावाक् धनेन संपूर्णौ त्वदीयौ बाहू ननियच्छति नाल्पंप्रदापयतीत्यर्थः ॥ ३ ॥

३. धनी इन्द्र, तुम विशेष और अल्प धन के दान के समय धन का सेवन करते हो। तुम्हारी दोनों बाहें धन से पूर्ण हैं। धन-प्राप्ति में तुम्हारा वचन बाधक नहीं होता।

त्वमिन्द्रस्वयशाऋभुक्षावाजोनसाधुरस्तमेष्यृक्वा।
वयंनुतेदाश्वांसःस्यामब्रह्मकृण्वन्तोहरिवोवसिष्ठाः ॥ ४ ॥

त्वम्। इन्द्र। स्वऽयशाः। ऋभुक्षाः। वाजः। न।
साधुः। अस्तम्। एषि। ऋक्वा। वयम्। नु। ते। दाश्वांसः।
स्याम। ब्रह्म। कृण्वन्तः। हरिऽवः। वसिष्ठाः ॥ ४ ॥

हे इन्द्र स्वयशाः असाधारणकीर्तिः ऋभुक्षाः ऋभुनिवासकः ऋभूणामीश्वरोवा त्वं साधुः साधकः वाजोन अन्नमिव ऋक्वा ऋक्वणः स्तोतुः मम अस्तं गृहं एषि प्राप्नुहि नु अद्य वयं वसिष्ठाः एतत्संज्ञकाऋषयो हे हरिवः स्वकीयाश्वोपेतेन्द्र ते त्वदर्थं दाश्वांसः हविर्लक्षणान्नं दत्तवन्तः ब्रह्म स्तोत्रं कृण्वन्तः कुर्वन्तःसन्तः स्याम भवेम ॥ ४ ॥

४. इन्द्र, तुम असाधारण-यशा, ऋभुओं के ईश्वर और साधक हो। दूसरे की तरह तुम स्तोता के घर में आओ। हरि अश्ववाले इन्द्र, आज हम (वसिष्ठ) हव्य प्रदान करके तुम्हारा स्तोत्र करते हैं।

अथ पंचमी—

सनितासिप्रवतोदाशुषेचिद्याभिर्विवेषोहर्यश्वधीभिः ।
ववन्मानुतेयुज्याभिरूतीकदानंइन्द्ररायआदशस्येः ॥ ५ ॥ ३ ॥

सनिता । असि । प्रऽवतः । दाशुषे । चित् । याभिः ।
विवेषः । हरिऽअश्व । धीभिः । ववन्म । नु । ते । युज्याभिः ।
ऊती । कदा । नः । इन्द्र । रायः । आ । दशस्येः ॥५॥ ३ ॥

हे हर्यश्व हरिनामकाश्वेन्द्र त्वं याभिर्धीभिः अस्मदीयाभिः स्तुतिभिः विवेषव्यामोषिसत्वं दाशुषेचित् हविर्दत्तवते यजमानायापि प्रवतः प्रवणस्य धनस्यसनितासि दाताभवसि अपिच हेइन्द्र त्वं नोस्मभ्यं कदा कस्मिन्काले रायो धनानि आदशस्येः प्रयच्छेः नु अद्य ते तव युज्याभिः योग्याभिः ऊती ऊतिभीरक्षाभिः ववन्म त्वां संभजेम ॥ ५ ॥

५. हर्यश्व, तुम हमारी स्तुति-द्वारा व्याप्त होते हो; इसलिए हव्य देनेवाले यजमान के लिए प्रवण धन के दाता हो। इन्द्र, तुम हमें कब धन दोगे? आज तुम्हारे योग्य रक्षण से हम प्रतिपालित होंगे।

॥ इति पंचमस्य चतुर्थे तृतीयोवर्गः ॥ ३ ॥

वासयसीववेधसस्त्वंनःकदानंइन्द्रवचसोबुबोधः ।
अस्तंतात्याधियारयिंसुवीरंपृक्षोनोअर्वान्युहीतवाजी ॥ ६ ॥

वासयसिऽइव । वेधसः । त्वम् । नः । कदा । नः । इन्द्र ।
वचसः । बुबोधः । अस्तम् । तात्या । धिया । रयिम् ।
सुऽवीरम् । पृक्षः । नः । अर्वा । नि । उहीत । वाजी ॥ ६ ॥

हे इन्द्र त्वं कदा कस्मिन्काले नोस्मदीयं वचसः वचोरूपं स्तोत्रं बुबोधः अवगच्छेः तथा सत्वं वेधसः स्तोतॄन् नः अस्मान् वासयसीव इवेदानीमर्थे इदानीं स्वकीयस्थाने अवस्थापयसि किंच वाजी बलवान् अर्वा वेगवान् त्वदीयोश्वः तात्या तनोतेरिदंरूपं संततया धिया अस्मत्प्रेरितया स्तुत्या हेतुभूतया सुवीरं शोभनपुत्रोपेतं रयिं त्वदीयं धनं पृक्षोन्नंच नोस्मदीयं अस्तं गृहं न्यूहीत निवहेत् ॥ ६ ॥

६. तुम कब हमारे स्तोत्र-रूप वाक्य को समझोगे? तुम इस समय हमें निवास दे रहे हो। बली और वेगशाली अश्व हमारी स्तुति से वीर पुत्र से युक्त धन और अन्न हमारे गृह में ले आवें।

अथ सप्तमी—

अभियंदेवीनिर्ऋतिश्चिदीशेनक्षन्तइन्द्रंशरदःसुपृक्षः ।
उपत्रिबन्धुर्जरदष्टिमेत्यस्ववेशंयंकृणवन्तमर्ताः ॥ ७ ॥

अभि । यम् । देवी । निःऽऋतिः । चित् । ईशे । नक्षन्ते ।
इन्द्रम् । शरदः । सुऽपृक्षः । उप । त्रिऽबन्धुः । जरत्ऽअष्टिम् ।
एति । अस्वऽवेशम् । यम् । कृणवन्त । मर्ताः ॥ ७ ॥

देवी द्योतमाना निर्ऋतिश्चित् भूमिरपि ईशे कृत्यार्थे केन्प्रत्ययः ईशितव्या स्वभूतासती यमिन्द्रं अभिनक्षते व्याप्नोति सुपृक्षः शोभनान्नैरुपेताः शरदः संवत्सराश्च यमिन्द्रं नक्षन्ते व्याप्नुवन्ति मर्ताः मरणधर्माणः स्तोतारोवयंयमिन्द्रं अस्ववेशं स्वकीयेस्थाने अनुपविशन्तं कृणवन्त कुर्वंति त्रिबन्धुः त्रयाणां लोकानां बन्धकोविधारकः सइन्द्रः जरदष्टिं जरज्जीर्णमष्टिरशनं यस्यबलस्य हेतुभूतं तद्बलं उपैति उपगच्छति ॥ ७ ॥

७. प्रकाशमाना निर्ऋति (भूमि) जिन इन्द्र को, अधिपति बनाने के लिए, व्याप्त करती है, सुन्दर अन्नवाले वर्ष जिन इन्द्र को व्याप्त करते हैं और जिन इन्द्र को मनुष्य स्तोता अपने गृह में ले जाते हैं, वही त्रिलोक-धारी इन्द्र अन्न को जीर्ण करनेवाला बल प्राप्त करते हैं।

आनोराधांसिसवितःस्तवध्याआरायोयन्तुपर्वतस्यरातौ ।
सदानोदिव्यःपायुःसिषक्तुयूयंपातस्वस्तिभिःसदानः ॥ ८ ॥ ४ ॥

आ । नः । राधांसि । सवितरिति । स्तवध्यै । आ । रायः ।
यन्तु । पर्वतस्य । रातौ । सदा । नः । दिव्यः । पायुः ।
सिसक्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥ ४ ॥

हे सवितः सर्वस्यप्रेरक देव त्वत् सकाशात् स्तवध्यै स्तोतुं योग्यानि राधांसि धनानि नोस्मान् आयन्तु आगच्छन्तु पर्वतस्य पर्वतइति कश्चिदिन्द्रस्य सखा एतत्संज्ञकस्य देवस्य रातौ दानेसति रायो धनानि अस्मानायन्तु पायुः सर्वस्य पालकोदिव्योदिविभवः सइन्द्रः सदा सर्वदा नोस्मान् सिषक्तु रक्षकत्वेनसेवतां अस्मिन् सूक्ते येप्रतिपादितदेवाः तेसर्वे यूयं नोस्मान् स्वस्तिभिः कल्याणैः सदा पात पालयत ॥ ८ ॥

८. सविता देवता, तुम्हारे यहां से प्रशंसा-योग्य धन हमारे पास आवे। पर्वत (इन्द्र-सखा मेघ) के धन देने पर हमारे पास धन आवे। सर्व-रक्षक स्वर्गीय इन्द्र सदा रक्षक-रूप से हमारा सेवन करें। देवो, तुम सदा स्वस्ति-द्वारा हमें पालन करो।

॥ इति पंचमस्य चतुर्थे चतुर्थोवर्गः ॥ ४ ॥

उदुष्यदेवइत्यष्टर्चं पंचमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं सवितृदेवताकं सप्तम्यष्टम्यौ वाजिदेवताके भगमुग्रोवसइत्यर्धर्चो भगदेवत्यः सावित्रोवा यथाचानुक्रमणिका—उदुष्यसावित्रमंत्येवाजिन्यौभगमितिभागोवार्धर्चइति । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

उदु॒ष्यदे॒वः स॑वि॒ताय॑यामहि॒र॒ण्ययी॑म॒मतिं॒यामशि॑श्रेत् ।
नूनंभगो॒हव्यो॒मानु॑षेभि॒र्वियोरत्ना॑पुरु॒वसु॒र्दधा॑ति ॥ १ ॥

उत् । ऊँ इति॑ । स्यः । दे॒वः । स॒वि॒ता । य॒या॒म॒ । हि॒र॒ण्ययी॑म् ।
अ॒मति॑म् । याम् । अशि॑श्रेत् । नूनम् । भगः॑ । हव्यः॑ । मानु॑षेभिः ।
वि । यः । रत्ना॑ । पु॒रु॒ऽवसुः॑ । दधा॑ति ॥ १ ॥

सविता सर्वस्यप्रेरकः स्यः सदेवः हिरण्ययीं सुवर्णमयीं यां अमतिं रूपनामैतत् रूपं प्रभामित्यर्थः अशिश्रेत् आश्रयतिताममतिं उद्ययाम उद्यच्छति उद्गमयति उइतिपदपूरणः नूनमद्य भगोभजनीयोयः सविता मानुषेभिः मनुष्यैः स्तोतृभिः हव्योहवनीयः स्तोतव्योभवति पुरूवसुः बहुधनोयोदेवः स्तोतृभ्योरत्ना रत्नानि रमणीयानि धनानि विदधाति करोति ससविता देवः ताममतिं उद्ययामेति पूर्वेणसंबंधः ॥ १ ॥

१. जिस सुवर्णमयी प्रभा का आश्रय सविता (सूर्य) करते हैं, उसी को उदित करते हैं। सविता मनुष्यों के लिए स्तुत्य हैं। अनेक धनोंवाले सविता स्तोताओं को मनोहर धन देते हैं।

उदु॑तिष्ठसवितः श्रु॒ध्य१॒॑स्यहिर॑ण्यपाणे॒प्रभृ॑ता॒वृ॒तस्य॑ ।
व्यु॑१॒र्वीं॑पृ॒थ्वीम॒मतिं॑सृजा॒नआनृभ्यो॑मर्त॒भोज॑नंसु॒वा॒नः ॥ २ ॥

उत् । ऊँ इति॑ । ति॒ष्ठ॒ । स॒वि॒त॒रिति॑ । श्रु॒धि । अ॒स्य । हिर॑ण्यऽपाणे ।
प्रऽभृ॑तौ । ऋ॒तस्य॑ । वि । उ॒र्वीम् । पृ॒थ्वीम् । अ॒मति॑म् ।
सृ॒जा॒नः । आ । नृऽभ्यः॑ । म॒र्त॒ऽभोज॑नम् । सु॒वा॒नः ॥ २ ॥

हे सवितः सर्वस्य प्रेरयितर्देव त्वं उत्तिष्ठ ऊर्ध्वंगच्छ ततः हिरण्यपाणे हेसुवर्णहस्त त्वं अस्मदीप्सितप्रदानाय ऋतस्य यज्ञस्य प्रभृतौ प्रणयने अस्य अस्मदीयमिदं स्तोत्रं श्रुधि शृणु उइतिपूरणः कीदृशस्त्वं उर्वीं विस्तीर्णां पृथ्वीं प्रथितां अमतिं रूपं प्रभां विसृजानोविसृजन् नृभ्योनेतृभ्यः स्तोतृभ्यः मर्तभोजनं मनुष्याणां भोगयोग्यं धनं आसुवानः प्रेरयन् एवंभूतस्त्वं इदं स्तोत्रं शृणुवितिसंबन्धः॥ २ ॥

२. सवितादेव, उदित होओ। हे हिरण्यबाहु, विस्तृत और प्रसिद्ध प्रभा देते हुए और मनुष्यों के भोग-योग्य धन नेताओं को देते हुए यज्ञ प्रारम्भ हुआ। तुम हमारा स्तोत्र सुनो।

अथ तृतीया—

अपिष्टुतःसवितादेवोअस्तुयमाचिद्विश्वेवसवोगृणन्ति ।
सनःस्तोमान्नमस्य१श्चनोधाद्विश्वेभिःपातुपायुभिर्निसूरीन् ॥३॥

अपि । स्तुतः । सविता । देवः । अस्तु । यम् । आ । चित् ।
विश्वे । वसवः । गृणन्ति । सः । नः । स्तोमान् । नमस्यः । चनः ।
धात् । विश्वेभिः । पातु । पायुऽभिः । नि । सूरीन्॥ ३ ॥

अपिच सवितादेवः अस्माभिः स्तुतोस्तु अस्मदीयाः स्तुतीः श्रृणोत्वित्यर्थः विश्वे वसवश्चित् सर्वेदेवा अपि यंसवितारं आगृणन्ति अभिष्टुवन्ति नमस्यः सर्वैर्नमस्करणीयः सदेवः स्तोमान् नोस्मदीयानि स्तोत्राणिच नः अन्नं धाव् दधातु अन्नफलानिकरोतु विश्वेभिर्विश्वैः सर्वैः पायुभिः पालनैः सूरीन् स्तोतॄन् अस्मान् निपातु नितरां पालयतु ॥ ३ ॥

३. सवितादेव हमारे द्वारा स्तुत हों। जिन सविता देव की स्तुति समस्त देव करते हैं, वह पूजनीय सविता हमारा स्तोम (स्तोत्र) और अन्न धारण करें। सब प्रकार के रक्षा-कार्य-द्वारा स्तोताओं का पालन करें।

अभियंदेव्यदितिर्गृणातिसवंदेवस्यसवितुर्जुषाणा ।
अभिसम्राजोवरुणोगृणन्त्यभिमित्रासोअर्यमासजोषाः ॥ ४ ॥

अभि । यम् । देवी । अदितिः । गृणाति । सवम् । देवस्य ।
सवितुः । जुषाणा । अभि । सम्ऽराजः । वरुणः । गृणन्ति ।
अभि । मित्रासः । अर्यमा । सऽजोषाः ॥ ४ ॥

देवी द्योतमाना अदितिरदीना देवमातायंसवितारं अभिगृणाति अभिष्टौति कीदृशी सवितुर्देवस्यैव सवं प्रसवमनुज्ञां जुषाणा सेवमाना सम्राजः सम्यग्राजमानाः वरुणः उपलक्षणमेतत् वरुणादयोदेवाः यंसवितारमभिगृणन्ति अभिष्टुवन्ति मित्रासोमित्रादयश्च सजोषाः समानप्रीतिः अर्यमा एतत्संज्ञकोदेवश्च यमभिगृणन्ति सनः स्तोमांश्चनोधादिति पूर्वयर्चासंबन्धः ॥ ४ ॥

४. सविता देवता की अनुमति के अनुसार अदिति देवी स्तुति करती हैं, वरुण आदि देवता सविता की स्तुति करते हैं तथा मित्र आदि और समान प्रीतिवाले अर्यमा उनकी स्तुति करते हैं।

अभियेमिथोवनुषःसपन्तेरातिंदिवोरातिषाचःपृथिव्याः ।
अहिर्बुध्न्यउतनःशृणोतुवरूत्र्येकधेनुभिर्निपातु ॥ ५ ॥

अभि । ये । मिथः । वनुषः । सपन्ते । रातिम् । दिवः ।
रातिऽसाचः । पृथिव्याः । अहिः । बुध्न्यः । उत । नः ।
शृणोतु । वरूत्री । एकधेनुऽभिः । नि । पातु ॥ ५ ॥

रातिषाचोदानसेविनः वनुषः संभक्तारः ये यजमानाः मिथः परस्परं संहताभूत्वा सवितारं अभिलक्ष्य सपन्ते परिचरन्ति कीदृशं दिवोद्युलोकस्य पृथिव्याभूमेश्च रातिं मित्रभूतं उतापिच अहिर्बुध्न्यः बुध्नेन्तरिक्षेभवोबुध्न्यः एतीत्यहिः एतत्पदद्वयाभिधेयमध्यमस्थानोग्निः अहिर्बुध्न्यइत्युच्यते सवितुर्मित्रभूतः सोपि तेषां नोस्माकं सवितृविषयं स्तोत्रं शृणोतु तथा वरूत्रीवाग्देवी च सवितृसहितासती एकधेनुभिर्मुख्याभिर्गोभिः निपातु नितरामस्मान् पालयतु ॥ ५ ॥

५. दान-निपुण और भक्त यजमान, आपस में मिलकर, द्युलोक और भूलोक के मित्र सविता की सेवा करते हैं। अहिर्बुध्न्य हमारा स्तोत्र सुनें। मुख्य धेनुओं-द्वारा वाग्देवी भी हमारा पालन करें।

अनुतन्नोजास्पतिर्मंसीष्टरत्नंदेवस्यसवितुरियानः ।
भगमुग्रोवसेजोहवीतिभगमनुग्रोअधयातिरत्नम् ॥ ६ ॥

अनु । तत् । नः । जाःपतिः । मंसीष्ट । रत्नम् । देवस्य । सवितुः ।
इयानः । भगम् । उग्रः । अवसे । जोहवीति । भगम् । अनुग्रः ।
अध । याति । रत्नम् ॥ ६ ॥

इयानः अस्माभिर्याच्यमानः जास्पतिः प्रजानां पालकः सवितादेवः सवितुर्देवस्य स्वस्य संबंधिरत्नं रमणीयं तत् प्रसिद्धं धनं नोस्माकं अनुमंसीष्ट अनुमन्यतां उग्रओजस्वी स्तोता भगं भजनीयं सवितारं भगसंज्ञकं देवं वा अवसे नोस्माकं रक्षणाय जोहवीति भृशं ह्वयति अधापिच अनुग्रः असमर्थः स्तोता भगमेतत्संज्ञकं सवितारंवा रत्नं रमणीयं तत्प्रसिद्धं धनं याति याचते ॥ ६ ॥

६. प्रजा-रक्षक सविता, हमारी प्रार्थना के अनुसार, अपना मनोहर धन दें। ओजस्वी स्तोता हमारी रक्षा के लिए भग नाम के देवता को बार-बार बुलाते हैं। असमर्थ स्तोता रत्न माँगता है।

वैश्वदेवपर्वणि वाजिनस्य हविषः शंनोभवंत्वित्यादिके द्वेयाज्यानुवाक्ये सूत्रितंच—शंनोभवन्तुवाजिनोहवेषु वाजेवाजेवतवाजिनोनइत्यूर्ध्वंज्ञुरनवानं याज्यामिति ।

सैषा सप्तमी—

शंनोभवन्तुवाजिनोहवेषुदेवतातामितद्रवःस्वर्काः ।
जम्भयन्तोहिंवृकंरक्षांसिसनेम्यस्मद्युयवन्नमीवाः ॥ ७ ॥

शम् । नः । भवन्तु । वाजिनः । हवेषु । देवऽताता । मितऽद्रवः ।
सुऽअर्काः । जम्भयन्तः । अहिम् । वृकम् । रक्षांसि । सनेमि ।
अस्मत् । युयवन् । अमीवाः ॥ ७ ॥

देवताता देवतातौ यज्ञे हवेष्वस्मदीयेषु स्तोत्रेषु मितद्रवः मितद्रवणाः मितमार्गाः स्वर्काः शोभनान्नाः वाजिनः एतदभिधायकादेवाः नोस्माकं शं सुखाय भवन्तु अपिच अहिं आगत्य हन्तारं वृकं वसूनामादातारं चोरमितिशेषः रक्षांसिच जंभयन्तोहिंसन्तोवाजिनोदेवाः सनेमि पुराणनमैतत् पुरातनाः अमीवाः रोगान् अस्मदस्मत्तः युयवन् पृथक्कुर्वन्तु ॥ ७ ॥

७. यज्ञ-कालीन हमारे स्तोत्रों में मित-द्रव, मित-मार्ग और शोभन अन्नवाले वाजी नाम के देवगण हमारे लिए सुख-प्रद हों। ये वाजीदेवगण अबाता (चोर), हन्ता और राक्षसों को मारते हुए सारे पुराने रोगों को हमसे अलग करें।

वाजेवाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ।
अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ ८ ॥ ५॥

वाजेऽवाजे । अवत । वाजिनः । नः । धनेषु । विप्राः । अमृताः ।
ऋतऽज्ञाः । अस्य । मध्वः । पिबत । मादयध्वम् । तृप्ताः । यात ।
पथिऽभिः । देवऽयानैः ॥ ८ ॥ ५ ॥

हे वाजिनः एतन्नामकादेवाः विप्राः मेधाविनः अमृता अमरणधर्माणः ऋतज्ञाः सत्यं जानन्तः एवं भूताः सन्तोयूयं वाजेवाजे सर्वेषु युद्धेषुनोस्मान् धनेषु धननिमित्तेषु अवत पालयत ततोयूयं अस्यमध्वः मधुरोपेतमिमं सोमं पिबत सोमपानानंतरं मादयध्वं यूयं तृप्ताभवत ततस्तृप्तायूयं देवयानैः देवगमनसाधनैः पथिभिर्मार्गैर्यात गच्छत ॥ ८ ॥

८. वाजी देवगण, तुम लोग मेधावी, अमर और सत्य-ज्ञाता होकर धन के निमित्त-भूत सारे युद्धों में हमारा पालन करो। इस सोम को पियो और प्रमत्त होओ। अनन्तर तृप्त होकर देवयान-मार्ग से जाओ।

॥ इति तृतीयस्य चतुर्थे पंचमोवर्गः ॥ ५ ॥

ऊर्ध्वोअग्निरिति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवं ऊर्ध्वःसप्तवैश्वदेवं त्वित्यनुक्रमणिका। सूक्तविनियोगोलैंगिकः। द्वितीयेछन्दोमे प्रउगशस्त्रे ऊर्ध्वोअग्निरिति वैश्वदेवस्तृचः सूत्रितंच—ऊर्ध्वोअग्निःसुमतिंवस्वोअश्रेदुतस्यानःसरस्वतीजुषाणेति प्रउगमिति।

ऊर्ध्वोअग्निःसुमतिंवस्वोअश्रेत्प्रतीचीजूर्णिर्देवतातिमेति।
भेजातेअद्रीरथ्येवपन्थामृतंहोतानइषितोयजाति ॥ १ ॥

ऊर्ध्वः । अग्निः । सुऽमतिम् । वस्वः । अश्रेत् । प्रतीची । जूर्णिः ।
देवऽतातिम् । एति । भेजाते इति । अद्री इति । रथ्याऽइव ।
पन्थाम् । ऋतम् । होता । नः । इषितः । यजाति ॥ १ ॥

अग्निरंगनादिगुणविशिष्टः ऊर्ध्वउद्गमनःसन् वस्वोवासकस्य स्तोतुः सुमतिं अस्मदीयां शोभनांस्तुतिं अश्रेत् श्रयतु सेवतां प्रतीची अभिमुखी जूर्णिः सर्वासां प्रजानां जरयित्री उषोदेवता देवतातिं यज्ञमेति गच्छति अद्रीआद्रियन्तौ श्रद्धावन्तौ पत्नीयजमानौ पंथां पंथानं यज्ञमार्गं रथ्येव रथिनाविव भेजाते सेवाते तथा इषितः संप्रेषितो नोस्मदीयोहोता ऋतं यज्ञं यजाति यजतु करोत्वित्यर्थः ॥ १ ॥

१. अग्नि ऊपर उठकर स्तोता की शोभन स्तुति का आश्रय करें। सबको बुढ़ापा देनेवाली उषा देवी पूर्वाभिमुखी होकर यज्ञ में गमन करें। आदर से युक्त पत्नी और यजमान, रथियों की तरह, यज्ञ-मार्ग का आश्रय करते हैं। हमारा भेजा हुआ होता यज्ञ करता है।

प्रवांवृजेसुप्रयाबर्हिरेषामाविश्पतीवबीरिटइयाते ।
विशामक्तोरुषसःपूर्वहूतौवायुःपूषास्वस्तयेनियुत्वान् ॥ २ ॥

प्र । ववृजे । सुऽप्रयाः । बर्हिः । एषाम् । आ । विश्पतीइवेति विश्पतीऽइव । बीरिटे । इयाते इति । विशाम् । अक्तोः । उषसः । पूर्वऽहूतौ । वायुः । पूषा । स्वस्तये । नियुत्वान् ॥ २ ॥

एषां यजमानानां संबन्धि सुप्रयाः शोभनान्नेन युक्तं बर्हिः कुशमयं प्रववृजे प्रवृज्यते आसाद्यतेइत्यर्थः विश्पतीव इवेतीदानीमर्थे इदानीं अस्मदीयानां प्रजानां पालकौ नियुत्वान् नियुच्छब्देन वडवाउच्यन्ते तद्वान् वायुः पूषाच विशां प्रजानां स्वस्तये क्षेमाय अक्तोः रात्रेः संबन्धिन्याउषसः सकाशात् पूर्वहूतौ पूर्वस्मिन्नाह्वानेसति बीरिटेन्तरिक्षे आ इयाते आगच्छतां यद्वा विश्पतीवेत्युपमा विशां मनुष्याणां बीरिटे गणे विश्पतीव राजानौ यथा गच्छतां तद्वत् अस्मिन्पक्षे विशामित्युभयत्र संबध्यते ॥ २ ॥

२. इन यजमानों का अन्न-युक्त कुश पाया जाता है। इस समय प्रजापालक और वड़वावाले वायु और पूषा, प्रजा के मंगल के लिए, रात्रि की उषा के पहले का आह्वान सुनकर अन्तरिक्ष में आवें।

ज्मयाअत्रवसवोरन्तदेवाउरावन्तरिक्षेमर्जयन्तशुभ्राः ।
अर्वाक्पथउरुज्रयःकृणुध्वंश्रोतादूतस्यजग्मुषोनोअस्य ॥ ३ ॥

ज्मयाः । अत्रं । वसंवः । रन्त । देवाः । उरौ । अन्तरिंक्षे ।
मर्जयन्त । शुभ्राः । अर्वाक् । पथः । उरुऽज्रयः ।
कृणुध्वम् । श्रोतं । दूतस्यं । जग्मुषंः । नः । अस्य ॥ ३ ॥

वसवो वसुसंज्ञकादेवाः अत्रास्मिन्यज्ञे ज्मयाः पृथिव्यां रन्त रमयन्तां उरौ विस्तीर्णे अन्तरिक्षे स्थिताः शुभ्राः दीप्यमानाः मरुतश्च मर्जयन्त परिचर्यन्ते । हे उरुज्रयः प्रभूतगमनाः वसवोमरुतश्च यूयं पथः युष्मदीयान्मार्गान् अर्वागस्मदभिमुखं यथा भवति तथा कृणुध्वं कुरुत अपिच यूयं जग्मुषः युष्मान् प्रतिगतवतः नोस्मदीयस्य अस्य दूतस्याग्नेराह्वानं श्रोत शृणुत अग्निर्हि यजमानानां दूतःसन् देवानाह्वयतीत्यर्थः ॥ ३ ॥

३. इस यज्ञ में वसुगण पृथिवी पर रमण करें। विस्तीर्ण अन्तरिक्ष में स्थित और दीप्यमान मरुद्गण सेवित होते हैं। हे प्रभूतगामी वसुओ और मरुतो, अपना गन्तव्य पथ हमारी ओर करो। हमारा दूत तुम लोगों के पास गया है। उसका आह्वान सुनना।

तेहियज्ञेषुंयज्ञियांसऊमाःसधस्थंविश्वेअभिसन्तिदेवाः ।
ताँअध्वरउंशतोयंक्ष्यग्नेश्रुष्टीभगंनासत्यापुरंन्धिम् ॥ ४ ॥

ते । हि । यज्ञेषुं । यज्ञियांसः । ऊमाः । सधऽस्थम् । विश्वे ।
अभि । सन्ति । देवाः । तान् । अध्वरे । उशतः । यक्षि । अग्ने ।
श्रुष्टी । भगंम् । नासंत्या । पुरंम्ऽधिम् ॥ ४ ॥

यज्ञेषु यागेषु तेहि तेखलु प्रसिद्धाः यज्ञियासोयज्ञार्हाः ऊमारक्षकाः विश्वे सर्वे देवाः सधस्थं सहस्थानं अभि सन्ति अभिभवन्ति आक्रामन्ति हे अग्ने अध्वरे अस्मदीये यज्ञे उशतः कामयमानान् तान् देवान् यक्षि यज । तथा श्रुष्टी क्षिप्रनामैतत् क्षिप्रं भगं एतत्संज्ञकं देवं नासत्या नासत्यौ अश्विनौ च पुरंधिं पुरूणां ध्यातारमिन्द्रं च यज ॥ ४ ॥

४. प्रख्यात, यजनीय और रक्षक विश्वदेवगण यज्ञ-स्थान में आते हैं। अग्नि, हमारे यज्ञ में हमारे अभिलाषी देवों के लिए यज्ञ करो। भग, अश्विनीकुमारों और इन्द्र की शीघ्र पूजा करो।

आग्नेगिरोदिवआपृथिव्यामित्रंवहवरुणमिन्द्रमग्निम् ।
आर्यमणमदितिंविष्णुमेषांसरंस्वतीमरुतोमादयन्ताम् ॥ ५ ॥

आ। अग्ने। गिरः। दिवः। आ। पृथिव्याः। मित्रम्। वह।
वरुणम्। इन्द्रम्। अग्निम्। आ। अर्यमणम्। अदितिम्।
विष्णुम्। एषाम्। सरस्वती। मरुतः। मादयन्ताम्॥ ५॥

हे अग्ने त्वं दिवः द्युलोकात् सकाशात् गिरः गरीयान् स्तुत्यान् देवान् अस्मदीयं यज्ञं प्रति आवह आह्वानं कुरु पृथिव्याः अन्तरिक्षाच्च आवह कान् देवानिति तदुच्यते मित्रं एतत्संज्ञकं वरुणं च इन्द्रं च देवेषु देवतास्वरूपेणावस्थितं चाग्निं अर्यमणमेतत्संज्ञकं अदितिमदीनां पृथ्वींच विष्णुंच एवंभूतान् देवान् एषामस्माकं यजमानानामर्थाय आवह सरस्वती वाग्देवता च मरुतश्च मादयन्तां अस्मदीयैः स्तोत्रैर्हविर्भिश्च माद्यन्तु॥ ५॥

५. अग्नि, तुम द्युलोक से स्तुति-योग्य मित्र, वरुण, इन्द्र, अग्नि, अर्यमा, अदिति और विष्णु को हमारे यज्ञ में बुलाओ। पृथिवी से भी बुलाओ। सरस्वती और मरुद्गण हृष्ट हों।

ररेहव्यंमतिभिर्यज्ञियानांनक्षत्काममंमर्त्यानामसिन्वन्।
धातारयिमविदस्यंसदासांसक्षीमहियुज्येभिर्नुदेवैः॥ ६॥

ररे। हव्यम्। मतिऽभिः। यज्ञियानाम्। नक्षत्। कामम्।
मर्त्यानाम्। असिन्वन्। धात। रयिम्। अविऽदस्यम्।
सदाऽसाम्। सक्षीमहि। युज्येभिः। नु। देवैः॥ ६॥

यज्ञियानां चतुर्थ्यर्थेषष्ठी यज्ञार्हेभ्योदेवेभ्यः मतिभिः अस्मदीयाभिः स्तुतिभिः सह हव्यं हविः ररे अस्माभिर्दीयते मर्त्यानां मनुष्याणां अस्माकं काममभिलाषं असिन्वन् अप्रतिबध्नन् अग्निर्नक्षत् अस्मदीयं यज्ञं व्याप्नोतु। हे देवाः यूयं अविदस्यं अनुपक्षपणीयं सदासां सर्वदा संभजनीयं रयिं धनं धात अस्मभ्यंदत्त नु अद्य वयं युज्येभिः सहायभूतैः इह यज्ञे समागतैर्देवैः सक्षीमहि यद्वा नुइत्युपमार्थे युज्येभिर्बन्धुभिरिवदेवैः सक्षीमहि॥ ६॥

६. हम यजनीय देवों के लिए स्तुति के साथ हव्य प्रदान करते हैं। अग्नि हमारी अभिलाषा के प्रतिबन्धक न होकर यज्ञ को व्याप्त करते हैं। देवो, तुम ग्राह्य और सदा संभजनीय धन दो। आज हम सहायक देवों से मिलेंगे।

अथ सप्तमी—

नूरोदसीअभिष्टुतेवसिष्ठैर्ऋतावानोवरुणोमित्रोअग्निः।
यच्छन्तुचन्द्राउपमन्नोअर्कंयूयंपातस्वस्तिभिःसदानः॥ ७॥६॥

नु। रोदसी इति। अभिस्तुते इत्यभिऽस्तुते। वसिष्ठैः।
ऋतऽवानः। वरुणः। मित्रः। अग्निः। यच्छन्तु। चन्द्राः। उपऽमम्।
नः। अर्कम्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ७॥ ६॥

नु अद्य रोदसी द्यावापृथिव्यौ वसिष्ठैरस्माभिः पूजार्थं बहुवचनं अभिष्टुते अभितः सर्वतः स्तुते अभूतां तथा ऋतावानः अस्माभिः क्रियमाणैर्यज्ञैरुपेतोवरुणोमित्रः अग्निश्च एवंभूतादेवाः अस्माभिरभिष्टुताआसन् चन्द्राः आह्लादकादेवाः नोस्मभ्यं अर्कमर्चनीयमन्नं उपमं सर्वोत्कृष्टं यच्छन्तु ददतु सूक्तेप्रतिपादितायेदेवास्तेसर्वे यूयं नोस्मान् स्वस्तिभिः अविनाशैः सदा सर्वदा पात पालयत ॥ ७ ॥

७. वसिष्ठों के द्वारा आज द्यावापृथिवी भली भाँति स्तुत हुए। यज्ञ से युक्त वरुण, इन्द्र और अग्नि भी स्तुत हुए। आह्लादकारी देवगण हमें पुजनीय और सर्वोत्तम अन्न प्रदान करें। तुम हमें सदा स्वस्ति द्वारा पालन करो।   ॥ इति पंचमस्य चतुर्थे षष्ठोवर्गः ॥ ६ ॥

ओश्रुष्टिरिति सप्तर्चं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवं ओश्रुष्टिरित्यनुक्रान्तं विनियोगो लैंगिकः।

ओश्रुष्टिर्विदथ्या३ंसमेतुप्रतिस्तोमंदधीमहितुराणाम्।
यदद्यदेवःसंवितासुवातिस्यामास्यरत्निनोविभागे ॥ १ ॥

ओ इति। श्रुष्टिः। विदथ्या। सम्। एतु। प्रति। स्तोमम्।
दधीमहि। तुराणाम्। यत्। अद्य। देवः। सविता।
सुवाति। स्याम। अस्य। रत्निनः। विऽभागे ॥ १ ॥

हे देवाः विदथ्या विदथेन त्वदीयेन चित्तेन संपाद्याश्रुष्टिः सुखं अस्मान् ओ आसमेतु आगच्छतु अथवा श्रुष्टिर्वेगवती विदथ्या विदथे यज्ञे क्रियमाणा अस्मदीयास्तुतिः युष्मानागच्छतु वयं तुराणां वेगवतां देवानां स्तोमं स्तोत्रं प्रति दधीमहि कुर्वीमहि अद्येदानीं सवितादेवः यद्धनं सुवाति अस्मभ्यं प्रेरयेत् रत्निनोरमणीयधनवतः अस्य सवितुस्तस्य धनस्य विभागे दाने स्याम वयं भवेम ॥ १ ॥

१. देवो, तुम्हारा चित्त द्वारा सम्पादनीय सुख हमारे पास आवे। हम वेगवान् देवों के लिए स्तोत्र करते हैं। इस समय जो धन सविता भेजेंगे, हम रत्नवाले सविता के उसी धन को ग्रहण करेंगे।

अथ द्वितीया—

मित्रस्तन्नोवरुणोरोदसीचद्युभक्तमिन्द्रोअर्यमाददातु।
दिदेष्टुदेव्यदितीरेक्णोवायुश्चयन्नियुवैतेभगश्च ॥ २ ॥

मित्रः। तत्। नः। वरुणः। रोदसी इति। च। द्युऽभक्तम्।
इन्द्रः। अर्यमा। ददातु। दिदेष्टु। देवी। अदितिः। रेक्णः।
वायुः। च। यत्। नियुवैते इति निऽयुवैते। भगः। च ॥ २ ॥

मित्रोदेवः नोस्मभ्यं तत् प्रसिद्धं धनं ददातु प्रयच्छतु तथा वरुणोददातु रोदसी च द्यावापृथिव्यौ च दत्तां तथा इन्द्रः द्युभक्तं द्युभिः द्योतमानैः स्तोतृभिः सेवितं तद्धनं ददातु अर्यमाच ददातु तथा अदितिर्देवी रेक्णोधनं दिदेष्टु तद्धनमस्मभ्यं दिशतु वायुश्च भगश्च उभौ देवौ यद्धनं नियुवैते अस्मान्नितरां योजयेतां तद्धनमिति पूर्वेणसंबन्धः ॥ २ ॥

२. मित्र, वरुण और द्यावापृथिवी हमें वही प्रसिद्ध धन दें। इन्द्र और अर्यमा हमें प्रकाशमान स्तोताओं-द्वारा सेवित धन दें। वायु और भग हमारे लिए जिस धन की योजना करते हैं, देवी अदिति उसी धन को हमें दें।

अथ तृतीया—

सेदुग्रोअस्तुमरुतःसशुष्मीयंमर्त्यंपृषदश्वाअवाथ।
उतेमग्निःसरस्वतीजुनन्तिनतस्यरायःपर्येतास्ति ॥ ३ ॥

सः। इत्। उग्रः। अस्तु। मरुतः। सः। शुष्मी। यम्।
मर्त्यम्। पृषत्ऽअश्वाः। अवाथ। उत। ईम्। अग्निः। सरस्वती।
जुनन्ति। न। तस्य। रायः। परिऽएता। अस्ति ॥ ३ ॥

हे पृषदश्वाः पृषच्छब्देन केचिन्मृगविशेषाउच्यन्ते तएवाश्वावाहायेषां ते एवंभूता हे मरुतोरुद्रपुत्रादेवाः यूयं मर्त्यं मरणधर्माणं यं यजमानं अवाथ पालयत सेत् सएव यजमानः उग्रःअस्तु ओजस्वीभवतु तथा सशुष्मी बलवान् भवतु तथा उतापिच अग्निरंगनादिगुणयुक्तोदेवः सरस्वती वाग्देवता चेत्याद्याः सर्वेदेवा ईमेनं यजमानं जुनन्ति प्रवर्तयन्ति तस्य यजमानस्य संबन्धिनोरायोधनस्य कश्चिदपि पर्येता परिगन्ता नास्ति नाशको नभवतीत्यर्थः ॥३॥

३. पृषत् नामक अश्ववाले मरुतो, जिस मनुष्य की तुम रक्षा करते हो, वही ओजस्वी और बलवान् हो। अग्नि और सरस्वती आदि देवगण यजमान को प्रवर्त्तित करते हैं। इस यजमान के धन का कोई विघातक नहीं है।

अथ चतुर्थी—

अयंहिनेतावरुणऋतस्यमित्रोराजानोअर्यमापोधुः।
सुहवादेव्यदितिरनर्वातेनोअंहोअतिपर्षन्नरिष्टान् ॥ ४ ॥

अयम्। हि। नेता। वरुणः। ऋतस्य। मित्रः। राजानः।
अर्यमा। अपः। धुरिति धुः। सुऽहवा। देवी। अदितिः।
अनर्वा। ते। नः। अंहः। अति। पर्षन्। अरिष्टान् ॥ ४ ॥

ऋतस्य यज्ञस्य सत्यस्यवा नेता प्रापयिता अयंहि अयंखलु वरुणश्च मित्रश्च अर्यमा च एते राजानः समर्थादेवाः अपः अस्मदीयं यज्ञादिलक्षणं कर्म धुः अधुः दधति अनर्वा केनाप्यप्रतिगता देवी द्योतमाना अदितिरदीना देवमाता सुहवा शोभनाह्वाना भवति ते वरुणादयोदेवाः अरिष्टानबाधितान् सतोनोस्मान् अंहोदुरितं अतिपर्षन् अतिपारयन्तु ॥ ४ ॥

४. यज्ञ के प्रापक ये वरुण, मित्र और अर्यमा सबकी शक्ति से युक्त हैं। ये हमारा यज्ञ-कर्म धारण करते हैं। न रोकी गई और प्रकाशमाना अदिति शोभन आह्वानवाली हैं। जिससे हमें बाधा न हो, इस प्रकार पाप से हमें ये सब देव बचावें।

अस्यदेवस्यंमीळ्हुषोवयाविष्णोरेषस्यंप्रभृथेहविर्भिः ।
विदेहिरुद्रोरुद्रियंमहित्वंयासिष्टंवर्तिरश्विनाविरावत् ॥ ५ ॥

अस्य । देवस्यं । मीळ्हुषः । वयाः । विष्णोः । एषस्यं ।
प्रऽभृथे । हविःऽभिः । विदे । हि । रुद्रः । रुद्रियम् ।
महिऽत्वम् । यासिष्टम् । वर्तिः । अश्विनौ । इराऽवत् ॥ ५ ॥

प्रभृथे हविर्भिर्हवीरूपैरन्नैरेषस्य प्रापणीयस्य मीळ्हुषः कामानां सेक्तुः विष्णोः सर्वदेवात्मकस्य अस्य देवस्य विष्णुः सर्वदेवताइतिश्रुतेः। अन्येदेवाः वयाः शाखाइव भवन्ति रुद्रोदेवः रुद्रियं रुद्रसंबन्धिसुखं महित्वं महत्त्वं च विदेहि अस्मान् प्रापयति खलु अपिच हे अश्विनौ देवौ युवां इरावत् हविर्लक्षणान्नयुक्तं वर्तिरस्मदीयं गृहं यासिष्टं अयासिष्टं आगच्छतं॥५॥

५. अन्य देवगण यज्ञ में हव्य-द्वारा प्रापणीय और अभीष्टदाता विष्णु के अंश-रूप हैं। रुद्र अपनी महिमा प्रदान करें। अश्विनीकुमारो, तुम हमारे हव्यवाले गृह में आओ।

मात्रंपूषन्नाघृणइरस्योवरूत्रीयद्रातिषाचंश्चरासन् ।
मयोभुवोनोअर्वन्तोनिपान्तुवृष्टिंपरिज्मावातोददातु ॥ ६ ॥

मा । अत्रं । पूषन् । आघृणे । इरस्यः । वरूत्री । यत् ।
रातिऽसाचः । च । रासन् । मयःऽभुवः । नः । अर्वन्तः । नि ।
पान्तु । वृष्टिम् । परिऽज्मा । वातः । ददातु ॥ ६ ॥

हे आघृणे आप्तदीप्ते एवंभूत हे पूषन् देव अत्रास्मिन् दाने माइरस्यः विघातं माकुथाः वरूत्री सर्वैर्वरणीया सरस्वतीरातिषाचश्च रातिर्दानं तस्यसंभक्त्र्योदेवपत्न्यश्च यद्धनं रासन् अ-

१ ऐ० ब्रा० १. १.

स्मभ्यं प्रयच्छेयुः अत्र माक्रुधाइति पूर्वेणसंबन्धः किंच मयोभुवः सुखस्यभावकाः अर्वन्तोगच्छन्तोदेवाः नोस्मान्निपान्तु नितरांपालयन्तु परिज्मा परितोगन्ता वातोवायुः वृष्टिं वृष्टिलक्षणमुदकं ददातु प्रयच्छत्वस्मभ्यं ॥ ६ ॥

६. सबकी वरणीया सरस्वती और दान-निपुणा देवपत्नियाँ जो धन हमें देती हैं, उसमें, हे दीप्तिवाले पूषन्, बाधा नहीं देना। सुखप्रद और गतिशील देवगण हमें पालन करें। सर्वत्रगामी वायु वृष्टि का जल प्रदान करें।

नूरोदसीअभिष्टुतेवसिष्ठैर्ऋतावानोवरुणोमित्रोअग्निः।
यच्छन्तुचन्द्राउपमन्नोअर्कंयूयंपातस्वस्तिभिःसदानः ॥७॥ ७ ॥

नु। रोदसी इति। अभिस्तुते इत्यभिऽस्तुते। वसिष्ठैः। ऋतऽवानः।
वरुणः। मित्रः। अग्निः। यच्छन्तु। चन्द्राः। उपऽमम्। नः।
अर्कम्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ७॥ ७ ॥

पूर्वव्याख्यातेयं अक्षरार्थस्तु द्यावापृथिव्यौ वरुणादयोदेवाश्च वसिष्ठैरस्माभिरभिष्टुताभवन्ति एवंभूता आह्लादकादेवाः सर्वोत्कृष्टमन्नं अस्मभ्यं ददतु अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवा यूयं कल्याणैरस्मान् सर्वदा पालयत ॥ ७ ॥

७. आज देवों के द्वारा द्यावापृथिवी भली भाँति स्तुत हुईं। यज्ञवाले वरुण, इन्द्र और अग्नि भी स्तुत हुए। आह्लादकारी देवगण हमें पूजनीय और सर्वोत्तम अन्न प्रदान करें। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे सप्तमोवर्गः ॥ ७ ॥

प्रातरग्निमिति सप्तर्चमष्टमं सूक्तं अत्रानुक्रमणिका—प्रातर्भगं जगत्याद्यालिंगोक्तदेवतांत्योषस्येति। वसिष्ठऋषिः आद्याजगती शिष्टास्त्रिष्टुभ आद्याअग्नीन्द्रादिदेवत्या द्वितीयाद्याः पंचभगदेवत्याः सप्तम्युषोदेवत्या। अत्रकेचिदाहुः—निवेष्टुकामोरोगार्तो भगसूक्तंजपेत्सदा। निवेशंविशतिक्षिप्रं रोगैश्चपरिमुच्यतइति।

तत्र प्रथमा—

प्रातरग्निंप्रातरिन्द्रंहवामहेप्रातर्मित्रावरुणाप्रातरश्विना।
प्रातर्भगंपूषणंब्रह्मणस्पतिंप्रातःसोममुतरुद्रंहुवेम ॥ १ ॥

प्रातः। अग्निम्। प्रातः। इन्द्रम्। हवामहे। प्रातः। मित्रावरुणा।
प्रातः। अश्विना। प्रातः। भगम्। पूषणम्। ब्रह्मणः।
पतिम्। प्रातः। सोमम्। उत। रुद्रम्। हुवेम ॥ १ ॥

प्रातरुषःकाले अग्निंदेवं हवामहे वयं स्तोतार आह्वयामः तथा प्रातःकाले इन्द्रं हवामहे तथा मित्रावरुणौ अहोरात्राभिमानिनौ देवौ प्रातर्वयं हवामहे तथा अश्विनौ देवानां भिषजौ प्रातर्वयं हवामहे तथा प्रातर्भगं देवं पूषणं देवं ब्रह्मणस्पतिं मंत्राभिमानिनमेतत्संज्ञकं च आह्वयामः तथा प्रातः सोममेतत्संज्ञकं देवं उतापिच रुद्रं देवं च हुवेम आह्वयामः ॥ १ ॥

१. हम प्रातःकाल अग्नि, इन्द्र मित्र और वरुण को बुलाते हैं तथा प्रातःकाल अश्विनीकुमारों की स्तुति करते हैं। प्रातःकाल भग, पूषा, ब्रह्मणस्पति, सोम और रुद्र की स्तुति करते हैं।

प्रातर्जितंभगंमुग्रंहुवेमवयंपुत्रमदितेर्योविधर्ता।
आध्रश्चिद्यंमन्यमानस्तुरश्चिद्राजाचिद्यंभगंभक्षीत्याह ॥ २ ॥

प्रातः॒ऽजितम्। भगम्। उग्रम्। हुवेम। वयम्। पुत्रम्।
अदितेः। यः। विऽधर्ता। आध्रः। चित्। यम्। मन्यमानः।
तुरः। चित्। राजा। चित्। यम्। भगम्। भक्षि। इति। आह ॥२॥

योभगोदेवः विधर्ता विश्वस्यजगतोधारकः जितं जयशीलं उग्रं उद्गूर्णं अदितेः पुत्रं भगं देवं प्रातःकालएव वयं हुवेम आह्वयामः। आध्रश्चित् दरिद्रोपि स्तोता यं भगं देवं मन्यमानः स्तुवन् भगं भजनीयं धनं भक्षि भज विभज मह्यं देहिइत्याह ब्रवीति तुरश्चित् तुरतिर्गतिकर्मा प्राप्तधनोपि राजाचित् समर्थोपि जनः यं भगं देवं भजनीयं धनं मह्यं भक्षि देहीत्याह तं भगं प्रातरेव वयं हुवेमेति संबन्धः ॥ २ ॥

२. जो संसार के धारक, जय-शील और उग्र अदिति के पुत्र हैं, उन्हीं भगदेवता को हम प्रातःकाल बुलाते हैं। दरिद्र स्तोता और धनी राजा दोनों ही भग देवता की स्तुति करते हुए "मुझे भोग-योग्य धन दो" की याचना करते हैं।

अथ तृतीया—

भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवाददन्नः।
भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तःस्याम ॥ ३ ॥

भग। प्रनेतरिति प्रऽनेतः। भग। सत्यऽराधः। भग। इमाम्।
धियम्। उत्। अव। ददत्। नः। भग। प्र। नः। जनय।
गोभिः। अश्वैः। भग। प्र। नृऽभिः। नृऽवन्तः। स्याम॥ ३ ॥

हे भगदेव त्वं प्रणेतः प्रकर्षेणनेतासि तादृशप्रणेतः हे भग त्वं सत्यराधः सत्यधनोसि तादृशसत्यराधः हे भग त्वं नोस्मभ्यं ददत् कामान् प्रयच्छन् इमामस्मदीयां धियं स्तुतिं उदव

उद्दक्ष सफलयुक्तांकुरु। हे भग त्वं गोभिरश्वैश्चनोस्मान् प्रजनय प्रोद्भूतान् कुरु हे भग त्वत्प्र-सादात् वयं नृभिर्नेतृभिः पुत्रादिभिर्नृवन्तः मनुष्यवन्तः प्रस्याम प्रभवेम ॥ ३ ॥

३. भग, तुम उत्तम नेता हो। भग, तुम सत्य धन हो। हमें तुम अभिलषित वस्तु प्रदान करके हमारी स्तुति सफल करो। भग, तुम हमें गौ और अश्व-द्वारा प्रवर्द्धित करो। भग, हम पुत्रादि-द्वारा मनुष्यवान् बनेंगे।

उतेदानींभगवन्तःस्यामोतप्रपित्वउतमध्येअह्नाम्।
उतोदितामघवन्त्सूर्यस्यवयंदेवानांसुमतौस्याम ॥ ४ ॥

उत। इदानीम्। भगऽवन्तः। स्याम। उत। प्रऽपित्वे। उत।
मध्ये। अह्नाम्। उत। उत्ऽइता। मघऽवन्। सूर्यस्य।
वयम्। देवानाम्। सुऽमतौ। स्याम ॥ ४ ॥

उतापिच इदानीं वयं भगवन्तः स्याम हे भग भगेन त्वया स्वामिनायुक्ता भवेम यद्वा भगवन्तोधनवन्तः स्याम उतापिच प्रपित्वे अह्नां प्राप्ते पूर्वाह्णे भगवन्तः स्याम उतापिच अह्नां दिवसानां मध्ये मध्याह्ने भगवन्तः स्याम उतापिच हे मघवन् धनवन् भगदेव सूर्यस्य सर्वस्य प्रेरकस्य देवस्य उदिता उदितौ उदयेसति वयं त्वदनुग्रहात् देवानामिन्द्रादीनां सुमतौ अनुग्र-हबुद्धौ स्याम भवेम ॥ ४ ॥

४. हम इस समय भगवान् (तुम्हारे) हों, दिन के प्रारम्भ और मध्य में भी भगवान् हों। धनी भग देव, सूर्योदय के समय हम इन्द्र आदि का अनुग्रह प्राप्त करें।

भगएवभगवाँअस्तुदेवास्तेनवयंभगवन्तःस्याम।
तंत्वाभगसर्वइज्जोहवीतिसनोभगपुरएताभवेह ॥ ५ ॥

भगः। एव। भगऽवान्। अस्तु। देवाः। तेन। वयम्।
भगऽवन्तः। स्याम। तम्। त्वा। भग। सर्वः। इत्।
जोहवीति। सः। नः। भग। पुरःऽएता। भव। इह ॥ ५ ॥

हे देवाः भगोदेवएव भगवान् धनवानस्तु तेन भगेन देवेन वा वयं भगवन्तः स्याम ध-नवन्तोभवेम हे भग तं प्रसिद्धं त्वा त्वां सर्वइत् सर्वएव जनः जोहवीति भृशं पुनःपुनर्वा आह्व-यति हे भगदेव स त्वं इहास्मिन्यज्ञे नोस्माकं पुरएता पुरोगन्ता भव ॥ ५ ॥

५. देवो, भग ही भगवान् हों। हम भग के अनुग्रह से ही भगवान् हों। भग, सब लोग तुम्हें बार-बार बुलाते हैं। भग, तुम इस यज्ञ में हमारे अग्रगामी बनो।

अथ षष्ठी—

समध्वरायोषसोनमन्तदधिक्रावेवशुचयेपदाय ।
अर्वाचीनंवसुविदंभगंनोरथमिवाश्वावाजिनआवहन्तु ॥६॥

सम् । अध्वराय । उषसः । नमन्त । दधिक्रावाऽइव । शुचये ।
पदाय । अर्वाचीनम् । वसुऽविदम् । भगम् । नः ।
रथम्ऽइव । अश्वाः । वाजिनः । आ । वहन्तु ॥ ६॥

शुचये शुद्धाय गमनयोग्याय पदाय स्थानाय दधिक्रावेव यथा तथा अश्वः उषसोउषोदेवता अध्वराय अस्मदीयाय यागाय संनमन्त संगच्छन्तु वाजिनोवेगवन्तोश्वाः रथमिव रथं यथा तथा उषसः अर्वाचीनं अस्मदभिमुखं वसुविदं धनस्य प्रापकं भगं देवं नोस्मान् प्रति आवहन्तु आनयन्तु ॥ ६ ॥

६. शुद्ध स्थान के लिए दधिक्रावा की तरह उषा देवता हमारे यज्ञ में आवें। वेगशाली अश्वों के रथ की तरह उषा देवता धनदाता भगदेव को हमारे सामने ले आवें।

अश्वावतीर्गोमतीर्नउषासोवीरवतीःसदमुच्छन्तुभद्राः ।
घृतंदुहानाविश्वतःप्रपीतायूयंपातस्वस्तिभिःसदानः ॥ ७ ॥ ८ ॥

अश्वऽवतीः । गोऽमतीः । नः । उषसः । वीरऽवतीः । सदम् ।
उच्छन्तु । भद्राः । घृतम् । दुहानाः । विश्वतः । प्रऽपीताः ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥ ८ ॥

भद्राः भजनीयाः उषसः उषोदेवता अश्वावतीरश्ववत्यः अश्वसहिताः सत्यः गोमतीर्गोमत्यश्च वीरवतीर्वीरवत्यः पुत्रादिजनोपेताश्च भवंत्यः नोस्मभ्यं सदं सर्वदा उच्छन्तु व्युच्छन्तु नैशंतमोविवासयन्तु । कीदृश्यः घृतमुदकं दुहानाः सिंचंत्यः विश्वतः सर्वैर्गुणैः प्रपीताः प्रवृद्धाः एवंभूताउषसस्तम उच्छन्तु अस्मिन् सूक्ते प्रतिपादिताः हे सर्वे देवाः यूयं नोस्मान् सदा सर्वदा स्वस्तिभिः कल्याणैः पात पालयत ॥ ७ ॥

७. सारे गुणों से प्रवृद्ध और भजनीय उषा देवता अश्व, गौ और वीर पुरुष से युक्त होकर तथा जल-सेचन करके सदा हमारे रात्रि-जात अन्धकार को नाश करें। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य चतुर्थेष्टमो वर्गः ॥ ८ ॥

प्रब्रह्माणइति षळृचं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवं अत्रानुक्रान्तं—प्रब्रह्माणः षड्वैश्वदेवंत्विति। सूक्तविनियोगोलैंगिकः। तृतीये छन्दोमे प्रउगशस्त्रे प्रब्रह्माणइति वैश्वदेवस्तृचः सूत्रितंच—प्रब्रह्माणोअंगिरसोनक्षन्त सरस्वतीं देवयन्तोहवन्तइति ।

प्रब्रह्माणोअङ्गिरसोनक्षन्तप्रक्रन्दनुर्नभन्यस्यवेतु ।
प्रधेनवउदप्रुतोनवन्तयुज्यातामद्रीअध्वरस्यपेशः ॥ १ ॥

प्र । ब्रह्माणः । अङ्गिरसः । नक्षन्त । प्र । क्रन्दनुः । नभन्यस्य ।
वेतु । प्र । धेनवः । उदऽप्रुतः । नवन्त । युज्याताम् ।
अद्री इति । अध्वरस्य । पेशः ॥ १ ॥

ब्रह्माणः अंगिरसः एतन्नामकाऋषयःप्रनक्षन्त सर्वत्रव्याप्नुवन्तु क्रन्दनुः पर्जन्यः नभन्यस्य स्तोत्रस्य अस्मदीयं स्तोत्रं प्रवेतु प्रकर्षेणेच्छतु धेनवः प्रीणयित्र्योनद्यः उदप्रुतः उदकानि सिंचंत्यः प्रनवन्त सर्पन्तु अद्रिरद्रीयन्तौ पत्नीयजमानौ अध्वरस्य यज्ञस्य पेशः रूपं युज्यातां योजयेतां ॥ १ ॥

१. स्तोता (ब्राह्मण) अंगिरा लोग सर्वत्र व्याप्त हों। पर्जन्य हमारे स्तोत्र की अभिलाषा विशेष रूप से करें। प्रसन्नता-दायिका नदियाँ जल-सेचन करते हुए गमन करें। आदर-सम्पन्ना पत्नी और यजमान यज्ञ के रूप की योजना करें।

सुगस्तेअग्नेसनवित्तोअध्वायुक्ष्वासुतेहरितोरोहितश्च ।
येवासद्मन्नरुषावीरवाहोहुवेदेवानांजनिमानिसत्तः ॥ २ ॥

सुऽगः । ते । अग्ने । सनऽवित्तः । अध्वा । युक्ष्व । सुते ।
हरितः । रोहितः । च । ये । वा । सद्मन् । अरुषाः । वीरऽवाहः ।
हुवे । देवानाम् । जनिमानि । सत्तः ॥ २ ॥

हे अग्ने सनवित्तः सनाच्चिरकालादारभ्यलब्धः ते त्वदीयोध्वामार्गः सुगः सुष्ठुगंतव्योभवतु किं च हरितःश्यामवर्णाः रोहितश्च लोहितवर्णश्चेत्युभयविधाः येवा येच ते त्वदीयाअश्वाः सद्मन् सद्मनि यज्ञगृहे वीरवाहःवीरं शूरं त्वां वहन्तः अरुषाः आरोचमानाभवन्ति तांश्च त्वं सुयुंक्ष्व त्वदीयेरथे सुष्ठु संयोजय निसत्तः यज्ञगृहे निषण्णोऽहं होतासन् सुते अभिषुते सोमे सति देवानामिन्द्रादीनां जनिमानि जनान् संघान् हुवे आह्वयामि ॥ २ ॥

२. अग्नि, तुम्हारा चिर-प्राप्त पथ सुगम हो। जो श्याम और लोहित वर्ण के अश्व यज्ञ-गृह में तुम्हारे समान वीर को ले जाते हुए शोभा पाते हैं, उन्हें रथ में योजित करो। मैं यज्ञ-गृह में बैठकर देवों को बुलाता हूँ।

अथ तृतीया–

सम्ुंवोयज्ञंमंहयन्नमोभिःप्रहोतामन्द्रोरिरिचउपाके।
यजस्वसुपुर्वणीकदेवानायज्ञियामरमतिंववृत्याः ॥ ३ ॥

सम्। ऊँ इति। वः। यज्ञम्। महयन्। नमःऽभिः। प्र। होता।
मन्द्रः। रिरिचे। उपाके। यजस्व। सु। पुरुऽअनीक।
देवान्। आ। यज्ञियाम्। अरमतिम्। ववृत्याः ॥ ३ ॥

हे देवाः वोयुष्माकं यज्ञं नमोभिर्नमस्कारैर्युक्ता इमेस्तोतारोवा यजमानावा संमहयन् सम्यक् पूजयन्ति उइतिपूरकः मन्द्रः स्तुतिशीलः उपाके अस्माकं समीपे स्थितोस्मदीयोहोता प्ररिरिचे अन्येभ्योहोतृभ्यः अतिरिच्यते हे यजमान त्वं देवान् सु सुष्ठु यजस्व हे पुर्वणीक बहुतेजस्विन्नग्ने त्वं यज्ञियां यज्ञार्हां अरमतिं भूमिं आववृत्याः आवर्तय तथाचनिगमान्तरे-आनोमहीमरमतिंसजोषाइति ॥ ३ ॥

३. देवो, नमस्कारवाले ये स्तोता तुम्हारे यज्ञ का भली भाँति पूजन करते हैं। हमारे समीप में रहनेवाला होता सर्वोत्तम है। यजमान, देवों का यज्ञ भली भाँति करो। बहुत तेजवाले, तुम भूमि को आर्वातित करो।

अथ चतुर्थी–

यदावीरस्यरेवतोदुरोणेस्योनशीरतिथिराचिकेतत्।
सुप्रीतोअग्निःसुधितोदमआसविशेदातिवार्यमियत्यै ॥ ४ ॥

यदा। वीरस्य। रेवतः। दुरोणे। स्योनऽशीः। अतिथिः।
आऽचिकेतत्। सुऽप्रीतः। अग्निः। सुऽधितः। दमे।
आ। सः। विशे। दाति। वार्यम्। इयत्यै ॥ ४ ॥

अतिथिः सर्वेषामतिथिभूतोग्निः यदा वीरस्य वीरकस्य स्तोत्राणां प्रेरयितुः रेवतः ह-विष्मतोयजमानस्य दुरोणे गृहे स्योनशीः सुखेन शयनीयः आचिकेतत् प्रज्ञायते अग्निः दमे यज्ञगृहे सुधितः आकारश्चार्थे सुनिहितश्च सुष्ठु निहितःसन् यदा सुप्रीतोभवति तदा सोग्निः इयत्यै उपगच्छन्त्यै विशे प्रजायै वार्यं वरणीयं धनं दाति ददाति प्रयच्छति ॥ ४ ॥

४. सबके अतिथि अग्नि जिस समय वीर और धनी के गृह में सुख से सोये हुए देखे जाते हैं और जिस समय अग्नि घर में भली भाँति निहित होकर प्रसन्न होते हैं, उस समय वह समीपवर्त्तिनी प्रजा को वरणीय धन देते हैं।

१ ऋ० सं० ४. १. २१।

अथ पंचमी—

इमंनोअग्नेअध्वरंजुषस्वमरुत्स्विन्द्रेयशसंकृधीनः ।
आनक्ताबर्हिःसंदतामुषासोशंतामित्रावरुणायजेह ॥ ५ ॥

इमम् । नः । अग्ने । अध्वरम् । जुषस्व । मरुत्ऽसु । इन्द्रे ।
यशसम् । कृधि । नः । आ । नक्ता । बर्हिः । सदताम् ।
उषसा । उशन्ता । मित्रावरुणा । यज । इह ॥ ५ ॥

हे अग्ने त्वं नोस्मदीयमिममध्वरं यज्ञं जुषस्व सेवस्व किंच मरुत्सु इन्द्रस्य सखिभूतेषु देवेषु इन्द्रेच यशसं यशोयुक्तं हविर्लक्षणान्नवन्तं नोस्मदीयं यज्ञं हेअग्ने त्वं कृधि कुरु स्थापयेत्यर्थः । तथा नक्ता रात्रिश्च उषसा दिवश्च अहर्निशेऽत्यर्थः बर्हिर्बर्हिषि कुशमये आसदतां उपविशतां अपि च हे अग्ने उशन्ता उशन्तौ यज्ञमिच्छन्तौ मित्रावरुणा मित्रावरुणौ देवौ इहास्मिन् यज्ञे यज पूजय ॥ ५ ॥

५. अग्नि, हमारे इस यज्ञ की सेवा करो। इन्द्र और मरुतों के बीच हमें यशस्वी बनाओ। रात्रि और उषा के काल में कुशों पर बैठो। यज्ञाभिलाषी मित्र और वरुण की इस यज्ञ में पूजा करो।

एवाग्निंसहस्यं१वसिष्ठोरायस्कामोविश्वप्स्न्यस्यस्तौत् ।
इषंरयिंपप्रथद्वाजमस्मेयूयंपातस्वस्तिभिःसदानः ॥ ६ ॥ ९ ॥

एव । अग्निम् । सहस्यम् । वसिष्ठः । रायःऽकामः । विश्वऽप्स्न्यस्य ।
स्तौत् । इषम् । रयिम् । पप्रथत् । वाजम् । अस्मे इति ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥ ९ ॥

वसिष्ठः एतदाख्यऋषिः रायस्कामः पश्वादिधनानीच्छन् एव एवमुक्तप्रकारेण सहस्यं सहोबलं तस्यपुत्रं तद्वन्तमितिवा अग्निं देवं विश्वप्स्न्यस्य पुरुरूपस्य धनस्य लाभाय स्तौत् एवंभूतोग्निः अस्मे अस्मभ्यं इषमन्नं रयिं धनं वाजं बलंच पप्रथत् प्रथयतु विस्तारयतु ददात्वित्यर्थः अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवायूयं अस्मान् कल्याणैः सर्वदा पालयत ॥ ६ ॥

६. धन-कामी होकर वसिष्ठ ने, इसी प्रकार, बल-पुत्र अग्नि की, बहुरूपवाले धन की प्राप्ति के लिए, स्तुति की थी। अग्नि हमें अन्न, बल और धन दें। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे नवमो वर्गः ॥ ९ ॥

प्रवोयज्ञेष्विति पंचर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवं प्रवःपंचेत्यनुक्रान्तं सूक्तविनियोगोलैंगिकः। प्रथमेछन्दोमे प्रउगशस्त्रे प्रवोयज्ञेष्विति वैश्वदेवस्तृचः सूत्रितंच—प्रवोयज्ञेषुदेवयन्तोअर्चन् प्रक्षोदसाधायसासस्नएषेति प्रउगमिति।

तत्र प्रथमा—

प्रवोयज्ञेषुदेवयन्तोअर्चन्द्यावानमोभिःपृथिवीइषध्यै।
येषांब्रह्माण्यसमानिविप्राविष्वग्वियन्तिवनिनोनशाखाः ॥१॥

प्र। वः। यज्ञेषु। देवऽयन्तः। अर्चन्। द्यावा। नमःऽभिः।
पृथिवी इति। इषध्यै। येषाम्। ब्रह्माणि। असमानि। विप्राः।
विष्वक्। विऽयन्ति। वनिनः। न। शाखाः॥ १॥

देवयन्तो देवान्कामयमानाः विप्राः यज्ञेषुनमोभिः स्तुतिभिर्हविर्भिर्वा वोयुष्मान् इषध्यै अभिप्राप्तुं प्रार्चन् प्रार्चयन्ति प्रकर्षेणस्तुवन्ति द्यावा दिवं पृथिवी भूमिंच प्रस्तुवन्ति येषां विप्राणां मेधाविनां असमानि ब्रह्माणि स्तोत्राणि वनिनोन शाखाः वृक्षस्य शाखाः शाखाइव विष्वक् विश्वतः वियन्ति विशेषेणगच्छन्ति ते विप्राः प्रार्चन्निति पूर्वेण संबन्धः॥ १॥

१. वृक्ष-शाखा की तरह जिन मेधावियों के स्तोत्र सब ओर जाते हैं, वे ही देव-कामी यज्ञ में नमस्कार (वा स्तुति) द्वारा तुम्हें पाने के लिए, विशेष रूप से, स्तुति करते हैं। वे द्यावापृथिवी की भी स्तुति करते हैं।

प्रयज्ञएतुहेत्वोनसप्तिरुद्यच्छध्वंसमनसोघृताचीः।
स्तृणीतबर्हिरध्वरायसाधूर्ध्वाशोचींषिदेवयून्यस्थुः॥ २॥

प्र। यज्ञः। एतु। हेत्वः। न। सप्तिः। उत्। यच्छध्वम्।
सऽमनसः। घृताचीः। स्तृणीत। बर्हिः। अध्वराय।
साधु। ऊर्ध्वा। शोचींषि। देवऽयूनि। अस्थुः॥ २॥

अयमस्मदीयोयज्ञः प्रैतु देवान् प्रतिगच्छतु तत्रदृष्टान्तः—हेत्वोन सप्तिः शीघ्रगामी अश्वोयथा तद्वत् हे ऋत्विजः सर्वे यूयं समनसः सदृशमनस्काः सन्तः घृताचीः स्रुचः उद्यच्छध्वं हस्ते उद्यम्य धारयत तथा अध्वराय यागं कर्तुं साधुसाधुकं बर्हिः कुशमयं स्तृणीत वेद्यां छादयत हे अग्ने देवयूनि देवान् कामयमानानि त्वदीयानि शोचींष्यर्चींषि ऊर्ध्वा ऊर्ध्वमुखानि अस्थुः तिष्ठन्तु॥ २॥

२. शीघ्र-गामी अश्व की तरह इस यज्ञ में जाओ। समान मन से तुम घी बहानेवाली स्त्रुक् को उठाओ। यज्ञ के लिए बढ़िया कुश बिछाओ। अग्नि, तुम्हारी देवकामी किरणें ऊर्द्ध्व-मुख रहें।

अथ तृतीया—

आपुत्रासोनमातरंविभृत्राःसानौदेवासोबर्हिषःसदन्तु ।
आविश्वाचींविदथ्यामनक्त्वग्नेमानोदेवतातामृधस्कः ॥ ३ ॥

आ । पुत्रासः । न । मातरम् । विऽभृत्राः । सानौ । देवासः ।
बर्हिषः । सदन्तु । आ । विश्वाचीं । विदथ्याम् । अनक्तु ।
अग्ने । मा । नः । देवऽताता । मृधः । करिति कः ॥ ३ ॥

मातरं जननीं विभृत्राः विशेषेणभर्तव्याः पुत्रासोन पुत्राइव तद्वदस्माकं भरणीया देवासोदेवाः बर्हिषः कुशमयस्य वेद्यामास्तीर्णस्य सानौ उन्नते देशे आसदन्तु उपविशन्तु हे अग्ने विदथ्यां यज्ञयोग्यां त्वदीयां ज्वालां विश्वाची विश्वं सर्वं हविरंचति गच्छतीति विश्वाची जुहुः आअनक्तु आसमन्तात्सिंचतु देवताता देवतातौ युद्धे नोस्माकं मृधः हिंसकान् हे अग्ने त्वं माकः माकार्षीः यज्ञवाचकोदेवतातिशब्दः अत्र संग्रामे वर्तते ॥ ३ ॥

३. विशेष रूप से प्रतिपालनीय पुत्र जैसे माता की गोद में बैठते हैं, वैसे ही देवगण यज्ञ के उन्नत स्थान पर विराजें। अग्नि, जुहू तुम्हारी यजनीय ज्वाला को भली भाँति सींचे। युद्ध में तुम हमारे शत्रुओं की सहायता नहीं करना।

तेसीषपन्तजोषमायजंत्राऋतस्यधाराःसुदुघादुहानाः ।
ज्येष्ठंवोअद्यमहआवसूनामागंन्तनसमंनसोयतिष्ठ ॥ ४ ॥

ते । सीषपन्त । जोषम् । आ । यजंत्राः । ऋतस्य । धाराः ।
सुऽदुघाः । दुहानाः । ज्येष्ठम् । वः । अद्य । महः । आ । वसूनाम् ।
आ । गन्तन । सऽमनसः । यति । स्थ ॥ ४ ॥

यजत्राः यजनीयाः ते इन्द्रादयोदेवाः ऋतस्योदकस्य सुदुघाः सुखेन दोग्धुं शक्याः धाराः दुहानाः वर्षन्तः जोषं पर्याप्तं यथा भवति तथा आसीषपन्त सपतिः परिचरणार्थः स्तुतिभिरासमन्तात्पर्यचीचरन् अस्मान् परिचरणं कुर्वन्तु स्वीकुर्वंत्वितियावत् अद्यास्मिन्दिने हे देवाः वसूनां धनानां मध्ये ज्येष्ठं श्रेष्ठं वोयुष्मदीयं महो महनीयं धनं आगच्छतु यूयमपि समनसस्तुल्यमतयः सन्तः आगन्तन आगच्छत हे देवाः यूयं यतिष्ठ आगन्तनेति संबन्धः ॥ ४ ॥

४. यजनीय देवगण जल की दूहने योग्य धारा को बरसाते हुए यथेष्ट रूप से हमारी सेवा को स्वीकार करें। देवो, आज धनों में जो पूज्य धन है, वह आवे। एक मन होकर तुम भी आओ।

अथ पञ्चमी—

एवानोअग्नेविक्ष्वादशस्यत्वयावयंसहसावन्नास्क्राः ।
रायायुजासधमादोअरिष्टायूयंपातस्वस्तिभिःसदानः ॥५॥१०॥

एव । नः । अग्ने । विक्षु । आ । दशस्य । त्वया । वयम् ।
सहसाऽवन् । आस्क्राः । राया । युजा । सधऽमादः । अरिष्टाः ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥ १० ॥

हे अग्ने एवं स्तुतस्त्वं विक्षु प्रजासु मध्ये नोस्मभ्यं आदशस्य धनं अभिप्रयच्छ हे सहसावन् बलवन्नग्ने त्वया आस्क्राः आस्कन्नाः वयं युजा नित्ययुक्तेन राया धनेन सधमादः सहमाद्यंतः अरिष्टाः अहिंसिताभवेम अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवा यूयं नोस्मान् कल्याणैः सर्वदा पालयत ॥ ५ ॥

५. अग्नि, इसी प्रकार तुम प्रजा में से हमें धन दो। बली अग्नि, तुम्हारे द्वारा हम छोड़ न जाकर नित्य-युक्त धन के साथ मत्त और अहिंसित हों। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे दशमोवर्गः ॥ १० ॥

दधिक्रांवइति पंचर्चमेकादशं सूक्तं वसिष्ठस्यार्षं दधिक्राख्यदेवताकं आद्याजगती सातु-दधिक्रादिलिंगोक्तदेवताका शिष्टाश्चतस्रस्त्रिष्टुभः अनुक्रम्यतेहि— दधिक्रांदाधिकं जगत्याद्यालिंगोक्तदेवतेति । गतोविनियोगः ।

दधिक्रांवःप्रथममश्विनोषसमग्निंसमिद्धंभगमूतयेहुवे ।
इन्द्रंविष्णुंपूषणंब्रह्मणस्पतिमादित्यान्द्यावापृथिवीअपःस्वः ॥१॥

दधिऽक्राम् । वः । प्रथमम् । अश्विना । उषसम् । अग्निम् । समऽइद्धम् ।
भगम् । ऊतये । हुवे । इन्द्रम् । विष्णुम् । पूषणम् । ब्रह्मणः । पतिम् ।
आदित्यान् । द्यावापृथिवी इति । अपः । स्वरिति स्वः ॥ १ ॥

हे स्तोतारोवोयुष्माकं ऊतये रक्षणाय प्रथमं दधिक्रां अश्वाभिमानिनीं देवतां हुवे आह्वयामि ततः अश्विना अश्विनौ देवौ उषसमुषोदेवतांच समिद्धं सम्यग्दीप्तमग्निंच भगं एतदाख्यं देवं च आह्वयामि इन्द्रं विष्णुं पूषणं च ब्रह्मणस्पतिं आदित्यान् द्यावापृथिवी अपः उदकदेवताः स्वः सूर्यं इत्येतान् देवानाह्वयामि ॥ १ ॥

१. तुम्हारी रक्षा के लिए पहले मैं दधिक्रा (अश्वाभिमानी) देव को बुलाता हूँ। इसके पश्चात् अश्वि-द्वय, उषा, समिद्ध अग्नि और भग देवता का आह्वान करता हूँ। इन्द्र, विष्णु, पूषा, ब्रह्मणस्पति, आदित्य-गण, द्यावापृथिवी, जल-देवता और सूर्य को बुलाता हूँ।

अथ द्वितीया—

दधिक्रामुनमसाबोधयन्तउदीराणायज्ञमुपप्रयन्तः ।
इळांदेवींबर्हिषिसादयन्तोश्विनाविप्रासुहवाहुवेम ॥ २ ॥

दधिऽक्राम् । ॐ इति । नमसा । बोधयन्तः । उत्ऽईराणाः ।
यज्ञम् । उपऽप्रयन्तः । इळाम् । देवीम् । बर्हिषि । सादयन्तः ।
अश्विना । विप्रा । सुऽहवा । हुवेम ॥ २ ॥

दधिक्रां एतन्नामकं अश्वविशेषं देवं नमसा स्तोत्रेण बोधयन्तः प्रज्ञापयन्तः उदीराणाः प्रेरयन्तः यज्ञं यागं उपप्रयन्तः उपक्रममाणा वयं बर्हिषि इळां हवीरूपां देवीं सादयन्तः आ-स्थापयन्तः सुहवा शोभनाह्वानौ विप्रा विप्रौ मेधाविनौ अश्विना अश्विनौ देवौ हुवेम आह्वयाम उइति पूरणः ॥ २ ॥

२. यज्ञ के प्रारम्भ में हम स्तोत्र-द्वारा दधिक्रा देवता को प्रबोधित और प्रवर्त्तित करते हुए और इलादेवी (हवीरूपा देवी) को स्थापित करते हुए शोभन आह्वान से सम्पन्न मेधावी अश्वि-द्वय को बुलाते हैं ।

दधिक्रावाणंबुबुधानोअग्निमुपब्रुवउषसंसूर्यंगाम् ।
ब्रध्नंमंश्चतोर्वरुणस्यबभ्रुंतेविश्वास्मद्दुरितायावयन्तु ॥ ३ ॥

दधिऽक्रावाणम् । बुबुधानः । अग्निम् । उप । ब्रुवे ।
उषसम् । सूर्यम् । गाम् । ब्रध्नम् । मंश्चतोः । वरुणस्य । बभ्रुम् ।
ते । विश्वा । अस्मत् । दुःऽइता । यवयन्तु ॥ ३ ॥

दधिक्रावाणं अश्वविशेषं बुबुधानः स्तोत्रेण बोधयन्नहं अग्निं देवं उपब्रुवे उपस्तौमि तथा च उषसमुषोदेवतां सूर्यं सर्वस्य प्रेरकं देवं गां भूमिं वाग्देवतां वा एवं भूतान् देवान् अहमुपस्तौमि मंश्चतोः मन्यमानान् स्तुवतोजनान् चेतयते जानातीति यद्वा अभिमन्यमानांश्चातयते नाश-यतीति मंश्चतुः तस्य वरुणस्य ब्रध्नं महान्तं बभ्रुं पिंगलवर्णमश्वं तस्यानयनार्थमहमुपब्रुवे ते देवाः अस्मदस्मत्तः विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि यवयन्तु पृथक्कुर्वन्तु ॥ ३ ॥

३. दधिक्रा को प्रबोधित करके मैं अग्नि, उषा, सूर्य और वाग्देवता (वा भूमि) की स्तुति करता हूं । मैं अभिमानियों के विनाशकारी वरुण के महान् पिङ्गल वर्ण अश्व की स्तुति करता हूं । वे सब देवगण सारे पापों को मुझसे अलग करें ।

अथ चतुर्थी–

दधिक्रावांप्रथमोवाज्यर्वाग्रेरथांनांभवतिप्रजानन् ।
संविदानउषसासूर्येणादित्येभिर्वसुभिरङ्गिरोभिः ॥ ४ ॥

दधिऽक्रावां । प्रथमः । वाजी । अर्वा । अग्रे । रथांनाम् ।
भवति । प्रऽजानन् । सम्ऽविदानः । उषसां । सूर्येण । आदित्येभिः ।
वसुऽभिः । अङ्गिरःऽभिः ॥ ४ ॥

प्रथमः सर्वेषामश्वानांमुख्यः वाजो शीघ्रगामी अर्वा गमनशीलः दधिक्रावा अश्वरूपो देवः प्रजानन् रथसंयोजनीयांस्तांस्तानश्वानधिष्ठाय ज्ञातव्यानि सम्यक् जानन् रथानामग्रे प्रमुखोभवति कीदृशोश्वः उषसा उषोदेवतया सूर्येण सर्वस्य प्रेरकेण देवेन आदित्येभिरादित्यै-श्च वसुभिश्च अंगिरोभिर्देवैः सह स्तोतव्यैर्ऋषिभिश्च संविदानः सम्यक् जानन् ऐकमत्यं प्राप्तइत्यर्थः ॥ ४ ॥

४. अश्वों में मुख्य, शीघ्रगामी और गति-शील दधिक्रा ज्ञातव्य को भली भाँति जानकर उषा, सूर्य, आदित्यगण, वसुगण और अंगिरा लोगों के साथ सहमत होकर स्वयं रथ के अग्र भाग में लगते हैं ।

आनोंदधिक्राःपथ्यांमनक्त्वृतस्यपन्थामन्वेंतवाउं ।
शृणोतुनोदैव्यंशर्धोअग्निःशृण्वन्तुविश्वेमहिषाअमूराः ॥५॥११॥

आ । नः । दधिऽक्राः । पथ्याम् । अनक्तु । ऋतस्यं । पन्थाम् ।
अनुंऽएतवै । ऊँ इति । शृणोतु । नः । दैव्यम् । शर्धः । अग्निः ।
शृण्वन्तु । विश्वे । महिषाः । अमूराः ॥ ५ ॥ ११ ॥

दधिक्राः अश्वरूपोदेवः ऋतस्य यज्ञस्य पंथां पंथानं मार्गं अन्वेतवै अनुगन्तुं प्रवृत्तानां नोस्माकं पथ्यां पदवीमानक्तु उदकेनासिंचतु उइतिपूरणः दैव्यं शर्धः देवसंबन्धिबलं इंद्रग्रूपो-ग्निः नोस्मदीयं हवंशृणोतु अमूराः अमूढाः महिषा महान्तः विश्वे सर्वे देवाः अस्मदीयं हवं शृण्वन्तु ॥ ५ ॥

**५. सब लोग यज्ञ करें, सीधे मार्ग से जावें । दिव्य जल प्राप्त करें, ज्ञान प्राप्त करें, सामर्थ्य प्राप्त करें। देवों के गुण गाकर स्वयं देव जैसे बनें ।। ५ ।।**

॥ इति पंचमस्य चतुर्थे एकादशोवर्गः ॥ ११ ॥

आदेवोयात्विति चतुर्ऋचं द्वादशं सूक्तं वसिष्ठस्यार्षं सवितृदेवताकं त्रैष्टुभं आदेवश्चतुष्कं सावित्रमित्यनुक्रान्तं। व्यूढेदशरात्रे चतुर्थेहनि वैश्वदेवशस्त्रे इदंसावित्रनिविद्धानं सूत्र्यतेहि—चतुर्थेहन्यादेवोयात्विति। एषा वपानुवाक्या सूत्रितंच—आदेवोयातुसवितासुरत्नः सघानोदेवः सवितासहावेति। अश्वमेधे अनुसवनं तिस्रःसावित्र्यइष्टयः तत्रद्वितीयस्यामिष्टौ याज्येयं सूत्रितं-च—यइमाविश्वाजातान्यादेवोयात्विति।

तत्र प्रथमा—

आदे॒वोया॑तु॒स॒वि॒तासु॒रत्नो॒ऽन्तरि॑क्ष॒प्रावह॑मानो॒अश्वैः॑।
हस्ते॒दधा॑नो॒नर्या॑पु॒रूणि॑नि॒वे॒शयं॑श्च॒प्रसु॒वंच॒भूम॑ ॥ १ ॥

आ। दे॒वः। या॒तु॒। स॒वि॒ता। सु॒ऽरत्नः॑। अ॒न्त॒रि॒क्ष॒ऽप्राः।
वह॑मा॒नः। अश्वैः॑। हस्ते॑। दधा॑नः। नर्या॑। पु॒रूणि॑।
नि॒ऽवे॒शय॑न्। च॒। प्र॒ऽसु॒वन्। च॒। भूम॑ ॥ १ ॥

सुरत्नः शोभनरत्नोपेतः अन्तरिक्षप्राः स्वकीयेन तेजसा अन्तरिक्षस्य पूरयिता अश्वैः स्वकीयैर्वाहैः वहमानः उह्यमानः सविता सर्वस्य प्रेरकोदेवो द्योतमानः आयातु आगच्छतु कीदृशः नर्या नर्याणि मनुष्यहितानि पुरूणि बहूनि धनानि हस्ते पाणौ दधानः धातुं धारयन् भूम भूतानि निवेशयश्च रात्रिषु स्वेस्थाने स्थापयंश्च प्रसुवन् च अहःसु प्रेरयंश्च एवंभूतः सविता देवआयातु ॥ १॥

१. रत्न-युक्त, अपने तेज से अन्तरिक्ष के पूरक और अपने अश्वों-द्वारा ढोये जाते हुए सविता देव मनुष्य के लिए हितकर प्रभूत धन, हाथ में धारण करते हुए, प्राणियों को अपने स्थान में धारण और अपने कर्म में प्रेरित करते हुए आवें।

अथ द्वितीया—

उद॑स्यबा॒हूशि॑थि॒राबृ॒हन्ता॑हि॒र॒ण्यया॑दि॒वोअन्ताँ॑अनष्टाम्।
नू॒नंसोअ॑स्यमहि॒मापं॑निष्ट॒सूर॑श्चि॒दस्मा॒अनु॑दादप॒स्याम् ॥ २ ॥

उत्। अ॒स्य॒। बा॒हू इति॑। शि॒थि॒रा। बृ॒हन्ता॑। हि॒र॒ण्यया॑।
दि॒वः। अन्ता॑न्। अ॒न॒ष्टा॒म्। नू॒नम्। सः। अ॒स्य॒। म॒हि॒मा।
प॒नि॒ष्ट॒। सूरः॑। चि॒त्। अ॒स्मै॒। अनु॑। दा॒त्। अ॒प॒स्याम् ॥ २ ॥

शिथिरा शिथिलौ दानार्थं प्रसारितौ बृहन्ता बृहन्तौ महान्तौ हिरण्यया हिरण्ययौ सुवर्णमयौ अस्यसवितुः संबंधिनौ बाहू हस्तौ दिवोन्तरिक्षस्य अन्तान् पर्यन्तान् उदनष्टां ऊर्ध्वौ सन्तौ व्याप्नुवतां नूनमद्य अस्य ईदृग्रूपस्य सवितुः सतादृशोमहिमा महत्त्वं पनिष्ट अस्माभिः स्तूयते सूरश्चिव् सूर्योपि अस्मै सवित्रे अपस्यां कर्मेच्छां अनुदाव् अनुददातु ॥ २ ॥

२. दान के लिए प्रसारित और विशाल हिरण्मय बाहुओं-द्वारा सविता अन्तरिक्ष के अन्त को व्याप्त करें। आज हम सविता की उसी महिमा की स्तुति करते हैं। सूर्य भी सविता (सूर्य की तीक्ष्ण शक्तिदेव) को कर्मेच्छा दें।

सावित्रेपशौ पुरोडाशस्य हविषोः सघानइतिद्वे अनुवाक्ये सूत्रंपूर्वमुदाहृतं आश्वमेधिकीषु सावित्रेष्टिषु तृतीयस्यामिष्टौ इमे एव याज्यानुवाक्ये सूत्रितंच—सघानोदेवःसवितासहावेति द्वे इति।

सघांनोदेवःसंवितासहावासांविषद्वसुंपतिर्वसूंनि।
विश्रयंमाणोअमतिमुरूचींमर्तभोजनमधंरासतेनः॥ ३ ॥

सः। घ। नः। देवः। सविता। सहऽवां। आ। साविषत्।
वसुंऽपतिः। वसूंनि। विऽश्रयंमाणः। अमतिम्। उरूचीम्।
मर्तऽभोजनम्। अधं। रासते। नः॥ ३ ॥

सहावा तेजोन्तराण्यभिभावुकं तेजोयस्य सः वसुपतिर्धनानां पालकः ससवितादेवः नोस्मभ्यं वसूनि धनानि आसाविषव् आसमन्ताव् प्रेरयति घेतिपूरणः ससवितादेवः उरूचीं विस्तीर्णगमनां अमतिं रूपं दीप्तिमित्यर्थः विश्रयमाणः निषेवमाणः सन् अध अधुना नोस्मभ्यं मर्तभोजनं मनुष्याणां भोगयोग्यं धनं रासते ददातु ॥ ३ ॥

३. तेजस्वी और धनाधिपति सविता देव ही हमारे लिए धन भेजें। वह बहु विस्तीर्ण रूप को धारण करते हुए हमें मनुष्यों के भोग-योग्य धन दें।

इमागिरःसवितारंसुजिह्वंपूर्णगभस्तिमीळतेसुपाणिम्।
चित्रंवयोबृहदस्मेदंधातुयूयंपातस्वस्तिभिःसदांनः॥ ४ ॥ १२ ॥

इमाः। गिरः। सवितारम्। सुऽजिह्वम्। पूर्णऽगंभस्तिम्।
ईळते। सुऽपाणिम्। चित्रम्। वयः। बृहत्। अस्मे इति।
दधातु। यूयम्। पात। स्वस्तिऽभिः। सदां। नः॥ ४ ॥ १२ ॥

इमा ईदृग्भूतागिरः गृणन्ति स्तुवन्तीति गिरः स्तोत्र्यः प्रजाः यद्वा इमाः स्तुतिरूपावाचः सुजिह्वं शोभनजिह्वं शोभनवाचमित्यर्थः पूर्णगभस्तिं संपूर्णधनं सुपाणिं शोभनहस्तं सवितारं

देवं ईळते स्तुवन्ति सच सविता चित्रं चायनीयं बृहन्महत् वयोन्नं अस्मे अस्मासु दधातु यद्वा अस्मे अस्मभ्यं प्रयच्छतु हे सवितृप्रमुखादेवाः यूयं नोस्मान् स्वस्तिभिः कल्याणैः सदा सर्वदा पात पालयत ॥ ४ ॥

४. ये स्तोत्र-रूप वचन (वा प्रजायें) उत्तम जिह्वावाले, धन-सम्पन्न और सुन्दर हाथवाले सविता देवता की स्तुति करते हैं। वे हमें विचित्र और विशाल अन्न दें। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे द्वादशोवर्गः ॥ १२ ॥

इमारुद्रायेति चतुर्ऋचं त्रयोदशं सूक्तं वसिष्ठस्यार्षं रुद्रदेवताकं अंत्यात्रिष्टुप् शिष्टाजगत्यः तथाचानुक्रमणिका—इमारौद्रंत्रिष्टुबन्तमिति शूलगवादिषुरौद्रयज्ञेषुअनेनसूक्तेन उदीचीदिक् उपस्थेया सूत्र्यतेहि—इमारुद्रायस्थिरधन्वनइति सर्वरुद्रयज्ञेषु दिशामुपस्थानमिति।

इ॒मा रु॒द्राय॑ स्थि॒रध॑न्वने॒ गिरः॑ क्षि॒प्रेष॑वे दे॒वाय॑ स्व॒धाव्ने॑।
अषा॑ळ्हाय॒ सह॑मानाय वे॒धसे॑ ति॒ग्मायु॑धाय भरता शृ॒णोतु॑ नः ॥ १ ॥

इ॒माः। रु॒द्राय॑। स्थि॒रऽध॑न्वने। गिरः॑। क्षि॒प्रऽइ॑षवे। दे॒वाय॑।
स्व॒धाऽव्ने॑। अषा॑ळ्हाय। सह॑मानाय। वे॒धसे॑।
ति॒ग्मऽआ॑युधाय। भ॒र॒त॒। शृ॒णोतु॑। नः॒ ॥ १ ॥

हे अस्मदीयाः स्तोतारोयूयं इमागिरः स्तुतीः रुद्राय एतन्नामकाय देवाय भरत धारयत कीदृशाय स्थिरधन्वने दृढधनुष्काय क्षिप्रेषवे शीघ्रगामिबाणाय स्वधाव्ने अन्नवते अषाळ्हाय केनाप्यनभिभूताय सहमानाय शत्रूणामभिभवित्रे वेधसे विधात्रे तिग्मायुधाय तीक्ष्णास्त्राय एवंभूताय रुद्रदेवाय स्तुतीर्भरत सच रुद्रः नोस्मदीयाः स्तुतीः शृणोतु ॥ १ ॥

१. दृढ़-धनुष्क, शीघ्रगामी बाणवाले, अन्नवाले, किसी के लिए भी अजेय तथा सबके विजेता और तीक्ष्ण अस्त्र बनानेवाले रुद्र की स्तुति करो। वे सुनें।

अथ द्वितीया—

स हि क्षये॑ण॒ क्षम्य॑स्य॒ जन्म॑नः॒ साम्रा॑ज्येन दि॒व्यस्य॒ चेत॑ति।
अव॒न्नव॑न्तीरु॒प नो॒ दुर॑श्चरान॒मी॒वो रु॑द्र॒ जासु॑ नो भव ॥ २ ॥

सः। हि। क्षये॑ण। क्षम्य॑स्य। जन्म॑नः। साम्ऽरा॑ज्येन।
दि॒व्यस्य॑। चेत॑ति। अव॑न्। अव॑न्तीः। उप॑। नः॒।
दुरः॑। च॒र॒। अ॒न॒मी॒वः। रु॒द्र॒। जासु॑। नः॒। भ॒व॒ ॥ २ ॥

सहि सखलु रुद्रोदेवः क्षम्यस्य क्षमायां पृथिव्यां भवः तस्य जन्मनोजनस्य क्षयेणै-श्वर्येण चेतति प्रज्ञायते दिव्यस्य जनस्यच साम्राज्येनैश्वर्येण प्रज्ञायते । शेषः प्रत्यक्षकृतः हे रुद्रदेव त्वंच अवन्तीः त्वां स्तोत्रैस्तर्पयन्तीः नोस्मदीयाः प्रजाः अवन् पालयन् दुरोदुर्याणि अस्मदीयानि गृहाणि उपचर उपगच्छ किंच त्वं नोस्मदीयासु प्रजासु अनमीवः अमीवा-रोगाः तानकुर्वन् भव ॥ २ ॥

२. पृथिवीस्थ और स्वर्गस्थ मनुष्य के ऐश्वर्य-द्वारा उन्हें जाना जा सकता है। रुद्र, तुम्हारा स्तोत्र करनेवाली (हमारी) प्रजा का पालन करते हुए हमारे घर में जाओ। हमें रोग नहीं देना।

यातेदिद्युदवसृष्टादिवस्परिक्ष्मयाचरतिपरिसावृणक्तुनः ।
सहस्रंतेस्वपिवातभेषजामानस्तोकेषुतनयेषुरीरिषः ॥ ३ ॥

या । ते । दिद्युत् । अवऽसृष्टा । दिवः । परि । क्ष्मया ।
चरति । परि । सा । वृणक्तु । नः । सहस्रम् । ते ।
सुऽअपिवात । भेषजा । मा । नः । तोकेषु । तनयेषु । रिरिषः ॥ ३॥

हे रुद्र ते वैद्युतात्मनस्तव संबन्धिनीदिवस्परि अन्तरिक्षसकाशादवसृष्टा विमुक्ता या दि-द्युत् अशनिरूपा हेतिः क्ष्मया क्षित्या क्षितौ वा चरति वर्तते सा दिद्युत् नोस्मान् परिवृणक्तु परित्यजतु अपिच हे स्वपिवात ते तव सहस्रं बहूनि भेषजा भेषजानि यान्यौषधानिसन्ति ता-न्यस्मभ्यं प्रयच्छेतिशेषः नोस्माकं तोकेषु पुत्रेषु तनयेषुच मा रिरिषः हिंसां माकृथाः ॥ ३ ॥

३. रुद्र, अन्तरिक्ष से छोड़ी गई जो तुम्हारी बिजली पृथिवी पर विचरण करती है, वह हमें छोड़ दे। हे स्वपिवात रुद्र, तुम्हारे पास हजारों ओषधियां हैं। हमारे पुत्र या पौत्र की हिंसा नहीं करना।

अथचतुर्थी—

मानोवधीरुद्रमापरादामातेभूमप्रसितौहीळितस्य ।
आनोभजबर्हिषिजीवशंसेयूयंपातस्वस्तिभिःसदानः ॥ ४ ॥१३॥

मा । नः । वधीः । रुद्र । मा । परा । दाः । मा । ते । भूम ।
प्रऽसितौ । हीळितस्य । आ । नः । भज । बर्हिषि । जीवऽशंसे ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ४ ॥ १३ ॥

हे रुद्र त्वं नोस्मान् मावधीः माहिंसीः तथामापरादाः माअत्याक्षीः अपिच हीळितस्य क्रुद्धस्य ते तव प्रसितौ प्रकर्षेणबन्धने वयं च माभूम । किंच जीवशंसे जीवैराशंसनीये बर्हिषि

यज्ञे नोऽस्मान् आभज भागिनः कुरु हे रुद्रप्रमुखादेवाः यूयं नोऽस्मान् कल्याणैः सर्वदा पालयत॥ ४ ॥

४. रुद्र, न हमें मारना न छोड़ना। तुम क्रोध करने पर जो बन्धन करते हो, उसमें हम न रहें। प्राणियों के प्रशस्य यज्ञ का हमें भागी बनाओ। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे त्रयोदशोवर्गः ॥ १३ ॥

आपोयंवइति चतुर्ऋचं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमब्देवताकं आपोयमापमित्यनुक्रान्तंच गतोविनियोगः। तत्र प्रथमा—

आपोयंवःप्रथमंदेवयन्तंइन्द्रपानमूर्मिमकृण्वतेळः।
तंवोवयंशुचिमरिप्रमद्यघृतप्रुषंमधुमन्तंवनेम ॥ १ ॥

आपः। यम्। वः। प्रथमम्। देवऽयन्तः। इन्द्रऽपानम्।
ऊर्मिम्। अकृण्वत। इळः। तम्। वः। वयम्। शुचिम्।
अरिप्रम्। अद्य। घृतऽप्रुषम्। मधुऽमन्तम्। वनेम ॥ १ ॥

देवयन्तोदेवानिच्छन्तोध्वर्यवः हे आपः हे अब्देवताः वोयुष्माकं कार्यभूतं इन्द्रपानं इंद्रेण पातव्यं इळः इळाया भूम्याः संभूतं यमूर्मिं सोमाख्यं यं रसं प्रथमं पुरा अकृण्वत अभि अभिषवणवचनादिभिः समस्कुर्वत अद्येदानीं वयमपि वोयुष्मदीयं तमूर्मिं वनेम। संभजेमहि कीदृशं शुचिं शुद्धं अरिप्रं पापरहितं घृतप्रुषं वृष्टिलक्षणमुदकं सिंचंतं मधुमन्तं मधुररसोपेतं एवंभूतं तं वनेमेति संबन्धः॥ १॥

१. हे अप्‌देवता, देवेच्छुक अध्वर्युओं के द्वारा इन्द्र के लिए पीने योग्य और भूमि-समुत्पन्न जो तुम लोगों का सोमरस पहले संस्कृत किया गया है, उसी शुद्ध, निष्पाप, वृष्टि-जल-सेचनकारी और रस से युक्त सोमरस का हम भी सेवन करेंगे।

तमूर्मिमापोमधुमत्तमंवोपान्नपादवत्वाशुहेमा।
यस्मिन्निन्द्रोवसुभिर्मादयातेतमश्यामदेवयन्तोवोअद्य ॥ २ ॥

तम्। ऊर्मिम्। आपः। मधुमत्ऽतमम्। वः। अपाम्।
नपात्। अवतु। आशुऽहेमा। यस्मिन्। इन्द्रः। वसुऽभिः।
मादयाते। तम्। अश्याम। देवऽयन्तः। वः। अद्य ॥ २ ॥

हे आपः एतत्संज्ञकादेवाः वोयुष्मदीयं मधुमत्तमं रसवत्तमं तमूर्मिं प्रसिद्धं सोमाख्यं रसं आशुहेमा शीघ्रगतिः अपांनपात् एतदाख्योदेवः अवतु पालयतु इन्द्रः यस्मिन्नूर्मौ वसुभिर्वा-

सकैर्देवैः सह मादयाते माद्येत् अद्यअस्मिन् दिने देवयन्तोदेवकामावयं वोयुष्मदीयं तमूर्मिं अश्याम प्राप्नुयाम ॥ २ ॥

२. शीघ्र-गति "अपां नपात्" (अग्नि) देवता तुम्हारे उस रसबत्तम सोमरस का पालन करें। वसुओं के साथ इन्द्र जिसमें मत्त होते हैं, तुम्हारे उसी सोमरस को हम देवाभिलाषी होकर आज प्राप्त करेंगे।

शतपवित्राःस्वधयामदन्तीर्देवीर्देवानामपियन्तिपाथः।
ताइन्द्रस्यनमिनन्तिव्रतानिसिन्धुभ्योहव्यंघृतवज्जुहोत ॥ ३ ॥

शतऽपवित्राः। स्वधया। मदन्तीः। देवीः। देवानाम्।
अपि। यन्ति। पाथः। ताः। इन्द्रस्य। न। मिनन्ति।
व्रतानि। सिन्धुऽभ्यः। हव्यम्। घृतऽवत्। जुहोत ॥ ३ ॥

शतपवित्राः शतं बहूनि पवित्राणि पावनानि रूपाणि यासां ताः स्वधया स्वकार्यभूतेनान्नेन मदन्तीर्जनान्मादयन्त्यः देवीर्देव्यः द्योतमानाआपः देवानामिन्द्रादीनां पाथः स्थानमपि यन्ति प्रविशन्ति तास्तादृश्यआपः इन्द्रस्य प्रीणनानि व्रतानि यज्ञादीनि कर्माणि नमिनन्ति नहिंसन्ति उत्पादयन्तीत्यर्थः हे अध्वर्यवोयूयं सिन्धुभ्यस्ताभ्योद्भ्यः घृतवत् उपस्तरणाभिघारणलक्षणाज्ययुक्तं हव्यं पुरोडाशादिकं हविर्जुहोत जुहुत ॥ ३ ॥

३. अनेक पावन रूपोंवाले और लोगों में हर्षोत्पादक तथा प्रकाशमान जल-देवता देवों के स्थानों में प्रवेश करते हैं। वे इन्द्र के यज्ञादि कर्मों की हिंसा नहीं करते। अध्वर्युओ, तुम सिन्धु आदि के लिए घृत-युक्त हव्य का होम करो।

याःसूर्योरश्मिभिराततानयाभ्यइन्द्रोअरदद्गातुमूर्मिम्।
तेसिन्धवोवरिवोधातनानोयूयंपातस्वस्तिभिःसदानः ॥ ४ ॥१४॥

याः। सूर्यः। रश्मिऽभिः। आऽततान। याभ्यः। इन्द्रः। अरदत्।
गातुम्। ऊर्मिम्। ते। सिन्धवः। वरिवः। धातन।
नः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ४ ॥ १४ ॥

सूर्योदेवः याअपः रश्मिभिः स्वकीयैः किरणैः आततान विस्तारयति सूर्योहि रश्मिभिरुदकसारमादाय वर्षतीत्यर्थः याभ्योद्भ्यश्च ऊर्मिं अर्तेरिदं रूपं गमनयोग्यं गातुं मेघेभ्योनिर्गमनसाधनं मार्गं इन्द्रोपि अरदत् वज्रेण मेघान् ताडयन् प्रयच्छति हे सिंधवः आपः ते यूयं नोस्मभ्यं वरिवोधनं धातन धत्त प्रयच्छत। ते इति सिंधुशब्देन समानाधिकरणत्वात् पुल्लिंगत्वं हे अब्देवताः यूयं सर्वदा नोस्मान् कल्याणैः पालयत ॥ ४ ॥

४. सूर्य, किरणों द्वारा, जिन जलों का विस्तार करते हैं और जिनके

लिए इन्द्र ने गमनीय पथ को विदीर्ण किया है, हे सिन्धुगण, वे ही तुम लोग हमारा धन धारण करो। तुम सदा हमें स्वस्ति द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे चतुर्दशोवर्गः ॥ १४ ॥

ऋभुक्षणइति चतुर्ऋचं पंचदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं ऋभुदेवताकं अन्त्यायाविकल्पेन विश्वेदेवादेवता तथाचानुक्रान्तं— ऋभुक्षणआर्भवमंत्यावैश्वदेवीवेति। दशमेहनि वैश्वदेवशस्त्रेआर्भवनिविद्धानं सूत्र्यतेहि—ऋभुक्षणइत्यार्भवमिति।

ऋभुक्षणोवाजामादयध्वमस्मेनरोमघवानःसुतस्य।
आवोर्वाचःक्रतवोनयातांविभ्वोरथंनर्यंवर्तयन्तु ॥ १ ॥

ऋभुक्षणः। वाजाः। मादयध्वम्। अस्मे इति। नरः।
मघऽवानः। सुतस्य। आ। वः। अर्वाचः। क्रतवः। न।
याताम्। विऽभ्वः। रथम्। नर्यम्। वर्तयन्तु ॥ १ ॥

ऋभुक्षाइति ऋभूणां ज्येष्ठस्याख्या वाजइतितु कनिष्ठस्य अत्र ऋभुक्षणोवाजाइति बहुवचनेन ऋभवस्त्रयोगृह्यन्ते हे ऋभुक्षणोवाजा नरोनेतारः मघवानोधनवन्तः एवंभूताहेऋभवः यूयं अस्मे अस्मासु स्थितेन सुतस्याभिषुतेन सोमेन मादयध्वं तृप्ताभवत नेतिसंप्रत्यर्थे इदानीं यातां गच्छतां वोयुष्मदीयाः क्रतवः कर्मणां कर्तारः विभ्वः विभवः समर्थाअश्वाः अर्वाचोर्वाचः अस्मदभिमुखाः सन्तः नर्यं मनुष्यहितं रथं युष्मदीयं आवर्तयन्तु आगमयन्तु ॥ १ ॥

१. नेता और धनवान् ऋभुओ, हमारे सोमपान से तुम मत्त होओ। तुम लोग जा रहे हो। तुम्हारे कर्म-कर्त्ता और समर्थ अश्व हमारे अभिमुख होकर मनुष्यों के लिए हितकर रथ आवर्त्तित करें।

ऋभुर्ऋभुभिरभिवःस्यामविभ्वोविभुभिःशवसाशवांसि।
वाजोअस्माँअवतुवाजसाताविन्द्रेणयुजातरुषेमवृत्रम् ॥ २ ॥

ऋभुः। ऋभुऽभिः। अभि। वः। स्याम। विऽभ्वः। विभुऽभिः।
शवसा। शवांसि। वाजः। अस्मान्। अवतु। वाजऽसातौ।
इन्द्रेण। युजा। तरुषेम। वृत्रम् ॥ २ ॥

हेऋभवः ऋभुभिःयुष्माभिः वयंऋभुः उरुभवन्तीत्यृभवः सन्तः विभुभिर्युष्माभिः विभ्वोविभवश्च सन्तः शवांसि शत्रूणां बलानि वः शवसा युष्मदीयेन बलेन अभिस्याम अभिभवेम तथा वाजसातौ संग्रामे वाजः एतत्संज्ञकऋभुः अस्मानवतु पालयतु अपिच युजा सहायभूतेनेन्द्रेण वृत्रं शत्रुं वयं तरुषेम हनाम प्रायेण ऋभवोपीन्द्रेणसहस्तूयन्ते इति ॥ २ ॥

२. हम तुम्हारे द्वारा विभु (प्रथित) हैं। तुम लोग समर्थ हो। हम तुम्हारी सहायता से समर्थ होकर तुम्हारे बल द्वारा शत्रुओं को दबावेंगे। वाज नाम के ऋभु युद्ध में हमारी रक्षा करें। इन्द्र को सहायक पाकर हम वृत्र के हाथ से बच जायेंगे।

अथ तृतीया–

तेचिद्धिपूर्वीरभिसन्तिशासाविश्वाँअर्यउपरतातिवन्वन् ।
इन्द्रोविभ्वाँऋभुक्षावाजोअर्यःशत्रोर्मिथत्याकृणवन्विनृम्णम् ॥३॥

ते । चित् । हि । पूर्वीः । अभि । सन्ति । शासा । विश्वान् ।
अर्यः । उपरऽताति । वन्वन् । इन्द्रः । विऽभ्वा । ऋभुक्षाः ।
वाजः । अर्यः । शत्रोः । मिथत्या । कृणवन् । वि । नृम्णम् ॥ ३ ॥

तेतादृशा इन्द्रऋभवश्च पूर्वीर्बह्वीः अस्मच्छत्रुसेनाः शासा शासनेन स्वकीयया आज्ञया यद्वा विशस्यते हिंस्यतेनेनेति शासशब्दआयुधवाची तेन अभिसन्ति अभिभवन्ति चिद्धीतीमौ पूरणौ किंच उपरताति सप्तम्यालुक् उपरैरुपलैः पाषाणसदृशैरायुधैः स्तायते विस्तार्यइत्युपरताति युद्धं तस्मिन् विश्वान् समस्तान् अर्यअरीन् शत्रून् वन्वन् हिंसन्ति विभ्वाऋभुक्षा वाजः एतत्संज्ञकाऋभवश्चेन्द्रश्च अर्यः शत्रूणामभिगन्तारः सन्तः शत्रोः संबन्धिनृम्णं बलं मिथत्या मिथतेरिदं रूपं मिथतिर्हिंसा तया विकृणवन् विकुर्वन्तु विनाशयन्त्वित्यर्थः ॥ ३ ॥

३. हमारी अनेक शत्रु-सेनाओं को इन्द्र और ऋभुगण आयुध-द्वारा पराजित करते हैं। युद्ध होने पर वे सारे शत्रुओं को मारते हैं। विभ्वा, ऋभुक्षा और वाज नाम के तीनों ऋभु और आर्य इन्द्र-मन्थन द्वारा शत्रु-बल को विनष्ट करेंगे।

अथ चतुर्थी–

नूदेवासोवरिवःकर्तनानोभूतनोविश्वेवसेसजोषाः ।
सम्स्मेइषंवसवोददीरन्यूयंपातस्वस्तिभिःसदानः ॥ ४ ॥ १५ ॥

नु । देवासः । वरिवः । कर्तन । नः । भूत । नः । विश्वे । अवसे ।
सऽजोषाः । सम् । अस्मे इति । इषम् । वसवः । ददीरन् ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ४ ॥ १५ ॥

हे देवासोदेवाः द्योतमानाऋभवोयूयं नु अद्य नोस्मभ्यं वरिवोधनं कर्तन कुरुत प्रयच्छत तथा विश्वे सर्वे ऋभवोयूयं सजोषाः सहप्रीयमाणाः सन्तः नोस्माकं अवसे रक्षणाय भूत भवत। अपिच वसवः प्रशस्याऋभवः इषमन्नं अस्मे अस्मभ्यं संददीरन् संप्रयच्छेयुः हेऋभवोयूयं अस्मान् सर्वदा कल्याणैः रक्षत ॥ ४ ॥

४. प्रकाशक ऋभुओ, तुम आज हमें धन दो। हे समस्त ऋभुओ, प्रसन्न होकर तुम हमारे रक्षक होओ। प्रशस्य ऋभुगण हमें अन्न प्रदान करें। तुम सदा हमें स्वस्ति (कल्याण) द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे पंचदशोवर्गः ॥ १५ ॥

समुद्रज्येष्ठाइति चतुर्ऋचं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमब्देवताकं तथाचानुक्रान्तं—समुद्रज्येष्ठाआपमिति गतोविनियोगः।

तत्र प्रथमा—

समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायन्त्यनिविशमानाः।
इन्द्रोयावज्रीवृषभोररादताआपोदेवीरिहमामवन्तु॥ १॥

समुद्रऽज्येष्ठाः। सलिलस्य। मध्यात्। पुनानाः। यन्ति।
अनिऽविशमानाः। इन्द्रः। याः। वज्री। वृषभः। ररादं। ताः।
आपः। देवीः। इह। माम्। अवन्तु॥ १॥

समुद्रज्येष्ठाः समुद्रोर्णवः ज्येष्ठः प्रशस्यतमोयासामपां ताः सलिलस्य अन्तरिक्षनामैतत् अन्तरिक्षस्य मध्यात् माध्यमिकात्स्थानात् यन्ति गच्छन्ति कीदृश्यः पुनानाः विश्वं शोधयन्त्यः अनिविशमानाः सर्वदागच्छन्त्यः वज्री वज्रभृत् वृषभः कामानां वर्षितेन्द्रः याः निरुद्धाआपः ररादं लिखति देवीर्देव्यस्ताआपः इहास्मिन्प्रदेशेस्थितं मां अवन्तु रक्षन्तु अभिगच्छन्तु वा॥ १॥

१. जिन जलों में समुद्र ज्येष्ठ हैं, वे सदा गमन-शील और शोधक जलसमूह (अप् देवता) अन्तरिक्ष के बीच से जाते हैं। वज्रधर और अभीष्टवर्षक इन्द्र ने जिनको छोड़ दिया था, वे अप्देवता यहाँ हमारी रक्षा करें।

याआपोदिव्याउतवास्रवन्तिखनित्रिमाउतवायाःस्वयंजाः।
समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवन्तु॥ २॥

याः। आपः। दिव्याः। उत। वा। स्रवन्ति। खनित्रिमाः।
उत। वा। याः। स्वयम्ऽजाः। समुद्रऽअर्थाः। याः। शुचयः।
पावकाः। ताः। आपः। देवीः। इह। माम्। अवन्तु॥ २॥

याआपः दिव्याः अन्तरिक्षभवाः सन्ति उतवा अपिच याआपः नद्यादिगताः सत्यः स्रवन्ति गच्छन्ति याश्च खनित्रिमाः खननेन निर्वृत्ताः उतवा अपिच याः स्वयंजाः स्वयमेव प्रादुर्भवंत्यः समुद्रएवार्थोगन्तव्योयासां ताः समुद्रार्थाः शुचयोदीप्तियुक्ताः पावकाः शोधयित्र्यश्च भवन्ति ताआपोमामवन्त्विति॥ २॥

२. जो जल अन्तरिक्ष में उत्पन्न होते हैं, जो नदी आदि में प्रवाहित होते हैं, जो खोदकर निकाले जाते हैं और जो स्वयं उत्पन्न होकर समुद्र की ओर जाते हैं, वे ही दीप्ति से युक्त और पवित्र (देवी-स्वरूप) जल हमारी रक्षा करें।

अथ तृतीया—

यासांराजावरुणोयातिमध्येसत्यानृतेअंवपश्यञ्जनानाम्।
मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवन्तु॥ ३॥

यासाम्। राजा। वरुणः। याति। मध्ये। सत्यानृते इति।
अवऽपश्यन्। जनानाम्। मधुश्चुतः। शुचयः। याः। पावकाः।
ताः। आपः। देवीः। इह। माम्। अवन्तु॥ ३॥

वरुणः यासामपां राजास्वामी मध्येमध्यमलोके याति गच्छति किंकुर्वन् जनानां प्रजानां सत्यानृते सत्यंचानृतंच अवपश्यन् जानन्नित्यर्थः याआपः मधुश्चुतः रसं क्षरंत्यः शुचयोदीप्तियुक्ताः पावकाः शोधयित्र्यः ताआपोदेव्योमां रक्षंत्विति॥ ३॥

३. जिनके स्वामी वरुणदेव जल-समूह में सत्य और मिथ्या के साक्षी होकर मध्यम लोक में जाते हैं, वे ही रस गिरानेवाली, प्रकाश से युक्त और शोधिका जल-देवियाँ हमारी रक्षा करें।

यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदन्ति।
वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवन्तु॥४॥१६॥

यासु। राजा। वरुणः। यासु। सोमः। विश्वे। देवाः। यासु।
ऊर्जम्। मदन्ति। वैश्वानरः। यासु। अग्निः। प्रऽविष्टः। ताः।
आपः। देवीः। इह। माम्। अवन्तु॥ ४॥ १६॥

अपांराजावरुणः यास्वप्सु वर्तते सोमः यास्वप्सु वर्तते यास्वप्सु स्थिताः विश्वे सर्वे देवाः ऊर्जमन्नं मदन्ति वैश्वानरोग्निः यासुप्रविष्टः ताआपोदेव्यःइहस्थितं मां अवन्तु॥ ४॥

४. जिनमें राजा वरुण निवास करते हैं, जिनमें सोम रहता है, जिनमें अन्न पाकर विश्व-देवगण प्रमत्त होते हैं और जिनमें वैश्वानर पैठते हैं, वे ही प्रकाशक जल (अप् देवता) हमारी रक्षा करें।

॥ इति पंचमस्य चतुर्थे षोडशोवर्गः॥ १६॥

आमां मित्रावरुणेति चतुर्ऋचं सप्तदशं सूक्तं वसिष्ठस्यार्षं चतुर्थ्यतिजगती व्यूहेनशक्वरीवा आदितस्तिस्रोजगत्यः प्रथमा मैत्रावरुणी द्वितीयाग्नेयी तृतीयावैश्वदेवी चतुर्थी गंगादिनदीदेवताका तथाचानुक्रमणिका—आमांमैत्रावरुण्याग्नेयी वैश्वदेवी नदीस्तुतिर्जागतमंत्यातिजगती शक्वरीवेति। अस्यसूक्तस्य प्रत्यृचं विषादिहरणे विनियोगोलिंगादवगन्तव्यः।

तत्र प्रथमा—

आमांमित्रावरुणेहरक्षतंकुलाययद्विश्वयन्मानआगन्।
अजकावंदुर्दृशीकंतिरोदधेमामांपद्येनरपसाविदत्त्सरुः॥ १॥

आ । माम् । मित्रावरुणा । इह । रक्षतम् । कुलाययत् ।
विऽश्वयत् । मा । नः । आ । गन् । अजकाऽवम् । दुःऽदृशीकम् ।
तिरः । दधे । मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥ १ ॥

हे मित्रावरुणा मित्रावरुणौ युवां इहास्मिन्लोके मां आरक्षतं आभिमुख्येन पालयतं कुलाययत् कुलायं स्थानं तत्कुर्वन् विश्वयत् विशेषेण वर्धमानं विषं नोस्मान् आ आभिमुख्येन मागन् मागमत् मागच्छतु तथा अजकावं अजकानाम रोगविशेषः तद्वत् दुर्दृशीकं दुर्दर्शनं विषं तिरोदधे तिरोधत्तां नश्यत्वित्यर्थः तथा त्सरुः छद्मगामी जिह्मगः सर्पइत्यर्थः मां पद्येन पादभवेन रपसा रपिः शब्दकर्मा शब्देन माविदत् माजानतु ॥ १ ॥

१. मित्र और वरुण, इस लोक में तुम हमारी रक्षा करो। स्थानकारी और विशेष वर्द्धमान विष हमारी ओर न आवे। अजका (कदाचित् स्तनाकृति) नामक रोग की तरह दुर्दर्शन विष विनष्ट हो। छद्मगामी सर्प हमें पद-ध्वनि से न पहचान सके।

यद्विजामन्परुषिवन्दनंभुवदष्ठीवन्तौपरिकुल्फौचदेहत् ।
अग्निष्टच्छोचन्नपबाधतामितोमामांपद्येनरपसाविदत्त्सरुः ॥२॥

यत् । विऽजामन् । परुषि । वन्दनम् । भुवत् । अष्ठीवन्तौ । परि ।
कुल्फौ । च । देहत् । अग्निः । तत् । शोचन् । अप । बाधताम् ।
इतः । मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥ २ ॥

वन्दनं एतत्संज्ञकं यद्विषं विजामन् विविधजन्मनि परुषि वृक्षादीनां पर्वणि भुवत् उद्भवेत् यच्चविषं अष्ठीवन्तौ जानुनी कुल्फौ गुल्फौच परिदेहत् दिहउपचये उपचितंकुर्यात् अग्निर्देवः शोचन् दीप्यमानः सन् इतोस्माज्जनात् तद्विषं अपबाधतां अपहन्तु शिष्टं व्याख्यातं ॥ २ ॥

२. जो वन्दन नाम का विष नाना जन्मों में वृक्षादि के ग्रन्थि-स्थान में उत्पन्न होता है और जो विष जानु (घुटना) और गुल्फ (पाद-ग्रन्थि) को फुला देता है, दीप्तिमान् अग्निदेव, हमारे इस मनुष्य से उस विष को दूर करो। छद्मगामी सर्प पदध्वनि-द्वारा हमें जानने न पावे।

यच्छल्मलौभवतियन्नदीषुयदोषधीभ्यःपरिजायतेविषम् ।
विश्वेदेवानिरितस्तत्सुवन्तुमामांपद्येनरपसाविदत्त्सरुः ॥ ३ ॥

यत् । शल्मलौ । भवति । यत् । नदीषु । यत् । ओषधीभ्यः । परि ।
जायते । विषम् । विश्वे । देवाः । निः । इतः । तत् । सुवन्तु । मा ।
माम् । पद्येन । रपसा । विदत् । त्सरुः ॥ ३ ॥

यद्विषं शल्मलौ एतत्संज्ञके वृक्षेभवति तद्विषं नदीषु तत्रस्थासु अप्सु प्रादुर्भवति परीति पंचम्यर्थानुवादी ओषधीभ्यः सकाशाद्यद्विषं जायते उत्पद्यते विश्वे सर्वे देवाः तद्विषं इतोस्मा-ज्जनाद्देशाद्वा निः सुवन्तु निःशेषेण प्रेरयन्तु मामामितिशिष्टं व्याख्यातं ॥ ३ ॥

३. जो विष शाल्मली (वा वक्षःस्थान) में होता है और जो नदी-जल में ओषधियों से उत्पन्न होता है, विश्वदेवगण, उस विष को हमसे दूर कर दो। छद्मगामी सर्प पद-ध्वनि-द्वारा हमें जानने न पावे।

याःप्रवतोनिवतउद्वतउदन्वतीरनुदकाश्चयाः।
ताअस्मभ्यंपयसापिन्वमानाःशिवादेवीरशिपदाभवन्तु
सर्वानद्योअशिमिदाभवन्तु ॥ ४ ॥ १७ ॥

याः। प्रऽवतः। निऽवतः। उत्ऽवतः। उदन्ऽवतीः। अनुदकाः। च।
याः। ताः। अस्मभ्यम्। पयसा। पिन्वमानाः। शिवाः। देवीः।
अशिपदाः। भवन्तु। सर्वाः। नद्यः। अशिमिदाः। भवन्तु॥४॥१७॥

यानद्यः प्रवतः प्रवणदेशे गच्छंत्यः या निवतः निम्नदेशे गच्छन्त्यः या उद्वतः उन्नतदेशेगच्छन्त्यः उदन्वतीः उदकवत्यः अनुदकाश्च उपकरहिताश्च यानद्यः यान्ति पयसोदकेन पिन्वमानाः विश्वमाप्याययन्त्यः देवीर्देव्योद्योतमानाः तास्तादृश्योनद्यः अस्मभ्यं अशिपदाः शिपदंनाम रोगविशेषः तदकुर्वत्यः सत्यः शिवाः कल्याण्योभवन्तु अपिच सर्वास्तानद्यः अशिमिदाः शिमिर्वधकर्मा अहिंसाप्रदाभवन्तु ॥ ४ ॥

४. जो नदियाँ प्रबल (वा प्रवण) देश में जाती हैं, जो निम्न देश में जाती हैं, जो उन्नत देश में जाती हैं, जो जल-युक्त और जल-शून्य होकर संसार को आप्यायित (तृप्त) करती हैं। वे सारी प्रकाशक नदियाँ हमारे शिपद नामक रोग का निवारण करके कल्याणकारिणी बनें। वे नदियाँ अहिंसक हों।

॥ इति पंचमस्य चतुर्थे सप्तदशोवर्गः ॥ १७ ॥

आदित्यानामिति तृचमष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभंआदित्यदेवताकं अनुक्रम्यतेच—आदित्यानां तृचमादित्यं त्विति। गतःसूक्तविनियोगः। आदित्यदेवताकेपशौ आदित्यानामवसेति वपायाअनुवाक्या सूत्रितंच—आदित्यानामवसानूतनेनेमागिरआदित्येभ्यइति आदित्यग्रहस्यैषानुवाक्या सूत्रितं च—आदित्यानामवसानूतनेन होतायक्षदादित्यानिति।

तत्र प्रथमा—

आदित्यानामवसानूतनेनसक्षीमहिशर्मणाशंतमेन।
अनागास्त्वेअदितित्वेतुरासइमंयज्ञंदधतुश्रोषमाणाः ॥ १ ॥

आदित्यानाम् । अवसा । नूतनेन । सक्षीमहि । शर्मणा ।
शम्ऽतमेन । अनागाःऽत्वे । अदितिऽत्वे । तुरासः ।
इमम् । यज्ञम् । दधतु । श्रोषमाणाः ॥ १ ॥

आदित्यानां अदितेःपुत्राणां एतत्संज्ञकानां देवानां अवसा रक्षणेन तद्धेतुभूतेनेत्यर्थः नूतनेनाद्यतनेन शंतमेन शंसुखं अतिशयेन तत्करणेन शर्मणा शर्मेति गृहनामैतत् गृहेण सक्षीमहि वयं संगच्छेमहि तुरासः तुराः त्वरिताआदित्याः श्रोषमाणाः अस्मदीयानि स्तोत्राणि शृण्वन्तः यज्ञं यष्टारमिमं जनं अनागास्त्वे अनपराधत्वेच अदितित्वे अदीनत्वेच दधतु स्थापयन्तु ॥ १

१. हम आदित्यों के रक्षण-द्वारा नवीन और सुखकर गृह प्राप्त करें। क्षिप्रकारी आदित्यगण हमारे स्तोत्र सुनकर इस यज्ञ-कर्त्ता को निरपराध और अदरिद्र कर दें।

आदित्यासोअदितिरित्यादित्यग्रहस्य याज्या सूत्रितं च—आदित्यासोअदितिर्मादयन्तामिति नैतंग्रहमीक्षेत हूयमानमिति ।

सैषा सूक्ते द्वितीया—

आदित्यासोअदितिर्मादयन्तांमित्रोअर्यमावरुणोरजिष्ठाः ।
अस्माकंसन्तुभुवनस्यगोपाःपिबन्तुसोममवसेनोअद्य ॥ २ ॥

आदित्यासः । अदितिः । मादयन्ताम् । मित्रः । अर्यमा ।
वरुणः । रजिष्ठाः । अस्माकम् । सन्तु । भुवनस्य । गोपाः ।
पिबन्तु । सोमम् । अवसे । नः । अद्य ॥ २ ॥

आदित्यासः आदित्यादेवाः अदितिस्तेषांमाताच यद्वा अदितिरिति देवविशेषणं अदितिः अदितयः अदीनाः रजिष्ठाः अतिशयेन ऋजवः मित्रः अर्यमा वरुणश्च एतत्संज्ञकाः मादयन्तां तृप्ताः सन्तु भुवनस्य सर्वस्य जगतः गोपाः रक्षकाः एवंभूतादेवाः अस्माकं सन्तु अस्माकमेव रक्षकाभवंत्वित्यर्थः अद्यास्मिन् दिने नोस्माकमवसे रक्षणाय सोममस्माभिरभिषुतं पिबन्तु ॥ २ ॥

२. आदित्यगण, अदिति, अत्यन्त सरल-स्वभाव मित्र, वरुण और अर्यमा प्रमत्त हों। भुवन-रक्षक देवगण हमारे रक्षक हों। वे आज हमारी रक्षा के लिए सोमपान करें।

अथ तृतीया—

आदित्याविश्वेमरुतश्चविश्वेदेवाश्चविश्वेऋभवश्चविश्वे ।
इन्द्रोअग्निरश्विनातुष्टुवानायूयंपातस्वस्तिभिःसदानः ॥३॥१८॥

आदित्याः । विश्वे । मरुतः । च । विश्वे । देवाः । च ।
विश्वे । ऋभवः । च । विश्वे । इन्द्रः । अग्निः । अश्विना ।
तुस्तुवानाः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥ १८ ॥

आदित्याः अदितेः पुत्राः विश्वे सर्वे द्वादशसंख्याकाअर्काः विश्वे मरुतश्च सर्वे एकोनपंचाशत् संख्योपेताश्च विश्वेदेवाश्च विश्वे ऋभवश्च इन्द्रोग्निः अश्विना अश्विनौ एतत् संज्ञकाः एवंभूतायेदेवाः तुष्टुवानाः अस्माभिः स्तुताः बभूवुः सर्वे ते देवाः यूयं सदा सर्वदा नोस्मान् स्वस्तिभिः कल्याणैः पात रक्षत ॥ ३ ॥

३. हमने समस्त आदित्यगण (१२), समस्त मरुद्गण (४९), समस्त देवगण (३३३३), समस्त ऋभुगण (३), इन्द्र, अग्नि और अश्विनीकुमारों की स्तुति की। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थेष्टादशोवर्गः ॥ १८ ॥

आदित्यासोअदितयइति तृचात्मकमेकोनविंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमादित्यदेवताकं आदित्यासइत्यनुक्रमणिका । गतोविनियोगः ।

तत्र प्रथमा—

आदित्यासोअदितयःस्यामपूर्देवत्रावसवोमर्त्यत्रा ।
सनेममित्रावरुणासनन्तोभवेमद्यावापृथिवीभवन्तः ॥ १ ॥

आदित्यासः । अदितयः । स्याम । पूः । देवऽत्रा । वसवः ।
मर्त्यऽत्रा । सनेम । मित्रावरुणा । सनन्तः ।
भवेम । द्यावापृथिवी इति । भवन्तः ॥ १ ॥

हे आदित्यासः आदित्यादेवाः व्यत्ययेनाद्युदात्तत्वाभावः यद्वा आदित्यानामिमेआदित्याः तस्येदमित्यर्थे प्राग्दीव्यतीयोण्यप्रत्ययः आदित्यानां शेषभूतावयं अदितयः अखंडनीयाः स्याम भवेम । देवत्रा देवेषु वसवोवासकादेवाः युष्मदीयं पूः पालनं मर्त्यत्रा मनुष्येष्वस्मासु भवतु हे मित्रावरुणा मित्रावरुणौ सनंतः युवां संभजन्तोवयं सनेम युवाभ्यां दत्तं धनं संभजेमहि हे द्यावापृथिवी द्यावापृथिव्यौ युवयोः प्रसादात् वयं भवन्तो भवेम भूतिमंतः स्याम ॥१॥

१. हम आदित्यों के आत्मीय हैं; हम अखण्डनीय हों। देवों में हे वसुओ, मनुष्यों की तुम रक्षा करो। मित्र और वरुण, तुम्हारा भजन करते हुए हम धन का उपभोग करेंगे। द्यावापृथिवी, हम भूति (शक्ति) वाले हों।

मित्रस्तन्नोवरुणोमामहन्तशर्मतोकायतनयायगोपाः ।
मावोभुजेमान्यजातमेनोमातत्कर्मवसवोयच्चयध्वे ॥ २ ॥

मित्रः । तत् । नः । वरुणः । ममहन्त । शर्म । तोकाय ।
तनयाय । गोपाः । मा । वः । भुजेम । अन्यऽजातम् ।
एनः । मा । तत् । कर्म । वसवः । यत् । चयध्वे ॥ २ ॥

मित्रोवरुणः अहर्निशाभिमानिनौ देवौ एतदाद्याः सर्वे आदित्याः नोस्मभ्यं तत् प्रसिद्धं शर्म सुखं ममहन्त मंहतिर्दानकर्मा ददतु गोपाः विश्वस्य रक्षकास्ते देवास्तोकायास्मदीयाय पुत्राय तनयाय तत्पुत्रायच शर्म प्रयच्छन्तु अथप्रत्यक्षस्तुतिः हे देवाः वोयुष्मदीयावयं अन्यजातमन्येनोत्पादितं एनः पापमाभुजेम माभुक्तवन्तः स्याम।हे वसवो वासकादेवाः यद्येन युष्मदप्रियेण कर्मणा चयध्वे यूयमस्मान्नाशयत तत्तादृशं कर्म वयं माकर्म माकार्ष्म लुङि करोतेरुत्तमस्य बहुवचनं मंत्रेघसह्वरेत्यादिना च्लेर्लोपः ॥ २ ॥

२. मित्र और वरुण (मित्र=उषा और सूर्य की चालक शक्ति का देवता, वरुण=आकाश का देवता) आदि आदित्यगण हमारे पुत्र और पौत्र को सुख दें। दूसरे का किया पाप हम न भोगें। जिस कर्म को करने पर तुम नाश करते हो, वसुओ, हम वह कर्म न करें।

अथ तृतीया—

तुरण्यवोङ्गिरसोनक्षन्तरत्नंदेवस्यसवितुरियानाः ।
पिताचतन्नोमहान्यजत्रोविश्वेदेवाःसमनसोजुषन्त ॥३॥१९॥

तुरण्यवः । अङ्गिरसः । नक्षन्त । रत्नम् । देवस्य । सवितुः ।
इयानाः । पिता । च । तत् । नः । महान् । यजत्रः ।
विश्वे । देवाः । सऽमनसः । जुषन्त ॥ ३ ॥ १९ ॥

तुरण्यवः यज्ञादिकर्मसु त्वरिताः अंगिरसः एतन्नामकाऋषयः इयानाः सवितारं याचमानाः सन्तः सवितुः प्रेरकस्य देवस्य संबन्धिरत्नं रमणीयं यद्धनं नक्षन्त आश्नुवन्त उत्तरार्धगत तच्छब्दापेक्षया यच्छब्दोध्याह्रियते यजत्रः यजनशीलः महान् प्रभूतः पिताच वसिष्ठस्य पितृभूतोवरुणः यद्वा सर्वेषां पिता प्रजापतिः विश्वे सर्वे देवाः समनसः समानमनस्काः तत्तादृशं रत्नं नोस्मान् जुषन्त सेवयंतु यद्वा नोस्मभ्यं ददतु ॥ ३ ॥

३. क्षिप्रकारी अंगिरा लोगों ने सविता के पास याचना करके सविता के जिस रमणीय धन को व्याप्त किया था, उसी धन को यज्ञशील महान् पिता (प्रजापति) और सारे देवगण, समान मन से हमें दें।

॥ इति पंचमस्य चतुर्थे एकोनविंशो वर्गः ॥१९॥

प्रद्यावायज्ञैरिति तृचात्मकं विंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं द्यावापृथिव्यं अनुक्रम्यतेच—प्रद्यावा द्यावापृथिव्यमिति। चतुर्थेहनि वैश्वदेवशस्त्रे इदं द्यावापृथिव्यनिविद्धानं सूत्रितंच—आदेवोयातु प्रद्यावेति वासिष्ठमिति। द्यावापृथिव्येपशौ वपापुरोडाशयोः प्रद्यावेति द्वेऋचौयाज्ये सूत्रितं च—प्रद्यावायज्ञैःपृथिवीनमोभिरिति द्वे इति।

तत्र प्रथमा—

प्रद्यावांयज्ञैःपृथिवीनमोंभिःसबाधईळेबृहतीयजंत्रे ।
तेचिद्धिपूर्वेंकवयोंगृणन्तंःपुरोमहीदंधिरेदेवपुंत्रे ॥ १ ॥

प्र । द्यावां । यज्ञैः । पृथिवी इतिं । नमःऽभिः । सऽबाधंः ।
ईळे । बृहती इतिं । यजंत्रे इतिं । ते इतिं । चित् । हि । पूर्वें । कवयंः ।
गृणन्तंः । पुरः । मही इतिं । दधिरे । देवपुंत्रे इतिं देवऽपुंत्रे ॥ १ ॥

यजत्रे यजनीये बृहती बृहत्यौ महत्यौ द्यावापृथिवी द्यावापृथिव्यौ यज्ञैर्यागैः नमोभिः स्तोत्रैश्च अहं स्तोता सबाधोबाधासहितः ऋत्विजां संबाधयुक्तइत्यर्थः प्र ईळे प्रकर्षेण स्तौमि मही महत्यौ देवपुत्रे देवाः पुत्राययोस्ते ते तव चिद्धि तादृशौ खल्वपि द्यावापृथिव्यौ पूर्वे पुरातनाः कवयः गृणन्तः स्तुवन्तः पुरोदधिरे पुरस्तात् स्थापयामासुः ॥ १ ॥

१. जिन विशाल और देवों की जननी द्यावापृथिवी (द्यौ वा द्यावा = देवलोक और पृथिवी = भूमि की देवी) को स्तोताओं ने, स्तुति करते हुए, आगे स्थापित किया था, मैं उन्हीं यजनीया और महती द्यावापृथिवी की, ऋत्विकों के बाधा-सहित होकर, यज्ञ और नमस्कार के साथ, स्तुति करता हूँ ।

आग्रायणे द्यावापृथिव्यैकपालस्य प्रपूर्वजइतियाज्या सूत्रितं च—महीद्यौःपृथिवीचनः प्रपूर्वजेपितरानव्यसीभिरिति ।

सैषा सूक्ते द्वितीया—

प्रपूर्वजेपितरानव्यंसीभिर्गीर्भिःकृणुध्वंसदंनेऋतस्यं ।
आनोंद्यावापृथिवीदैव्येंनजनेंनयातंमहिंवांवरूथम् ॥ २ ॥

प्र । पूर्वजे इतिं पूर्वऽजे । पितरां । नव्यंसीभिः । गीःऽभिः ।
कृणुध्वम् । सदंने इतिं । ऋतस्यं । आ । नः । द्यावापृथिवी इतिं ।
दैव्येंन । जनेंन । यातम् । महिं । वाम् । वरूथम् ॥ २ ॥

हे अस्मदीयाः स्तोतारोयूयं नव्यसीभिर्नवतराभिः गीर्भिः स्तुतिरूपाभिर्वाग्भिः ऋतस्य यज्ञस्य सदने स्थानभूते पूर्वजे पूर्वं प्रजाते पितरा पितरौ विश्वस्य मातापितृभूते द्यावापृथिव्यौ प्रकृणुध्वं पुरस्कुरुत । अथ प्रत्यक्षस्तुतिः हे द्यावापृथिवी द्यावापृथिव्यौ युवां दैव्येन देवसंबन्धिना जनेन सह नोस्मानभि आयातं आगच्छतं किमर्थमायातमिति उच्यते वां युवयोः वरूथं अस्माभिर्वरणीयं महि महत् यद्धनमस्तीतिशेषः तद्धनमस्मभ्यं दीयतामित्यर्थः ॥ २ ॥

२. स्तोताओ, तुम लोग नई स्तुतियों-द्वारा पूर्व-ज्ञाता और मातृ-पितृ-भूता द्यावा-पृथिवी को यज्ञ-स्थान के अग्रभाग में स्थापित करो। द्यावा-पृथिवी, अपना महान् और वरणीय धन देने के लिए, देवों के साथ, हमारे पास आओ।

उतोहिवांरत्नधेयानिसन्तिपुरूणिद्यावापृथिवीसुदासे।
अस्मेधत्तंयदसदस्कृधोयुयूयंपातस्वस्तिभिःसदानः ॥ ३ ॥२०॥

उतो इति। हि। वाम्। रत्नऽधेयानि। सन्ति। पुरूणि।
द्यावापृथिवी इति। सुऽदासे। अस्मे इति। धत्तम्। यत्। असत्।
अस्कृधोयु। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ३ ॥ २० ॥

उतोहि अपिच खलु हे द्यावापृथिवी द्यावापृथिव्यौ वां युवयोः सुदासे शोभनहविर्दानाय यजमानाय देयानि पुरूणि बहूनि रत्नधेयानि रमणीयानि धनानि सन्ति भवन्ति तेषां मध्ये यद्धनं अस्कृधोयु कृधुकोह्रस्वः अह्रस्वमनल्पं असत् भवेत् तद्धनमस्मै अस्मभ्यं धत्तं प्रयच्छत। हे द्यावापृथिव्यौ यूयं युवां नोस्मान् सर्वदा कल्याणैः पात पालयतं ॥ ३ ॥

३. द्यावा-पृथिवी, तुम्हारे पास शोभन हवि देनेवाले यजमान के लिए देने योग्य बहुत रमणीय धन है। धन में जो धन अक्षय हो, उसे ही हमें देना। तुम हमें सदा कल्याण (स्वस्ति) के साथ पालन करो।

॥ इति पंचमस्य चतुर्थे विंशोवर्गः ॥ २० ॥

वास्तोष्पतेइति तृचात्मकमेकविंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वास्तोष्पत्यं तथाचानुक्रम्यते—वास्तोष्पतेवास्तोष्पत्यमिति। स्मार्तेगृहनिर्माणे वास्तोष्पतइति चतसृभिः प्रत्यृचं जुहुयात् सूत्रितं च—वास्तोष्पतेप्रतिजानीह्यस्मानिति चतसृभिः प्रत्यृचं हुत्वेति।

तत्र प्रथमा—

वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः।
यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥ १ ॥

वास्तोः। पते। प्रति। जानीहि। अस्मान्। सुऽआवेशः।
अनमीवः। भव। नः। यत्। त्वा। ईमहे। प्रति। तत्। नः।
जुषस्व। शम्। नः। भव। द्विऽपदे। शम्। चतुःऽपदे ॥ १ ॥

हे वास्तोष्पते गृहस्यपालयितर्देव त्वं अस्मान् त्वदीयान् स्तोतॄनिति प्रतिजानीहि प्रबुध्यस्व तदनन्तरं नोस्माकं स्वावेशः शोभननिवेशः अनमीवः अरोगकृच्च भव किंच वयं त्वा त्वां यद्धनं ईमहे याचामहे त्वमपि तद्धनं नोस्मभ्यं प्रतिजुषस्व प्रयच्छ अपिच नोस्माकं द्विपदे पुत्रपौत्रादिजनाय शं सुखकरोभव चतुष्पदे अस्मदीयाय गवाश्वादिवर्गायच शं सुखकरोभव ॥ १ ॥

१. हे वास्तोष्पति (गृह-पालक देव), तुम हमें जगाओ। हमारे घर को नीरोग करो। हम जो धन माँगें, वह दो। हमारे पुत्र, पौत्र आदि द्विपदों और गौ, अश्व आदि चतुष्पदों को सुखी करो।

वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिन्दो।
अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ २ ॥

वास्तोः। पते। प्रऽतरणः। नः। एधि। गयऽस्फानः। गोभिः। अश्वेभिः। इन्दो इति। अजरासः। ते। सख्ये। स्याम। पिताऽइव। पुत्रान्। प्रति। नः। जुषस्व ॥ २ ॥

हे वास्तोष्पते गृहस्यपालयितर्देव त्वं नोस्माकं प्रतरणः प्रवर्धकः गयस्फानः गयस्यास्मदीयस्य धनस्य स्फाययिता प्रवर्धकः एधि भव। हे इन्दो सोमवदाह्लादक ते त्वयासह सख्ये सति वयं गोभिः पशुभिः अश्वेभिरश्वैश्च सहिता अजरासोजरारहिताः स्याम भवेम विनाशरहिताइत्यर्थः। पितेव पुत्रान् यथा पिता पुत्रान् रक्षकत्वेन सेवते तथा त्वमपि नोस्मान् प्रति जुषस्व सेवस्व ॥ २ ॥

२. वास्तोष्पति, तुम हमारे और हमारे धन के वर्द्धयिता होओ। सोम की तरह आह्लादक देव, तुम्हारे सखा होने पर हम गौओं और अश्वोंवाले और जरारहित होंगे। जैसे पिता पुत्र का पालन करता है, वैसे ही तुम हमारा पालन करो।अथ तृतीया—

वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या।
पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ २१ ॥

वास्तोः। पते। शग्मया। सम्ऽसदा। ते। सक्षीमहि। रण्वया। गातुऽमत्या। पाहि। क्षेमे। उत। योगे। वरम्। नः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ३ ॥ २१ ॥

हे वास्तोष्पते देव शग्मया सुखकर्या रण्वया रमणीयया गातुमत्या धनवत्या ते त्वया देयया संसदा स्थानेन सक्षीमहि वयं संगच्छेमहि। त्वमपि क्षेमे प्राप्तस्य रक्षणे उतापिच योगे अप्राप्तस्यप्रापणे वरं वरणीयं नोस्मदीयं धनं पाहि रक्ष। हे वास्तोष्पते यूयं त्वं नोस्मान् सर्वदा कल्याणैः पात पाहि ॥ ३ ॥

३. वास्तोष्पति, हम तुम्हारा सुखकर, रमणीय और धनवान् स्थान प्राप्त करें। तुम हमारे प्राप्त और अप्राप्त वरणीय धन की रक्षा करो और हमें स्वस्ति के साथ सदा पालन करो।

॥ इति पंचमस्य चतुर्थे एकविंशो वर्गः ॥ २१ ॥

अमीवहेत्यष्टर्चं द्वाविंशं सूक्तं आद्यागायत्री पंचम्याद्याश्चतस्रोनुष्टुभः द्वितीयाद्यास्तिस्र-उपरिष्टाद्बृहत्यः त्र्यष्टकाश्चतुर्थद्वादशकीबृहतीति तल्लक्षणयोगाव आद्यावास्तोष्पतिदेवताका

शिष्टाऐंद्र्यः तथाचानुक्रान्तं—अमीवहाष्टौ वास्तोष्पत्याद्या गायत्री शेषास्त्र्युपरिष्टाद्बृहत्यादयोनुष्टुभः प्रस्वापिन्यउपनिषदिति । गतोविनियोगः। बृहद्देवतायां यदुक्तं तदिहलिख्यते—वरुणस्य गृहान्रात्रौवसिष्ठःस्वप्नमाचरन् । गविवंशाथतंतत्रश्वानदन्नभ्यवर्तत ॥ १ ॥ क्रन्दंतंसारमेयंसधावंतंदष्टुमुद्यतं । यदर्जुनेतिचद्वाभ्यांसांत्वयित्वाह्यसुष्वपत् ॥ २ ॥ एवंप्रस्थापयामासजनमन्यंचवारुणमिति ॥ ३ ॥ अत्रकेचित्पुनरेवमाहुः—आसांप्रस्वापिनित्वंतुकथासुपरिकल्प्यते । वसिष्ठस्तृषितोन्नार्थीत्रिरात्रालब्धभोजनः ॥ ४ ॥ चतुर्थरात्रौचौर्यार्थंवारुणंगृहमेत्यनु । कोष्ठागारेप्रवेशायपालकश्वादिसुप्तये ॥ ५ ॥ यदर्जुनेतिसप्तचैंददर्शचजजापचेति ॥ ६ ॥

तत्र प्रथमा—

अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् । सखासुशेवएधिनः ॥१॥

अमीवऽहा । वास्तोः । पते । विश्वा । रूपाणि ।
आऽविशन् । सखा । सुऽशेवः । एधि । नः ॥ १ ॥

हे वास्तोष्पते गृहस्यपालक एतत्संज्ञकदेव अमीवहा अमीवानां रोगाणां नाशकस्त्वं विश्वा विश्वानि बहूनि रूपाणि आविशन् प्रविशन् यद्यद्रूपं कामयन्ते तत्तदेवाविशन्तीति यास्कः । नोस्माकं सखा मित्रभूतः सुशेवः सुष्ठु सुखकरः एधि भव ॥ १ ॥

१. वास्तोष्पति, तुम रोग-नाशक हो। सब प्रकार के रूप में पैठ कर हमारे सखा और सुखकर बनो।

यदर्जुनसारमेयदतःपिशङ्गयच्छसे ।
वीवभ्राजन्तऋष्टयउपस्रक्वेषुबप्सतोनिषुस्वप ॥ २ ॥

यत् । अर्जुन । सारमेय । दतः । पिशंग । यच्छसे । विऽइव ।
भ्राजन्ते । ऋष्टयः । उप । स्रक्वेषु । बप्सतः । नि । सु । स्वप ॥ २ ॥

हे अर्जुन श्वेत हे सारमेय सरमा नाम देवशुनी तस्याः कुलोद्भव हे पिशंग केषुचिदंगेषु पिंगलवर्ण एवंभूत हे शुनक त्वं दतो दन्तान् यद्यदा यच्छसे विवृणोषि अस्मान् दष्टुमित्यर्थः तदानीं वीव भ्राजन्त ऋष्टयः यथा आयुधानि विशेषेण भासन्ते तथा उपास्मत्समीपे बप्सतः भक्षयतस्तव दन्ता स्रक्वेषु स्रक्वासु भासन्ते । स्रक्वा शब्द ओष्ठप्रदेशविशेषवाचीत्यर्थः तथाभूतस्त्वं इदानीं सु सुष्ठु निस्वप नितरां निद्रां कुरु ॥ २ ॥

२. हे श्वेतवर्ण और किसी-किसी अंश में पिंगलवर्ण तथा सरमा (देव-कुक्कुरी) के ही वंशोद्भूत वास्तोष्पति, जिस समय तुम दाँत निकालते हो, उस समय हमारे पास, आहार के समय, ओष्ठ-प्रान्त में, आयुध की तरह दाँत विशेष शोभा पाते हैं। इस समय तुम सुख से सोओ।

---

१ नि० १०, १०।

अथ तृतीया—

स्तेनंरायसारमेयतस्करंवापुनःसर ।
स्तोतॄनिन्द्रस्यरायसिकिमस्मान्दुच्छुनायसेनिषुस्वप ॥ ३ ॥

स्तेनम् । राय । सारमेय । तस्करम् । वा । पुनःऽसर ।
स्तोतॄन् । इन्द्रस्य । रायसि । किम् । अस्मान् ।
दुच्छुनऽयसे । नि । सु । स्वप ॥ ३ ॥

हे पुनःसर गतमेव देशं पुनः सरतीति पुनःसरः तादृग्भूत हे सारमेय त्वं स्तेनं प्रच्छन्नधनापहारी स्तेनः तं तस्करं प्रत्यक्षधनापहारी तस्करः तं वारय गच्छ इन्द्रस्य स्तोतॄनस्मान् किं रायसि गच्छसि अस्मान् दुच्छुनायसे किं बाधसे निषुस्वप अत्यन्तं निद्रां कुरु ॥ ३ ॥

३. हे सारमेय, तुम जिस स्थान में जाते हो, वहाँ फिर आते हो। तुम स्तेन (चोर) और तस्कर (डकैत) के पास जाओ। इन्द्र के स्तोता के पास क्या जाते हो ? हमें क्यों बाधा देते हो ? सुख से सोओ ।

त्वंसूकरस्यदर्द्दहितवदर्दर्तुसूकरः ।
स्तोतॄनिन्द्रस्यरायसिकिमस्मान्दुच्छुनायसेनिषुस्वप ॥ ४ ॥

त्वम् । सूकरस्य । दर्द्दहि । तव । दर्दर्तु । सूकरः ।
स्तोतॄन् । इन्द्रस्य । रायसि । किम् । अस्मान् ।
दुच्छुनऽयसे । नि । सु । स्वप ॥ ४ ॥

हे सारमेय त्वं सूकरस्य वराहस्य द्वितीयार्थेषष्ठी दर्द्दहि विदारय सूकरोपि तव दर्दर्तु विदारयतु युवयोर्नित्यवैरित्वात् अस्मान्मादशेत्यर्थः।स्तोतॄनित्यर्धर्चः पूर्वस्यामृचिव्याख्यातः॥४॥

४. तुम सुअर को फाड़ो और सुअर तुम्हें फाड़े। इन्द्र के स्तोताओं के पास क्या जाते हो ? हमें क्यों बाधा देते हो ? अच्छी तरह से सोओ।

अथ पंचमी—

सस्तुमातासस्तुपितासस्तुश्वासस्तुविश्पतिः ।
ससन्तुसर्वेज्ञातयःसस्त्वयमभितोजनः ॥ ५ ॥

सस्तु । माता । सस्तु । पिता । सस्तु । श्वा । सस्तु । विश्पतिः ।
ससन्तु । सर्वे । ज्ञातयः । सस्तु । अयम् । अभितः । जनः ॥ ५ ॥

हे सारमेय माता त्वदीया जननी सस्तु स्वपतु पिताच सस्तु श्वा सारमेयोभवान् सस्तु विश्पतिर्जामाता यद्वा विशां जनानां पालकोगृही सस्तु सर्वेज्ञातयोबंधवोपि ससंतु स्वपन्तु अभितः परितःस्थितः अयमपि सर्वोजनः सस्तु स्वपतु ॥ ५ ॥

५. तुम्हारी माता सोवे। तुम्हारे पिता सोवें। कुक्कुर (तुम) सोओ। गृहस्वामी सोवे। बन्धु लोग भी सोवें। चारों ओर के ये मनुष्य भी सोवें।

अथ षष्ठी—

यआस्तेयश्चचरतियश्चपश्यंतिनोजनः।
तेषांसंहन्मोअक्षाणियथेदंहर्म्यंतथा ॥ ६ ॥

यः। आस्ते। यः। च। चरति। यः। च। पश्यंति। नः। जनः।
तेषाम्। सम्। हन्मः। अक्षाणि। यथा। इदम्। हर्म्यम्। तथा ॥६॥

योजनः आस्ते अस्मिन् प्रदेशे तिष्ठति यश्च चरति गच्छति यश्च जनः नोस्मान् पश्यति एवं भूतानां तेषां जनानां अक्षाणीन्द्रियाणि संहन्मः संहनाम संहतिर्निमीलनं निमीलयामेत्यर्थः। इदं प्रत्यक्षेणोपलभ्यमानं हर्म्यं प्रासादादिस्थावरात्मकं वस्तुजातं यथा निश्चलं भवति तथा इमे सर्वे जनाः निश्चलाभवंत्वित्यर्थः ॥ ६ ॥

६. जो व्यक्ति यहाँ है, जो विचरण करता है, जो हमें देखता है, ऐसे सबकी आँखें हम फोड़ देंगे। जैसे यह हर्म्य (कोठा) निश्चल है, वैसे ही वे भी हो जायेंगे।

अथ सप्तमी—

सहस्रशृङ्गोवृषभोयःसमुद्रादुदाचरत्।
तेनासहस्येनावयंनिजनान्त्स्वापयामसि ॥ ७ ॥

सहस्रऽशृङ्गः। वृषभः। यः। समुद्रात्। उत्ऽआचरत्।
तेन। सहस्येन। वयम्। नि। जनान्। स्वापयामसि ॥ ७ ॥

सहस्रशृंगः सहस्रकिरणः वृषभः कामानां वर्षिता यः सूर्यः समुद्रादंबुधेः सकाशादुदाचरत् उदागच्छति सहस्येन अभिभवित्रा तेन सूर्येण वयं स्तोतारः जनान् सर्वान् निष्वापयामसि नितरांस्वापयामः ॥ ७ ॥

७. जो सहस्रशृंगों वा किरणोंवाले वृषभ (सूर्य) समुद्र से ऊपर उठे हैं, उन विजेता की सहायता से हम सारे मनुष्यों को सुला देंगे।

अथाष्टमी—

प्रोष्ठेशयावह्येशयानारीर्यास्तल्पशीवरीः।
स्त्रियोयाःपुण्यगन्धास्ताःसर्वाःस्वापयामसि ॥८॥२३॥

प्रोष्ठेऽशयाः । वह्येऽशयाः । नारीः । याः । तल्पऽशीवरीः ।

स्त्रियः । याः । पुण्यऽगन्धाः । ताः । सर्वाः । स्वापयामसि ॥८॥२२॥

याः यादृश्यः नारीः नार्यः स्त्रियः प्रोष्ठेशयाः प्रांकणेशयानाः यावह्येशयाः वह्यं वाहनं तस्मिन् शयानाः यास्तल्पशीवरीः तल्पशयाः याः स्त्रियः पुण्यगंधाः मंगल्यगन्धाः तास्तादृशीः सर्वाः स्त्रीः स्वापयामसि वयं निद्रां कारयामः ॥ ८ ॥

८. जो स्त्रियाँ आँगन में सोनेवाली हैं, जो वाहन पर सोनेवाली हैं, जो तल्प (बिस्तरे) पर सोनेवाली हैं और जो पुण्य-गन्धा हैं, ऐसी सब स्त्रियों को हम सुला देंगे ।

॥ इति पंचमस्य चतुर्थे द्वाविंशोवर्गः ॥ २२ ॥

॥ इति सप्तमे मंडले तृतीयोनुवाकः ॥ ३ ॥

अथचतुर्थेनुवाके पंचदशसूक्तानि तत्र कईंव्यक्तेति पंचविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं मरुद्देवताकं आद्याएकादशद्विपदाविंशत्यक्षराविराजः शिष्टाश्चतुर्दशत्रिष्टुभः तथाचानुक्रान्तं—कईंपंचाधिका मारुतंह्याद्याएकादशद्विपदाइति । दशरात्रे चतुर्थेहनि आग्निमारुतशस्त्रे इदंमारुतनिविद्धानं सूत्र्यतेहि—वैश्वानरस्यसुमतौ कईंव्यक्तानरइति ।

तत्र प्रथमा—

कईंव्यक्तानरःसनीळारुद्रस्यमर्याअधास्वश्वाः॥ १ ॥

के । ईम् । विऽअक्ताः । नरः । सऽनीळाः । रुद्रस्य ।

मर्याः । अध । सुऽअश्वाः ॥ १ ॥

व्यक्ताः कान्तियुक्ताः नरोनेतारः सनीळाः समानौकसः रुद्रस्य महादेवस्य पुत्राः मर्याः मर्येभ्यःनृभ्योहिताः अध अपिच स्वश्वाः शोभनवाहाः ईं इमे एवंभूताः के भवन्तीति रूपातिशयाद्दृषिराश्चर्येणाह ॥ १ ॥

१. कान्तियुक्त नेता, समानगृह-निवासी, महादेव के पुत्र, मनुष्य-हितैषी और सुन्दर अश्ववाले ये रुद्र-पुत्रगण कौन हैं ?

अथ द्वितीया—

नकिर्ह्येषांजनूंषिवेदतेअङ्गविद्रेमिथोजनित्रम् ॥ २ ॥

नकिः । हि । एषाम् । जनूंषि । वेद । ते ।

अङ्ग । विद्रे । मिथः । जनित्रम् ॥ २ ॥

एषां मरुतां जनूंषि जन्मानि नकिर्हि वेद कश्चिदपि नखलु जानाति ते तादृशाः मरुतः मिथः परस्परं जनित्रं रुद्रपृश्निभ्यां सकाशात् प्रादुर्भूतं स्वकीयं जन्म अंग विद्रे स्वयमेवविदन्ति ॥ २ ॥

२. इनकी उत्पत्ति कोई नहीं जानता। ये ही परस्पर अपनी जन्म-कथा जानते हैं।

अ॒भिस्व॒पूभि॑र्मि॒थोव॑पन्त॒वात॑स्वनसःश्ये॒नाअ॑स्पृध्रन् ॥ ३ ॥

अ॒भि । स्व॒ऽपूभिः॑ । मि॒थः । व॒प॒न्त॒ ।
वात॑ऽस्वनसः । श्ये॒नाः । अ॒स्पृ॒ध्र॒न्॥ ३ ॥

मरुतः स्वपूभिः स्वकीयैः पवनैः संचरणैः स्वयमेव संचरन्तः मिथः परस्परं अभिवपत संगच्छन्ते अपिच वातस्वनसः वायुवत्स्वनन्तः शब्दायमानाः श्येनाः श्यैङ्गताविति धातोरूपं गमनशीलाः यद्वा श्येनाइति लुप्तोपममेतत् श्येनाः पक्षिणः तद्वद्गच्छन्तः अस्पृध्रन् परस्परं रूप-सौंदर्यादिभिः स्पर्धन्ते ॥ ३ ॥

३. स्वयं ही घूमते हुए ये परस्पर मिलते हैं। वायु के समान वेग-शाली श्येन (बाज) पक्षी की तरह ये परस्पर स्पर्द्धा (होड़) करते हैं।

अथ चतुर्थी—

ए॒तानि॒धीरो॑नि॒ण्या॑चि॑केत॒पृश्नि॒र्यदूधो॑म॒हीज॒भार॑ ॥ ४ ॥

ए॒तानि॑ । धीरः॑ । नि॒ण्या । चि॒के॒त॒ । पृश्निः॑ ।
यत् । ऊधः॑ । म॒ही । ज॒भार॑ ॥ ४ ॥

धीरोधीमान् शास्त्रज्ञोजनः निण्या निण्यानि श्वेतवर्णानि एतानि मरुदात्मकानि भूतानि चिकेत जानीयात् किंतु न सर्वे जना जानन्तीत्यर्थः मही महती पृश्निर्मरुतां जननी यत् यानि मरुदात्मकानि भूतानि ऊधः ऊधन्यन्तरिक्षे स्वकीये जठरे वा जभार बभार एतानि चिकेतेति पूर्वेण संबंधः ॥ ४ ॥

४. शास्त्रज्ञ मनुष्य इन श्वेतवर्ण जीवों (मरुतों) को जानते हैं। महती पृश्नि (मरुतों की माता) ने इन्हें अन्तरिक्ष में धारण कर रक्खा है।

अथ पंचमी—

सावि॒ट्सु॒वीरा॑म॒रुद्भि॑रस्तु॒स॒नात्सह॑न्ती॒पुष्य॑न्ती॒नृ॒म्णम् ॥ ५ ॥

सा । वि॒ट् । सु॒ऽवीरा॑ । म॒रुत्ऽभिः॑ । अ॒स्तु॒ ।
स॒नात् । सह॑न्ती । पुष्य॑न्ती । नृ॒म्णम्॥ ५ ॥

सा विट् सा प्रजा मरुतः परिचरति सा प्रजा मरुद्भिः हेतुभिः सनात् चिरात् सहन्ती शत्रूनभिभवन्ती नृम्णं धनं बलं वा पुष्यन्ती लभन्ती सुवीरा शोभनपुत्रयुक्तास्तु भवतु ॥ ५ ॥

५. वह बुद्धि-मरुतों के अनुग्रह से, सदा शत्रुओं को हरानेवाली, धन की पुष्टि देनेवाली और वीर पुत्रवाली है।

यामंयेष्ठाःशुभाशोभिष्ठाःश्रियासंमिश्लाओजोभिरुग्राः ॥६॥

यामम्। येष्ठाः। शुभा। शोभिष्ठाः। श्रिया।
सम्ऽमिश्लाः। ओजःऽभिः। उग्राः ॥ ६ ॥

मरुतः यामं यातव्यं गंतव्यं प्रदेशं येष्ठाः यातृतमाः अतिशयेन गंतारः शुभा अलंकारेण शोभिष्ठाः अतिशयेन शोभायुक्ताः श्रिया कांत्या संमिश्लाः संगच्छमाना ओजोभिर्बलैः उग्रा उद्गूर्णाः एवंभूताभवन्तीति शेषः ॥ ६ ॥

६. मरुत लोग (जल-वायु के देवता और रुद्र के अनुचर) जानेवाले स्थानों को सबसे अधिक जाते हैं। वे अलंकार-द्वारा सबसे अधिक शोभा पाते हैं। वे कान्तिपूर्ण और ओजस्वी हैं।

अथ सप्तमी—

उग्रंवओजःस्थिराशवांस्यधामरुद्भिर्गणस्तुविष्मान् ॥ ७ ॥

उग्रम्। वः। ओजः। स्थिरा। शवांसि। अध।
मरुत्ऽभिः। गणः। तुविष्मान् ॥ ७ ॥

हे मरुतः वोयुष्माकं ओजस्तेजः उग्रमुद्गूर्णं भवतु शवांसि युष्मदीयानि बलानि स्थिरा स्थिराणि कैश्चिदनपहर्तव्यानि भवन्तु अध अपिच मरुद्भिः गणः मरुतां संघः तुविष्मान् वृद्धिमान् भवतु ॥ ७॥

७. तुम्हारा तेज उग्र है और बल स्थिर। मरुद्गण बुद्धिमान् हों।

अथाष्टमी—

शुभ्रोवःशुष्मःक्रुध्मीमनांसिधुनिर्मुनिरिवशर्धस्यधृष्णोः ॥ ८ ॥

शुभ्रः। वः। शुष्मः। क्रुध्मी। मनांसि।
धुनिः। मुनिःऽइव। शर्धस्य। धृष्णोः ॥ ८ ॥

हे मरुतः वोयुष्माकं शुष्मोबलं शुभ्रः सर्वतः शोभमानं किंच वो मनांसि क्रुध्मी संग्रामेषु शत्रुहननार्थं क्रोधनशीलानि धृष्णोर्धर्षणशीलस्य शर्धस्य बलवतोयुष्मदीयस्य गणस्य

धुनिः वृक्षादीनां कंपयितुः वेगः मुनिरिव मननान्मुनिः स्तोता सयथा बहुविधं शब्दमुत्पादयति एवं बहुविधशब्दस्योत्पादकइत्यर्थः ॥ ८॥

८. तुम्हारा बल सर्वत्र शोभित है। तुम्हारा चित्त क्रोध-शील है। पराभव करनेवाले और बलवान् मरुतों का वेग, स्तोता की तरह, बहु-विध-शब्दकारी है। अथ नवमी—

सनेम्यस्मद्युयोतदिद्युंमावोदुर्मतिरिहप्रणक्नः ॥ ९ ॥

सनेमि। अस्मत्। युयोत। दिद्युम्। मा।
वः। दुःऽमतिः। इह। प्रणक्। नः ॥ ९ ॥

हे मरुतः सनेमि सनातनं दिद्युं दीप्यमानं ऋष्ट्याख्यं युष्मदीयमायुधं अस्मद् अस्मत्तः सकाशात् युयोत पृथक्कुरुत तथा वः युष्मदीयादुर्मतिः निग्रहबुद्धिः नोस्मान् इह अस्मिन् लोके मा प्रणक् मा प्राप्नोतु ॥ ९॥

९. मरुतो, हमारे पास से पुराने हथियार अलग करो। तुम्हारी क्रूर बुद्धि हमें व्याप्त न करे। अथ दशमी—

प्रियावोनामहुवेतुराणामायत्तृपन्मरुतोवावशानाः ॥१०॥२३॥

प्रिया। वः। नाम। हुवे। तुराणाम्। आ। यत्। तृपत्।
मरुतः। वावशानाः ॥ १० ॥ २३ ॥

हे मरुतः तुराणां यजमानार्थं त्वरया आगच्छतां वः युष्माकं नाम आहुवे आह्वयामि यत् येन आह्वानेन प्रियाः स्नेहयुक्ताः वावशानाः अस्माकं आह्वानं कृतमिति शब्दायमानाश्च सन्तः तृपत् संतुष्टा भविष्यथ तत् आह्वानमिति ॥ १० ॥

१०. तुम क्षिप्रकर्त्ता हो। तुम्हारे प्रिय नाम को हम पुकारते हैं। प्रिय मरुद्गण इससे सन्तुष्ट होते हैं।

॥ इति पंचमस्य चतुर्थे त्रयोविंशोवर्गः ॥ २३ ॥

अथैकादशी—

स्वायुधासइष्मिणःसुनिष्काउतस्वयंतन्वः शुम्भमानाः ॥११॥

सुऽआयुधासः। इष्मिणः। सुऽनिष्काः। उत।
स्वयम्। तन्वः। शुंभमानाः ॥ ११ ॥

स्वायुधासः स्वायुधाः शोभनास्त्राः इष्मिणोगन्तारः सुनिष्काः शोभनालंकाराः उतापिच तन्वः स्वकीयानि शरीराणि शुंभमानाः स्वयमेव शोभयन्तोमरुतः एवंभूताभवंतीत्यर्थः॥ ११ ॥

११. मरुद्गण सुन्दर आयुधवाले, गतिशील और सुन्दर अलंकारवाले हैं। वे हमारे शरीर को सजाते हैं।

मारुतेपशौ शुचीवोहव्याइति वपायाअनुवाक्या सूत्रितं च—शुचीवोहव्यामरुतःशुचीनां तूष्णीं मरुतइति।

तत्रैषा द्वादशी—

शुचीवोहव्यामरुतःशुचीनांशुचिंहिनोम्यध्वरंशुचिभ्यः।
ऋतेनसत्यमृतसापआयञ्छुचिजन्मानःशुचयःपावकाः ॥१२॥

शुची। वः। हव्या। मरुतः। शुचीनाम्। शुचिम्। हिनोमि।
अध्वरम्। शुचिऽभ्यः। ऋतेन। सत्यम्। ऋतऽसापः।
आयन्। शुचिऽजन्मानः। शुचयः। पावकाः॥ १२ ॥

हे मरुतः शुचीनां शुद्धानां वोयुष्माकं शुची शुचीनि हव्या हव्यानि हवींषि भवन्तु शुचिभ्यः प्रकाशमानेभ्योयुष्मभ्यं शुचिं शुद्धं अध्वरं यागं हिनोमि अहं प्रेरयामि ऋतसापः ऋतमुदकं स्पृशन्तोमरुतः ऋतेन सत्येनैव सत्यमायन् गच्छंति कीदृशाः शुचिजन्मानः शोभनजननाः शुचयोदीप्यमानाः पावकाः शोधकाः एवंभूतागच्छंतीत्यर्थः ॥ १२ ॥

१२. मरुतो, तुम शुद्ध हो। शुद्ध हव्य तुम्हारे लिए हो। तुम शुद्ध हो। तुम्हारे लिए हम शुद्ध यज्ञ करते हैं। जलस्पर्शी मरुद्गण सत्य से सत्य को प्राप्त हुए हैं। मरुद्गण शुद्ध हैं, उनका जन्म शुद्ध है और वे अन्य को शुद्ध करते हैं।

अंसेष्वामरुतःखादयोवोवक्षःसुरुक्माउपशिश्रियाणाः।
विविद्युतोनवृष्टिभीरुचानाअनुस्वधामायुधैर्यच्छमानाः ॥१३॥

अंसेषु। आ। मरुतः। खादयः। वः। वक्षःऽसु। रुक्माः।
उपऽशिश्रियाणाः। वि। विऽद्युतः। न। वृष्टिऽभिः।
रुचानाः। अनु। स्वधाम्। आयुधैः। यच्छमानाः॥ १३ ॥

हे मरुतः अंसेषु युष्मदीयेषु स्कंधप्रदेशेषु खादयोलंकारविशेषाः आमुक्ताभवन्तीतिशेषः सुरुक्माः सुष्ठु रोचमानाः हाराः वोयुष्मदीयं वक्षः उरःप्रदेशं उपशिश्रियाणाः आश्रिताभ-

वन्ति किंच हे मरुतः वृष्टिभिः वर्षैः सार्धं विद्युतोन तडितोयथा रुचानाः रोचमानाः तादृग्भूतायूयं आयुधैर्मेघताडनैः स्वधामुदकं अनुयच्छमानाः प्रयच्छन्तोविचरथेति शेषः ॥ १३ ॥

१३. मरुतो, तुम्हारे कन्धों पर खादि (एक प्रकार का अलंकार वा वलय) स्थित है, उत्तम रुक्म (हार) तुम्हारे हृदय-स्थल में है। जैसे वर्षा के साथ बिजली शोभा पाती है, वैसे ही जल-प्रदान के समय आयुध (मेघगर्जन) द्वारा तुम शोभा पाते हो।

गृहमेधीये प्रबुध्न्यावइति प्रधानस्ययाज्या सूत्रितंच—प्रबुध्न्यावईरतेमहांसीति पुष्टिमन्तो विराजौ संयाज्येइति।

सैषा सूक्ते चतुर्दशी—

प्रबुध्न्यांवईरतेमहांसिप्रनामानिप्रयज्यवस्तिरध्वम्।
सहस्रियंदम्यंभागमेतंगृहमेधीयंमरुतोजुषध्वम् ॥ १४ ॥

प्र। बुध्न्या। वः। ईरते। महांसि। प्र। नामानि। प्रऽयज्यवः। तिरध्वम्। सहस्रियम्। दम्यम्। भागम्। एतम्। गृहऽमेधीयम्। मरुतः। जुषध्वम् ॥ १४ ॥

हेमरुतः वोयुष्मदीयानि बुध्न्यान्यन्तरिक्षेभवानि महांसि तेजांसि प्रेरते प्रकर्षेण गच्छन्ति किंच हे प्रयज्यवः प्रकर्षेण यष्टव्यामरुतोयूयं नामानि पांसून्नमयन्तीति नामान्युदकानि प्रतिरध्वं वर्धयत। हेमरुतोयूयं सहस्रियं सहस्रसंख्याकं दम्यं दमे गृहे भवं गृहमेधीयं गृहमेधिगुणेभ्योयुष्मभ्यं देयं एतं एतादृशं भागं जुषध्वं सेवध्वं एकं भागं सहस्रियमिति कथामाह तथाचश्रूयते—यावदेकादेवताकामयते यावदेकातावदाहुतिः प्रथते नहितदस्ति यत्तावदेवस्यात् यावज्जुहोतीति[1] ॥ १४ ॥

१४. मरुतो, तुम्हारा अन्तरिक्ष में उत्पन्न तेज विशेष रूप से गमन करता है। तुम विशेष रूप से यजनीय हो। जल-वृद्धि करो। मरुतो, तुम सहस्र संख्यावाले, गृहोत्पन्न और गृहमेधियों-द्वारा दत्त इस भाग का आश्रय करो।

यदिस्तुतस्यमरुतोअधीथेत्थाविप्रस्यवाजिनोहवीमन्।
मक्षूरायःसुवीर्यस्यदातनूचिद्यमन्यआदभदरावा ॥ १५ ॥ २४ ॥

यदि। स्तुतस्य। मरुतः। अधिऽइथ। इत्था। विप्रस्य। वाजिनः। हवीमन्। मक्षु। रायः। सुऽवीर्यस्य। दात। नु। चित्। यम्। अन्यः। आऽदभत्। अरावा ॥ १५ ॥ २४ ॥

---

[1] तै० ब्रा० ३. २. ६.।

वाजिनोहविर्लक्षणान्नवतः धिमस्य मेधाविनोमम संबन्धिनि हवीमन् हविष्मति हविषा-युक्ते स्तोत्रे क्रियमाणे सति हे मरुतोयूयं यदि यस्मात् कारणात् स्तुतस्य स्तुतं मदीयं स्तो-त्रं इत्था इत्थमनेन प्रकारेण अधीथ अवगच्छथ तस्मात् कारणात् हे मरुतो यूयं सुवीर्यस्य शोभनपुत्रोपेतस्य रायः रायं धनं द्वितीयार्थेषष्ठी मक्षु शीघ्रं दात दत्त अरावा अरातिः शत्रुभूतः अन्योजनः यं रायं नूचिदादभत् नैवाभिहन्यात् तद्धनमस्मभ्यं दत्तेति संबन्धः ॥ १५ ॥

**१५. मरुतो, तुम अन्नवाले मेधावी के हव्य से युक्त स्तोत्र को जानते हो; इसलिए शोभन पुत्रवाले को शीघ्र धन दो। उस धन को शत्रु नहीं नष्ट कर सकता।** ॥ इति पंचमस्य चतुर्थे चतुर्विंशोवर्गः ॥ २४ ॥

मरुद्भ्यः क्रीळिभ्यः सप्तकपालमित्यत्यासइतियाज्या सूत्रितंच—अत्यासोनयेमरुतःस्वंचो जुष्टोदमूनाइति। सैषा सूक्ते षोडशी—

अत्यासोनयेमरुतःस्वञ्चोयक्षदृशोनशुभयन्तमर्याः।
तेहर्म्येष्ठाःशिशवोनशुभ्रावत्सासोनप्रक्रीळिनःपयोधाः ॥१६॥

अत्यासः। न। ये। मरुतः। सुऽअञ्चः। यक्षऽदृशः। न।
शुभयन्त। मर्याः। ते। हर्म्येऽस्थाः। शिशवः। न।
शुभ्राः। वत्सासः। न। प्रऽक्रीळिनः। पयःऽधाः ॥ १६ ॥

अत्यासोन अत्याः सततगामिनोश्वाइव स्वंचः सुष्ठु गच्छन्तो ये मरुतः यक्षदृशोन मर्याः यक्षस्योत्सवस्य द्रष्टारोमनुष्याइव शुभयन्त शोभन्ते हर्म्येष्ठाः हर्म्येस्थिताः शिशवोन कुमारा-इव शुभ्राः शोभमाना वत्सासोन वत्साइव प्रक्रीळिनः प्रक्रीडिनःप्रकर्षेण क्रीडमानाः ते मरुतः पयोधाः पयसउदकस्य धारयितारोदातारोवा भवन्ति ॥ १६ ॥

**१६. मरुद्गण सततगामी अश्व की तरह सुन्दर गमनवाले हैं। उत्सव-दर्शक मनुष्यों की तरह शोभन हैं और गृह-स्थित शिशुओं की तरह सुन्दर हैं। वे क्रीड़ा-परायण वत्सों की तरह हैं और जल के धारक हैं।**

अथ सप्तदशी—

दशस्यन्तोनोमरुतोमृळन्तुवरिवस्यन्तोरोदसीसुमेके।
आरेगोहानृहावधोवोअस्तुसुम्नेभिरस्मेवसवोनमध्वम् ॥१७॥

दशस्यन्तः। नः। मरुतः। मृळन्तु। वरिवस्यन्तः। रोदसी इति।
सुमेके इति सुऽमेके। आरे। गोऽहा। नृऽहा। वधः। वः।
अस्तु। सुम्नेभिः। अस्मे इति। वसवः। नमध्वम् ॥ १७ ॥

मरुतोनोस्मभ्यं दशस्यन्तः धनानि प्रयच्छन्तः सुमेके सुरूपे रोदसी द्यावापृथिव्यौ वरिवस्यन्तःस्वमहिम्ना पूरयन्तः मृळन्तु मृळयंतु अस्मान् सुखयुक्तान् कुर्वन्तु। अपिच हे वसवोवासकामरुतः गोहा गवां मेघस्थानामुदकानां भेदकः नृहा नृणां शत्रूणां हन्ता वोयुष्मदीयं वधः आयुधं आरे अस्तु अस्मत्तोदूरे भवतु। यूयमपि सुम्नेभिः सुम्नैः सुखैः सह अस्मे अस्मासु नमध्वं स्वयमेवाभिमुखाभवत ॥ १७ ॥

**१७. हमारे लिए धन देते हुए और अपनी महिमा से सुन्दर द्यावा-पृथिवी को पूर्ण करते हुए मरुद्गण हमें सुखी करें। मरुतो, मनुष्य-नाशक तुम्हारा आयुध हमारे पाप से दूर रहे। सुख से हमारे अभिमुख होओ।**

मारुतेपशौ आवोहोतेत्येषानुवाक्या सूत्रितंच--आवोहोताजोहवीतिसत्तः प्रचित्रमर्कं-गृणतेतुरायेति।

सैषाष्टादशी--

**आवो॒होता॒जोहवीतिस॒त्तःस॒त्राचीं॑रा॒तिं॑म॑रुतोगृ॒णा॒नः।**
**यईवं॑तोवृषणो॒अस्ति॒गो॒पाःसोअद्व॑यावीहवतेवउ॒क्थैः॥ १८॥**

आ। व॒ः। होता॑। जो॒ह॒वी॒ति॒। स॒त्तः। स॒त्राचीम्। रा॒तिम्।
म॒रु॒तः। गृ॒णा॒नः। यः। ईवं॑तः। वृ॒ष॒णः। अस्ति।
गो॒पाः। सः। अद्व॑यावी। ह॒व॒ते॒। व॒ः। उ॒क्थैः॥ १८॥

हे मरुतः सत्तः होतृषदने निषण्णोस्मदीयोहोता सत्राचीं सर्वतोगमनशीलं रातिं त्वदीयं दानं गृणानःस्तुवन् वोयुष्मान् आजोहवीति भृशमाह्वयति। हे वृषणः कामानां वर्षितारोमरुतः योहोता ईवतोगच्छतोव्यापारवतोयजमानस्य गोपाअस्ति युष्मदाह्वाननिमित्तेन रक्षकोभवति सहोता अद्वयावी मायारहितः सन् वोयुष्मान् उक्थैः स्तोत्रैर्हवते स्तौति ॥ १८ ॥

**१८. होतृ-गृह में बैठा हुआ होता तुम्हारे सर्वत्रगामी दान-कार्य की प्रशंसा करके तुम लोगों को भली भाँति बार-बार बुलाता है। कामवर्षक मरुतो, जो होता कार्य-निष्ठ यजमान का रक्षक है, वह मायाशून्य होकर स्तोत्रों-द्वारा तुम्हारी स्तुति करता है।**

अथैकोनविंशी--

**इ॒मेतु॒रंम॒रुतो॑रामयन्ती॒मेसहः॒सह॑स॒आन॑मन्ति।**
**इ॒मेशंसं॑वनु॒ष्य॒तोनिपा॑न्तिगु॒रुद्वेषो॒अर॑रुषेदधन्ति॥ १९॥**

इ॒मे। तु॒रम्। म॒रुतः। र॒म॒य॒न्ति॒। इ॒मे। सहः॑। सह॑सः। आ। न॒म॒न्ति॒।
इ॒मे। शंस॑म्। व॒नु॒ष्य॒तः। नि। पा॒न्ति॒। गु॒रु।
द्वेषः॑। अर॑रुषे। द॒ध॒न्ति॒॥ १९॥

इमे ईदृशोमरुतः तुरं कर्मसु क्षिप्रवन्तं यजमानं रमयन्ति क्रीडयन्ति इमे मरुतः सहः सहसा बलेन सहसोबलवतोजनान् आनमन्ति इमे मरुतः वनुष्यतोहिंसकाव पुरुषात् शंसं शंसकं स्तोतारं निपान्ति नितरांपालयन्ति अररुषे हविरप्रयच्छते जनाय गुरु महत् द्वेषः अप्रियं दधन्ति कुर्वन्ति ॥ १९ ॥

१९. ये मरुद्गण यज्ञ में क्षिप्रकारी यजमान को प्रसन्न करते हैं। ये बल-द्वारा बलवान् लोगों को नीचे करते हैं। ये हिंसक से स्तोता की रक्षा करते हैं। परन्तु जो हव्य नहीं देता, उसका महान् अप्रिय करते हैं।

इमेरध्रंचिन्मरुतोजुनन्तिभृमिंचिद्यथावसवोजुषन्त।
अपबाधध्वंवृषणस्तमांसिधत्तविश्वंतनयंतोकमस्मे ॥ २० ॥२५॥

इमे। रध्रम्। चित्। मरुतः। जुनन्ति। भृमिम्। चित्।
यथा। वसवः। जुषन्त। अप। बाधध्वम्। वृषणः। तमांसि।
धत्त। विश्वम्। तनयम्। तोकम्। अस्मे इति ॥ २० ॥ २५ ॥

इमे मरुतः रध्रं चित् समृद्धमपि जनं जुनन्ति प्रेरयन्ति भृमिं चित् भ्रमणशीलमपि दरिद्रं जुनन्ति प्रेरयन्ति वसवोवासकादेवाः युष्मान् यथा जुषन्त कामयेरन् हे वृषणः कामानांवर्षितारस्ते यूयं तमांसि अपबाधध्वं नाशयत।अपिच अस्मे अस्मभ्यं विश्वं बहुलं तोकं पुत्रं तनयं पौत्रं च धत्त प्रयच्छत ॥ २० ॥

२०. ये धनी और दरिद्र—दोनों को उत्तेजित करते हैं। जैसा कि देवगण अथवा बन्धुगण चाहते हैं—काम-वर्षक मरुतो, तुम अन्धकार नष्ट करो और हमें यथेष्ट पुत्र और पौत्र प्रदान करो।

॥ इति पंचमस्यचतुर्थे पंचविंशोवर्गः ॥ २५ ॥

अथैकविंशी—

मावोदात्रान्मरुतोनिरराममापश्चाद्दघ्मरथ्योविभागे।
आनःस्पार्हेभजतनावसव्येयदींसुजातंवृषणोवोअस्ति ॥२१॥

मा। वः। दात्रात्। मरुतः। निः। अराम। मा। पश्चात्।
दघ्म। रथ्यः। विऽभागे। आ। नः। स्पार्हे। भजतन।
वसव्ये। यत्। ईम्। सुऽजातम्। वृषणः। वः। अस्ति ॥ २१ ॥

हे मरुतः वोयुष्माकं दात्राद्दानात् मानिरराम वयंमानिर्गमाम यूयमस्मान् परित्यज्यान्येभ्योधनमादत्तेत्यर्थः हे रथ्योरथवन्तोमरुतः विभागे युष्मदीयस्य धनस्य दाने पश्चान्मादघ्म

दघ्मतिर्गतिकर्मा वयं पश्चाद्भागिनोमाभूम यूयं प्रथममस्मभ्यमेव दत्तेति यावत्। स्पार्हे स्पृहणीये वसव्ये धनसमूहे यूयं नोस्मान् आभजतन भागिनः कुरुत। हे वृषणः वर्षितारोमरुतः वोयुष्माकं सुजातं शोभनजनं यद्वसव्ये वसव्यमस्ति तस्मिन् भागिनः कुरुतेति संबन्धः ईमितिपूरणः॥ २१ ॥

२१. तुम्हारे दान से हम बाहर न हों। रथवाले मरुतो, धन-दान के समय हमें पीछे नहीं फेंकना। अभिलषणीय धनों में हमें भागी बनाना। कामवर्षक मरुतो, तुम्हारा जो सुजात धन है, उसका भी हमें भागी बनाना।

संयद्धनंन्तमन्युभिर्जनासःशूरायह्वीष्वोषधीषुविक्षु।
अधस्मानोमरुतोरुद्रियासस्त्रातारोभूतपृतनास्वर्यः॥ २२ ॥

सम्। यत्। हनंन्त। मन्युऽभिः। जनासः। शूराः। यह्वीषु।
ओषधीषु। विक्षु। अध। स्म। नः। मरुतः। रुद्रियासः।
त्रातारः। भूत। पृतनासु। अर्यः॥ २२ ॥

यद्यदा शूराविक्रान्ताः जनासोजनाः यह्वीषु महतीषु ओषधीषु विक्षु प्रजासु च जेतव्यासु मन्युभिः कोपैः अभिमानैर्वा संहनन्त संगच्छन्ते अध तदानीं हे रुद्रियासोरुद्रपुत्रा हेमरुतः यूयं पृतनासु युद्धेषु अर्यः अरेः शत्रोः सकाशात् नोस्माकं त्रातारो भूत रक्षकाभवत। स्मेतिपूरणः॥ २२ ॥

२२. जिस समय विक्रम-शाली मनुष्य अनेक ओषधियों और मनुष्यों को जीतने के लिए क्रुद्ध होते हैं, उस समय रुद्र-पुत्र मरुतो, संग्राम में शत्रु के निकट से हमारे रक्षक बनना।

अथ त्रयोविंशी—

भूरिचक्रमरुतःपित्र्याण्युक्थानियावःशस्यन्तेपुराचित्।
मरुद्भिरुग्रःपृतनासुसाह्लामरुद्भिरित्सनितावाजमर्वा॥ २३ ॥

भूरि। चक्र। मरुतः। पित्र्याणि। उक्थानि। या। वः।
शस्यन्ते। पुरा। चित्। मरुत्ऽभिः। उग्रः। पृतनासु।
साह्ला। मरुत्ऽभिः। इत्। सनिता। वाजम्। अर्वा॥ २३ ॥

हे मरुतोयूयं भूरि भूरीणि बहूनि पित्र्याणि अस्मत् पितृसंबन्धीनि धनदानादीनि कर्माणि चक्र कृतवन्तोभवत पुराचित् पूर्वकालेपि वोयुष्माकं उक्थानि प्रशस्यानि या यानि कर्माणि शस्यन्ते प्रख्यायन्ते तानि चक्रेति संबन्धः। उग्रओजस्वी पृतनासु युद्धेषु मरुद्भिर्यु-

ष्माभिर्हेतुभिः साह्वा शत्रूणामभिभविता भवति। मरुद्भिरिव मरुद्भिर्युष्माभिरेव हेतुभिः अर्वा स्तोत्रैरभिगन्ता वाजमन्नं सनिता संभक्ता भवति यद्वा अर्वा अश्वः वाजं युद्धं सनिता भवति ॥ २३ ॥

२३. मरुतो, हमारे पूर्वजनों के लिए तुमने अनेक कार्य किये हैं। तुम्हारे पहले के जो सब काम प्रशंसित होते हैं, उन्हें भी तुमने किया है। युद्ध में तुम्हारी सहायता से ओजस्वी व्यक्ति शत्रुओं को पराजित करता है। तुम्हारी ही सहायता से स्तोता अन्न भोग करता है।

अस्मेवीरोमरुतःशुष्म्यस्तुजनानांयोअसुरोविधर्ता।
अपोयेनसुक्षितयेतरेमाधस्वमोकोअभिवःस्याम ॥ २४ ॥

अस्मे इति। वीरः। मरुतः। शुष्मी। अस्तु। जनानाम्।
यः। असुरः। विऽधर्ता। अपः। येन। सुऽक्षितये। तरेम।
अध। स्वम्। ओकः। अभि। वः। स्याम ॥ २४ ॥

हे मरुतः अस्मे अस्माकं वीरः पुत्रः शुष्मी अस्तु बलवान् भवतु असुरः प्रज्ञावान् यो जनानां शत्रूणां विधर्ता विधारकः येन पुत्रेण वयं सुक्षितये सुष्ठुनिवासाय अपः आप्नुवतः शत्रून् तरेम हिंसेम सपुत्रोबलवानस्त्विति पूर्वेणान्वयः। अधापिच वोयुष्मदीयावयं स्वमोकः आत्मीयं स्थानं अभिस्याम आतिष्ठेम ॥ २४ ॥

२४. मरुतो, हमारा वीर पुत्र बली हो। वह असुर (प्रज्ञावान् पुत्र) शत्रुओं का विधारक हो। उस पुत्र के द्वारा हम सुन्दर निवास के लिए शत्रुओं का विनाश करेंगे। तुम्हारे हम आत्मीय स्थान में रहेंगे।

तन्नइन्द्रोवरुणोमित्रोअग्निरापओषधीर्वनिनोजुषन्त।
शर्मन्त्स्याममरुतामुपस्थेयूयंपातस्वस्तिभिःसदानः ॥२५॥२६॥

तत्। नः। इन्द्रः। वरुणः। मित्रः। अग्निः। आपः। ओषधीः।
वनिनः। जुषन्त। शर्मन्। स्याम। मरुताम्। उपऽस्थे। यूयम्।
पात। स्वस्तिऽभिः। सदा। नः ॥ २५ ॥ २६ ॥

पूर्वं व्याख्यातेयं अक्षरार्थस्तु इन्द्रादयोदेवाः अस्मदीयं स्तोत्रं सेवन्तां मरुतामुपस्थाने वर्तमाना वयं सुखे स्याम हे मरुतोयूयं सर्वदास्मान् अविनाशैः पालयत ॥ २५ ॥

२५. इन्द्र, वरुण, मित्र, अग्नि, जल, ओषधि और वृक्ष हमारे स्तोत्र का आश्रय करें। मरुतों की गोद में हम सुख से रहेंगे। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

　॥ इति पंचमस्य चतुर्थे षड्विंशोवर्गः ॥ २६ ॥

मध्वोवइति सप्तर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मरुद्देवताकं मध्वःसप्तेत्यनुक्रान्तं । दशरात्रे षष्ठेहनि आग्निमारुतेइदं मारुतनिविद्धानं सूत्रितंच—मध्वोवोनाम सप्तत्नथेत्याग्निमारुतमिति ।

तत्र प्रथमा—

मध्वोवोनाममारुतंयजत्राःप्रयज्ञेषुशवसामदन्ति ।
येरेजयन्तिरोदसीचिदुर्वीपिन्वन्त्युत्संयदयासुरुग्राः ॥ १ ॥

मध्वः । वः । नाम । मारुतम् । यजत्राः । प्र । यज्ञेषु ।
शवसा । मदन्ति । ये । रेजयन्ति । रोदसी इति । चित् ।
उर्वी इति । पिन्वन्ति । उत्सम् । यत् । अयासुः । उग्राः ॥ १ ॥

हे यजत्रा यजनीयामरुतः वोयुष्मदीयं मारुतं मरुत्संबन्धि नाम नामधेयं मध्वो मधवो मादयितारः स्तोतारः यज्ञेषु यागेषु शवसा बलेन प्रमदन्ति प्रकर्षेण स्तुवन्ति उच्चैः स्तुवन्तीत्यर्थः । ये मरुतः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यावपि रेजयन्ति कंपयन्ति । किंच उत्सं मेघं पिन्वन्ति वर्षयन्ति उग्रा उद्गूर्णा यत् ये मरुतः आयासुः यान्ति सर्वत्रगच्छंति तेषां मरुतां युष्माकं नाम प्रमदन्तीति पूर्वेणान्वयः ॥ १ ॥

१. यजनीय मरुतो, मत्त स्तोता लोग यज्ञ-समय में, बल के साथ, तुम्हारे नाम की स्तुति करते हैं। मरुद्गण विस्तृत द्यावापृथिवी को कम्पित करते हैं। वे मेघों से जल बरसाते हैं और ओजस्वी होकर सर्वत्र जाते हैं।

निचेतारोहिमरुतोगृणन्तंप्रणेतारोयजमानस्यमन्म ।
अस्माकमद्यविदथेषुबर्हिरावीतयेसदतपिप्रियाणाः ॥ २ ॥

निऽचेतारः । हि । मरुतः । गृणन्तम् । प्रऽनेतारः । यजमानस्य ।
मन्म । अस्माकम् । अद्य । विदथेषु । बर्हिः । आ ।
वीतये । सदत । पिप्रियाणाः ॥ २ ॥

ये मरुतः गृणंतं स्तुवन्तं जनं निचेतारोहि मृगयमाणाभवन्ति खलु । अपिच यजमानस्य मन्म अभिमतं कामं प्रणेतारश्च भवन्ति । अपरोर्धर्चः प्रत्यक्षकृतः हे मरुतोयूयं पिप्रियाणाः प्रीयमाणाः सन्तः अद्यास्मिन्दिवसे अस्माकं विदथेषु यज्ञेषु वीतये सोमस्य भक्षणाय बर्हिः बर्हिषि कुशमये आसदत आसीदत उपविशत ॥ २ ॥

२. मरुद्गण स्तोता को खोजते हैं। यजमान का मनोरथ पूर्ण करते हैं। तुम लोग प्रसन्न होकर हमारे यज्ञ में, सोमपान के लिए, कुश पर बैठो।

नैतावदन्येमरुतोयथेमेभ्राजन्तेरुक्मैरायुधैस्तनूभिः ।
आरोदसीविश्वपिशःपिशानाःसमानमञ्ज्यञ्जतेशुभेकम् ॥ ३ ॥

न । एतावत् । अन्ये । मरुतः । यथा । इमे । भ्राजन्ते ।
रुक्मैः । आयुधैः । तनूभिः । आ । रोदसी इति । विश्वऽपिशः ।
पिशानाः । समानम् । अञ्जि । अञ्जते । शुभे । कम् ॥ ३ ॥

इमे ईदृशामरुतोयथायत्परिमाणं धनादिकं ददति अन्ये मरुव्द्यतिरिक्तादेवाः एतावद्धनादिकं नदद्युरित्यर्थः । तेच रुक्मैः रोचमानैरायुधैराभरणैः स्वकीयास्त्रैः तनूभिरात्मीयैः केवलैरंगैश्च भ्राजन्ते सर्वदा भासन्ते । कश्चिदेकवाक्यतामाह यथेमे मरुतोरुक्मादिभिः भ्राजन्ते नैतावदेतव्द्यतिरिक्ताभ्राजन्तइति । अपिच रोदसी द्यावापृथिव्यौ पिशानाः प्रकाशयन्तः विश्वपिशः व्याप्तदीप्तयः एवंभूतामरुतः शुभे शोभायै समानं सदृशरूपं अंजि आभरणं आ अंजते स्वकीयावयवेषु अभिव्यक्तीकुर्वन्ति । कमितिपूरणः ॥ ३ ॥

३. मरुद्गण जितना दान करते हैं, उतना और कोई नहीं करता। ये हार, आयुध और शरीर की शोभा से शोभित होते हैं। द्यावापृथिवी का प्रकाश करनेवाले और व्याप्त-प्रकाश मरुद्गण शोभा के लिए समान-रूप आभरण प्रकट करते हैं।

ऋधक्सावोमरुतोदिद्युदस्तुयद्वआगःपुरुषताकराम ।
मावस्तस्यामपिभूमायजत्राअस्मेवोअस्तुसुमतिश्चनिष्ठा ॥ ४ ॥

ऋधक् । सा । वः । मरुतः । दिद्युत् । अस्तु । यत् । वः । आगः ।
पुरुषता । कराम । मा । वः । तस्याम् । अपि । भूम । यजत्राः ।
अस्मे इति । वः । अस्तु । सुऽमतिः । चनिष्ठा ॥ ४ ॥

हे मरुतः वोयुष्मदीया सा प्रसिद्धा दिद्युत् हेतिर्ऋधगस्तु अस्मत्तः पृथग्भवतु यत् यद्यपि वयं वोयुष्माकं आगःअपराधं पुरुषता पुरुषतया मनुष्यत्वेन कराम करवाम मनुष्याणां हि प्रमादः सुलभइत्यर्थः । हे यजत्रा यजनीयामरुतः वोयुष्मदीयायां तस्यां दिद्युति अपि ईषदपि माभूम चनिष्ठा अन्नवत्तमा अतिशयेनान्नदाइत्यर्थः वोयुष्मदीया सुमतिरनुग्रहबुद्धिः अस्मे अस्मास्वस्तु ॥ ४ ॥

४. मरुतो, तुम्हारा प्रसिद्ध आयुध हमसे दूर रहे। यद्यपि हम मनुष्य होने के कारण तुम्हारे पास अपराध करते हैं, तो भी, हे यजनीय मरुतो, तुम्हारे उस आयुध में न पड़ें। तुम्हारी जो बुद्धि सबसे अधिक अन्न देनेवाली है, वह हमारी हो।

कृतेचिदत्रमरुतोरणन्तानवद्यासःशुचयःपावकाः ।
प्रणोवतसुमतिभिर्यजत्राःप्रवाजेभिस्तिरतपुष्यसेनः ॥ ५ ॥

कृते । चित् । अत्र । मरुतः । रणन्त । अनवद्यासः ।
शुचयः । पावकाः । प्र । नः । अवत । सुमतिऽभिः ।
यजत्राः । प्र । वाजेभिः । तिरत । पुष्यसे । नः ॥ ५ ॥

अत्रास्मिन्कृते चित् अस्मदीये यज्ञकर्मण्येव मरुतोरणन्त रमन्तां । कीदृशामरुतः अनवद्यासः आनिंदिताः शुचयोदीप्तियुक्ताः पावकाः शोधकाः एवंभूताइति । किंच हेमरुतः यजत्राः यजनीया यूयं नोस्मान् सुमतिभिरनुग्रहबुद्धिभिः सुष्टुतिभिर्हेतुभिर्वा प्रावत प्रकर्षेण पालयत तथा नोस्मान्वाजेभिर्वाजैरन्नैः पुष्यसे पोष्यार्थं प्रतिरत प्रवर्धयत ॥ ५ ॥

५. हमारे यज्ञ-कार्य में मरुद्गण रमण करें। वे अनिन्दित, दीप्तियुक्त और शोधक हैं। यजनीय मरुतो, कृपा करके अथवा सुन्दर स्तुति के कारण, हमें विशेष रूप से पालन करो। अन्न के द्वारा पोषण के लिए हमें प्रवर्द्धित करो।

अथ षष्ठी—

उतस्तुतासोमरुतोव्यन्तुविश्वेभिर्नामभिर्नरोहवींषि ।
ददातनोअमृतस्यप्रजायैजिगृतरायःसूनृतामघानि ॥ ६ ॥

उत । स्तुतासः । मरुतः । व्यन्तु । विश्वेभिः । नामऽभिः । नरः ।
हवींषि । ददात । नः । अमृतस्य । प्रऽजायै । जिगृत ।
रायः । सूनृता । मघानि ॥ ६ ॥

उतापिच स्तुतासः एवमस्माभिः स्तुताः मरुतः हवींषि व्यन्तु भक्षयन्तु कीदृशाः विश्वेभिर्विश्वैः नामभिरुदकैः सहिता नरोनेतारः । शेषः प्रत्यक्षकृतः हे मरुतः नोस्मदीयायै प्रजायै संततये अमृतस्य अमृतमुदकं ददात दत्त तथा हविषोदातुर्यजमानस्य सूनृता सूनृतानि सुष्ठु नृत्यन्ति शोभनयोगानि मघानि धनानि रायः जिगृत उद्गिरत प्रयच्छतेत्यर्थः ॥ ६ ॥

६. स्तुत होकर मरुद्गण हवि का भक्षण करें। वे नेता हैं और सारे जलों के साथ वर्त्तमान हैं। मरुतो, हमारी सन्तान के लिए जल दो। हव्यदाता को सत्य और प्रिय धन दो।

अथ सप्तमी—

आस्तुतासोमरुतोविश्वऊतीअच्छासूरीन्त्सर्वतातााजिगात ।
येनस्त्मनाशतिनोवर्धयन्तियूयंपातस्वस्तिभिःसदानः ॥७॥ २७॥

आ । स्तुतासः । मरुतः । विश्वे । ऊती । अच्छ । सूरीन् ।
सर्वऽताता । जिगात । ये । नः । त्मना । शतिनः । वर्धयन्ति ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥ २७ ॥

हे मरुतः स्तुतासः एवमस्माभिः स्तुताः विश्वे सर्वे यूयंऊती ऊत्या रक्षया सहिताः सूरीन् स्तोतॄन् अच्छाभिलक्ष्य सर्वताता सर्वतातौ यज्ञे आजिगात आगच्छत ये मरुतः त्मना आत्मनैव नोस्मान् शतिनः शतसंख्याकान् वर्धयन्ति यथा वयं पुत्रपौत्रादिभिः शतिनोभवेम तथावर्धयन्तीत्यर्थः ते यूयमाजिगातेति पूर्वेणसंबंधः एवंभूतामरुतोयूयं सर्वदास्मान् पालयत ॥ ७ ॥

७. स्तुत होकर मरुद्गण सारे रक्षणों के साथ यज्ञ में स्तोता के सामने आवें। ये स्वयं स्तोताओं को शत-संख्या (पुत्रादि) से युक्त करके बढ़ाते हैं। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थे सप्तविंशोवर्गः ॥ २७ ॥

प्रसाकमुक्षेति षळृचं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मरुद्देवताकं अनुक्रान्तंच—प्रसाकमुक्षेषळिति । गतोविनियोगः ।

प्रसाकमुक्षेअर्चतागणाययोदैव्यस्यधाम्नस्तुविष्मान् ।
उतक्षोदन्तिरोदसीमहित्वानक्षन्तेनाकंनिर्ऋतेरवंशात् ॥ १ ॥

प्र । साकम्ऽउक्षे । अर्चत । गणाय । यः । दैव्यस्य ।
धाम्नः । तुविष्मान् । उत । क्षोदन्ति । रोदसी इति ।
महिऽत्वा । नक्षन्ते । नाकम् । निःऽऋतेः । अवंशात् ॥ १ ॥

हे स्तोतारोयूयं साकमुक्षे संततं वर्षित्रे गणाय मरुत्समूहाय प्रार्चत स्तोत्रं प्रोच्चारयत योमरुद्गणः दैव्यस्य देवसंबन्धिनः धाम्नः स्वर्गाख्यस्य स्थानस्य तुविष्मान् वृद्धिमान् भवति सर्वेभ्योदेवेभ्यः प्रवृद्धइत्यर्थः तस्मै गणायेति पूर्वेणसंबन्धः । उतापिच मरुतः महित्वा स्वकीयेन महत्वेन सहिताः रोदसी द्यावापृथिव्यौ क्षोदन्ति भंजंति तथा निर्ऋतेर्भूमेः अवंशादन्तरिक्षाच्च नाकं स्वर्गं नक्षन्ते व्याप्नुवन्ति ॥ १ ॥

१. स्तोताओ, तुम सदावर्षक मरुद्वृन्द की पूजा करो। ये देवताओं के स्थान (स्वर्ग) में सबसे बुद्धिमान् हैं। अपनी महिमा से ये द्यावापृथिवी को भग्न करते हैं। भूमि और अन्तरिक्ष से स्वर्ग को व्याप्त करते हैं।

अथ द्वितीया—

जनूश्चिद्वोमरुतस्त्वेष्येणभीमासस्तुविमन्यवोयासः ।
प्रयेमहोभिरोजसोतसंतिविश्वोवोयामन्भयतेस्वर्दृक् ॥ २ ॥

जनूः । चित् । वः । मरुतः । त्वेष्येण । भीमासः ।
तुविऽमन्यवः । अयासः । प्र । ये । महःऽभिः । ओजसा ।
उत । सन्ति । विश्वः । वः । यामन् । भयते । स्वःऽदृक् ॥ २ ॥

हे भीमासोभीमाः तुविमन्यवः प्रवृद्धमतयः अयासोगन्तारः इति त्रीणिसंबोधनानि एवं-भूता हे मरुतोवोयुष्माकं जनूर्जन्म त्वेष्येण दीप्तेन रुद्रेण बभूवेति शेषः । उतापिच ये मरुतः महोभिस्तेजोभिः ओजसा बलेनच प्रसन्ति प्रभवन्ति तेषां वोयुष्माकं यामन् यामनि गमने विश्वः स्वर्दृक् सूर्यस्य द्रष्टा सर्वोजीवसमूहः यद्वा स्वः अन्तरिक्षं तत्पश्यतीति वृक्षः स्वर्दृक् सर्वदाउत्तिष्ठन्नित्यर्थः भयते बिभेति ॥ २ ॥

२. हे भीम, प्रवृद्धि-बुद्धि और गमनशील मरुतो, तुम्हारा जन्म दीप्त रुद्र से हुआ है । मरुद्गण तेज और बल से प्रभावशाली हुए हैं । तुम्हारे गमन में सूर्य को देखनेवाला सारा प्राणि-जगत् डरता है ।

बृहद्वयोमघवद्भ्योदधातजुजोषन्निन्मरुतःसुष्टुतिंनः ।
गतोनाध्वावितिरातिजन्तुंप्रणःस्पार्हाभिरूतिभिस्तिरेत ॥ ३ ॥

बृहत् । वयः । मघवत्ऽभ्यः । दधात । जुजोषन् । इत् ।
मरुतः । सुऽस्तुतिम् । नः । गतः । न । अध्वा । वि । तिराति ।
जन्तुम् । प्र । नः । स्पार्हाभिः । ऊतिऽभिः । तिरेत ॥ ३ ॥

हे मरुतोयूयं मघवद्भ्योहविर्लक्षणान्नवद्भ्योस्मभ्यं बृहन्महत् वयोन्नं दधात प्रयच्छत नोस्मदीयां सुष्टुतिं शोभनं स्तोत्रं जुजोषन्नित् सेवन्तामेव गतोमरुद्भिः प्राप्तः अध्वा मार्गः जंतुं प्राणिनं न वितिराति नाहन्ति उदकेनाप्याययत्येव यद्वा वितिरातिर्वर्धनार्थः नेतिचार्थे मरुद्भिः गतोमार्गश्च जंतुं वर्धयति तथानोस्मान् स्पार्हाभिः स्पृहणीयाभिः ऊतिभिः रक्षाभिः प्रतिरेत प्रवर्धयते ॥३॥

३. तुम हव्य-युक्त को बहुत अन्न दो । हमारे सुन्दर स्तोत्र का अवश्य सेवन करो । मरुद्गण जिस मार्ग को प्राप्त होते हैं, वह प्राणियों को नहीं विनष्ट करता । वे हमें अभिलषणीय रक्षण-द्वारा प्रवर्द्धित करें ।

अथ चतुर्थी—

युष्मोतोविप्रोमरुतःशतस्वीयुष्मोतोअर्वासहुरिःसहस्री ।
युष्मोतःसम्राळुतहंतिवृत्रंप्रतद्वोअस्तुधूतयोदेष्णम् ॥ ४ ॥

युष्माऽऊंतः । विप्रः । मरुतः । शतस्वी । युष्माऽऊंतः ।
अर्वा । सहुरिः । सहस्री । युष्माऽऊंतः । सम्ऽराट् ।
उत । हन्ति । वृत्रम् । प्र । तत् । वः । अस्तु । धूतयः । देष्णम् ॥ ४ ॥

हे मरुतः युष्मोतः युष्माभीरक्षितः विप्रः स्तोता शतस्वी शतसंख्यापेतधनवान् भवति-युष्मोतः युष्माभिः रक्षितः अर्वा अभिगन्ता सहुरिः शत्रूणामभिभविता स्तोता सहस्री सहस्रधनवान्भवति । युष्मोतः युष्माभीरक्षितः सम्राट् साम्राज्ययुक्तोभवति । उतापिच वृत्रं शत्रुं हन्ति युष्मद्रक्षकोहिनस्ति । हे धूतयः कंपयितारोमरुतः वोयुष्माभिर्दत्तं तत्प्रसिद्धं देष्णं धनं प्रास्तु प्रभूतं भवतु ॥ ४ ॥

४. मरुतो, तुम्हारे द्वारा रक्षित होकर स्तोता शत संख्या से युक्त धनवाला होता है। तुम्हारे द्वारा रक्षित होकर स्तोता आक्रमण-कर्त्ता, शत्रुओं को दवानेवाला और सहस्र धनवाला होता है। तुम्हारे द्वारा रक्षित होकर वह सम्राट् और शत्रु-नाशक होता है। हे कम्पक, तुम्हारा दिया हुआ वह धन बहुत बढ़े।

ताँआरुद्रस्यमीळ्हुषोविवासेकुविन्नंसन्तेमरुतःपुनर्नः ।
यत्सस्वर्ताजिहीळिरेयदाविरवतदेनईमहेतुराणाम् ॥ ५ ॥

तान् । आ । रुद्रस्य । मीळ्हुषः । विवासे । कुवित् । नंसन्ते ।
मरुतः । पुनः । नः । यत् । सस्वर्ता । जिहीळिरे । यत् ।
आविः । अव । तत् । एनः । ईमहे । तुराणाम् ॥ ५ ॥

मीळ्हुषः कामानांवर्षितुः रुद्रस्येश्वरस्य पुत्रान् तान्मरुतः आविवासे अहं होता परिचरामि ते मरुतः नःअस्मभ्यं कुवित् बहुकृत्वः पुनः भूयः नंसन्ते नमन्तां अभिमुखीभवन्तु । कुवित् शब्देनैव पुनः शब्दार्थस्य लब्धत्वात् पुनः शब्दग्रहणं किमर्थं आदरार्थं । सस्वर्ताअन्तर्निहितेन अप्रकाशेन यत् येन एनसा जिहीळिरे मरुतः क्रुध्येयुः आविः प्रकाशेन यत् येन एनसाच जिहीळिरे तुराणां क्षिप्राणां मरुतां संबन्धि तदुभयमेनोपराधं अवईमहे स्तोत्रेण वयमपनयामः ॥ ५ ॥

५. काम-वर्षक मरुतों की मैं सेवा करता हूँ। वे फिर कई बार हमारे अभिमुख हों। जिस प्रकट वा अप्रकट पाप से मरुद्गण क्रुद्ध होते हैं, उसे मरुतों की स्तुति करके हम धो देंगे।

प्रसावाचिसुष्टुतिर्मघोनामिदंसूक्तंमरुतोजुषन्त।
आराच्चिद्द्वेषोवृषणोयुयोतयूयंपातस्वस्तिभिःसदानः ॥ ६॥२८॥

प्र। सा। वाचि। सुऽस्तुतिः। मघोनाम्। इदम्। सुऽउक्तम्।
मरुतः। जुषन्त। आरात्। चित्। द्वेषः। वृषणः। युयोत।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ६ ॥ २८ ॥

मघोनां धनवतां मरुतां संबंधिनी सुष्टुतिः या शोभना स्तुतिः अस्मिन् सूक्ते कृता सा स्तुतिः अस्माभिः प्रवाचि प्रोक्तासीत्। मरुतः इदमीदृग्भूतं सूक्तं जुषन्त सेवन्तां। हे वृषणः कामानां वर्षितारोयूयं द्वेषोद्वेषांसि शत्रून् आराच्चित् दूरादेव युयोत अस्मत्तः पृथक्कुरुत यूयं नोस्मान् स्वस्तिभिः सर्वदा रक्षत ॥ ६ ॥

६. हमने धनी मरुतों की उस शोभन-स्तुति को इस सूक्त में किया है। मरुद्गण उस सूक्त का सेवन करें। अभीष्ट-वर्षक मरुतो, तुम दूर से ही शत्रुओं को अलग करो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य चतुर्थेष्टाविंशोवर्गः ॥ २८॥

यंत्रायध्वइति द्वादशर्चं चतुर्थं सूक्तं अत्रेयमनुक्रमणिका—यंत्रायध्वेद्वादश त्रिप्रगाथादि नवम्याद्यास्तिस्रोगायत्र्योंत्यानुष्टुब्रौद्री मृत्युविमोचनीति। आद्यातृतीयापंचम्योबृहत्यः द्वितीयाचतुर्थीषष्ठ्यःसतोबृहत्यः सप्तम्यष्टम्यावनुक्तत्वात्त्रिष्टुभौ नवमीदशम्येकादश्योगायत्र्यः द्वादश्यनुष्टुप् साचरुद्रदेवताका शिष्टामारुत्यः। सूक्तविनियोगोलैंगिकः।

यंत्रायध्वइदमिदंदेवासोयंचनयथ।
तस्मांअग्नेवरुणमित्रार्यमन्मरुतःशर्मयच्छत ॥ १ ॥

यम्। त्रायध्वे। इदम्ऽइदम्। देवासः। यम्। च। नयथ।
तस्मै। अग्ने। वरुण। मित्र। अर्यमन्। मरुतः। शर्म। यच्छत॥१॥

हे देवासोदेवाः इदमिदं इतोभयहेतोः यं स्तोतारं त्रायध्वे पालयध्वे यं च स्तोतारं नयथ सन्मार्गं प्रापयथ हे अग्ने वरुण मित्र अर्यमन् हे मरुतः एवंभूता हे देवाः तस्मै स्तोत्रे शर्म सुखं यच्छत दत्त ॥ १ ॥

१. हे देवो, भय से स्तोता को बचाओ। अग्नि, वरुण, मित्र, अर्यमा और मरुतो, तुम जिसे सन्मार्ग पर ले जाते हो, उसे सुख दो।

अथ द्वितीया–

युष्माकंदेवाअवसाहंनिप्रियईजानस्तरतिद्विषः ।
प्रसक्षयंतिरतेविमहीरिषोयोवोवरायदाशति ॥ २ ॥

युष्माकम् । देवाः । अवसा । अहनि । प्रिये । ईजानः ।
तरति । द्विषः । प्र । सः । क्षयम् । तिरते । वि । महीः ।
इषः । यः । वः । वराय । दाशति ॥ २ ॥

हे देवाः युष्माकं युष्मदीयेन अवसा रक्षणेन प्रिये अहनि सर्वेषां देवानां प्रियभूते सुत्याभिधाने दिवसे ईजानः इष्टवान् जनः द्विषः शत्रून् तरति आक्रामति सयजमानः क्षयं स्वकीयं निवासं प्रतिरते प्रवर्धयति । योयजमानः वोयुष्मभ्यं महीः महान्ति इषः हविर्लक्षणान्यन्नानि वराय निवारणाय यूयं नान्यत्रगच्छत अस्मदीयान्येव हवींषि स्वीकुरुतेति निरोधनं कर्तुं विदाशति विशेषेण ददाति अतएव स्वकीयं निवासं वर्धयतीत्यर्थः ॥ २ ॥

२. देवो, तुम्हारे रक्षण से तुम्हारे प्रिय दिन में जो यज्ञ करता है, जो शत्रु को आक्रान्त करता है, जो तुम्हें दूसरे स्थान में न जाने देने के लिए तुम्हें बहुत हव्य देता है, वह अपने निवास को बढ़ता है ।

नहिवंश्चरमंचनवसिष्ठःपरिमंसते ।
अस्माकमद्यमरुतःसुतेसचाविश्वेपिबतकामिनः ॥ ३ ॥

नहि । वः । चरमम् । चन । वसिष्ठः । परिऽमंसते । अस्माकम् ।
अद्य । मरुतः । सुते । सचा । विश्वे । पिबत । कामिनः ॥ ३ ॥

वसिष्ठऋषिः वोयुष्माकं मध्ये चरमं चन अवरमपि नहि परिमंसते वर्जयित्वा न स्तौति किंतु सर्वानेव युष्मान्स्तौतीत्यर्थः अद्यास्मिन् दिने अस्माकमस्मदीये सुते सोमे अभिषुते सति हे मरुतः कामिनः सोमं कामयमानाः विश्वे यूयं सचा संगत्य पिबत पानं कुरुत ॥३॥

३. मैं वसिष्ठ तुम लोगों में जो अवर (मन्द) हैं, उन्हें छोड़कर स्तुति नहीं करता । मरुतो, आज सोमाभिलाषी होकर और तुम सब मिलकर हमारे सोम के अभिषुत होने पर पान करो ।

अथ चतुर्थी–

नहिवंऊतिःपृतनासुमर्धतियस्माआराध्वंनरः ।
अभिवआवर्त्सुमतिर्नवीयसीतूयंयातपिपीषवः ॥ ४ ॥

नहि । वः । ऊतिः । पृतनासु । मर्धति । यस्मै । अराध्वम् । नरः ।
अभि । वः । आ । अवर्त् । सुऽमतिः । नवीयसी ।
तूयम् । यात । पिपीषवः ॥ ४ ॥

हे मरुतः वोयुष्मदीया उती रक्षा पृतनासु युद्धेषु नहि मर्धति न खलु हिनस्ति शत्रुभिः कृतां हिंसां सहतइत्यर्थः । हे नरोनतोरोयूयं यस्मै जनायअराध्वं कामानदध्वं तं जनं न हिनस्तीति संबन्धः । नवीयसी नवतरा वोयुष्मदीया सुमतिरनुग्रहबुद्धिः अभ्यावर्त अस्मानभ्यावर्ततां तदा हे पिपीषवः सोमपानकामा यूयमपि तूयं क्षिप्रं यात आगच्छत ॥ ४ ॥

४. नेताओ, जिसे तुम अभिलषित प्रदान करते हो, उसे तुम्हारी रक्षा युद्ध में बचाती है। तुम्हारी नई कृपा-बुद्धि हमारे सामने आवे। सोमपानाभिलाषियो, तुम शीघ्र आओ।

ओषुघृष्विराधसोयातनान्धांसिपीतये ।
इमावोहव्यामरुतोररेहिकंमोष्वं१न्यत्रगन्तन ॥ ५ ॥

ओ इति । सु । धृष्विऽराधसः । यातन । अन्धांसि । पीतये ।
इमा । वः । हव्या । मरुतः । ररे । हि । कम् । मो इति ।
सु । अन्यत्र । गन्तन ॥ ५ ॥

हे घृष्विराधसः परस्परं घृष्टानि सुसंहतानि राधांसि येषां ते हे मरुतः यूयमंधांसि सोमलक्षणानि हवींषि पीतये भक्षणार्थं सु सुष्ठु आयातन । आयात हि यस्मात् कारणात् हे मरुतोवोयुष्मभ्यं इमा इमानि हव्या हव्यानि हवींषि ररे अहं ददामि अतः कारणाद्यूयं अन्यत्र मोषुगन्तन मागच्छत कमितिपूरणः ॥ ५ ॥

५. मरुतो, तुम्हारा धन परस्पर मिला हुआ है। सोमरूप हवि भक्षण करने के लिए अच्छी तरह आओ। मरुतो, तुम्हें मैं यह हवि देता हूँ; इसलिए तुम अन्यत्र नहीं जाना।

अथ षष्ठी–

आचनोबर्हिःसदताविताचनःस्पार्हाणिदातवेवसु ।
अस्रेधन्तोमरुतःसोम्येमधौस्वाहेहमादयाध्वै ॥ ६ ॥ २९ ॥

आ । च । नः । बर्हिः । सदत । अविता । च । नः ।
स्पार्हाणि । दातवे । वसु । अस्रेधन्तः । मरुतः । सोम्ये ।
मधौ । स्वाहा । इह । मादयाध्वै ॥ ६ ॥ २९ ॥

हे मरुतोयूयं नोस्मदीयेबर्हिः कुशमयेबर्हिषि आसदत च उपविशत स्पार्हाणि स्पृहणीयानि वसु वसूनि धनानि दातवे अस्मभ्यं दातुं नोस्मान् अवित च आगच्छत च हे मरुतः अस्रेधन्तः अहिंसन्तोयूयं इहास्मिन्यज्ञे मधौ मदकरे सोम्ये सोमात्मके हविषि स्वाहा स्वाहाकारेण मादयाध्वै मादयध्वं माद्यत ॥ ६ ॥

६. मरुतो, तुम हमारे कुशों पर बैठो। अभिलषणीय धन देने के लिए हमारे पास आओ। मरुतो, तुम लोग अहिंसक होकर इस यज्ञ में मदकर सोमरूप हव्य पर स्वाहा कहकर प्रमत्त होओ।

॥ इति पंचमस्य चतुर्थे एकोनत्रिंशोवर्गः ॥ २९ ॥

सस्वश्चिद्धितन्वः१शुंभमानाआहंसासोनीलपृष्ठाअपप्तन्।
विश्वंशर्धोअभितोमानिषेदनरोनरण्वाःसवनेमदन्तः ॥ ७ ॥

सस्वरिति। चित्। हि। तन्वः। शुंभमानाः। आ। हंसासः।
नीलऽपृष्ठाः। अपप्तन्। विश्वम्। शर्धः। अभितः। मा।
नि। सेद। नरः। न। रण्वाः। सवने। मदन्तः ॥ ७ ॥

सस्वः अन्तर्हितामरुतः तन्वः स्वकीयान्यंगानि शुंभमानाः अलंकरणैः शोभयन्तो मरुतः नीलपृष्ठाः असितवर्णाः हंसासश्चित हंसाइव आपप्तन् आपतन्तु आगच्छतु। विश्वं शर्धः व्याप्तोमरुद्गणः मा मां अभितः समन्तात् निषेद निषीदतु तत्रदृष्टान्तः- सवनेस्मदीये यज्ञे मदन्तोहृष्यन्तः रण्वाः रमणीयाः नरोन मनुष्याइव तद्वत ॥ ७ ॥

७. अन्तर्हित मरुतो, अपने अंगों को अलंकारों से अलंकृत करके नीलवर्ण हंसों की तरह आओ। मेरे यज्ञ में आनन्दित और रमणीय मनुष्यों की तरह विश्व-व्याप्त मरुद्गण मेरे चारों ओर बैठें।

साकमेधेषु मरुद्भ्यः सान्तपनेभ्यइत्यस्य योनोमरुतइति पूर्वानुवाक्या सान्तपनाइदमितियाज्या तथाचसूत्रितं—सान्तपनाइदंहविर्योनोमरुतोअभिदुर्हृणायुरिति।

सैषा सूक्तेष्टमी—

योनोमरुतोअभिदुर्हृणायुस्तिरश्चित्तानिवसवोजिघांसति।
द्रुहःपाशान्प्रतिसमुचीष्टतपिष्ठेनहन्मनाहन्तनातम् ॥ ८ ॥

यः। नः। मरुतः। अभि। दुःऽहृणायुः। तिरः। चित्तानि।
वसवः। जिघांसति। द्रुहः। पाशान्। प्रति। सः।
मुचीष्ट। तपिष्ठेन। हन्मना। हन्तन। तम् ॥ ८ ॥

हे वसवः प्रशस्या हे मरुतः नोस्मदीयानि चित्तानि दुर्हणायुः अशोभनं क्रुध्यन् तिरः सर्वैस्तिरस्कृतोयोजनः अभिजिघांसति आभिमुख्येन हन्तुमिच्छति सजनः द्रुहः पापानां द्रोग्धुर्वरुणस्य पाशान् अस्मासु प्रतिसमुचीष्ट बध्नीयात् यूयं तं जनं तपिष्ठेन तप्तृतमेन हन्मना हननसाधनेनायुधेन हन्तन हत हिंस्त ॥ ८ ॥

८. प्रशंसनीय मरुतो, अशोभन क्रोध करके जो तिरस्कृत मनुष्य हमारे चित्त का विनाश करना चाहता है, वह पाप-द्रोही वरुणदेव के पाश से हमें बांधना चाहता है। उसे तुम लोग अतीव तापक आयुध से विनष्ट करो।

**सांतपनाइदंहविर्मरुतस्तज्जुजुष्टन। युष्माकोतीरिशादसः ॥ ९ ॥**

सामऽतपनाः। इदम्। हविः। मरुतः। तत्।
जुजुष्टन। युष्माक। ऊती। रिशादसः ॥ ९ ॥

सांतपनाः शत्रूणां संतापकाः हे मरुतः इदं प्रत्यक्षेणोपलभ्यमानं हविः युष्मभ्यं कल्पितमितिशेषः हे रिशादसः रिशतां हिंसतां असितारः रिशानामत्तारोवा यूयं युष्माक युष्माकं ऊती ऊत्या रक्षया तत्तादृशं हविर्जुजुष्टन सेवध्वम् ॥ ९ ॥

९. शत्रुतापक, यही तुम्हारा हव्य है। तुम शत्रु-भक्षक हो। अपनी रक्षा-द्वारा हवि का सेवन करो।

गृहमेधासइति गृहमेधीयस्य हविषोनुवाक्या सूत्रितंच— गृहमेधासआगत प्रबुध्न्यावईरतेमहांसीति। अथ दशमी—

**गृहमेधासआगतमरुतोमापभूतन। युष्माकोतीसुदानवः ॥ १० ॥**

गृहऽमेधासः। आ। गत। मरुतः। मा। अप।
भूतन। युष्माक। ऊती। सुऽदानवः ॥ १० ॥

गृहमेधासः गृहेक्रियमाणोयज्ञोयेषां ते सुदानवः शोभनदाना हे मरुतोयूयं युष्माक युष्माकं ऊती ऊत्या रक्षया युक्ताः आगत अस्मदीयं यज्ञं प्रत्यागच्छत हे मरुतः मापभूतन अपगतामाभवत भूप्राप्ताविति धातुः ॥ १० ॥

१०. मरुतो, तुम गृह में भी शोभनदाता हो। रक्षा के साथ आओ। जाओ नहीं।

वैश्वदेवपर्वणि मारुतस्यानुवाक्या इहेहवइत्येषा सूत्रितंच—इहेहवः स्वतवसः प्रचित्रमर्कं गृणतेतुरायेति।

सैषा सूक्ते एकादशी–

इहेहवःस्वतवसःकवयःसूर्यत्वचः । यज्ञंमरुतआवृणे ॥ ११ ॥

इहऽइह । वः । स्वऽतवसः । कवयः । सूर्यऽत्वचः ।
यज्ञम् । मरुतः । आ । वृणे ॥ ११ ॥

हे स्वतवसः स्वायत्तबलाः स्वयं प्रवृद्धावा हे कवयः क्रान्तदर्शिनः सूर्यत्वचः सूर्यवर्णाः एवंभूता हेमरुतोवः यूयं इहेह इहैव अस्मदीयं यज्ञं आवृणे आभजामि कल्पयामि ॥ ११ ॥

११. हे स्वयं प्रवृद्ध और क्रान्तदर्शी तथा सूर्यवर्ण मरुतो, मैं यज्ञ की कल्पना करता हूँ।

अथ द्वादशी–

त्र्यंबकंयजामहेसुगन्धिंपुष्टिवर्धनम् ।
उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥१२॥३०॥

त्र्यंबकंयजामहेसुगन्धिंपुष्टिवर्धनम् ।
उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ १२ ॥ ३०॥

अत्र शौनकः त्रिरात्रंनियतोपोष्य श्रपयेत्पायसंचरुं । तेनाहुतिशतंपूर्णं जुहुयाच्छंसितव्रतः ॥ १ ॥ समुद्दिश्यमहादेवं त्र्यंबकंत्र्यंबकेत्यृचा । एतत्पर्वशतंकृत्वाजीवेद्वर्षशतंसुखी ॥ २ ॥ त्रयाणां ब्रह्मविष्णुरुद्राणां अंबकं पितरं यजामहेइति शिष्यसमाहितोवसिष्ठोब्रवीति-किंविशिष्टमित्यतआह सुगन्धिं प्रसारितपुण्यकीर्तिं पुनः किंविशिष्टं पुष्टिवर्धनं जगद्बीजं उरुशक्तिमित्यर्थः उपासकस्य वर्धनं अणिमादिशक्तिवर्धनं अतस्त्वत्प्रसादादेव मृत्योर्मरणात् संसाराद्वा मुक्षीय मोचय यथा बंधनात् उर्वारुकं कर्कटीफलं मुच्यते तद्वन्मरणात्संसाराद्वा मोचय किं मर्यादीकृत्य आमृतात् सायुज्यतामोक्षपर्यन्तमित्यर्थः॥ अथ तैत्तिरीयभाष्ये–शोभनः शरीरगंधः पुण्यगंधोवा यस्यासौ सुगंधिः। यथा वृक्षस्य संपुष्पितस्य दूराद्गंधोवात्येवं पुण्यस्य कर्मणोदूराद्गंधोवातीतिश्रुतेः। पुष्टिं शरीरं धनादिविषयां वर्धयतीति पुष्टिवर्धनस्तादृशं त्र्यंबकं यजामहे पूजयामः लोके यथोर्वारुकफलानि बंधनात् वृंतात्स्वयमेव मुच्यन्ते तद्वदहं त्र्यंबकप्रसादेन मृत्योर्मुक्षीय मोचयन् मुक्तोभूयासं अमृतात्चिरजीवितात् स्वर्गादेर्वा मामुक्षीय । चतुर्थ-

पादार्थमंत्रस्य तात्पर्यातिशयं दर्शयति—त्र्यंबकं यजामहइत्याह मृत्योर्मुक्षीयमामृतादिति वावै-तदाहेति[1] ॥ १२ ॥

१२. हम सुगन्धि (प्रसारित-पुण्य-कीर्ति) और पुष्टिवर्द्धक (जगद्-बीज वा अणिमादिशक्तिवर्द्धन) त्र्यम्बक (ब्रह्मा, विष्णु और महेश के पिता वा आदिकारण) की पूजा वा यज्ञ करते हैं। रुद्रदेव उर्वारुकफल (बदरी-फल) की तरह हमें मृत्यु-बन्धन (संसार) से मुक्त करो और अमृत (चिर-जीवन वा स्वर्ग) से मत मुक्त करो।

॥ इति पंचमस्य चतुर्थे त्रिंशोवर्गः ॥ ३० ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पंचमाष्टके चतुर्थोध्यायः समाप्तः॥४॥

---

१ तै० ब्रा० १.६.१०.।

## ॥ श्रीगणेशाय नमः ॥

यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत्। निर्ममेतमहंवंदे विद्यातीर्थंमहेश्वरम् ॥ १ ॥
व्याख्यायनिगमाभिज्ञः पञ्चमस्यचतुर्थकम्। अध्यायंसायणाचार्यः पञ्चमंव्याकरोत्यथ ॥ २ ॥

तत्र यदद्यसूर्येति द्वादशर्चं पञ्चमं सूक्तम् अत्रानुक्रमणिका—यदद्य मैत्रावरुणन्तु वै सौ-र्यांद्येति। मण्डलद्रष्टा वसिष्ठऋषिः अनुक्तत्वात् त्रिष्टुप्छन्दः तु वै इत्युक्तत्वादेतदादीनि सप्तसू-क्तानि मित्रावरुणदेवत्यानि आद्यासूर्यदेवत्या विनियोगोलैङ्गिकः।

तत्र प्रथमा—

ॐम् यद॒द्यसूर्य॒ब्रवोना॑गा॒उ॒द्यन्मि॒त्राय॒वरु॑णायस॒त्यम्।
व॒यंदे॑व॒त्रादि॑ते॒स्याम॒तव॑प्रि॒यासो॑अर्य॒मन्गृ॒णन्त॑ः ॥ १ ॥

यत्। अ॒द्य। सूर्य॑। ब्रव॑ः। अना॑गाः। उ॒त्ऽइ॒यन्। मि॒त्राय॑।
वरु॑णाय। स॒त्यम्। व॒यम्। दे॒व॒ऽत्रा। अदि॑ते। स्या॒म॒।
तव॑। प्रि॒यास॑ः। अर्य॒मन्। गृ॒णन्त॑ः ॥ १ ॥

हे सूर्य सर्वस्यप्रेरक एतन्नामकदेव उद्यन् उदयंस्त्वं यद्यदि अद्यास्मिन् अनुष्ठानकाले-स्मान् ब्रवः ब्रूयाः। किमिति अनागाः अनागसइति एते अपापाइति यदि देवेषु मध्ये ब्रूयाः तर्हि वयं हे अदिते अदीनदेव देवत्रा देवेषु देवानां मध्ये मित्राय वरुणाय च सत्यं अवितथं स्याम अनागसोभवेम। किञ्च हे अर्यमन् दातः त्वां गृणन्तः स्तुवन्तः तव प्रियासः प्रियाः स्याम त्वत्प्रेमविषयाभवेम। यद्वोत्तरार्धएकं वाक्यम्। हेअदिते हेअर्यमन् उक्तलक्षण देव वयं देवेषु मध्ये त्वां गृणन्तः तवैव प्रियाः स्याम यदि मां देवेष्वपापं ब्रूयास्तर्हि तैरयमनपराधीत्यनुगृहीतस्त्वां स्तुत्वा तव प्रियोभवेयमित्यर्थः ॥ १ ॥

१. हे सूर्य (सब के प्रेरक) देव, उदित होकर तुम आज, अनुष्ठान-काल में, हमें पापरहित करो। हे अदिति (अदीन देव) हम देवों के बीच, मित्र और वरुण के पास, यथार्थ हों। अर्यमन् (दाता), तुम्हारी स्तुति करके हम तुम्हारे प्रिय हों।

अथ द्वितीया—

ए॒षस्यमि॑त्रावरुणानृ॒चक्षा॑उ॒भेउदे॑ति॒सूर्यो॑अ॒भिज्मन्।
विश्व॑स्यस्था॒तुर्जग॑तश्चगो॒पाऋ॒जुमर्ते॑षुवृजि॒नाच॒पश्यन् ॥ २ ॥

एषः । स्यः । मित्रावरुणा । नृऽचक्षाः । उभे इति । उत् ।
एति । सूर्यः । अभि । ज्मन् । विश्वस्य । स्थातुः । जगतः । च ।
गोपाः । ऋजु । मर्तेषु । वृजिना । च । पश्यन् ॥ २ ॥

हे मित्रावरुणा मित्रावरुणौ एषः पुरतोदृश्यमानः स्यः सः सर्वस्तुत्यत्वे प्रसिद्धः नृचक्षः नृणां मनुष्याणां द्रष्टा सूर्यः उभे द्यावापृथिव्यावभि अभिलक्ष्यउदेति ज्मन् अन्तरिक्षे गच्छन् सविशेष्यते विश्वस्य सर्वस्य स्थातुः स्थावरस्य जगतोजंगमस्यच गोपाः गोपायिता । किंकुर्वन्न मर्तेषु मनुष्येषु स्थितानि ऋजु ऋजूनि सुकृतानि वृजिना वृजिनानि पापानि च पश्यन् ॥ २ ॥

२. मित्र और वरुण, यह वही मनुष्यों के दर्शक सूर्य अन्तरिक्ष में जाते हुए द्यावा-पृथिवी को लक्ष्य कर उदित होते हैं। सूर्य सारे स्थावर और जंगम संसार के पोषक हैं। वे मनुष्यों के पुण्य और पाप को देखते हैं।

अयुक्तसप्तहरितःसधस्थाद्याईंवहन्तिसूर्यंघृताचीः ।
धामानिमित्रावरुणायुवाकुःसंयोयूथेवजनिमानिचष्टे ॥ ३ ॥

अयुक्त । सप्त । हरितः । सधऽस्थात् । याः । ईम् । वहन्ति ।
सूर्यम् । घृताचीः । धामानि । मित्रावरुणा । युवाकुः ।
सम् । यः । यूथाऽइव । जनिमानि । चष्टे ॥ ३ ॥

हे मित्रावरुणा मित्रावरुणौ युवयोरागमनाय सधस्थात् सहस्थानादन्तरिक्षादन्तरिक्षे सप्त सर्पणस्वभावान् तत्संख्याकान्वा हरितोहरिद्वर्णानश्वानयुक्त युक्तवान् रथे हरितआदित्यस्येतिहिनिरुक्तम् । या हरित ईमेनं सूर्यं देवं घृताचोर्घृताञ्चना उदकवत्यःउदकप्रदाइत्यर्थः तादृश्यः सत्योवहन्ति ताअयुक्त । अथोदितः सन् धामानि स्थानानि लोकान् जनिमानि जन्मानि जन्मभाजः प्राणिनइत्यर्थः तांश्च युवाकुः युवां कामयमानोयोदेवः सञ्चष्टे सम्यक्पश्यति यूथेव गोयूथानीव यूथपाः सयथा सर्वयूथं तदवान्तरगोयुक्तिं च सम्यक् पश्यति तद्वत् लोकान्प्राणिनश्च पश्यति ॥ ३ ॥

३. मित्र और वरुण, सूर्य ने अन्तरिक्ष में सात हरिद् वर्ण के अश्वों को रथ में जोता। वे सातों जलदाता होकर सूर्य को ले जाते हैं। जैसे गोपालक गो-समूह को भली भाँति देखता है, वैसे ही सूर्य उदित होकर संसार के स्थानों और प्राणियों को देखते हैं। वे तुम दोनों की कामना करते हैं।

उद्वांपृक्षासोमधुमन्तोअस्थुरासूर्योअरुहच्छुक्रमर्णः ।
यस्माआदित्याअध्वनोरदन्तिमित्रोअर्यमावरुणःसजोषाः ॥४॥

उत् । वाम् । पृक्षासः । मधुंऽमन्तः । अस्थुः । आ । सूर्यः ।
अरुहत् । शुक्रम् । अर्णः । यस्मै । आदित्याः । अध्वनः ।
रदन्ति । मित्रः । अर्यमा । वरुणः । सऽजोषाः ॥ ४ ॥

हे मित्रावरुणौ वां युवयोरर्थाय पृक्षासोऽन्नानि चरुपुरोडाशादीनि मधुमन्तोमाधुर्योपेतानि तत्साधनान्योषध्यादीनिवा उदस्थुः संपादितान्यासन् सूर्यश्च शुक्रं दीप्तं अर्णः अर्णवमन्तरिक्षं आरुहत् आरोहति यस्मै सूर्याय तद्गमनार्थमादित्याअदितेः पुत्रादेवा अध्वनोमार्गान् रदन्ति विलिखन्ति साधयन्ति। के ते मित्रःअर्यमा वरुणश्चैते त्रयोपि देवाः सजोषसः समानप्रीतयः सन्तः सदेव आरुहदिति ॥ ४ ॥

४. मित्र और वरुण, तुम दोनों के लिए अन्न और मधुर पुरोडाशादि थे। सूर्य दीप्त अन्तरिक्ष में चढ़ते हैं। समान प्रीतिवाले मित्र, अर्यमा, वरुण आदि सूर्य के लिए मार्ग प्रस्तुत करते हैं।

अथ पंचमी—

इमेचेतारोअनृतस्यभूरेर्मित्रोअर्यमावरुणोहिसन्ति ।
इमऋतस्यवावृधुर्दुरोणेशग्मासःपुत्राअदितेरदब्धाः ॥ ५ ॥

इमे । चेतारः । अनृतस्य । भूरेः । मित्रः । अर्यमा ।
वरुणः । हि । सन्ति । इमे । ऋतस्य । ववृधुः । दुरोणे ।
शग्मासः । पुत्राः । अदितेः । अदब्धाः ॥ ५ ॥

इमे मित्रःअर्यमा वरुणश्च त्रयोपि अनृतस्य पापस्य भूरेः प्रभूतस्य चेतारोहन्तारः सन्ति भवन्ति हि इमे मित्रादय ऋतस्य यज्ञस्य दुरोणे गृहे ववृधुः वर्धन्ते हविषा स्तुत्याच कीदृशास्ते शग्मासः सुखकराः अदितेः पुत्राः अदब्धा अहिंसिताः ॥ ५ ॥

५. ये मित्र, वरुण और अर्यमा यथेष्ट पाप के नाशक हैं। ये सुखकर, अहिंसक और अदिति के पुत्र हैं। ये यज्ञ-गृह में बढ़ते हैं।

इमेमित्रोवरुणोदूळभासोचेतसंचिच्चितयन्तिदक्षैः ।
अपिक्रतुंसुचेतसंवतन्तस्तिरश्चिदंहःसुपथानयन्ति ॥ ६ ॥ १ ॥

इमे । मित्रः । वरुणः । दुःऽदभासः । अचेतसम् । चित् ।
चितयन्ति । दक्षैः । अपि । क्रतुम् । सुऽचेतसम् । वतन्तः ।
तिरः । चित् । अंहः । सुऽपथा । नयन्ति॥ ६ ॥ १॥

इमे आदित्याः मित्रोवरुणश्च एतद्द्वयं अर्यम्णोप्युपलक्षणं एते दूळभासः दुर्लभाः अनभिभाव्याः अचेतसश्चिद् अप्रज्ञानं अनुष्ठानविषयज्ञानरहितमपि दक्षैः सामर्थ्यैः चितयन्ति अपि सुचेतसं प्रकृष्टज्ञानवन्तं पुरुषं क्रतुं कर्तारं कर्मानुष्ठानवन्तं वतन्तः गच्छन्तःअंहोदुष्कृतं तिरश्चिद् तिरोनयन्तोस्मान् सुपथा शोभनमार्गेण नयन्ति प्रापयन्ति अभिमतं यज्ञं स्वर्गादिकं वा ॥ ६ ॥

६. आदित्य, मित्र और वरुण दबाने योग्य नहीं हैं। ये अज्ञानी को ज्ञानवान् बनाते हैं। ये उत्तम ज्ञानवाले और कर्मानुष्ठानवाले के पास जाकर, दुष्कृत का विनाश करते हुए, हमें सुमार्ग पर ले जाते हैं।

॥ इति पञ्चमस्य पञ्चमे प्रथमोवर्गः ॥ १ ॥

इमेदिवोअनिमिषापृथिव्याश्चिकित्वांसोअचेतसंनयन्ति ।
प्रव्राजेचिन्नद्योगाधमस्तिपारंनोअस्यविष्पितस्यपर्षन् ॥ ७ ॥

इमे । दिवः । अनिऽमिषा । पृथिव्याः । चिकित्वांसः ।
अचेतसम् । नयन्ति । प्रऽव्राजे । चित् । नद्यः । गाधम् । अस्ति ।
पारम् । नः । अस्य । विष्पितस्य । पर्षन् ॥ ७ ॥

इमे मित्रादयोदिवोद्युलोकस्य पृथिव्याश्च संबन्धिनः अनिमिषा अनिमिषेण सर्वदा चिकित्वांसोजानन्तः कं अचेतसं अज्ञानं नयन्ति प्रापयन्ति कर्माणि प्रव्राजेचिद् प्रवणेपि अत्यन्तनिम्नेपि देशे नद्योनद्याः गाधमस्ति भवति युष्मत्सामर्थ्यात् ते महान्तोनोस्माकं अस्य विष्पितस्य व्यापितस्य कर्मणः पारं पर्षन् पारयन्तु नयन्तु ॥ ७ ॥

७. ये निर्निमेष होकर द्युलोक और पृथिवी के अज्ञानी को कर्म में ले जाते हैं। इनके सामर्थ्य से अत्यन्त निम्न देश में भी नदी का तल होता है। ये हमें इस व्यापक कर्म के पार ले जायें।

अथाष्टमी—

यद्गोपावददितिःशर्मभद्रंमित्रोयच्छन्तिवरुणःसुदासे ।
तस्मिन्नातोकंतनयंदधानामाकर्मदेवहेळनंतुरासः ॥ ८ ॥

यत् । गोपावत् । अदितिः । शर्म । भद्रम् । मित्रः । यच्छन्ति ।
वरुणः । सुऽदासे । तस्मिन् । आ । तोकम् । तनयम् । दधानाः ।
मा । कर्म । देवऽहेळनम् । तुरासः ॥ ८ ॥

यच्छर्मसुखं गृहं वा गोपावत् रक्षणोपेतं भद्रं स्तुत्यं अदितिरदीनोर्यमा अदितिर्वा मित्रो-वरुणश्चैतेत्रयोदेवाः सुदासे सुदानाय मह्यं यच्छन्ति प्रयच्छन्ति तस्मिन् शर्मणि तोकं पुत्रं तनयं तत्पुत्रादिकं अथवा तनयशब्दोपत्यसामान्यवचनः तोकं बलवन्तं पुत्रं आसर्वतोदधानाः धार-यन्तोवयं हे तुरासोगमनाय त्वरमाणाः देवहेळनं देवानां मित्रादीनां कोपनं मा कर्म मा कार्ष्म ॥ ८ ॥

८. अर्यमा, मित्र और वरुण जो रक्षण से युक्त और स्तुत्य सुख हव्यदाता को देते हैं वही सुख पुत्र और पौत्र के लिए धारण करते हुए हम शीघ्रकारी देवों के लिए क्रोधजनक कार्य न करें।

अववेदिंहोत्राभिर्यजेतरिपःकाश्चिद्वरुणध्रुतःसः।
परिद्वेषोभिरर्यमावृणक्तूरुंसुदासेवृषणाउलोकम् ॥ ९ ॥

अव । वेदिम् । होत्राभिः । यजेत । रिपः । काः । चित् ।
वरुणऽध्रुतः । सः । परि । द्वेषःऽभिः । अर्यमा । वृणक्तु ।
उरुम् । सुऽदासे । वृषणौ । ऊँ इति । लोकम् ॥ ९ ॥

हे मित्रादयः सोस्मद्द्वेषी वेदिं यागसाधनं होत्राभिः वाङ्नामैतत् वाग्रूपाभिः स्तुतिभिः सार्धं अवयजेत वेद्यां कर्माणि कुर्वन् देवान् न स्तुयादित्यर्थः अवपूर्वोयजतिस्त्यागार्थः सकिं प्राप्नु-यादिति तत्राह वरुणध्रुतः वरुणेन त्वया हिंसितः सकाः कश्चिद्रिपोहिंसाः प्राप्नुयादिति शेषः। अस्मांस्त्वर्यमादेवोद्वेषोभिः द्वेष्टभीरक्षःप्रभृतिभिः परिवृणक्तु वर्जयतु उरुं विस्तीर्णं लोकं स्थानं सुदासे शोभनदानाय मह्यं प्रयच्छतं हे वृषणौ वर्षकौ कामानां मित्रावरुणौ उःपूरणः ॥ ९ ॥

९. जो हमारा द्वेषी यज्ञ-वेदी पर कार्य करते हुए देवों की स्तुति नहीं करता, वह वरुण-द्वारा मारा जाकर विनष्ट हो जाय। अर्यमा हमें राक्षसादि से अलग रक्खें। मनोरथ-पूरयिता मित्र और वरुण, मुझ हव्यदाता को विस्तीर्ण स्थान दो। अथ दशमी—

सस्वश्चिद्धिसमृतिस्त्वेष्येषामपीच्येनसहसासहन्ते।
युष्मद्भियावृषणोरेजमानादक्षस्यचिन्महिनामृळतानः ॥ १० ॥

सस्वः । चित् । हि । समृऽऋतिः । त्वेषी । एषाम् । अपीच्येन ।
सहसा । सहन्ते । युष्मत् । भिया । वृषणः । रेजमानाः ।
दक्षस्य । चित् । महिना । मृळत । नः ॥ १० ॥

एषां मित्रादीनांसमृतिः संगतिः संहतिर्वा सस्वः अन्तर्हिता निगूढा त्वेषी दीप्ताच भवति तादृशाएते अपीच्येन एतदप्यन्तर्हितनाम निगूढेन सहसा बलेन सहन्ते अभि भवन्ति अस्मद्द्वेष्टॄन्। किञ्च हे वृषणोभिमततर्पकामित्रादयो युष्मद्युष्मत्तोभिया भीत्या रेजमानाः कंपमानाभवन्ति विरोधिनः। यस्मादेवं तस्माद्दक्षस्य युष्माकं बलस्य महिना महिम्ना महत्त्वेन नोस्मभ्यं मृळत उपदयां कुरुत चिद्धिपूरणौ॥ १०॥

१०. इन मित्रादि की संगति निगूढ़ और दीप्त है। ये निगूढ़ बल-द्वारा हमारे द्वेषियों को पराजित करते हैं। अभिमतदाता मित्रादि देवो, तुम्हारे डर से हमारे विरोधी काँपते हैं। अपने बल की महिमा से हमें सुखी बनाओ।

योब्रह्मणेसुमतिमायजातेवाजस्यसातौपरमस्यरायः।
सीक्षन्तमन्युंमघवानोअर्यउरुक्षयायचक्रिरेसुधातु॥ ११॥

यः। ब्रह्मणे। सुऽमतिम्। आऽयजाते। वाजस्य। सातौ। परमस्य। रायः। सीक्षन्त। मन्युम्। मघऽवानः। अर्यः। उरु। क्षयाय। चक्रिरे। सुऽधातु॥ ११॥

योयजमानोब्रह्मणे परिवृढस्वकर्मणे युष्मत्स्तोत्ररूपाय सुमतिं शोभनां बुद्धिं आयजाते आयजते यजतिरन्नदाने ददाति करोति। किमर्थं वाजस्यान्नस्य सातौ दाने निमित्ते परमस्योत्कृष्टस्य रायोधनस्य च सातौ तस्य अर्यः ईरयति स्तुतीः प्रेरयतीत्यरिः स्तोता तस्य मन्युं स्तोत्रं मघवानोदानवन्तोर्यमादयः सीक्षन्त सचन्ते सेवित्वाच तस्योरुक्षयाय विस्तीर्णनिवासाय सुधातु सुधाम शोभनस्थानं चक्रिरे कुर्वते॥ ११॥

११. जो यजमान अन्न और उत्तम धन देने के लिए तुम्हारे स्तोत्र में अपनी शोभन बुद्धि को नियुक्त करता है, उस स्तोता का स्तोत्र मघवा लोग (दानी अर्यमा आदि) आश्रित करते और उसके लिए सुन्दर धाम बनाते हैं।

इयंदेवपुरोहितिर्युवभ्यांयज्ञेषुमित्रावरुणावकारि।
विश्वानिदुर्गापिपृतंतिरोनोयूयंपातस्वस्तिभिःसदानः॥ १२॥ २॥

इयम्। देव। पुरःऽहितिः। युवऽभ्याम्। यज्ञेषु। मित्रावरुणौ। अकारि। विश्वानि। दुःऽगा। पिपृतम्। तिरः। नः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ १२॥ २॥

अनया स्तुतिमुपसंहरति हे देवा देवौ मित्रावरुणौ युवभ्यां युवाभ्यां यज्ञेषु इयं पुरोहितिः पुरस्क्रिया पूजा स्तुतिलक्षणा अकारि कृताभूत् तां सेवित्वा विश्वानि सर्वाणि दुर्गा दुः-

खेनगन्तव्यानि आपदः तिरः तिरस्कुरुतम् तथा कृत्वा नोस्मान् पिपृतं पारयतं शिष्टो-गतः ॥ १२ ॥

१२. मित्र और वरुण, तुम दोनों के यज्ञ में यह स्तुति की गई है। इसकी सेवा करके हमारी सारी दुरन्त विपत्तियों को दूर करते हुए हमें पार लगाओ। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य पंचमे द्वितीयोवर्गः ॥ २ ॥

उद्वां चक्षुरिति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मैत्रावरुणं उद्वांसप्तेत्यनुक्रमणिका विनियोगोलैंगिकः।

उद्वांचक्षुर्वरुणसुप्रतींकंदेवयोरेतिसूर्यस्ततन्वान्।
अभियोविश्वाभुवनानिचष्टेसमन्युंमर्त्येष्वाचिकेत ॥ १ ॥

उत्। वाम्। चक्षुः। वरुणा। सुऽप्रतीकम्। देवयोः।
एति। सूर्यः। ततन्वान्। अभि। यः। विश्वा। भुवनानि।
चष्टे। सः। मन्युम्। मर्त्येषु। आ। चिकेत ॥ १ ॥

हे वरुणा मित्रावरुणौ देवयोर्द्योतमानयोर्वां युवयोश्चक्षुः प्रकाशकं तेजः सुप्रतीकं शोभनरूपं एवं रूपः सूर्यः ततन्वान् तेजोविस्तारयन्नुदेति उद्गच्छति अथोदितोयोदेवोविश्वा सर्वाणि भुवनानि भूतजातानि अभिचष्टे अभिपश्यति सदेवोमर्त्येषु प्रवृत्तं मन्युं स्तोत्रं कर्म वा आचिकेत आजानाति ॥ १ ॥

१. मित्र और वरुण, तुम प्रकाशमान हो। तुम्हारे नेत्र-रूप और शोभनरूपवाले सूर्य तेज का विस्तार करते हुए आकाश में उठते हैं। सूर्यदेव सारे भुवनों अथवा भूतों (प्राणियों) को देखते हैं। वे मनुष्यों के बीच प्रवृत्त स्तोत्र को जानते हैं।

अथ द्वितीया—

प्रवांसमित्रावरुणावृतावाविप्रोमन्मानिदीर्घश्रुदियर्ति।
यस्यब्रह्माणिसुक्रतूअवाथआयत्क्रत्वानशरदःपृणैथे ॥ २ ॥

प्र। वाम्। सः। मित्रावरुणौ। ऋतऽवा। विप्रः। मन्मानि।
दीर्घऽश्रुत्। इयर्ति। यस्य। ब्रह्माणि। सुक्रतू इति सुऽक्रतू।
अवाथः। आ। यत्। क्रत्वा। न। शरदः। पृणैथे इति ॥ २ ॥

हे मित्रावरुणौ वां युवयोर्मन्मानि मननीयानि स्तोत्राणि सः प्रसिद्धः विप्रोमेधावी ऋतवा यज्ञवान् दीर्घश्रुत् चिरकालं श्रोता एवमुक्तलक्षणोवसिष्ठः प्रेयर्ति प्रेरयति यस्य ऋषेः ब्रह्मा-

णि परिवृढानि स्तोत्राणि हे सुक्रतू शोभनकर्माणौ अवाथोरक्षथः यत्कृत्वा न कर्म शरदोबहून्संवत्सरान् आपृणैथे आपूरयेथे सउदियर्ति ॥ २ ॥

२. मित्र और वरुण, वह याज्ञिक, विप्र (प्रसिद्ध ब्राह्मण) और चिर श्रोता वसिष्ठ तुम दोनों के लिए मननीय स्तुति करते हैं। तुम दोनों शोभन कर्मवाले हो। वसिष्ठ के स्तोत्र की रक्षा करते हो। तुम बहुत वर्षों से वसिष्ठ के कर्म को पूरण करते आ रहे हो।

प्रोरोर्मित्रावरुणापृथिव्याःप्रदिवऋष्वाद्बृहतःसुदानू।
स्पशोदधाथेओषधीषुविक्ष्वृधग्यतोअनिमिषंरक्षमाणा ॥ ३ ॥

प्र। उरोः। मित्रावरुणा। पृथिव्याः। प्र। दिवः। ऋष्वात्।
बृहतः। सुदानू इति सुऽदानू। स्पशः। दधाथे इति। ओषधीषु।
विक्षु। ऋधक्। यतः। अनिऽमिषम्। रक्षमाणा ॥ ३ ॥

हे मित्रावरुणा मित्रावरुणौ युवां उरोर्विस्तीर्णायाः पृथिव्याअपि प्रपरिरिचाथे अस्येदेव प्ररिरिचे इत्यादिषु प्रशब्दस्य रिरिच इत्यनेन सह संबन्धदर्शनादत्राप्युचितक्रियाध्याहारेण रिरिचेइतियोज्यम्।तथा ऋष्वात् गुणैर्महतो बृहतः स्वरूपतोतिमहतोदिवोद्युलोकादपि प्ररिरिचाथे हे सुदानू शोभनदानौ किञ्च ओषधीषु विक्षु प्रजासु निमित्तभूतासु प्रजासु चेतिवा स्पशोरूपं दधाथे धारयेथे किंकुर्वन्तौ ऋधक् सत्येन यतः विवेकात् सत्येन गच्छतो जनान् अनिमिषं अव्यवधानेन सर्वदा रक्षमाणा पालयन्तौ ॥ ३ ॥

३. मित्र और वरुण, तुमने विस्तृत पृथिवी की परिक्रमा की है और गुणों तथा स्वरूप से विशाल द्युलोक की भी प्रदक्षिणा कर डाली है। हे शोभनदाता, तुम ओषधियों और प्रजा के लिए रूप धारण करते हो। तुम निर्निमेष भाव से सन्मार्गगामी का पालन करते हो।

शंसामित्रस्यवरुणस्यधामशुष्मोरोदसीबद्बधेमहित्वा।
अयन्मासाअयज्वनामवीराःप्रयज्ञमन्माव्रजनंतिराते ॥ ४ ॥

शंस। मित्रस्य। वरुणस्य। धाम। शुष्मः। रोदसी इति।
बद्बधे। महिऽत्वा। अयन्। मासाः। अयज्वनाम्।
अवीराः। प्र। यज्ञऽमन्मा। वृजनम्। तिराते ॥ ४ ॥

हे ऋषे मित्रस्य वरुणस्य च धाम तेजः स्थानं शंस स्तुहि ययोर्देवयोः शुष्मोबलं रोदसी द्यावापृथिव्यौ सहवर्तमाने महित्वा स्वमहत्त्वेन बद्बधे बध्नाति पृथक्स्थापयति इयं पृथिवी इयं द्यौरिति पृथक्करोति द्यावापृथिवीसहास्तामितिश्रुतेः। अयज्वनांअननुष्ठातॄणां मासाः कालावयवाः

१ ऋ० सं० १. ४. २८। २ तै० ब्रा० ३. २. ६।

अवीराअपुत्राएवायन् यन्तु गच्छन्तु तद्विपरीतो यज्ञमन्मा यज्ञार्थं मतिमान् यज्वा वृजनं बलं प्रतिराते प्रवर्धयतु प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ ४ ॥

४. ऋषि, तुम मित्र और वरुण के तेज की स्तुति करो। अपनी महिमा से मित्र और वरुण का बल द्यावा-पृथिवी को अलग-अलग रक्खे हुए हैं। यज्ञ न करनेवालों के महीने पुत्र से रहित होकर बीतें। यज्ञ-बुद्धि पुरुष-बल बढ़ावें।

अमूराविश्वावृषणाविमावांनयासुचित्रंददृशेनयक्षम्।
द्रुहःसचन्तेअनृताजनानांनवांनिण्यान्यचितेअभूवन् ॥ ५ ॥

अमूरा। विश्वा। वृषणौ। इमाः। वाम्। न। यासु। चित्रम्।
ददृशे। न। यक्षम्। द्रुहः। सचन्ते। अनृता। जनानाम्।
न। वाम्। निण्यानि। अचिते। अभूवन् ॥ ५ ॥

हे अमूरा अमूढौ विश्वा व्याप्तौ हे वृषणौ वर्षितारौ वां युवाभ्यां इमा इमानि स्तुतिवचांसि क्रियन्ते यासु स्तुतिषु चित्रं आश्चर्यं न ददृशे न दृश्यते न यक्षं न पूजा दृश्यते युवाभ्यां महिम्नोपि महत्वाद् प्रयत्नेन क्रियमाणमपि स्तोत्रं न चमत्करोतीत्यर्थः। जनानां अनृता अस्तुत्यविषयाणिस्तोत्राणि द्रुहोद्रोग्धारः सचन्ते सेवन्ते न महान्तः वां युवाभ्यां क्रियमाणानि निण्यानि अन्तर्हितानि रहस्यान्यपि स्तोत्राणि अचिते अज्ञानाय न अभूवन्न भवन्ति ॥ ५ ॥

५. हे प्राज्ञ, व्यापक और मनोरथवर्षी मित्र और वरुण, तुम्हारी स्तुति में आश्चर्य, यज्ञ और पूजा कुछ भी नहीं दिखाई देता। द्रोही लोग मनुष्यों की मिथ्या स्तुति का सेवन करते हैं। तुम दोनों के द्वारा किये जाते हुए रहस्यमय स्तोत्र अज्ञान के लिए न हों।

समुवांयज्ञंमहयन्नमोभिर्हुवेवांमित्रावरुणासबाधः।
प्रवांमन्मान्यृचसेनवानिकृतानिब्रह्मजुजुषन्निमानि ॥ ६ ॥

सम्। ऊँ इति। वाम्। यज्ञम्। महयम्। नमःऽभिः। हुवे।
वाम्। मित्रावरुणा। सऽबाधः। प्र। वाम्। मन्मानि।
ऋचसे। नवानि। कृतानि। ब्रह्म। जुजुषन्। इमानि ॥ ६ ॥

हे मित्रावरुणौ वां युवयोर्यज्ञं नमोभिर्नमस्कारैः स्तुतिभिः समुमहयं संपूजयाम्यहं तदर्थं हे मित्रावरुणा मित्रारुवणौ वां सबाधोबाधायुक्तोहं हुवे आह्वयामि बाधापरिहाराय वां युवां ऋचसे सेवितुं नवानि नूतनानि स्तुत्यानि वा मन्मानि स्तोत्राणि प्रभवन्त्वित्यध्याहारः कृतानि मया समूहीकृतानि इमानीदानीं क्रियमाणानि ब्रह्म परिवृढानि स्तोत्राणि युवां जुजुषन् प्रीणयन्तु ॥ ६ ॥

६. मित्र और वरुण, नमस्कार-द्वारा तुम्हारे यज्ञ की पूजा करता हूँ। मित्र और वरुण, मैं बाधा-सम्पन्न होकर तुम दोनों को बुलाता हूँ। तुम्हारी सेवा के लिए नये स्तोत्र बनाये जायें। मेरे द्वारा इकट्ठा किया हुआ स्तोत्र तुम्हें प्रसन्न करे।

इयंदेवपुरोहितिर्युवभ्यांयज्ञेषुमित्रावरुणावकारि।
विश्वानिदुर्गापिपृतंतिरोनोयूयंपातस्वस्तिभिःसदानः ॥ ७ ॥ ३

इयम्। देवा। पुरःऽहितिः। युवऽभ्याम्। यज्ञेषु। मित्रावरुणौ।
अकारि। विश्वानि। दुःऽगा। पिपृतम्। तिरः। नः।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ७ ॥ ३ ॥

इयंदेवेतिसप्तमीगता ॥ ७ ॥

७. मित्र और वरुण, तुम दोनों के यज्ञ में यह स्तुति की गई है। इसकी सेवा करके हमारी सारी दुरन्त विपत्तियों को दूर करते हुए हमें पार लगाओ। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य पञ्चमे तृतीयोवर्गः ॥ ३ ॥

उत्सूर्यइति षळृचं सप्तमं सूक्तं अत्रानुक्रमणिका—उत्सूर्यः षळाद्यास्तिस्रः सौर्यइति वसिष्ठऋषिः त्रिष्टुप्छन्दः आद्यास्तिस्रः सूर्यदेवत्याः शिष्टामित्रावरुणदेवत्याः सूक्तविनियोगो-लैङ्गिकः।

तत्र प्रथमा—

उत्सूर्योबृहदर्चींष्यश्रेत्पुरुविश्वाजनिममानुषाणाम्।
समोदिवाददृशेरोचमानःक्रत्वाकृतःसुकृतःकर्तृभिर्भूत् ॥ १ ॥

उत्। सूर्यः। बृहत्। अर्चींषि। अश्रेत्। पुरु। विश्वा। जनिम।
मानुषाणाम्। समः। दिवा। ददृशे। रोचमानः। क्रत्वा।
कृतः। सुऽकृतः। कर्तृऽभिः। भूत् ॥ १ ॥

सूर्यः सर्वस्यप्रेरकोदेवः बृहत् अत्यधिकं पुरु पुरूणि बहूनि अर्चींषि तेजांसि उदश्रेत् ऊर्ध्वं श्रयति किंमति मानुषाणां मनुष्याणां विश्वा सर्वाणि जनिमा जनिमानि जनान् जनशब्दःसंघवचनः तान् प्रत्युदश्रेत् सदेवोदिवा अहनि रोचमानः सन् समोददृशे एकरूपः प्रतिनियतः सन् दृश्यते तस्मात्पुरुषं पुरुषं प्रत्यादित्योभवतीति हिश्रुतिः। सदेवः क्रत्वा सर्वस्यकर्ता कृतः संपादितः प्रजापतिना कर्तृभिः स्तुतिकर्तृभिः सुकृतःस्तुत्या तीक्ष्णीकृतोभूत् भवति ॥१॥

१. सूर्य अत्यधिक और प्रभूत तेज का ऊर्द्ध्वमुख होकर आश्रय करें। वे मनुष्यों के सभी जनों का आश्रय करें। वे दिन में रुचिकर होकर एकरूप दिखाई देते हैं। वे सबके कर्ता, कृत और प्रजापति-द्वारा तेज होते हैं।

ससूर्यप्रतिपुरोनउद्गाएभिःस्तोमेभिरेतशेभिरेवैः।
प्रनोमित्रायवरुणायवोचोनागसोअर्यम्णेअग्नयेच ॥ २ ॥

सः। सूर्य। प्रति। पुरः। नः। उत्। गाः। एभिः। स्तोमेभिः। एतशेभिः। एवैः। प्र। नः। मित्राय। वरुणाय। वोचः। अनागसः। अर्यम्णे। अग्नये। च ॥ २ ॥

हे सूर्य सः प्रसिद्धस्त्वं नोस्मान् प्रति पुरः पुरस्तात् उद्गाः उद्गच्छ कैः साधनैः एभिः स्तोमेभिः स्तोमैः स्तुत्यैः एतशेभिः एतवर्णैः स्वार्थिकः शकारः। यौ जरन्ता युवशा ता। पुरुषः कृष्णशवास्युत्तरेतइत्यादिवत्। तादृशैः एवैर्गमनशीलैरश्वैरुद्गाः अथ तथा कृत्वा अस्माभिः स्तुतः सन् नोस्मान् अनागसःअपापान् प्रवोचः केभ्यः मित्राय वरुणायार्यम्णे अग्नये च। अत्र सौर्ये इतरेषां मित्रादीनां संकीर्तनं तेषामपि निपातभाक्त्वादविरुद्धं एवंपूर्वोत्तरत्रच मैत्रावरुणेर्यमादीनांसंकीर्तनमपि न विरुध्यते ॥ २ ॥

२. सूर्य, तुम स्तोत्रों-द्वारा हरिद् वर्ण और गमनशील अश्वोंसे, ऊर्द्ध्व-मुख होकर, प्रत्येक के सम्मुख गमन करो। तुम मित्र, वरुण, अर्यमा और अग्नि के पास हमें निरपराध कहना।

अथ तृतीया—

विनःसहस्रंशुरुधोरदन्त्वृतावानोवरुणोमित्रोअग्निः।
यच्छन्तुचन्द्राउपमंनोअर्कमानःकामंपूपुरन्तुस्तवानाः ॥ ३ ॥

वि। नः। सहस्रम्। शुरुधः। रदन्तु। ऋतऽवानः। वरुणः। मित्रः। अग्निः। यच्छन्तु। चन्द्राः। उपऽमम्। नः। अर्कम्। आ। नः। कामम्। पूपुरन्तु। स्तवानाः ॥ ३ ॥

नोस्मभ्यं शुरुधः शुचेर्दुःखस्य प्रतिरोद्धारः ऋतावानः सत्यवन्तोवरुणादयः सहस्रं सहस्रसंख्याकं धनं विरदन्तु वितरन्तु अथवा शुरुधउक्तलक्षणाः सहस्रसङ्ख्याकाः ओषधीरदन्तु। किञ्च ते चन्द्राः आह्लादकारिणो नोस्मभ्यं उपमं स्तुत्यं अर्कमर्चनीयं यच्छन्तु। किंच स्तवाना अस्माभिः स्तूयमानानोस्माकं काममपेक्षितं पूपुरन्तु पूरयन्तु। हे सूर्य त्वया अनुज्ञाताइति सूर्यस्य स्तुतिः ॥ ३ ॥

---

१ ऋ० सं० २. ३. ५.। १ ऐ० ब्रा० ५. १४.।

३. दुःख को रोकनेवाले और सत्यवान् वरुण, मित्र और अग्नि हमें सहस्र-संख्यक धन दें। वे प्रसन्नता-दायक हैं। हमें स्तुत्य और पूजनीय वस्तु दें। हमारे द्वारा स्तुति किये जाने पर हमारी अभिलाषा पूर्ण करें।

द्यावाभूमीअदितेत्रासीथांनोयेवांजज्ञुःसुजनिमानऋष्वे।
माहेळेभूमवरुणस्यवायोर्मामित्रस्यप्रियतमस्यनृणाम् ॥ ४ ॥

द्यावाभूमी इति। अदिते। त्रासीथाम्। नः। ये। वाम्।
जज्ञुः। सुऽजनिमानः। ऋष्वे इति। मा। हेळे। भूम। वरुणस्य।
वायोः। मा। मित्रस्य। प्रियऽतमस्य। नृणाम् ॥ ४ ॥

हे द्यावाभूमी द्यावापृथिव्यौ हे अदिते अखण्डनीये एतत् द्यावाभूम्योरेवैकवचनेन संबोधनं हे ऋष्वे महन्नामैतत् हे महत्यौ नोस्मान् त्रासीथां रक्षतं। ये वयं सुजनिमानः शोभन-जन्मानोवां युवां जज्ञुः ज्ञातवन्तः स्म। किञ्च वयं वरुणस्य हेळे क्रोधे माभूम तथा वायो-र्माभूम तथा नृणां स्तुतिनेतॄणां मनुष्याणां प्रियतमस्य मित्रस्य हेळे माभूम ॥ ४ ॥

४. हे द्यावा-पृथिवी, अदिति और महान् हमारी रक्षा करो। हम सुन्दर जन्मवाले हैं। तुम्हें हम जानते हैं। हम वरुण, वायु और नेताओं (मनुष्यों) के प्रियतम मित्र के क्रोध में न पड़ें।

प्रबाहवेति पञ्चमी मैत्रावरुणे पशौ पुरोडाशस्य याज्या सूत्रितंच—प्रबाहवासिसृतंजी-वसेनोयद्वंहिष्ठंनातिविधेसुदानूइति। तत्पाठस्तु।

अथ पञ्चमी—

प्रबाहवासिसृतंजीवसेनआनोगव्यूतिमुक्षतंघृतेन।
आनोजनेश्रवयतंयुवानाश्रुतंमेमित्रावरुणाहवेमा ॥ ५ ॥

प्र। बाहवा। सिसृतम्। जीवसे। नः। आ। नः। गव्यूतिम्।
उक्षतम्। घृतेन। आ। नः। जने। श्रवयतम्। युवाना।
श्रुतम्। मे। मित्रावरुणा। हवा। इमा ॥ ५ ॥

हे मित्रावरुणा मित्रावरुणौ देवौ बाहवा युवाभ्यां बाहू प्रसिसृतं प्रसारयतं हविःस्वी-काराय धनप्रदानायवा। किमर्थमिति नोजीवसे अस्माकं जीवनाय किञ्च नोस्माकं गव्यूतिं गावोयन्ति गच्छंति अत्रेति गव्यूतिर्गोमार्गभूमिः तां तृणादिप्ररोहाय घृतेनोदकेन आसमन्तात् उक्षतं सिञ्चतं किञ्च नोस्मान् जने अस्मत्समाने मनुष्यसमूहे वा नोस्मान् आश्रवयतं विश्रुतं कुरुतम्। हे युवाना नित्ययौवनौ सर्वत्रव्याप्तौ वा युवां मे मम इमा इमानि हवा आह्वाना-नि श्रुतं शृणुतम् ॥ ५ ॥

५. मित्र और वरुण, अपनी बाँहें पसारो। हमारे जीवन के लिए हमारी गोमार्ग-भूमि को जल-द्वारा सिक्त करो। मनुष्यों के बीच हमें विख्यात करो। तुम लोग नित्य तरुण हो। हमारा यह आह्वान सुनो।

नूमित्रोवरुणोअर्यमानस्त्मनेतोकायवरिवोदधन्तु।
सुगानोविश्वासुपथानिसन्तुयूयंपातस्वस्तिभिःसदानः ॥ ६ ॥४॥

नु। मित्रः। वरुणः। अर्यमा। नः। त्मने। तोकाय। वरिवः। दधन्तु। सुऽगा। नः। विश्वा। सुऽपथानि। सन्तु। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ६ ॥ ४ ॥

मित्रोवरुणोर्यमाचैते त्रयोदेवा नु अद्य नोस्माकं त्मने आत्मने आत्महिताय तोकाय-पुत्राय च वरिवोधनं दधन्तु प्रयच्छन्तु नोस्माकं विश्वा सर्वाणि गन्तव्यानि सुगा सुगमनानि सुपथानि च सन्तु भवन्तु शिष्टं गतम् ॥ ६ ॥

६. मित्र, वरुण और अर्यमा, हमारे लिए और पुत्र के लिए धन प्रदान करो। हमारे लिए सभी गन्तव्य स्थान सुगम और सुपथ हों। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य पञ्चमे चतुर्थोवर्गः ॥ ४ ॥

उद्वेतीति षळृचमष्टमंसूक्तम् वसिष्ठस्यार्षं त्रैष्टुभम् आद्याश्चतस्रः पञ्चम्याःपूर्वार्धश्च सूर्य-देवत्याः अवशिष्टास्त्रयोर्धर्चोमित्रावरुणदेवत्याः तथाचानुक्रान्तम्—उद्वेतीतिचार्धपञ्चमाइति। विनियोगोलैङ्गिकः।

उद्वेतिसुभगोविश्वचक्षाःसाधारणःसूर्योमानुषाणाम्।
चक्षुर्मित्रस्यवरुणस्यदेवश्चर्मेवयःसमविव्यक्तमांसि ॥ १ ॥

उत्। ऊँ इति। एति। सुऽभगः। विश्वऽचक्षाः। साधारणः। सूर्यः। मानुषाणाम्। चक्षुः। मित्रस्य। वरुणस्य। देवः। चर्मऽइव। यः। सम्ऽअविव्यक्। तमांसि ॥ १ ॥

उद्वेति उद्गच्छत्ययंसूर्यः सुभगः शोभनभाग्यः सुष्ठु भजनीयोवा विश्वचक्षाः सर्वस्यद्र-ष्टा मानुषाणां सर्वेषां मनुष्याणां साधारणः साधारणत्वप्रतिपादकश्रुतिः पूर्वमुदाहृता मित्रस्य वरुणस्य च चक्षुः प्रकाशकः देवोद्योतमानः योदेवश्चर्मेव चर्माणीव तमांसि समविव्यक् सह विचति संवेष्टयति समहानुभावोदेवः उद्वेति ॥ १ ॥

१. शोभन-भाग्य, सर्वदर्शक, सभी मनुष्यों के लिए साधारण, मित्र और वरुण के नेत्र-स्वरूप तथा प्रकाशमान सूर्य उग रहे हैं। सूर्य चमड़े की तरह अन्धकार को संवेष्टित करते हैं।

अथ द्वितीया—

उद्वेति प्रसवीता जनानां महान्केतुरर्णवः सूर्यस्य ।
समानं चक्रं पर्याविवृत्सन्यदेतशो वहति धूर्षु युक्तः ॥ २ ॥

उत् । ऊँ इति । एति । प्रऽसविता । जनानाम् । महान् । केतुः ।
अर्णवः । सूर्यस्य । समानम् । चक्रम् । परिऽआविवृत्सन् । यत् ।
एतशः । वहति । धूःऽसु । युक्तः ॥ २ ॥

अयं सूर्यस्य सूर्यः विभक्तिव्यत्ययः उद्वेति उद्गच्छति कीदृशोयं जनानां सर्वेषां प्रसविता सर्वेषु कर्मस्वनुज्ञाता महान् पूज्यः केतुः सर्वस्य प्रज्ञापकः अर्णवः उदकप्रदः। किं कुर्वन्नुदेतीति उच्यते समानं सर्वेषामेकरूपं एकमेवचक्रं रथाङ्गं चरणशीलं रथं वा पर्याविवृत्सन् पर्यावर्तयितुमिच्छन् यद्रथचक्रं धूर्षु रथस्य युक्त एतशः एतशवर्णो हरितवर्णोश्वोवहति एकोअश्वोवहतिसप्तनामेत्युक्तम् ॥ २ ॥

२. मनुष्यों के उत्पादक, महान्, सबके सूचक और जलप्रद यह सूर्य सबके एक मात्र चक्र को परिवर्तित करने की इच्छा करके उगते हैं। रथ में नियुक्त हरिद् वर्ण अश्व सूर्य को ढोते हैं।

विभ्राजमान उषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः ।
एष मे देवः सविता चच्छन्द यः समानं न प्रमिनाति धाम ॥ ३ ॥

विऽभ्राजमानः । उषसाम् । उपऽस्थात् । रेभैः । उत् । एति ।
अनुऽमद्यमानः । एषः । मे । देवः । सविता । चच्छन्द ।
यः । समानम् । न । प्रऽमिनाति । धाम ॥ ३ ॥

अयं सूर्योविभ्राजमानोविशेषेणदीप्यमानः उषसामुपस्थात् उपस्थे मध्ये रेभैः स्तोतृभिरनुमद्यमानः सन्नुदेति किञ्च एषदेवोद्योतमानः सविता मे मह्यं चच्छन्द उपच्छन्दयति कामान्। एषइत्युक्तं कइति योदेवः समानं सर्वेषां प्राणिनामेकरूपं धाम स्वीयं तेजः स्थानं न प्रमिनाति नहिनस्ति न संकोचयति सदेवउदेतीति ॥ ३ ॥

३. अतीव प्रकाशमान ये सूर्य स्तोताओं के स्तोत्रों को सुनने में प्रमत्त होकर उषाओं के बीच उगते हैं। ये हमें अभिलषित पदार्थ देते हैं। ये सबके लिए समान हैं। अपने तेज को संकुचित नहीं करते।

---

1 ऋ० सं० २. ३. १४.।

अथ चतुर्थी—

दिवोरुक्मउरुचक्षाउदेतिदूरेअर्थस्तरणिर्भ्राजमानः ।
नूनंजनाःसूर्येणप्रसूताअयन्नर्थानिकृणवन्नपांसि ॥ ४ ॥

दिवः । रुक्मः । उरुऽचक्षाः । उत् । एति । दूरेऽअर्थः ।
तरणिः । भ्राजमानः । नूनम् । जनाः । सूर्येण । प्रऽसूताः ।
अयन् । अर्थानि । कृणवन् । अपांसि ॥ ४ ॥

अयं सूर्योरुक्मोरोचमानः उरुचक्षाः प्रभूततेजाश्चसन् दिवोन्तरिक्षादुदेति यद्वा दिवोन्तरिक्षस्य रुक्मआभरणस्थानीयः कीदृशोयं दूरेअर्थः दूरेगन्ता अर्थोर्तेः दूरे प्रार्थ्यमानोवा तरणिस्तारकः भ्राजमानोदीप्यमानः सन्नुदेति नूनं निश्चयं जनाः सर्वे प्राणिनः सूर्येण प्रेरकेण देवेन प्रसूताः अनुज्ञाताः प्रेरिताः सन्तःअयन् अर्थानि गंतव्यानि अनुष्ठेयानि अपांसि कर्माणि कृणवन् कुर्वन्ति ॥ ४ ॥

४. ये दूरगामी, त्राता और दीप्तिमान् सूर्य शोभन और बहु-तेजः-सम्पन्न होकर अन्तरिक्ष में उदित होते हैं। जीवगण निश्चय ही सूर्य से उत्पन्न होकर कर्त्तव्य-कर्म करते हैं।

यत्राचक्रुरमृतागातुमस्मैश्येनोनदीयन्नन्वेतिपाथः ।
प्रतिवांसूरउदितेविधेमनमोभिर्मित्रावरुणोतहव्यैः ॥ ५ ॥

यत्र । चक्रुः । अमृताः । गातुम् । अस्मै । श्येनः । न ।
दीयन् । अनु । एति । पाथः । प्रति । वाम् । सूरे । उत्ऽइते ।
विधेम । नमःऽभिः । मित्रावरुणा । उत । हव्यैः ॥ ५ ॥

यत्र यस्मिन्नन्तरिक्षे अमृता अमरणधर्माणः पूर्वेदेवा अस्मै सूर्याय गातुं मार्गं चक्रुः अकुर्वन् तत्पाथोन्तरिक्षं अन्वेति अनुगच्छति कइव दीयन् गच्छन् श्येनोन शंसनीयगमनोगृध्रइव अयमर्धर्चः सौर्यइत्युक्तम् हे मित्रावरुणा मित्रावरुणौ वां युवां सूरे सूर्ये उदिते सति प्रातःसवने नमोभिर्नमस्कारैः स्तुतिभिः उतापिच हव्यैः हविर्भिश्च प्रतिविधेम परिचरेम ॥ ५ ॥

५. अमर देवों ने जहां इन सूर्य के लिए मार्ग बनाया था, वह मार्ग गति-परायण गृद्ध की तरह अन्तरिक्ष का अनुगमन करता है। मित्र और वरुण, सूर्योदय होने पर प्रातःसवन में नमस्कार और हव्य-द्वारा तुम्हारी हम सेवा करेंगे।

अथ षष्ठी—

नूमित्रोवरुणोअर्यमानस्त्मनेतोकायवरिवोदधन्तु ।
सुगानोविश्वासुपथानिसन्तुयूयंपातस्वस्तिभिःसदानः ॥ ६ ॥ ५ ॥

नु । मि॒त्रः । वरु॑णः । अ॒र्य॒मा । न॒ः । त्मने॑ । तो॒काय॑ । वरि॑वः ।
द॒ध॒न्तु॒ । सु॒ऽगा । न॒ः । विश्वा॑ । सु॒ऽपथा॑नि । स॒न्तु॒ । यू॒यम् ।
पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ॥ ६ ॥ ५ ॥

नूमित्रइतिषष्ठीगता ॥ ६ ॥

६. मित्र, वरुण और अर्यमा हमारे लिए और पुत्र के लिए धन दें। हमारे सारे गन्तव्य सुगम और सुपथ हों। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य पञ्चमे पंचमोवर्गः ॥ ५ ॥

दिविक्षयन्तेति पंचर्चं नवमं सूक्तं वसिष्ठस्यार्षं मैत्रावरुणम्। दिविपंचेत्यनुक्रमणिका। तृतीयेछन्दोमे प्रउगशस्त्रे आद्यस्तृचोमैत्रावरुणस्य सूत्रितं च—दिविक्षयन्तारजसः पृथिव्या माविश्ववाराश्विनागतंनइति। तत्र प्रथमा—

दि॒वि क्षय॑न्ता॒ रज॑सः पृथि॒व्यां प्र वां॑ घृ॒तस्य॑ नि॒र्णिजो॑ ददीरन्।
ह॒व्यं नो॑ मि॒त्रो अ॑र्य॒मा सु॒जा॑तो॒ राजा॑ सु॒क्ष॒त्रो वरु॑णो जु॒षन्त ॥ १ ॥

दि॒वि । क्षय॑न्ता । रज॑सः । पृ॒थि॒व्याम् । प्र । वा॒म् । घृ॒तस्य॑ ।
नि॒ःऽनिजः॑ । द॒दी॒र॒न् । ह॒व्यम् । न॒ः । मि॒त्रः । अ॒र्य॒मा ।
सु॒ऽजा॑तः । राजा॑ । सु॒ऽक्ष॒त्रः । वरु॑णः । जु॒ष॒न्त॒ ॥ १ ॥

दिवि द्युलोकेन्तरिक्षे पृथिव्यांच वर्तमानस्य रजसः उदकस्य क्षयन्ता क्षयतिरैश्वर्यकर्मा स्वामिनौ भवथः हे मित्रावरुणौ वां युवाभ्यां प्रेरितामेघाःघृतस्यनिर्णिजःउदकस्यरूपाणिददी-रन् ददते प्रयच्छन्ति अथवा वां युवाभ्यां घृतस्य निर्णिजः रूपाणि घृतानीत्यर्थःतानि ददीरन् दीयन्ते नोस्माकं संबन्धि हव्यं मित्रः सुजातः सुष्ठुप्रादुर्भूतः अर्यमाराजा सर्वस्य स्वामी सुक्षत्रः शोभनबलोवरुणश्चैते जुषन्त सेवन्ताम् ॥ १ ॥

१. मित्र और वरुण, तुम लोग द्युलोक और पृथिवी में जल के स्वामी हो। तुम्हारे द्वारा प्रेरित मेघ जल को रूप देता है। मित्र, सुजन्मा अर्यमा, राजा और बली वरुण हमारे हव्य को आश्रित करें।

आ रा॑जाना मह ऋतस्य गो॒पा सिन्धु॑पती क्षत्रिया यातम॒र्वाक्।
इळां॑ नो मित्रावरुणो॒त वृ॒ष्टिमव॑ दि॒व इ॑न्वतं जीरदानू ॥ २ ॥

आ । रा॒जा॒ना॒ । म॒हः॒ । ऋ॒तस्य॑ । गो॒पा॒ । सिन्धु॑पती॒ इति॑
सिन्धु॑ऽपती । क्ष॒त्रि॒या॒ । या॒त॒म् । अ॒र्वाक् । इळा॑म् । न॒ः ।
मि॒त्रा॒व॒रु॒णा॒ । उ॒त । वृ॒ष्टिम् । अव॑ । दि॒वः । इ॒न्व॒त॒म्।
जी॒र॒दा॒नू॒ इति॑ जीर॑ऽदानू ॥ २ ॥

हे राजाना सर्वस्यस्वामिनौ हे महोमहत ऋतस्योदकस्य यज्ञस्य गोपा गोपायितारौ सुबामन्त्रितेपराङ्गवत्स्वरेइति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य निघातत्वम्। हे सिन्धुपती नद्याः पालयितारौ हे क्षत्रिया बलवन्तौ युवां अर्वागस्मदभिमुखं आयातमागच्छतम्। किंच हे मित्रावरुणा मित्रावरुणौ हे जीरदानू क्षिप्रदानौ युवां नोस्मभ्यं इळामन्नं उतापिच पुष्टिं तत्साधकां वृष्टिं च दिवोन्तरिक्षात् अव अवस्तात् इन्वतं प्रेरयतम् ॥ २ ॥

२. तुम लोग राजा, महायज्ञ के रक्षक, सिन्धुपति (नदी-पालक) और क्षत्रिय (वीर) हो। हमारे सामने पधारो। हे शीघ्रदानी मित्र और वरुण, अन्तरिक्ष से हमें अन्न और वृष्टि भेजो।

मि॒त्रस्तन्नो॒वरु॑णोदे॒वोअ॒र्यः प्रसाधि॑ष्ठेभिःप॒थिभि॑र्नयन्तु।
ब्रव॒द्यथा॑न॒आद॒रिःसु॒दास॑इ॒षाम॑देमस॒हदे॒वगो॑पाः ॥ ३ ॥

मि॒त्रः। तत्। न॒ः। वरु॑णः। दे॒वः। अ॒र्यः। प्र। साधि॑ष्ठेभिः।
प॒थिऽभिः। न॒य॒न्तु॒। ब्रव॑त्। यथा॑। न॒ः। आत्। अ॒रिः।
सु॒ऽदासे॑। इ॒षा। म॒दे॒म॒। स॒ह। दे॒वऽगो॑पाः ॥ ३ ॥

मित्रोवरुणोदेवोर्योर्यमा चैते त्रयोपि नोस्मान् तत् तदा यदास्माकं अपेक्षितं तदा साधिष्ठेभिः साधकतमैः पथिभिर्मार्गैः प्रणयन्तु प्रापयन्तु किंच नोस्मान् सुदासे शोभनदानाय जनाय अरिरर्यमा यथा ब्रवत् असौ अनुकंप्यइति ब्रूयात् तथा कुर्वन्तु अर्यम्णः पुनरभिधानमादरार्थं देवगोपाः देवायूयं गोपायितारोयेषामस्माकं ते वयं इषा युष्माभिर्दातव्येनान्नेन सह पुत्रादिसहिता मदेम हृष्येम ॥ ३ ॥

३. मित्र, वरुण और अर्यमा हमें उत्तम मार्ग-द्वारा, जब चाहें, ले जायें। अर्यमा सुन्दर दाता के पास हमारी कथा कहें। तुम्हारे द्वारा रक्षित होकर हम अन्न-द्वारा, पुत्र-पौत्रादि के साथ, प्रमत्त हों।

अथ चतुर्थी—

योवां॒गर्त॒मन॑सा॒तक्ष॒दे॒तमू॒र्ध्वांधी॒तिंकृ॒णव॒द्धा॒रय॑च्च।
उ॒क्षेथां॑मित्रावरुणाघृ॒तेन॒ताराजानासुक्षि॒तीस्त॒र्पये॑थाम् ॥ ४ ॥

यः। वा॒म्। गर्त॑म्। मन॑सा। तक्ष॑त्। ए॒तम्। ऊ॒र्ध्वाम्।
धी॒तिम्। कृ॒णव॑त्। धा॒रय॑त्। च॒। उ॒क्षेथा॑म्। मि॒त्रा॒व॒रु॒णा॒।
घृ॒तेन॑। ता। रा॒जा॒ना॒। सु॒ऽक्षि॒तीः। त॒र्पये॑था॒म् ॥ ४ ॥

हे मित्रावरुणौ योवां युवयोरेतं गर्तं रथं मनसा तक्षत् स्तोमेन संकल्पयेत् तथा कृत्वा ऊर्ध्वां उन्नतां धीतिं कर्म स्तुतिरूपं कृणवत् कुर्यात् उच्चैःस्तुयात् एवं कृत्वा धारयच्च यागे धारयेत् हे राजाना स्वामिनौ मित्रावरुणा मित्रावरुणौ ता तौ युवां जनं घृतेनोदकेन उक्षेथां सिंचतं तस्मै सुक्षितीः शोभननिवासाः प्रजाः तर्पयेथां यथा सुक्षितयोभवन्ति तथातर्पयेथामिति ॥ ४ ॥

४. मित्र और वरुण, जिसने मन के द्वारा तुम्हारे इस रथ का निर्माण किया है, जो उच्च कर्म करता है और जो यज्ञ में तुम्हें धारण करता है— तुम लोग राजा हो, उसे जल-द्वारा सिक्त करो और उसे सुन्दर निवास प्रदान कर तृप्त करो ।

एषःस्तोमोवरुणमित्रतुभ्यंसोमःशुक्रोनवायवेयामि ।
अविष्टंधियोजिगृतंपुरंधीर्यूयंपातस्वस्तिभिःसदानः ॥ ५ ॥ ६ ॥

एषः । स्तोमः । वरुण । मित्र । तुभ्यम् । सोमः । शुक्रः । न ।
वायवे । अयामि । अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥ ६ ॥

अनया स्तुतिमुपसंहरति हे वरुण हे मित्र तुभ्यं युवयोः वायवे वायुर्गन्ता आदित्यः सएवार्यमा तस्मै च एषः स्तोमः स्तवः अयामि अकारि किमिव शुक्रः दीप्तः सोमोन युष्मभ्यं प्रीतिकरः सोमोयथा दीयते तद्वत् धियः कर्माण्यस्मदीयानि अविष्टं रक्षतम् पुरन्धीःस्तुतीः जिगृतं प्रबुध्यतम् । अन्यद्गतम् ॥ ५ ॥

५. मित्र और वरुण, तुम्हारे और वायु के लिए, दीप्त सोम की तरह, यह सोम बनाया गया है । हमारे कर्म में प्रवेश करो, स्तुति को जानो और हमें सदा स्वस्ति-द्वारा पालन करो ।

॥ इति पंचमस्य पञ्चमे षष्ठोवर्गः ॥ ६ ॥

प्रतिवां सूरइति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं मैत्रावरुणं प्रतिवामित्यनुक्रान्तम् द्वितीयेछन्दोमे प्रउगशस्त्रेप्येषस्तृचः सूत्रितंच—प्रतिवांसूरउदितेसूक्तैर्धेनुः प्रत्नस्येति ।

तत्र प्रथमा—

प्रतिवांसूरउदितेसूक्तैर्मित्रंहुवेवरुणंपूतदक्षम् ।
ययोरसुर्यमक्षितंज्येष्ठंविश्वस्ययामन्नाचिताजिगत्नु ॥ १ ॥

प्रति । वाम् । सूरे । उत्ऽइते । सुऽउक्तैः । मित्रम् । हुवे ।
वरुणम् । पूतऽदक्षम् । ययोः । असुर्यम् । अक्षितम् । ज्येष्ठम् ।
विश्वस्य । यामन् । आऽचिता । जिगत्नु ॥ १ ॥

सूरे सूर्ये उदिते प्रातःसवने मित्रं पूतदक्षं शुद्धबलं वरुणं वां सूक्तैः प्रतिहुवे आह्वये ययोर्मित्रावरुणयोः अक्षितं अक्षीणं अतएव ज्येष्ठं असुर्यं बलं आचिता आचिते उपाचिते शूरसंवैरुपेते यामन्यामनि संग्रामे विश्वस्य शत्रुसंघस्य जिगत्नु जेतृ भवति ॥ १ ॥

१. हे मित्र और शुद्ध-बल वरुण, सूर्य के उगने पर तुम दोनों को, सूक्त-द्वारा, मैं आह्वान करता हूँ। इन दोनों का बल अक्षय और प्रचुर है। संग्राम होने पर दोनों विजयी होते हैं।

ताहिदेवानामसुराताववर्यातानःक्षितीःकरतमूर्जयन्तीः।
अश्याममित्रावरुणावयंवांद्यावाचयत्रपीपयन्नहाच ॥ २ ॥

ता। हि। देवानाम्। असुरा। तौ। अर्या। ता। नः।
क्षितीः। करतम्। ऊर्जयन्तीः। अश्याम। मित्रावरुणा।
वयम्। वाम्। द्यावा। च। यत्र। पीपयन्। अहा। च ॥ २ ॥

ता हि तौ खलु देवौ देवानां मध्ये असुरा बलवन्तौ अर्या अर्यौ तौ सर्वस्येश्वरौ ता तौ नोस्माकं क्षितीः पुत्रादिरूपाः प्रजा ऊर्जयन्तीः प्रवृद्धाः करतं कुरुतम्। हे मित्रावरुणा मित्रावरुणौ वयं वां युवां अश्याम व्याप्नुयाम यत्र यस्यां युवयोर्व्याप्तौ द्यावा द्यावापृथिव्यौ सर्वदा तयोः सहभावादयमर्थोलभ्यते अहा च एतद्रात्रेरुपलक्षणम् अहोरात्राणि च पीपयन् अस्मान्प्याययेयुः ॥ २ ॥

२. वे दोनों देव देवों में असुर (बली) हैं। वे आर्य (सबके ईश्वर) हैं। वे हमारी प्रजा को प्रवृद्ध करें। मित्र और वरुण, हम तुम दोनों को व्याप्त करेंगे। तुम्हारी व्यापकता में हमें द्यावापृथिवी दिन-रात आप्यायित करेंगे। अथ तृतीया—

ताभूरिपाशावनृतस्यसेतूदुरत्येतूरिपवेमर्त्याय।
ऋतस्यमित्रावरुणापथावामपोननावादुरितातरेम ॥ ३ ॥

ता। भूरिऽपाशौ। अनृतस्य। सेतू इति। दुरत्येतू इति दुःऽअत्येतू।
रिपवे। मर्त्याय। ऋतस्य। मित्रावरुणा। पथा। वाम्।
अपः। न। नावा। दुःऽइता। तरेम ॥ ३ ॥

ता तौ मित्रावरुणौ भूरिपाशौ प्रभूतबन्धनसाधनपाशोपेतौ अनृतस्य यागरहितस्य सेतू सेतुवत्बन्धकौ रिपवे मर्त्याय वैरिजनाय दुरत्येतू दुरतिक्रमौ भवतः। हे मित्रावरुणा वाहशौ

मित्रावरुणौ वां युवयोर्कृतस्य यज्ञस्य युवयोरर्थायानुष्ठीयमानस्य यागस्य पथा मार्गेण दुरिता दुःखानि तरेम नावा अपोन प्रभूतान्युदकानीव ॥ ३ ॥

३. मित्र और वरुण बहुत पाश (बन्धन) वाले हैं। वे यज्ञ-शून्य व्यक्ति (अनृत) के लिए सेतु की तरह बन्धनकारी हैं। वे शत्रुओं के लिए दुरतिक्रम हैं। मित्र और वरुण, जैसे नौका-द्वारा जल को पार किया जाता है, वैसे ही हम तुम्हारे यज्ञ-मार्ग में पाप से पार पायेंगे।

मैत्रावरुणे पशावानोमित्रावरुणेत्येषा चतुर्थ्यनुवाक्या सूत्रितश्च—आनोमित्रावरुणाहव्यजुष्टिंयुवंवस्त्राणिपीवसावसाथेइति । तत्पाठस्तु—

आनोमित्रावरुणाहव्यजुष्टिंघृतैर्गव्यूतिमुक्षतमिळाभिः ।
प्रतिवामत्रवरमाजनायपृणीतमुद्नोदिव्यस्यचारोः ॥ ४ ॥

आ । नः । मित्रावरुणा । हव्यऽजुष्टिम् । घृतैः । गव्यूतिम् ।
उक्षतम् । इळाभिः । प्रति । वाम् । अत्र । वरम् । आ ।
जनाय । पृणीतम् । उद्नः । दिव्यस्य । चारोः ॥ ४ ॥

हे मित्रावरुणा मित्रावरुणौ नोस्माकं हव्यजुष्टिं हविःसेवनवन्तं यज्ञं आगच्छतमितिशेषः आगत्य चेच्छाभिरन्नैः सह घृतैरुदकैर्गव्यूतिमस्ममदीयां भूमिं उक्षतं सिञ्चतम् वां युवां प्रति अत्रास्मिन् लोके वरं उत्कृष्टं हविः स्तोत्रं वा कः आयच्छेदितिशेषः अतः केवलं कृपयैव जनाय दिव्यस्य दिविभवस्य चारोश्चरणीयस्य उद्नः उदकस्य कर्मणिषष्ठी उक्तलक्षणमुदकं पृणीतम् प्रयच्छतम्॥ ४ ॥

४. मित्र और वरुण हमारे हव्य की सेवा के लिए आवें। अन्न के साथ जल-द्वारा हमारे गोचर-स्थान को सिक्त करें। तुम्हें इस संसार में उत्कृष्ट हव्य कौन देगा? तुम संसार के लिए स्वर्गीय और रमणीय जल दो।

अथ पञ्चमी—

एषःस्तोमोवरुणमित्रतुभ्यंसोमःशुक्रोनवायवेयामि ।
अविष्टंधियोजिगृतंपुरंधीर्यूयंपातस्वस्तिभिःसदानः ॥ ५ ॥७॥

एषः । स्तोमः । वरुण । मित्र । तुभ्यम् । सोमः । शुक्रः । न ।
वायवे । अयामि । अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥ ७ ॥

एषःस्तोमइति पञ्चमी गता ॥ ५ ॥

॥ इति पञ्चमस्य पञ्चमे सप्तमोवर्गः ॥ ७ ॥

५. मित्र और वरुण, तुम्हारे और वायु के लिए, दीप्त सोम की तरह, यह सोम बनाया गया है। हमारे कर्म में प्रवेश करो, स्तुति को जानो और हमें सदा स्वस्ति-द्वारा पालन करो ।

प्रमित्रयोरित्येकोनविंशत्यृचमेकादशं सूक्तं वसिष्ठस्यार्षम् अत्रेयमनुक्रमणिका—प्रमित्रयोरेकोना गायत्रं दशम्याद्यास्त्रयः प्रगाथाः पुरउष्णिक् चतुर्थ्याद्यादशादित्यास्तिस्त्रः सौर्यइति। दशमीबृहती एकादशीसतोबृहती द्वादशीबृहती त्रयोदशीसतोबृहती चतुर्दशीबृहती पञ्चदशीसतोबृहती षोडशीपुरउष्णिक् शिष्टागायत्र्यः चतुर्थ्याद्यास्त्रयोदश्यन्ताः आदित्यदेवताः चतुर्दश्याद्याः स्तिस्त्रः सूर्यदेवत्याः आद्यन्तौतृचौ पूर्ववन्मैत्रावरुणौ अग्निष्टोमेमाध्यन्दिनसवने मैत्रावरुणशस्त्रे आदितोनवर्चः शस्याः प्रमित्रयोर्वरुणयोरितिनवेति सूत्रितत्वात्। पृष्ठ्याभिप्लवषडहयोः स्तोमवृद्धिनिमित्तमावापार्था आद्याःषळृचः सूत्रितश्च—प्रमित्रयोर्वरुणयोरितिषळिति ।

तत्र प्रथमा—

प्रमित्रयोर्वरुणयोःस्तोमोनएतुशूष्यः। नमस्वान्तुविजातयोः॥ १ ॥

प्र । मित्रयोः । वरुणयोः । स्तोमः । नः । एतु । शूष्यः ।
नमस्वान् । तुविऽजातयोः ॥ १ ॥

मित्रयोर्वरुणयोः मित्रावरुणयोरित्यर्थः उभयत्रप्रीतियोगापेक्षया द्विवचनत्वम् तुविजातयोः बहुप्रादुर्भावयोर्देवयोः नोस्मदीयः शूष्यः सुखकरोनमस्वानन्नवान् हविर्भिर्युक्तः स्तोमः स्तोत्रं प्रैतु गच्छतु अहोरात्रेवैमित्रावरुणाविति श्रुतिः। अनयोरहोरात्रापेक्षत्वात्तयोः पुनःपुनरागमनादनयोस्तुविजातत्वम् अथवा बहूनामुपकारायानयोः प्रादुर्भावात्तुविजातत्वम्॥ १ ॥

१. बारम्बार आविर्भूत मित्र और वरुण का सुखकर और अन्नवान् स्तोम गमन करे।

अथ द्वितीया—

याधारयन्तदेवाःसुदक्षादक्षपितरा। असुर्यायप्रमहसा॥ २ ॥

या । धारयन्त । देवाः । सुऽदक्षा । दक्षऽपितरा ।
असुर्याय । प्रऽमहसा ॥ २ ॥

या यौ युवां धारयन्त के देवाः आदिकर्तारः असुर्याय बलकरणाय कीदृशौ युवां सुदक्षा शोभनबलौ दक्षपितरा बलस्य पालकौ स्वामिनौ वा बलप्रदावित्यर्थः प्रमहसा प्रकृष्टतेजस्कौ तौ साधयतमित्युत्तरत्रान्वयः॥ २ ॥

२. शोभन बलवाले, बल के रक्षक और प्रकृत तेजवाले मित्र और वरुण को बल के लिए देवों ने धारण किया था।

---

१ तै० सं० २. ४. १०. ।

अथ तृतीया—

तानःस्तिपातनूपावरुणजरितॄणाम् । मित्रसाधयतंधियः ॥ ३ ॥

ता । नः । स्तिऽपा । तनूऽपा । वरुण ।

जरितॄणाम् । मित्र । साधयतम् । धियः ॥ ३ ॥

ता तौ स्तिपा स्त्यायन्तइति स्तयोगृहाः तान्पातइतिस्तिपौ तनूपा तन्वः पातारौ हे वरुण हे मित्र उक्तलक्षणौ युवां जरितॄणां नोस्माकं धियः कर्माणि स्तुतिरूपाणि साधयतं सफलवन्ति कुरुतम् ॥ ३ ॥

३. वे मित्र और वरुण गृह और शरीर के पालक हैं। मित्र और वरुण, तुम लोग स्तोताओं के कर्मरूप स्तोत्रों को सफल करो।

अथ चतुर्थी—

यदद्यसूरउदितेनागामित्रोअर्यमा । सुवातिसविताभगः ॥ ४ ॥

यत् । अद्य । सूरे । उत्ऽइते । अनागाः ।

मित्रः । अर्यमा । सुवाति । सविता । भगः ॥ ४ ॥

यद्धनमस्माकमपेक्षितं तदद्यास्मिन्काले सूरे उदिते सति प्रातःसवने अनागाः पापहन्ता मित्रः अर्यमा सविता भगश्चैते प्रत्येकं सुवाति प्रेरयेत अथवा अनागामित्रोर्यमा दाता भवतु तदीप्सितं धनं भगोभजनीयः सविता सुवाति प्रेरयतु ॥ ४ ॥

४. सूर्योदय होने पर आज, हमारे लिए, अपेक्षित धन को पाप-नाशक मित्र, सविता, अर्यमा और भग प्रेरित करें।

सुप्रावीरस्तुसक्षयःप्रनुयामन्त्सुदानवः । येनोअंहोतिपिप्रति ॥५॥८॥

सुप्रऽअवीः । अस्तु । सः । क्षयः । प्र । नु । यामन् ।

सुऽदानवः । ये । नः । अंहः । अतिऽपिप्रति ॥ ५॥ ८ ॥

सक्षयः सनिवासः सुप्रावीरस्तु सुष्ठु प्रकर्षेण रक्षितास्तु प्रशब्दआदरार्थः प्रकर्षेण नु क्षिप्रं भवत्वितिशेषः कदेति उच्यते हे सुदानवः सुदानाः युष्माकं यामन यामनि गमनेसति कीदृशानां गमने ये यूयमागत्य नोस्माकं अंहः पापमतिपिप्रति अतिपारयथ तेषां गमनेइति ॥५॥

५. शोभन-दान-परायण, तुम लोग हमारे पाप को दूर करो। तुम्हारा आगमन होने पर वह निवास सुरक्षित हो।

॥ इति पञ्चमस्य पञ्चमेष्टमोवर्गः ॥ ८ ॥

अथ षष्ठी—

उतस्वराजोअदितिरदब्धस्यव्रतस्यये । महोराजानईशते ॥ ६ ॥

उत । स्वऽराजः अदितिः । अदब्धस्य ।
व्रतस्य । ये । महः । राजानः । ईशते ॥ ६ ॥

उतापिच ये मित्रादयस्त्रयः स्वराजः सर्वस्य स्वामिनः अदितिः तेषां माता च सन्ति अदब्धस्य अहिंसितस्य महोमहतोव्रतस्यास्य कर्मणोराजानः स्वामिनः ते ईशते समर्थाभवन्ति अभिमतंदातुमितिशेषः। अथवैवं योज्यम् ते मित्रादयोदितिश्च अदब्धस्य व्रतस्य स्वराजईश्वरास्ते महोमहतोस्मदभिमतधनस्य राजानः स्वामिनः सन्तईशते अस्मभ्यं तद्दातुम् ॥ ६ ॥

**६. मित्र आदि और अदिति अहिंसक व्रत वा कर्म के ईश्वर हैं; वे महाधन के भी ईश्वर हैं।**

प्रतिवामित्येषतृचश्चातुर्विंशिकेहनि प्रातःसवने मैत्रावरुणस्य पर्यासार्थः सूत्रितश्च—प्रतिवांसूरउदितेव्यन्तरिक्षमतिरदिति ।

तत्र तृचे प्रथमा सूक्ते सप्तमी—

प्रतिवांसूरउदितेमित्रंगृणीषेवरुणम् । अर्यमणंरिशादसम् ॥७॥

प्रति । वाम् । सूरे । उत्ऽइते । मित्रम् । गृणीषे । वरुणम् ।
अर्यमणम् । रिशादसम् ॥ ७ ॥

हे मित्रावरुणौ मित्रं त्वां वरुणंच वां युवां रिशादसं शत्रूणामत्तारं अर्यमणं च प्रति प्रत्येकं गृणीषे स्तुवे कदेति उच्यते सूरे सूर्ये देवे उदिते सति प्रातरित्यर्थः ॥ ७ ॥

**७. सूर्योदय होने पर मित्र, वरुण और शत्रु-भक्षक अर्यमा की मैं स्तुति करूँगा।**

अथ तृचे द्वितीया सूक्ते अष्टमी—

रायाहिरण्ययामतिरियमवृकायशवसे । इयंविप्रामेधसातये ॥८॥

राया । हिरण्यऽया । मतिः । इयम् । अवृकाय ।
शवसे । इयम् । विप्रा । मेधऽसातये ॥ ८ ॥

हिरण्यया हितरमणीयेन राया धनेन सहिताय अवृकाय अहिंस्याय शवसेस्माकं बलाय इयमिदानीं क्रियमाणामतिः स्तुतिर्भवत्वितिशेषः हिरण्ययेत्यत्र सुपांसुलुगिति तृतीयैकवचनस्य याजादेशः। किञ्च हे विप्राःप्राज्ञाः इयमेवस्तुतिर्मेधसातये यज्ञलाभाय च भवतु ॥८॥

**८. हित-रमणीय धन के साथ यह स्तुति हमारे अहिंसनीय बल के लिए हो।**

अथ तृचे तृतीया सूक्ते नवमी—

तेस्यामदेववरुणतेमित्रसूरिभिःसह । इषंस्वश्चधीमहि ॥ ९ ॥

ते । स्याम । देव । वरुण । ते । मित्र । सूरिऽभिः ।
सह । इषम् । स्वः॒ऽरिति स्वः । च । धीमहि ॥ ९ ॥

हे देव वरुण ते वयं तव स्तोतारः स्याम समृद्धाभवेम । न केवलं वयमेवयजमानाः किन्तु सूरिभिः स्तोतृभिर्ऋत्विग्भिः सह तथा हे मित्रदेव ते वयं सूरिभिः सह स्याम भवेम किञ्च इषमन्नं स्वरुदकं च धीमहि धारयामहे ॥ ९ ॥

९. वरुण और मित्र, ऋत्विकों के साथ हम तुम्हारे स्तोता होंगे । हम अन्न और जल भी धारण करेंगे ।

आश्विनशस्त्रे बहवः सूरचक्षसइति प्रगाथः सूत्रितश्च—बहवःसूरचक्षसइति प्रगाथाइ-ति । दशरात्रे पञ्चमेहनि प्रउगशस्त्रेप्ययंप्रगाथः सूत्रितश्च—बहवः सूरचक्षसइमाउवांदि-विष्टयइति ।

सैषा प्रगाथे प्रथमा सूक्ते दशमी—

बहवःसूरचक्षसोग्निजिह्वाऋतावृधः ।
त्रीणियेयेमुर्विदथानिधीतिभिर्विश्वानिपरिभूतिभिः ॥१०॥९॥

बहवः । सूरऽचक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः । त्रीणि ।
ये । येमुः । विदथानि । धीतिऽभिः । विश्वानि । परिभूतिऽभिः ॥१०॥९॥

बहवोमहान्तः सूरचक्षसः सूर्यसदृशप्रकाशाः सूरः प्रकाशकोयेषामितिवा अग्निजिह्वाः अग्निरेवजिह्वा अदनसाधनोयेषां तादृशाःऋतावृधोयज्ञस्य वर्धयितारोमित्रादयः किञ्च ये त्रीणि विश्वानि व्याप्तानि विदथानि क्षित्यादिस्थानानि क्षित्यादीनि परिभूतिभिः परिभावुकैः धीति-भिःकर्मभिः येमुः प्रयच्छन्ति ते क्षत्रमाशतेत्युत्तरत्र संबन्धनीयम् । अथवात्रैव ये त्रीणिस्थाना-नि प्रयच्छन्ति ते बहुत्वादि गुणोपेताआगच्छन्त्वित्यध्याहार्यम् ॥ १० ॥

१०. मित्रादि, महान् सूर्य की तरह दीप्त, अग्नि-जिह्व और यज्ञ-वर्द्धक हैं । वे परिभवकारक कर्म-द्वारा व्याप्त स्थानों को देते हैं ।

॥ इति पञ्चमस्य पञ्चमे नवमोवर्गः ॥ ९ ॥

अथैकादशी—

वियेदधुःशरदंमासमादहर्यज्ञमक्तुंचादृचम् ।
अनाप्यंवरुणोमित्रोअर्यमाक्षत्रंराजानआशत ॥ ११ ॥

वि । ये । दुधुः । शरदम् । मासम् । आत् । अहः । यज्ञम् ।
अक्तुम् । च । आत् । ऋचम् । अनाप्यम् । वरुणः । मित्रः ।
अर्यमा । क्षत्रम् । राजानः । आशत ॥११॥

ये मित्रादयः शरदं संवत्सरं विदधुः अकुर्वन् आत् अनन्तरमेव मासं अनन्तरं अहः अनन्तरमहःसाध्यं यज्ञं आत् अनन्तरमक्तुं रात्रिञ्च ऋचं मन्त्रांश्च यद्वा सर्वत्र आदित्ययमपीत्यर्थे वर्तते तथा सति क्रमः अविवक्षितः ते वरुणोमित्रोर्यमा च त्रयः अनाप्यमन्यैरप्राप्तं क्षत्रं बलं राजानः राजमानाः आशत व्याप्तवन्तः ॥ ११ ॥

११. जिन्होंने वर्ष, मास, दिन, यज्ञ, रात्रि और मन्त्र की रचना की है, उन मित्र, वरुण और अर्यमा ने, शोभमान होकर, दूसरों के लिए अप्राप्त बल पाया था ।

तद्वोअद्यमनामहेसूक्तैःसूरउदिते ।
यदोहतेवरुणोमित्रोअर्यमायूयमृतस्यरथ्यः ॥ १२ ॥

तत् । वः । अद्य । मनामहे । सुऽउक्तैः । सूरे । उत्ऽइते । यत् ।
ओहते । वरुणः । मित्रः । अर्यमा । यूयम् । ऋतस्य । रथ्यः ॥१२॥

तत्प्रसिद्धमद्यास्मिन्यागकाले वोयुष्मान्मनामहे याचामहे कैः साधनैः सूक्तैः कस्मिन्काले सूरउदिते प्रातःकालइत्यर्थः यद्धनं हे ऋतस्योदकस्य रथ्यः नेतारोयूयं वरुणादयः ओहते यूयमित्यनेन सामानाधिकरण्यादोहतइत्यत्र पुरुषव्यत्ययः ओहध्वइत्यर्थः तद्धनं मनामहइति ॥१२॥

१२. आज सूर्योदय होने पर, सूक्त-द्वारा, तुमसे उस धन की याचना करेंगे, जिसे जल के नेता मित्र, वरुण और अर्यमा धारण करते हैं ।

अथ त्रयोदशी—

ऋतावानऋतजाताऋतावृधोघोरासोअनृतद्विषः ।
तेषांवःसुम्नेसुच्छर्दिष्टमेनरःस्यामयेचसूरयः ॥ १३ ॥

ऋतऽवानः । ऋतऽजाताः । ऋतऽवृधः । घोरासः । अनृतऽद्विषः ।
तेषाम् । वः । सुम्ने । सुछर्दिःऽतमे । नरः । स्याम । ये । च । सूरयः ॥१३॥

ये यूयमृतावानः ऋतवन्तः यज्ञवन्तः उदकवन्तोवा ऋतजाताः उक्तः ऋतशब्दार्थः तदर्थमुत्पन्नाः अथवा ऋतात्प्रजापतेः सकाशादुत्पन्नाः ऋतावृधः उक्तार्थस्य ऋतस्य वर्धयितारः घोरासोघोराः अनृतद्विषः अयष्टृद्वेष्टारः हे नरः तेषां वोयुष्माकं सुछर्दिष्टमे सुखतमे सुम्ने धनं अत्यन्तरमणीयगृहयुक्ते सुखे वा ये वयं येचान्ये सूरयः स्तोतारः ते सर्वे स्याम भवेम ॥१३॥

१३. नेताओ, तुम लोग यज्ञवान्, यज्ञ के लिए उत्पन्न, यज्ञ-वर्द्धक, भयानक और यज्ञ-हीन के द्वेषी हो। तुम्हारे सुखतम धन के लिए जो अन्य ऋत्विक् हैं, वे और हम अधिकारी होंगे।

स्तोमातिरेके माध्यन्दिनसवने नैमित्तिके शस्त्रे उदुत्यदित्ययं प्रगाथोनुरूपः सूत्रितश्च—बण्महाँअसिसूर्योदुत्यद्दर्शतंवपुरिति प्रगाथौ स्तोत्रियानुरूपाविति। चातुर्विंशिकेहनि माध्यन्दिनसवने अयमेववैकल्पिकः स्तोत्रियस्तृचः सूत्रितश्च—उदुत्यद्दर्शतंवपुरुदुत्येमधुमत्तमाइति।

उदुत्यद्दर्शतंवपुर्दिवएतिप्रतिह्वरे।
यदीमाशुर्वहतिदेवएतशोविश्वस्मैचक्षसेअरम्॥ १४॥

उत्। ऊँ इति। त्यत्। दर्शतम्। वपुः। दिवः। एति।
प्रतिऽह्वरे। यत्। ईम्। आशुः। वहति। देवः।
एतशः। विश्वस्मै। चक्षसे। अरम्॥ १४॥

त्यद् तद् दर्शतं दर्शनीयं वपुर्मण्डलं दिवोन्तरिक्षस्य प्रतिह्वरे समीपेउदु एति उदेति उइतिपूरणः यदीं यदेतन्मण्डलं आशुः शीघ्रगामी एतशो एतवर्णोश्वोवहति धारयति किमर्थं विश्वस्मै सर्वस्मै अरं चक्षसे सम्यक् सर्वलोकदर्शनाय॥ १४॥

१४. वह दर्शनीय मण्डल अन्तरिक्ष के समीप उदित होता है। शीघ्रगामी और हरितवर्ण अश्व सबके भली भाँति देखने के लिए उस मण्डल को धारण करते हैं।

अथ प्रगाथे द्वितीया सूक्तेपञ्चदशी—

शीर्ष्णःशीर्ष्णोजगतस्तस्थुषस्पतिंसमयाविश्वमारजः।
सप्तस्वसारःसुवितायसूर्यंवहन्तिहरितोरथे॥ १५॥ १०॥

शीर्ष्णःऽशीर्ष्णः। जगतः। तस्थुषः। पतिम्। समया।
विश्वम्। आ। रजः। सप्त। स्वसारः। सुवितायं।
सूर्यम्। वहन्ति। हरितः। रथे॥ १५॥ १०॥

शीर्ष्णःशीर्ष्णः सर्वस्यापिशिरसः तृतीयार्थे पञ्चमी स्वस्वशिरसेत्यर्थः सूर्यं वहन्तीत्यनेन संवध्यते अथवा शिरःशव्देन तद्वान् पदार्थोलक्ष्यते वीप्सया तस्यकार्त्स्न्यमुच्यते सर्वस्य श्रेष्ठमित्यर्थः जगतोजङ्गमस्य तस्थुषः स्थावरस्य पतिं स्वामिनं रथे वर्तमानं सूर्यं सुविताय कल्याणाय विश्वं रजः समया सर्वलोकस्य समीपे अभितः परितः समयेत्यादिना समयाश-

द्योगात् द्वितीया। सप्त सप्तसङ्ख्याकाः स्वसारः अन्यनिरपेक्षेण स्वयमेव सरन्त्योहरितोहरिद्वर्णाअश्वा आवहन्ति ॥ १५ ॥

१५. मस्तक के भी मस्तक (सबके मस्तक), स्थावर-जंगम के पति और रथारोही सूर्य को, संसार के कल्याण के लिए, सात गति-परायण हरितगण (अश्व) सारे संसार के समीप ले जाते हैं।

॥ इति पञ्चमस्य पञ्चमे दशमोवर्गः ॥ १० ॥

अथ षोडशी—

तच्चक्षुर्देवहितंशुक्रमुच्चरत्। पश्येमशरदःशतंजीवेमशरदःशतम्॥ १६॥

तत्। चक्षुः। देवऽहितम्। शुक्रम्। उत्ऽचरत्।

पश्येम। शरदः। शतम्। जीवेम। शरदः। शतम्॥ १६ ॥

तत्प्रसिद्धं चक्षुः सर्वस्य प्रकाशकं देवहितं देवानां हितं तेषां हविः स्वीकारस्यैतदधीनत्वात् अथवा देवेन हितं शुक्रं निर्मलं सूर्यमण्डलं उच्चरत् उद्गच्छति तच्छरदः शतं शतसंवत्सरं पश्येम जीवेम शरदः शतं पुनः श्रुतिरादरार्थां ॥ १६ ॥

१६. वह चक्षुः-स्वरूप (सबका प्रकाश), देव-हितैषी और निर्मल सूर्य-मण्डल उदित हो रहा है। हम सौ वर्ष देखें और सौ वर्ष जीयें।

पृष्ठ्याभिप्लवषडहयोःस्तोमनिमित्ते आवापे काव्येभिरदाभ्येतितृचः काव्येभिरदाभ्येति तिस्रइति हि सूत्रितम्।

काव्येभिरदाभ्यायातंवरुणद्युमत्। मित्रश्चसोमपीतये ॥ १७ ॥

काव्येभिः। अदाभ्या। आ। यातम्। वरुण। द्युऽमत्।

मित्रः। च। सोमऽपीतये ॥ १७ ॥

हे अदाभ्या अदंभनीयौ हे वरुण त्वं मित्रश्च द्युमत् द्युतिमन्तौ युवां काव्येभिरस्मत्कृतैः स्तोत्रैरायातम् किमर्थं सोमपीतये सोमपानाय ॥ १७ ॥

१७. वरुण, तुम और मित्र अहिंसनीय और द्युतिमान् हो। हमारे स्तोत्रों के द्वारा सोमपान के लिए आओ।

तृचे द्वितीया सूक्ते अष्टादशी—

दिवोधामभिर्वरुणमित्रश्चायातमद्रुहा। पिबतंसोममातुजी ॥१८॥

दिवः। धामऽभिः। वरुण। मित्रः। च। आ। यातम्। अद्रुहा।

पिबतम्। सोमम्। आतुजी इत्याऽतुजी ॥ १८ ॥

हे वरुण त्वं मित्रश्च अद्रुहा अद्रोग्धारौ युवां दिवोद्युलोकसबन्धिभ्योधामभिः धामभ्यः स्थानेभ्यः पञ्चम्यर्थेतृतीया अथवा धामभिस्तेजोभिः विभूतिभिः सार्धं आयातं अस्मद्यज्ञमागच्छतम् आगत्य च आतुजी शत्रूणां सर्वतोहिंसकौ आदातारौ वा धनानां । एवं रूपौ सन्तौ सोमं पिबतम् । तुजि पिजि हिंसाबलादाननिकेतनेषु अत्र हिंसायां आदाने वा वर्तते ॥ १८ ॥

१८. मित्र, तुम और वरुण द्रोहरहित हो । तुम द्युलोक से आओ और शत्रु-हिंसक होकर सोमपान करो ।

आयातंमित्रावरुणाजुषाणावाहुतिंनरा । पातंसोमंमृतावृधा ॥ १९ ॥ ११ ॥

आ । यातम् । मित्रावरुणा । जुषाणौ । आऽहुतिम् ।
नरा । पातम् । सोमम् । ऋतऽवृधा ॥ १९ ॥ ११ ॥

हे मित्रावरुणा मित्रावरुणौ हे नरा यागनेतारौ आहुतिं सोमलक्षणां जुषाणौ प्रीयमाणौ सन्तौ आयातं आगच्छतम् यज्ञम् आगत्य च हे ऋतावृधा यज्ञस्य वर्धकौ युवां सोमं पातं पिबतम् ॥ १९ ॥

१९. मित्र और वरुण यज्ञ-नेता हैं । आहुति की सेवा करके आओ । यज्ञ-वर्द्धक सोम-पान करो ।

॥ इति पंचमस्य पञ्चमे एकादशोवर्गः ॥ ११ ॥

प्रतिवां रथमिति दशर्चं द्वादशं सूक्तं प्रतिवां दशाश्विनंतुतदित्यनुक्रमणिका । ऋषिर्वसिष्ठः छन्दस्त्रिष्टुप् तुह्यादिपरिभाषयैतदादीन्यष्टसूक्तान्यश्विदेवत्यानि प्रातरनुवाके आश्विनेक्रतौ त्रैष्टुभेछन्दसि एवदादिसूक्तसप्तकं द्वितीयवर्जं शंस्यम् तथाचसूत्रम्—प्रतिवांरथमितिसप्तानां द्वितीयमुद्धरेदिति ।

तत्र प्रथमा—

प्रतिवांरथंनृपतीजरध्यैहविष्मतामनसायज्ञियेन ।
योवांदूतोनधिष्ण्यावजीगरच्छासूनुर्नपितराविवक्मि ॥ १ ॥

प्रति । वाम् । रथम् । नृपती इति नृऽपती । जरध्यै । हविष्मता ।
मनसा । यज्ञियेन । यः । वाम् । दूतः । न । धिष्ण्यौ ।
अजीगः । अच्छ । सूनुः । न । पितरा । विवक्मि ॥ १ ॥

हे नृपती नृणां ऋत्विग्यजमानानां स्वामिनावश्विनौ वां युवयोरथं जरध्यै जरा स्तुतिः स्तोतुं प्रतिगच्छामीतिशेषः केन साधनेनेति तदुच्यते हविष्मता हविर्युक्तेन यज्ञियेन यज्ञार्हेण

मनसा स्तोत्रेण योरथोवां हे धिष्ण्यौ धिषणार्हौ धिषणा स्तुतिः वां युवां दूतोन दूतइव अजीगर्जागरयति प्रबोधयति अस्मान्प्रतिगन्तुं तं रथमच्छाविवक्मि आवच्मि प्रबोधनेदृष्टान्तः— सूनुर्न पितरा पुत्रोमातापितराविव अथवा अत्रयोरथोयुवामजीगः तेन रथेन गन्तुं बुध्यमानौ युवामच्छाविवक्मीति वा योज्यम्॥ १ ॥

१. हे दोनों ऋत्विग्-यजमान-स्वामियो, हम हव्य-युक्त स्तोत्र के साथ तुम्हारे रथ की स्तुति करने के लिए जाते हैं। स्तुति-योग्य अश्विनीकुमारो, जैसे पुत्र पिता को जगाता है, वैसे ही यह रथ, तुम्हारे दूत की तरह, लोगों को जगाता है। उसी रथ को अपने सामने आने के लिए मैं बोलता हूँ।

अशोच्यग्निःसमिधानोअस्मेउपोअदृश्रन्तमसश्चिदन्ताः।
अचेतिकेतुरुषसःपुरस्ताच्छ्रियेदिवोदुहितुर्जायमानः ॥ २ ॥

अशोचि । अग्निः। सम्ऽइधानः। अस्मे इति । उपो इति । अदृश्रन् । तमसः । चित् । अन्ताः । अचेति । केतुः । उषसः । पुरस्तात् । श्रिये । दिवः । दुहितुः । जायमानः ॥ २ ॥

अस्मे अस्माभिः समिधानः समिध्यमानः सन् अग्निः अशोचि दीप्यते तमसश्चित् तमसोपि अन्ताः पर्यन्ताः प्रदेशाः उपो अदृश्रन् उपदृश्यन्ते सर्वैः केतुः सर्वस्य प्रज्ञापकः सूर्योदिवोदुहितुरुषसः पुरस्तात्पूर्वस्यां दिशि श्रिये शोभायै जायमानः सन् अचेति ज्ञायते यस्मादेवं तस्माद् युवयोः आगमनसमयः अतआगच्छतमिति शेषः ॥ २ ॥

२. हमारे द्वारा समिद्ध होकर अग्नि दीप्त होते हैं। तब अन्धकार के सारे प्रदेश भी लोग देखते हैं। प्रज्ञापक सूर्य द्युलोक-दुहिता (उषा) की पूर्व दिशा में, शोभा के लिए, उत्पन्न होकर जाने जाते हैं।

अभिवांनूनमश्विनासुहोतास्तोमैःसिषक्तिनासत्याविवक्वान् ।
पूर्वीभिर्यातंपथ्याभिरर्वाक्स्वर्विदावसुमतारथेन ॥ ३ ॥

अभि । वाम् । नूनम् । अश्विना । सुऽहोता । स्तोमैः । सिसक्ति । नासत्या । विवक्वान् । पूर्वीभिः । यातम् । पथ्याभिः । अर्वाक् । स्वःऽविदा । वसुऽमता । रथेन ॥ ३ ॥

हे अश्विना अश्विनौ वां युवां सुहोता सुष्ठु देवानां स्तोता विवक्वान् स्तुतीनां वक्ताहं हे नासत्या सत्यभूतौ इदमश्विनावित्यत्रयोज्यं नूनमद्य स्तोमैः अभिसिषक्ति सेवते अतोर्वागस्मदभिमुखं पूर्वीभिः पथ्याभिः पूर्वक्षुण्णैर्मार्गैः स्वर्विदा स्वर्गमुदकंवा जानता स्वरणवता वा वसुमता धनवता वा रथेन यातं गच्छतम् ॥ ३ ॥

३. हे नासत्य-(सत्य-रूप) द्वय, सुन्दर होता और स्तुति-वक्ता स्तोम-द्वारा हम तुम्हारी सेवा करते हैं। फलतः तुम लोग पूर्व मार्ग से जल-ज्ञाता और धनयुक्त रथ पर चढ़कर हमारे सामने आओ।

अवोर्वांनूनमश्विनायुवाकुर्हुवेयद्वांसुतेमाध्वीवसूयुः ।
आवांवहन्तुस्थविरासोअश्वाःपिबाथोअस्मेसुषुतामधूनि ॥ ४ ॥

अवोः । वाम् । नूनम् । अश्विना । युवाकुः । हुवे । यत् । वाम् । सुते । माध्वी इति । वसुऽयुः । आ । वाम् । वहन्तु । स्थविरासः । अश्वाः । पिबाथः । अस्मे इति । सुऽसुता । मधूनि ॥ ४ ॥

हे अश्विना अश्विनौ अवोः रक्षित्रोः वां युवाभ्यां युवाकुः युवां कामयमानोहं नूनमद्य स्वभूतोभवामीति शेषः यद्यस्मात् हे माध्वी मधुरस्य सोमस्यार्हौ मधुविद्यासंबन्धिनौ वा वां युवां सुते अभिषुते सोमे वसूयुर्वसुकामोहुवे स्तौमि अतोवां स्वभूतः वां युवां आवहन्तु के स्थविरासः स्थूलाः प्रवृद्धा अश्वाएतयोरतिप्रवृद्धत्वात् शीघ्रगतेरपेक्षितत्वाच्च स्थविरैरेव भाव्यम् आगमनानन्तरं अस्मे अस्माभिः सुषुता सुष्ठु अभिषुतानि मधूनि मधुररसान् पिबाथः पिबतम् ॥ ४ ॥

४. हे रक्षक और मधुर सोम के योग्य अश्विद्वय, मैं सोम के अभिषुत होने पर, तुम्हारी इच्छा से, धनाभिलाषी होकर तुम्हारी स्तुति करता हूँ; इसलिए आज तुम्हारे प्रवृद्ध अश्वगण तुम्हें ले आवें। हमारे द्वारा अभिषुत और मधुर सोम का पान करो।

प्राचीमुदेवाश्विनाधियंमेमृध्रांसातयेकृतंवसूयुम् ।
विश्वाअविष्टंवाजआपुरंधीस्तानःशक्तंशचीपतीशचीभिः ॥५॥१२॥

प्राचीम् । ऊँ इति । देवा । अश्विना । धियम् । मे । अमृध्राम् । सातये । कृतम् । वसुऽयुम् । विश्वाः । अविष्टम् । वाजे । आ । पुरम्ऽधीः । ता । नः । शक्तम् । शचीपती इति शचीऽपती । शचीभिः ॥ ५ ॥ १२ ॥

हे अश्विना अश्विनौ देवा देवौ युवां प्राचीं ऋज्वीं अमृध्रां अहिंसितां वसूयुं धनमिच्छन्तीं मे मम धियं बुद्धिं स्तुतिं कर्मवा सातये लाभाय उचितां कृतम् कुरुतम्। उःपूरणः किञ्च वाजे आ सङ्ग्रामेपि विश्वाः पुरन्धीरस्मदीया बुद्धीरविष्टं रक्षतम्। हे शचीपती शचीति कर्म नाम कर्मणां पालकौ ता तौ युवां शचीभिः अस्मदीयैः स्तुत्यादिरूपैः कर्मभिर्नोस्मान् शक्तं प्रयच्छतं धनमितिशेषः ॥ ५ ॥

५. अश्विनी-देव-द्वय, तुम हमारी धनाभिलाषिणी, सरला और अहिं-सिका बुद्धि को लाभ के योग्य करो। संग्राम में भी हमारी सारी बुद्धि की रक्षा करो। शचीपति (कर्मस्वामी) अश्विद्वय, कर्म-द्वारा हमें धन प्रदान करो।

॥ इति पञ्चमस्य पञ्चमे द्वादशोवर्गः ॥१२॥

अविष्टंधीष्वश्विनानआसुप्रजावद्रेतोअह्वयंनोअस्तु।
आवांतोकेतनयेतूतुजानाःसुरत्नासोदेववीतिंगमेम ॥ ६ ॥

अविष्टम्। धीषु। अश्विना। नः। आसु। प्रजाऽवत्।
रेतः। अह्वयम्। नः। अस्तु। आ। वाम्। तोके। तनये।
तूतुजानाः। सुऽरत्नासः। देवऽवीतिम्। गमेम ॥ ६ ॥

हे अश्विना अश्विनौ नोस्मान् आसु धीषु एषु कर्मसु अविष्टं रक्षतम नोस्मभ्यं अह्रयं अक्षीणं प्रजावन् पुत्राद्युपेतं पुत्रोत्पादनसमर्थं रेतोस्तु वां युवयोरनुग्रहात् लब्धे तोके पुत्रे तनये तत्पुत्रादौच तूतुजानाः अभिमतं धनं प्रयच्छन्तः सुरत्नासः शोभनधनाश्च सन्तोदेववीतिं देवानां वीतिः प्राप्तिर्यस्मिन् तादृशं यज्ञं आगमम आगच्छेम ॥ ६ ॥

६. अश्विद्वय, इन कर्मों में हमारी रक्षा करो। हमारा वीर्य क्षीण न होने योग्य और पुत्रोत्पादन में समर्थ हो। तुम्हारी कृपा से पुत्र और पौत्रों को अभिमत धन देकर और सुन्दर धनवाले होकर हम देव-लाभ-कर यज्ञ में आवें।

अथ सप्तमी—

एषस्यवांपूर्वगत्वेवसख्येनिधिर्हितोमाध्वीरातोअस्मे।
अहेळतामनसायातमर्वागश्नन्ताहव्यंमानुषीषुविक्षु ॥ ७ ॥

एषः। स्यः। वाम्। पूर्वगत्वाऽइव। सख्ये। निऽधिः। हितः।
माध्वी इति। रातः। अस्मे इति। अहेळता। मनसा। आ।
यातम्। अर्वाक्। अश्नन्ता। हव्यम्। मानुषीषु। विक्षु ॥ ७ ॥

एषपुरतोदीयमानः स्यः सः युवयोः प्रियत्वेन प्रसिद्धः सोमो हे माध्वी मधुप्रियावश्विनौ वां युवयोः पुरतः निधिः निधिस्थानीयोहितः स्थापितोस्मेस्माभीरातोदत्तः संकल्पितः संनिहितः किमिव सख्ये सख्यार्थं पूर्वगत्वेव पुरतोगन्ता दूतइव सयथा प्रियं जनयन् स्वामिनः पुरतोवर्तते तद्वदित्यर्थः यस्मादेवं तस्मात् अहेळता अक्रुध्यता मनसा अनुग्रहयुक्तेन चेतसा अर्वागस्मदभिमुखं आयातम् आगच्छतम्। अश्नन्ता हव्यं हविः सोमादिकं अश्नन्तौ अभ्यवहरन्तौ कुत्र मानुषीषु विक्षु मनुष्यरूपासु प्रजासु वर्तमानम् ॥ ७ ॥

७. मधु-प्रिय अश्विनीकुमारो, सखा के लिए पुरोगामी दूत की तरह हमारा संकल्पित यह सोम निधि-स्वरूप तुम्हारे सामने रक्खा हुआ है। इसलिए क्रोधशून्य चित्त से हमारे सामने आओ। मनुष्य-रूप प्रजा में वर्तमान हव्य भक्षण करो।

एकस्मिन्योगेभुरणासमानेपरिवांसप्तस्रवतोरथोगात्।
नवायन्तिसुभ्वोदेवयुक्तायेवांधूर्षुतरणयोवहन्ति ॥ ८ ॥

एकस्मिन्। योगे। भुरणा। समाने। परि। वाम्। सप्त।
स्रवतः। रथः। गात्। न। वायन्ति। सुऽभ्वः। देवऽयुक्ताः।
ये। वाम्। धूःऽसु। तरणयः। वहन्ति ॥ ८ ॥

हे भुरणा सर्वस्य भर्तारौ युवयोरेकस्मिन्समाने उभयसाधारणे योगेस्मद्विषये सति वां युवयोः रथः सप्तस्रवतः सर्पणस्वभावाः सप्तसङ्ख्याकावा गङ्गाद्याः परिगात् परिगच्छति शीघ्रमागच्छतीत्यर्थः तद्रथाश्वाः सुभ्वः सुभवनाः देवयुक्ताः देवाभ्यां युवाभ्यां युक्ताः अश्वाः शीघ्रगमने न वायन्ति न शुष्यन्ति नश्राम्यन्ते येश्वाः वां धूर्षु रथस्य तरणयः तारकाः शीघ्रगन्तारोवहन्ति युवां ते न वायन्तीति ॥ ८ ॥

८. सबके पोषक अश्विद्वय, तुम दोनों का मिलन होने पर तुम्हारा रथ बहनेवाली सात नदियों को पार कर आता है। सुजन्मा और देव-सम्पन्न जो तुम्हारे अश्व रथ को लेकर शीघ्र चलनेवाले तुम्हें ढोते हैं, वे कभी नहीं थकते। तत्रैषा नवमी—

असश्चतामघवद्भ्योहिभूतंयेरायामघदेयंजुनन्ति।
प्रयेबन्धुंसूनृताभिस्तिरन्तेगव्यापृञ्चन्तोअश्व्यामघानि ॥ ९ ॥

असश्चता। मघवत्ऽभ्यः। हि। भूतम्। ये। राया।
मघऽदेयम्। जुनन्ति। प्र। ये। बंधुम्। सूनृताभिः। तिरन्ते। गव्या।
पृंचन्तः। अश्व्या। मघानि ॥ ९ ॥

असश्चता कुत्राप्यसज्यमानौ युवां मघवद्भ्यो धनवद्भ्यो हविष्मद्भ्यो यजमानेभ्यः तेषामर्थाय भूतं हि भवतं तेभ्यएवानुरक्तौ भवतम्। अनुग्राह्याएव विशेष्यन्ते ये राया धनेन निमित्तेन राया युक्तावा मघदेयं दातव्यं मघं धनं हविर्लक्षणं वा जुनन्ति प्रेरयन्ति यच्छन्ति येच बन्धुं स्नेहेन बध्नातीति बन्धुः तं स्वसंबन्धिनं अथवा फलेन बध्नातीति बन्धुरध्वर्य्वादिः तं सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः प्रतिरन्ते प्रवर्धयन्ति। प्रपूर्वस्तिरतिर्वर्धनार्थः किं कुर्वन्तः गव्या गोरूपाणि अश्व्या अश्वरूपाणि च मघानि धनानि पृञ्चन्तोर्थिभ्यः प्रयच्छन्तः तेभ्यो मघवद्भ्योभूतमिति ॥ ९ ॥

९. तुम लोग कहीं भी आसक्त नहीं होते। जो धनी धन के लिए देने योग्य हव्य को देता है, जो सखा को सच्चे वचनों से प्रवर्द्धित करता है तथा जो गौ, अश्व और धन देता है, वैसों के लिए तुम लोग हुए हो।

नूमेहवमाश्रृणुतंयुवानायासिष्टंवर्तिरश्विनाविरावत्।
धत्तंरत्नानिजरतंचसूरीन्यूयंपातस्वस्तिभिःसदानः ॥ १० ॥१३॥

नु। मे। हवम्। आ। श्रृणुतम्। युवाना। यासिष्टम्। वर्तिः।
अश्विनौ। इराऽवत्। धत्तम्। रत्नानि। जरतम्। च।
सूरीन्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः १० ॥ १३ ॥

हे युवाना नित्ययौवनौ नु अद्य युवां मे हवमस्मदीयां स्तुतिं आश्रृणुतं श्रुत्वा च हे अश्विनौ इरावत् हविर्युक्तं वर्तिर्गृहं यासिष्टं आगच्छतम् आगत्यच रत्नानि रमणीयानि धनानि धत्तं दत्तं सूरीन् स्तोतॄन् जरतं वर्धयतं धातूनामनेकार्थत्वात्। शिष्टं यूयं पातस्वस्तिभिः सदानः स्पष्टम् ॥ १० ॥

१०. तुम आज हमारा आह्वान सुनो। नित्य-तरुण अश्विद्वय, हव्य-वाले गृह में आओ। रत्नदान करो। स्तोता को वर्द्धित करो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य पंचमे त्रयोदशोवर्गः ॥ १३ ॥

आशुभ्रायातमिति नवर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षं आश्विनम् आदितः सप्तविराजः अष्टमीनवम्यौ त्रिष्टुभौ अनुक्रम्यते च—आशुभ्रानव सप्ताद्याविराजइति सूक्तविनियोगोलैंगिकः।

आशुभ्रायातमश्विनास्वश्वागिरोदस्राजुजुषाणायुवाकोः।
हव्यानिचप्रतिभृतावीतंनः ॥ १ ॥

आ। शुभ्रा। यातम्। अश्विना। सुऽअश्वा। गिरः।
दस्रा। जुजुषाणा। युवाकोः। हव्यानि।
च। प्रतिऽभृता। वीतम्। नः ॥ १ ॥

हे शुभ्रा दीप्तौ स्वश्वा शोभनाश्वौ हे अश्विना अश्विनौ आयातमस्मद्यज्ञमागच्छतम् दस्रा शत्रूणां उपक्षपयितारौ युवां युवाकोर्युवां कामयमानस्य मम गिरः स्तुतीर्जुजुषाणा सेवमानौ भवतमितिशेषः न केवलं स्तुतिं किंतु नोस्मदीयानि प्रतिभृता संभृतानि हव्यानि हवींषि च वीतं भक्षयतम् ॥ १ ॥

१. हे दीप्त और अश्ववाले अश्विद्वय, आओ। तुम शत्रु-हन्ता हो। जो तुम्हें चाहता है, उसकी स्तुति की सेवा करो। हमारे प्रस्तुत हव्य का भक्षण करो।

प्रवामन्धांसीत्येषा आश्विनशस्त्रयाज्या सूत्रितंच—प्रवामन्धांसिमद्यान्यस्थुरुभापिबतमश्विनेति याज्येति ।

सैषा द्वितीया--

प्रवामन्धांसिमद्यान्यस्थुररंगन्तंहविषोवीतयेमे ।
तिरोअर्योहवनानिश्रुतंनः ।। २ ।।

प्र । वाम् । अन्धांसि । मद्यानि । अस्थुः । अरम् ।
गन्तम् । हविषः । वीतये । मे । तिरः । अर्यः ।
हवनानि । श्रुतम् । नः ॥ २ ॥

हे अश्विनौ वां युवाभ्यां मद्यानि मदजनकानि अन्धांसि सोमलक्षणान्यन्नानि प्रास्थुः प्रास्थिषत गृहीतान्यासन्नित्यर्थः अतोयुवां मे मम हविषोवीतये पानाय अरं अत्यर्थं शीघ्रं गन्तं आगच्छतम् अर्यः अरेः अस्मद्विरोधिनोहवनानि तिरस्तिरस्कृत्य नोस्मदाह्वानमित्यर्थः तव् श्रुतं शृणुतं श्रुतमित्यस्य वाक्यादित्वादनिघातः ॥ २ ॥

२. अश्विद्वय, तुम्हारे लिए मदकर अन्न (सोम) प्रस्तुत है। हमारी हवि का भक्षण करने के लिए शीघ्र आओ। हमारे शत्रु का आह्वान न सुनकर हमारा आह्वान सुनो।

प्रवांरथोमनोजवाइयर्तितिरोरजांस्यश्विनाशतोतिः ।
अस्मभ्यंसूर्यावसूइयानः ।। ३ ।।

प्र । वाम् । रथः । मनःऽजवाः । इयर्ति । तिरः । रजांसि ।
अश्विना । शतऽऊतिः । अस्मभ्यम् । सूर्यावसू इति । इयानः ॥ ३॥

हे सूर्यावसू सूर्यायाः सह रथे वसन्तौ हे अश्विना अश्विनौ वां युवयोरथः अस्मभ्यमस्मदर्थं इयानोयाच्यमानः सन् इयर्ति आगच्छति अस्मद्यज्ञं अथवा वां प्रेरयति गमनाय ।कीदृशोरथः मनोजवाः मनोवेगः शतोतिरपरिमितास्मद्विषयरक्षणः । किंकुर्वन् रजांसि लोकान् तिरस्तिरस्कृत्य अतिक्रम्य इयर्तीति ॥ ३ ॥

३. सूर्या के साथ रथ पर रहनेवाले हे अश्विनीकुमारो, मन की तरह वेगशाली और असीम रक्षण से युक्त तुम्हारा रथ हमारे लिए प्रार्थित होकर और सारे लोकों को तिरस्कृत करके हमारे यज्ञ में आता है।

अथ चतुर्थी—

अयंहयद्वांदेवयाउअद्रिरूर्ध्वोविवक्तिसोमसुद्युवभ्याम्।
आवल्गूविप्रोववृतीतहव्यैः ॥ ४ ॥

अयम्। ह। यत्। वाम्। देवऽयाः। ऊँ इति।
अद्रिः। ऊर्ध्वः। विवक्ति। सोमऽसुत्। युवऽभ्याम्। आ।
वल्गू इति। विप्रः। ववृतीत। हव्यैः ॥ ४ ॥

यद्यदा वां युवां प्रति देवयाः देवौ युवां कामयमानः ह उ इति पूरणौ अयमद्रिरभिषवग्रावा सोमसुत् सोममभिषुण्वन् युवभ्यां युवाभ्यामर्थाय अभिषुण्वन्निति संबन्धः एवं कुर्वन् ऊर्ध्व-उन्नतः सन् विवक्ति उच्चैः शब्दयति तदानीं वल्गू सुन्दरौ युवां विप्रोमेधावी यजमानोहव्यैर्हविर्भिः आववृतीत आवर्तयति ॥ ४ ॥

४. जिस समय मैं तुम्हें देवता बनाने की इच्छा करता हूँ और जिस समय तुम्हारे लिए सोम का अभिषव करनेवाला यह पत्थर उच्च शब्द करता है, उस समय हे सुन्दर, तुम्हें विप्र (मेधावी यजमान) हव्य-द्वारा आवर्त्तित करता है।

चित्रंहयद्वांभोजनंन्वस्तिन्यत्रयेमहिष्वन्तंयुयोतम्।
योवामोमानंदधतेप्रियःसन् ॥ ५॥ १४ ॥

चित्रम्। ह। यत्। वाम्। भोजनम्। नु। अस्ति। नि।
अत्रये। महिष्वन्तम्। युयोतम्। यः। वाम्।
ओमानम्। दधते। प्रियः। सन् ॥ ५ ॥ १४ ॥

हे अश्विनौ वां युवयोश्चित्रं चायनीयं यद्भोजनं धनमस्ति ह अस्ति खलु न्विविपूरणः तदस्मभ्यं दत्तमित्यर्थः।अथ तयोः स्तुतिः अत्रये एतन्नामकादृषेः पंचम्यर्थे चतुर्थी तस्मान्महिष्वन्तं ऋबीसं नियुयोतं पृथक्कुरुतम् योत्रिः प्रियः सन् स्तोतृत्वात् युवाभ्यां प्रियभूतः सन् वां युवाभ्यामेवकृतमोमानं रक्षणसुखं दधते धारयति ॥ ५ ॥

५. तुम्हारा जो यापनीय (चित्र = भोज्य) धन है, उसे हमें दो। जो प्रिय होकर तुम्हारे दिये हुए सुख को धारण करते हैं, उन अत्रि से महिष्वद् (ऋबीस) को अलग करो।

॥ इति पंचमस्य पंचमे चतुर्दशोवर्गः ॥ १४ ॥

अथ षष्ठी—

उत त्यद्वां जुरते अश्विना भूच्च्यवानाय प्रतीत्यं हविर्दे।
अधि यद्वर्प इतऊति धत्थः ॥ ६ ॥

उत। त्यत्। वाम्। जुरते। अश्विना। भूत्।
च्यवानाय। प्रतीत्यम्। हविःऽदे। अधि।
यत्। वर्पः। इतःऽऊति। धत्थः ॥ ६ ॥

उतापिच हे अश्विना अश्विनौ वां युवयोः कर्म कुर्वते जुरते जूर्णाय हविर्दे हविर्दात्रे च्यवानायैतन्नामकाय महर्षये त्यत्तत्प्रतीत्यं प्रतिगमनं तस्य रूपस्य प्रत्याप्त्यै भूत् अभूत्। किं-तदिति यद्वर्पो रूपं इतऊति इतोगमनाख्यं मृत्योः सकाशादितः प्राप्तिरूपं अधि धत्थः अध्यध-त्तम्। युवंच्यवानमश्विनाजरन्तंपुनर्युवानंचक्रथुःशचीभिरित्यादिषु। च्यवानस्य युवयोः नवीकरणं प्रसिद्धम् ॥ ६ ॥

६. अश्विनीकुमारो, तुम्हारी स्तुति करनेवाले जीर्ण हव्यदाता च्यवन ऋषि के लिए जो रूप मृत्यु से लाकर तुमने दिया था, वह उनके प्रति गया था।

उत त्यं भुज्युमश्विना सखायो मध्ये जहुर्दुरेवासः समुद्रे।
निरीं पर्षदरावा यो युवाकुः ॥ ७ ॥

उत। त्यम्। भुज्युम्। अश्विना। सखायः।
मध्ये। जहुः। दुःऽएवासः। समुद्रे। निः। ईम्।
पर्षत्। अरावा। यः। युवाकुः ॥ ७ ॥

उतापिच त्यं तं भुज्युं एतन्नामानं समुद्रमध्ये समुद्रोदकस्य मध्ये सखायो भुज्युसखि-भूताः दुरेवासोदुष्टगमनाः जहुः त्यक्तवन्तः हे अश्विना अश्विनौ युवां ईमेनं समुद्रमध्ये क्षिप्तं निःपर्षत् निरपारयतम् योभुज्युर्युवाकुः युवां कामयिता अरावा अरणवान् अभिगन्ताच तमे-नं निरपारयतम् अत्राश्विनेषु सूक्तेषु कथाः सूच्यन्ते अत्रिभुज्य्वादीनामग्निजलादिभ्योरक्षणरू-पास्ताः सर्वा महता प्रपञ्चेनास्माभिः नासत्याभ्यां वर्तिरित्यत्र। प्रपञ्चिताः ताः तत्र द्रष्टव्याः ॥७॥

७. (भुज्यु के) दुष्ट-बुद्धि मित्रों ने जो भुज्यु को समुद्र के बीच छोड़ दिया था, तुम लोगों ने उन्हें पार किया था। भुज्यु ने तुम लोगों की कामना की थी और कभी विरुद्धाचरण नहीं किया था।

---

१ ऋ० सं० १. ८. १५। २ ऋ० सं० १. ८. ८।

अथाष्टमी–

वृकायचिज्जसमानायशक्तमुतश्रुतंशयवेहूयमाना।
यावघ्न्यामपिन्वतमपोनस्तर्यंचिच्छक्त्यश्विनाशचीभिः ॥ ८ ॥

वृकाय । चित् । जसमानाय । शक्तम् । उत । श्रुतम् । शयवे । हूयमाना । यौ । अघ्न्याम् । अपिन्वतम् । अपः । नः । स्तर्यम् । चित् । शक्ती । अश्विना । शचीभिः ॥ ८ ॥

वृकाय धनादात्रे अभिलषतइत्यर्थः चिदितिपूरणः अथवा परेभ्योधनानि प्रयच्छते यद्वा वृकाय वृकवद्धिंसकाय एतन्नामकाय जसमानाय कर्मभिरुपक्षीयमाणाय ऋषये शक्तं अभिमतं धनं अदत्तं शकेर्दानार्थस्य लुङ्चेतद्रूपं अडभावश्छान्दसः। उतापिच शयवे एतन्नामकाय ऋषये हूयमाना हूयमानौ युवां श्रुतं अशृणुतम् यौ युवांअघ्न्यां गां अपिन्वतं अपूरयतं क्षीरेण अपोन अद्भिरिव नदीं तां यथोदकेन पूरयतस्तद्वत् कीदृशीमघ्न्यां स्तर्यं चित् स्तरीमपि निवृत्तप्रसवां वृद्धामपि शक्ती शक्त्या सामर्थ्येन दोहनलक्षणेन युक्तां कृत्वा शचीभिर्युष्मदीयैः कर्मभिः हे अश्विनाविति। शयवेचिन्नासत्याशचीभिर्जसुरयेस्तर्यंपिप्यथुर्गामित्यादिरंयुक्तम् ॥ ८ ॥

८. जिस समय वृक ऋषि क्षीण हो रहे थे, उस समय अश्विद्वय, तुम लोगों ने कर्म और सामर्थ्य-द्वारा उन्हें धन दिया था। पुकारे जाकर शयु ऋषि की बात तुम लोगों ने सुनी थी। जैसे नदी जल से पूर्ण करती है, वैसे ही वृद्धा गाय को तुम लोगों ने दुग्ध से पूर्ण किया था।

अथ नवमी–

एषस्यकारुर्जरतेसूक्तैरग्रेबुधानउषसांसुमन्मा।
इषातंवर्धदघ्न्यापयोभिर्यूयंपातस्वस्तिभिःसदानः ॥ ९ ॥ १५ ॥

एषः । स्यः । कारुः । जरते । सुऽउक्तैः । अग्रे । बुधानः । उषसाम् । सुऽमन्मा । इषा । तम् । वर्धत् । अघ्न्या । पयःऽभिः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ९ ॥ १५ ॥

एषःस्तोता स्यः सप्रसिद्धोवसिष्ठः कारुः स्तोता उषसामग्रे प्रातःसवने बुधानोबुध्यमानः सुमन्मा शोभनमतिः सुष्टुतिर्वा सूक्तैर्जरते स्तौति तं इषान्नेनवर्धत् वर्धयतम् वचनव्यत्ययः अ-

---

1 ऋ० सं० १.८.१२।

ह्या अहन्तव्या गौश्च वर्धत् वर्धयतु । अथवैकमेववाक्यम् अघ्या गौर्वसिष्ठस्य प्रतिनियताग्निहोत्रार्थागौरिषा अन्नेन घृतादिनेत्यर्थः पयोभिश्च तं वसिष्ठं वर्धत् वर्धयतु एवं आत्मानं परोक्षेण निर्दिदेश शिष्टं स्पष्टम् ॥ ९ ॥

९. वह स्तोता (वसिष्ठ) शोभन-मति होकर, उषा के पहले जागकर, सूक्तों-द्वारा स्तुति करता है। उसे अन्न-द्वारा वर्द्धित करो, दुग्ध-द्वारा वर्द्धित करो और उसकी गौ को वर्द्धित करो। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य पञ्चमे पंचदशोवर्गः ॥ १५ ॥

आवांरथइत्यष्टर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनं अनुक्रम्यतेच—आवांरथोष्टाविति । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगउक्तः ।

आवांरथोरोदसीबद्धधानोहिरण्ययोवृषभिर्यात्वश्वैः ।
घृतवर्तनिःपविभीरुचानइषांवोळ्हानृपतिर्वाजिनीवान् ॥ १ ॥

आ । वाम् । रथः । रोदसी इति । बद्धधानः । हिरण्ययः ।
वृषऽभिः । यातु । अश्वैः । घृतऽवर्तनिः । पविऽभिः । रुचानः ।
इषाम् । वोळ्हा । नृऽपतिः । वाजिनीऽवान् ॥ १ ॥

हे अश्विनौ वां रथोवृषभिः युवभिरश्वैः युक्तः सन्नायातु यज्ञमस्मदीयं कीदृशोरथः रथोविशेष्यते रोदसी द्यावापृथिव्यौ बद्धधानोबाधमानः हिरण्ययः हिरणमयः घृतवर्तनिः घृतमुदकं वर्तन्यां यस्य तादृशः पविभीरथनेमिभिः मधुपात्रैर्वा रुचानोदीप्यमान इषां वोळ्हा यजमानैर्दत्तानां हविषां वाहकः दातव्यानां वान्नानां वोळ्हा नृपतिः नृणां यजमानानां स्वामी वाजिनीवानन्नवान् ॥ १ ॥

१. तरुण अश्वों से युक्त होकर तुम्हारा रथ आवे। वह द्यावा-पृथिवी को बाधा देनेवाला और हिरण्मय है। उसके चक्र में जल है। वह रथ की नेमि (डंडों) के द्वारा दीप्तिमान्, अन्नवाहक और यजमानों का स्वामी (नेता) है।

अथ द्वितीया—

सपप्रथानोअभिपंचभूमात्रिवन्धुरोमनसायातुयुक्तः ।
विशोयेनगच्छथोदेवयन्तीःकुत्राचिद्याममश्विनादधाना ॥ २ ॥

सः । पप्रथानः । अभि । पंच । भूम । त्रिऽवन्धुरः । मनसा ।
आ । यातु । युक्तः । विशः । येन । गच्छथः । देवऽयन्तीः ।
कुत्र । चित् । यामम् । अश्विना । दधाना ॥ २ ॥

सरथः पञ्च भूम भूतानि सर्वप्राणिनः पप्रथानः प्रथमानः त्रिवन्धुरः वन्धुरमुच्चावचं सारथ्यवस्थानं काष्ठमयं तादृशैस्त्रिभिर्युक्तः मनसास्मत्स्तुत्या युक्तोभ्यायातु येन रथेन देवयन्तीः विशोयजमानान् प्रति गच्छथः हे अश्विना अश्विनौ कुत्राचित् यत्र क्वापि यामं गमनं दधाना धारयन्तौ येन विशोगच्छथः सयात्विति ॥ २ ॥

२. वह रथ पंचभूतों (सारे प्राणियों) को प्रसिद्ध करनेवाला तीन बन्धुरों (सारथियों के बैठने के तीन उच्च और निम्न काठ के स्थानों) और स्तुति से युक्त है। अश्विद्वय, तुम लोग चाहे जिस किसी स्थान में जाने की इच्छा करके इस रथ पर देवाभिलाषी प्रजा के पास गमन करो।

स्वश्वा॑यश॒साया॑तम॒र्वाग्दस्रा॑नि॒धिंमधु॑मन्तंपिबाथः ।
विवांरथो॑व॒ध्वा॒३॑ यादमा॒नोन्तान्दि॒वोबा॑धतेवर्त॒निभ्या॑म् ॥ ३ ॥

सु॒ऽअश्वा॑ । य॒शसा॑ । आ । या॒त॒म् । अ॒र्वाक् । दस्रा॑ । नि॒ऽधिम् । मधु॑ऽमन्तम् । पि॒बा॒थः॒ । वि । वा॒म् । रथः॑ । व॒ध्वा॑ । याद॑मानः । अन्ता॑न् । दि॒वः । बा॒ध॒ते॒ । व॒र्त॒निऽभ्या॑म् ॥ ३ ॥

हे देवौ स्वश्वा शोभनाश्वेन यशसा च अर्वागस्मदभिमुखं यातमागच्छतं। हे दस्रा शत्रूणामुपक्षपयितारौ मधुमन्तं मधुररसोपेतं निधिं निधिवन्निहितं सोमं पिबाथः पिबतं वां युवयोरथोवध्वा सूर्यया सह यादमानोगन्तव्यान्प्रति गच्छन् गमयन्नित्यर्थः एवं कुर्वन् वर्तनिभ्यां स्वचक्राभ्यां दिवोअन्तान् पर्यन्तप्रदेशान् विबाधते शीघ्रगमनेन पीडयति ॥ ३ ॥

३. सुन्दर अश्व और अन्न के साथ तुम लोग हमारे सामने आओ। दस्रद्वय (शत्रु-नाशक), तुम मधुमान् निधि (सोम) का पान करो। तुम लोगों का रथ सूर्या के साथ गमन करते हुए चक्र के द्वारा द्युलोक तक के प्रदेशों को, शीघ्र गमन के कारण, पीड़ित करता है।

यु॒वोः श्रिय॒म्परि॒योषा॑वृणीत॒सूरो॑दुहि॒तापरि॑तक्म्यायाम् ।
यद्दे॑व॒यन्त॒मव॑थ॒ःशची॑भि॒ःपरि॑घ्रंसमो॒मना॑वां॒वयो॑गात् ॥ ४ ॥

यु॒वोः । श्रिय॑म् । परि॑ । योषा॑ । अ॒वृ॒णी॒त॒ । सूरः॑ । दु॒हि॒ता । परि॑ऽतक्म्यायाम् । यत् । दे॒व॒ऽयन्त॑म् । अव॑थः । शची॑भिः । परि॑ । घ्रं॒सम् । ओ॒मना॑ । वा॒म् । वयः॑ । गा॒त् ॥ ४ ॥

युवोर्युवयोः श्रियं श्रयतइति श्रीः रथः तं सेवामेवद। योषा सर्वदा मिश्रयन्ती योषित् सूरः सूर्यस्य दुहिता पर्यवृणीत कदा परितक्म्यायां रात्रौ परितस्तकनवति संग्रामे यद्वेषा गन्तव्ये किञ्च यद्यदा देवयन्तं देवकामं यजमानं यज्ञं वा शचीभिः युष्मद्योर्गमनादिलक्षणैः कर्मभि-

रथोरक्षथः तदानीं घ्रंसं दीप्तं वयोन्नं सोमादिलक्षणं ओमना अवनेन रक्षणेन निमित्तेन वां परिगात् पर्यगात् ॥ ४ ॥

४. रात में स्त्री सूर्य-पुत्री तुम्हारे रथ को घेरती है। जिस समय तुम देवाभिलाषी को कर्म-द्वारा रक्षित करते हो, उस समय रक्षण के लिए दीप्त अन्न तुम्हारे यहाँ जाता है।

योह॒स्यवां॑रथिरा॒वस्तं॑उ॒स्रारथो॑यु॒जा॒न.परि॒ऽयाति॑व॒र्तिः ।
तेनं॑न॒ःशंयोरु॒षसो॒व्यु॑ष्टौ॒न्य॑श्विनावहतंय॒ज्ञेअ॒स्मिन् ॥ ५ ॥

यः । ह॒ । स्यः । वा॒म् । र॒थि॒रा । वस्ते॑ । उ॒स्राः । रथः॑ ।
यु॒जा॒नः । प॒रि॒ऽयाति॑ । व॒र्तिः । तेन॑ । न॒ः । शम् । योः । उ॒षसः॑ ।
वि॒ऽउ॑ष्टौ । नि । अ॒श्वि॒ना॒ । व॒ह॒त॒म् । य॒ज्ञे । अ॒स्मिन् ॥ ५ ॥

योरथो हेतिपूरणः स्यः सः प्रसिद्धोरथो हे रथिरा रथिनौ मत्वर्थीयोरः वां उस्राः तेजांसि वस्ते आच्छादयति यश्च रथोयुजानः अश्वैर्युक्तः सन् वर्तिर्मार्गं यजमानगृहं वा परियाति परिगच्छति तेन रथेन हे अश्विना अश्विनौ नोस्माकमस्मिन्यज्ञे उषसोव्युष्टौ प्रातःकाले शं-शमनाय पापानां योः मिश्रणाय च सुखानां निवहतं नितरां प्रापुतम् ॥ ५ ॥

५. रथवाले अश्विद्वय, वह रथ तेजों को ढक लेता और अश्व के साथ मार्ग में गमन करता है। अश्विद्वय, उषा (प्रातःकाल) होने पर हमारे इस यज्ञ में उस रथ से, पापों के शमन और सुखों की प्राप्ति के लिए, उपस्थित होओ।

अथ षष्ठी—

नरा॑गौ॒रेव॑वि॒द्युतं॑तृषा॒णाऽस्माक॑म॒द्यसव॑नोप॑यातम् ।
पु॒रु॒त्राहिवां॑म॒तिभि॒र्हव॑न्ते॒मावा॑म॒न्येनिय॑मन्देव॒यन्तः॑ ॥ ६ ॥

नरा॑ । गौ॒राऽइ॑व । वि॒ऽद्युत॑म् । तृ॒षा॒णा । अ॒स्माक॑म् ।
अ॒द्य । सव॑ना । उप॑ । या॒त॒म् । पु॒रु॒ऽत्रा । हि । वा॒म् । म॒तिऽभिः॑ ।
हव॑न्ते । मा । वा॒म् । अ॒न्ये । नि । य॒म॒न् । दे॒व॒ऽयन्तः॑ ॥ ६ ॥

हे नरा नेतारावश्विनौ गौरेव गौरामृगीव विद्युतं विशेषेणदीप्यमानं सोमं प्रति तृषाणा तृष्णायुक्तौ अद्यास्माकं सवना सवनानि उपयातं उपागच्छतम् पुरुत्रा बहुषु यज्ञेषु वां युवां यजमानामतिभिः स्तुतिभिः हवन्ते हि स्तुवन्ति अतोऽन्ये यष्टारोदेवयन्तो देवं कामयमानाः वां युवां मानियमन् मानियन्तु ॥ ६ ॥

६. नेतृ-द्वय, मृगी की तरह विशेष रूप से दीप्यमान सोम को पीने की इच्छा करके आज हमारे सवनों में आओ। अनेक यज्ञों में यजमान तुम्हें स्तुति-द्वारा बुलाते हैं। इसलिए अन्य देवाभिलाषी तुम्हें दान न करने पावें।

युवंभुज्युमवविद्धंसमुद्रउदूहथुरर्णसोअस्रिधानैः।
पतत्रिभिरश्रमैरव्यथिभिर्दंसनाभिरश्विनापारयन्ता ॥ ७ ॥

युवम्। भुज्युम्। अवऽविद्धम्। समुद्रे। उत्। ऊहथुः।
अर्णसः। अस्रिधानैः। पतत्रिऽभिः। अश्रमैः। अव्यथिऽभिः।
दंसनाभिः। अश्विना। पारयन्ता ॥ ७ ॥

हे अश्विना अश्विनौ युवं भुज्युं एतन्नामकं अवविद्धं विक्षिप्तं सखिभिः समुद्रे तन्मध्ये निमग्नं अर्णसः उदकादुदूहथुः किं कुर्वन्ताविति तदुच्यते अस्रिधानैः अक्षीयमाणैः अश्रमैः अव्यथिभिश्च पतत्रिभिः पतनवद्भिः गमनवद्भीरथेनियुक्तैरश्वैः दंसनाभिः शारीरैः कर्मभिश्च पारयन्ता पारयन्तौ समुद्रे अर्णस उदूहथुरिति। नासत्याभुज्युमूहथुःपतङ्गैरितित्युक्तम् ॥७॥

७. अश्विद्वय, तुम लोगों ने समुद्र में निमग्न भुज्यु को अक्षत, अश्रान्त और शीघ्रगामी अश्वों और कार्य-द्वारा, पार करते हुए, जल से निकाला था।

नूमेहवमाश्रृणुतंयुवानायासिष्टंवर्तिरश्विनाविरावत्।
धत्तंरत्नानिजरतंचसूरीन्यूयंपातस्वस्तिभिःसदानः ॥ ८ ॥ १६ ॥

नु। मे। हवम्। आ। श्रृणुतम्। युवाना। यासिष्टम्।
वर्तिः। अश्विनौ। इराऽवत्। धत्तम्। रत्नानि। जरतम्। च।
सूरीन्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ८ ॥ १६ ॥

नूमेहवमित्यष्टमी सिद्धा ॥ ८ ॥

८. तुम लोग आज हमारा आह्वान सुनो। सदा तरुण अश्विद्वय, हव्यवाले घर में आओ, रत्न-दान करो और स्तोता को वर्द्धित करो। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य पञ्चमे षोडशोवर्गः ॥ १६ ॥

आविश्ववारेति सप्तर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं आश्विनं अनुक्रम्यतेच—आविश्ववारासप्तेति प्रातरनुवाकाश्विनशस्त्रे च विनियोगउक्तः आद्यस्तृचस्तृतीयेछन्दोमे प्रउगशस्त्रे विनियुक्तः। आविश्ववाराश्विनागतंनोयंसोमइन्द्रेति सूत्रितत्वात् '

१ ऋ० सं० १।८।८।

तत्र प्रथमा—

आविश्ववाराश्विनागतंनःप्रतत्स्थानमवाचिवांपृथिव्याम् ।
अश्वोनवाजीशुनपृष्ठोअस्थादायत्सेदथुर्ध्रुवसेनयोनिम् ॥ १ ॥

आ । विश्वऽवारा । अश्विना । गतम् । नः । प्र । तत् । स्थानम् ।
अवाचि । वाम् । पृथिव्याम् । अश्वः । न । वाजी । शुनऽपृष्ठः ।
अस्थात् । आ । यत् । सेदथुः । ध्रुवसे । न । योनिम् ॥ १ ॥

हे विश्ववारा सर्वैर्वरणीयावश्विनाश्विनौ नोस्माकं यद्यागमागतमागच्छतं वां युवयोस्तत्स्थानं पृथिव्यां वेद्यां प्रावाचि प्रोच्यते तदर्थं शुनपृष्ठः सुखकरपृष्ठभागः अत्यन्तविपुलत्वादारूढानां सुखकरपृष्ठभागइत्यर्थः वाजी वेगवानश्वोन अश्वोस्थात् तिष्ठतु युवयोः समीपे यत् यमित्यर्थः यमश्वं आसेदथुरासीदथः सोश्वः यद्वा यत्स्थानमासीदथः तत्स्थानं आश्रयतु । इतोगमनाय स्थितौ दृष्टान्तः ध्रुवसे ध्रुवाय निवासाय योनिं न योनिं स्थानमिव ॥ १॥

१. सबके वरणीय अश्विनीकुमारो, हमारी यज्ञ-वेदी पर आओ। पृथिवी पर तुम्हारा यही स्थान कहा जाता है। जिस अश्व पर तुम लोग बैठते हो, वह सुखकर पीठवाला अश्व तुम्हारे ही पास में रहे।

सिषक्तिसावांसुमतिश्चनिष्ठातापिघर्मोमनुषोदुरोणे ।
योवांसमुद्रान्त्सरितःपिपर्त्येतग्वाचिन्नसुयुजायुजानः ॥ २ ॥

सिसक्ति । सा । वाम् । सुऽमतिः । चनिष्ठा । अतापि । घर्मः ।
मनुषः । दुरोणे । यः । वाम् । समुद्रान् । सरितः । पिपर्ति ।
एतऽग्वा । चित् । न । सुऽयुजा । युजानः ॥ २ ॥

सा सुमतिः अस्माभिः क्रियमाणा शोभना स्तुतिश्चनिष्ठा कमनीयतमा अतिशयेनान्नवती वा वां युवां सिषक्ति सेवते किञ्च घर्मः प्रवर्ग्यश्च मनुषोमनुष्यस्य यजमानस्य दुरोणे यागगृहे अतापि तप्तोभूत् यद्घाँइत्यतपत्तद्घर्मस्यघर्मत्वमितिश्रुतिः । यज्ञस्य शिरःस्थानीयत्वादस्ययोघर्मोवां युवां प्राप्नुवन्निति शेषः समुद्रान् सरितश्च पिपर्ति पूरयति वृष्टिद्वारा एतग्वाचिन्न चिदितिपूरणः अश्वाविव यथा सुयुजा सुष्ठुयुक्तौ रथे भवतस्तथेत्यर्थः नेत्युपमार्थे तद्वद्युवां यज्ञे युजानोयोजयन्यज्ञः सएवं करोति ॥ २ ॥

२. अतीव अन्नवाली वह सुन्दर स्तुति तुम लोगों की सेवा करती है। घर्म (घाम = धूप) मनुष्य के यज्ञ-गृह में तप रहा है। वह तुम्हें मिलता है। वह घाम सरितों और समुद्रों को वृष्टि-द्वारा भरता है। जैसे रथ में अश्व जोते जाते हैं, वैसे ही तुम्हें यज्ञ में जोता जाता है।

१ तै० आ० पंचमप्रपाठके. ।

अथ तृतीया–

यानि॒स्थाना॑न्यश्विनाद॒धाथे॑दि॒वोय॒ह्वीष्वोष॑धीषुवि॒क्षु ।
निपर्व॑तस्यमू॒र्धनि॒सद॑न्तेषं॒जना॑यदा॒शुषे॒वह॑न्ता ॥ ३ ॥

यानि॑ । स्थाना॑नि । अ॒श्वि॒ना॒ । द॒धाथे॒ इति॑ । दि॒वः । य॒ह्वीषु॑ ।
ओष॑धीषु । वि॒क्षु । नि । पर्व॑तस्य । मू॒र्धनि॑ । सद॑न्ता ।
इष॑म् । जना॑य । दा॒शुषे॑ । वह॑न्ता ॥ ३ ॥

हे अश्विनाऽश्विनौ युवां दिवोद्युलोकादागत्य यानि स्थानानि दधाथे कुरुथः कुत्रेति उच्यते यह्वीषु महतीषु ओषधीषु विक्षु यजमानेषु च । तौ युवां पर्वतस्य मेघस्यान्तरिक्षस्यवा मूर्धनि स्थाने निसदन्ता निषीदन्तौ इषमन्नं दाशुषे हविर्दात्रे जनाय यजमानाय वहन्ता प्राप-यन्तौ भवतमितिशेषः ॥ ३ ॥

३. अश्विद्वय, तुम लोग द्युलोक से आकर विशाल ओषधियों और प्रजाओं के बीच में जो स्थान अधिकृत करते हो, पर्वत के मस्तक पर बैठते हुए, अन्नदाता को वही स्थान दो।

च॒नि॒ष्टंदे॑वा॒ओष॑धीष्व॒प्सुयद्यो॒ग्या॒अ॒श्नवै॑थे॒ऋषी॑णाम् ।
पु॒रूणि॒रत्ना॒दध॑तौ॒न्य॑१॒स्मेअ॒नु॒पूर्वा॑णिचख्यथुर्यु॒गानि॑ ॥ ४ ॥

च॒नि॒ष्टम् । दे॒वौ॒ । ओष॑धीषु । अ॒प्ऽसु । यत् । यो॒ग्याः ।
अ॒श्नवै॑थे॒ इति॑ । ऋषी॑णाम् । पु॒रूणि॑ । रत्ना॑ । दध॑तौ । नि । अ॒स्मे इति॑ ।
अनु॑ । पूर्वा॑णि । च॒ख्य॒थुः॒ । यु॒गानि॑ ॥ ४ ॥

हे देवा देवौ युवां ओषधीषु ओषधिविकारान् चरुपुरोडाशादिकान् अप्सु सोमरसान् चनिष्टं अत्यन्तकमनीयतमंकामयेथामित्यर्थः । यद्यस्माद्योग्या युवयोरुचिता ओषधीरपश्च ऋषीणां संबन्धिनीः अश्नवैथे व्याप्नुथः तस्मादस्मदीया अपि कामयेथामित्यर्थः । यद्वा ऋषीणामस्माकमिति पूजार्थं बहुवचनम् यद्यस्मादोषधीष्वप्सु च चनिष्टं योग्याः स्तुतीश्चाश्नवैथे तस्मादस्मे अस्मासु पुरूणि बहूनि रत्ना रमणीयानि धनानि निदधतौ पूर्वाणि युगानि मिथुनानि जायापतीरूपाणि अनुचख्यथुः ख्यातवन्तौ अनुकृष्टवन्तावनुग्रहार्थम् ॥ ४ ॥

४. देवद्वय, तुम लोग ऋषियों-द्वारा दिये ओषधि और जल को व्याप्त करते हो; इसलिए हमारी ओषधि (चरु-पुरोडाश आदि) और जल (सोमरस) की कामना करो। हमें बहुत रत्न देते हुए तुमने पहले के दम्पतियों को आकृष्ट किया था।

अथ पंचमी—

शुश्रुवांसाचिदश्विनापुरूण्यभिब्रह्माणिचक्षाथेऋषीणाम् ।
प्रतिप्रयातंवरमाजनायास्मेवामस्तुसुमतिश्चनिष्ठा ॥ ५ ॥

शुश्रुऽवांसा । चित् अश्विना । पुरूणि । अभि । ब्रह्माणि ।
चक्षाथे इति । ऋषीणाम् । प्रति । प्र । यातम् । वरम् । आ ।
जनाय । अस्मे इति । वाम् । अस्तु । सुऽमतिः । चनिष्ठा ॥ ५ ॥

हे अश्विना अश्विनौ चिदितिपूरणः युवां शुश्रुवांसा श्रुतवन्तौ सन्तौ पुरूणि बहूनि ब्रह्माणि परिवृढानि कर्माणि स्तुतिलक्षणानि ऋषीणामस्माकं संबन्धीनि अभिचक्षाथे अभिपश्यथोयुवाम् अतोजनाय यजमानस्य मम वरं यज्ञं प्रति प्रायातं वां । युवयोश्चनिष्ठा उकललक्षणा सुमतिरनुग्रहमतिरस्मे अस्मास्वस्तु भवतु ॥ ५ ॥

५. अश्विद्वय, सुनकर तुम लोगों ने ऋषियों के अनेक कर्मों का अभिदर्शन किया है। इसलिए यजमान के यज्ञ में आओ। हमारे लिए तुम्हारा अत्यन्त अन्न-पूर्ण अनुग्रह हो।

योवांयज्ञोनासत्याहविष्मान्कृतब्रह्मासमर्यो३ भवाति ।
उपप्रयातंवरमावसिष्ठमिमाब्रह्माण्यृच्यन्तेयुवभ्याम् ॥ ६ ॥

यः । वाम् । यज्ञः । नासत्या । हविष्मान् । कृतऽब्रह्मा ।
सऽमर्यः । भवाति । उप । प्र । यातम् । वरम् । आ । वसिष्ठम् ।
इमा । ब्रह्माणि । ऋच्यन्ते । युवऽभ्याम् ॥ ६ ॥

हे नासत्या अश्विनौ वां युवयोर्योयज्ञोयजमानः समर्यः ऋत्विग्रूपैर्मर्त्यैः सहितः सन् हविष्मान् हविषायुक्तः कृतब्रह्मा कृतस्तोत्ररूपकर्मा भवावि भवति तं वरं वरणीयं वसिष्ठं आ उपप्रयातं प्रकर्षेणोपागच्छतम् । इमा इमानि ब्रह्माणि मन्त्रजातानि युवभ्यां युवाभ्यामर्थाय आगमनाय ऋच्यन्ते सूयन्ते क्रियन्ते इत्यर्थः ॥ ६ ॥

६. नासत्यद्वय, जो यजमान हव्ययुक्त, कृतस्तोत्र और मनुष्यों के साथ मिलता है, उसी वरणीय वसिष्ठ के पास आओ। ये सारे मन्त्र तुम्हीं लोगों के लिए स्तुत होते हैं।

इयंमनीषाइयमश्विनागीरिमांसुवृक्तिंवृषणाजुषेथाम् ।
इमाब्रह्माणियुवयून्यग्मन्यूयंपातस्वस्तिभिःसदानः ॥ ७ ॥१७॥

इयम् । मनीषा । इयम् । अश्विना । गीः । इमाम् ।
सुवृक्तिम् । वृषणा । जुषेथाम् । इमा । ब्रह्माणि । युवऽयूनि ।
अग्मन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥ १७ ॥

हे अश्विना अश्विनौ इयं मनीषा स्तुतिः युवयोः कृतेति शेषः तदेवादरार्थं पुनरुच्यते इयङ्गीः स्तुतिः कृता हे वृषणा कामानां वर्षकौ इमामस्मत्कृतां सुवृक्तिं शोभनां स्तुतिं जुषेथां सेवेथां इमा इमानि ब्रह्माणि कर्माणि स्तुतिरूपाणि युवयूनि युवां कामयमानानि सन्ति अग्मन् गच्छन्तु युवां । यूयं पातेति सिद्धम् ॥ ७ ॥

७. अश्विद्वय, तुम्हारे लिए यही स्तुति और यही वचन हुआ। कामवर्षक-द्वय, इस शोभन स्तुति की सेवा करो। ये सारे कर्म, तुम्हारी कामना करते हुए, सङ्गत हों। तुम सदा हमें स्वस्ति-द्वारा पालित करो।

॥ इति पञ्चमस्य पञ्चमे सप्तदशोवर्गः ॥ १७ ॥

॥ इति सप्तमे मण्डले चतुर्थोनुवाकः ॥ ४ ॥

पञ्चमेनुवाके एकविंशतिसूक्तानि तत्र अपस्वसुरिति षळृचं प्रथमं सूक्तं त्रैष्टुभमाश्विनम् अनुक्रम्यतेच—अपस्वसुःषळिति । गतोविनियोगः ।

अपस्वसुरुषसोनग्जिहीतेरिणक्तिकृष्णीररुषायपन्थाम् ।
अश्वामघागोमघावांहुवेमदिवानक्तंशरुमस्मद्युयोतम् ॥ १ ॥

अप । स्वसुः । उषसः । नक् । जिहीते । रिणक्ति । कृष्णीः ।
अरुषाय । पन्थाम् । अश्वऽमघा । गोऽमघा । वाम् ।
हुवेम । दिवा । नक्तम् । शरुम् । अस्मत् । युयोतम् ॥ १ ॥

स्वसुः स्वसृस्थानीयायाउषसः सकाशात् नक् नक्तं रात्रिरपि जिहीते अपगच्छति तस्याः अवकाशं दत्वा स्वयमपगताइत्यर्थः । स्वसा स्वस्रे ज्यायस्यै योनिमारैगित्युक्तम् । कृष्णीः कृष्णवर्णा रात्रिररुषाय आरोचमानायाह्ने सूर्याय वा पन्थां पन्थानं मार्गं रिणक्ति रेचयति यस्मादेवं तस्माद्युवयोरागमनसमयत्वात् हे अश्वामघा अश्वधनौ हे गोमघा गोधनौ उभयोः प्रदातारावित्यर्थः ईदृशौ वां युवां हुवेम स्तुमः आह्वयामः दिवानक्तं सर्वदा शरुं हिंसकमस्मदस्मत्तोयुयोतं पृथक्कुरुतम् ॥ १ ॥

१. अपनी भगिनी उषा के पास से रात स्वयमेव हट जाती है। कृष्ण-वर्णा रात्रि अरुष (दिन अथवा सूर्य) के लिए मार्ग प्रदान करती है। फलतः हे अश्व-धन और गोधन अश्विद्वय, तुम लोगों को हम बुलाते हैं। तुम लोग दिन-रात हमारे पास से हिंसकों को दूर करो।

---

१ ऋ० सं० २.१.८.।

अथ द्वितीया—

उपायातंदाशुषेमर्त्यायरथेनवाममश्विनावहन्ता ।
युयुतमस्मदनिराममीवांदिवानक्तंमाध्वीत्रासीथांनः ॥ २ ॥

उपऽआयातम् । दाशुषे । मर्त्याय । रथेन । वामम् ।
अश्विना । वहन्ता । युयुतम् । अस्मत् । अनिराम् । अमीवाम् ।
दिवा । नक्तम् । माध्वी इति । त्रासीथाम् । नः ॥ २ ॥

हे अश्विना अश्विनौ युवां उपायातमुपागच्छतमस्मदाह्वानं प्रति । किमर्थं दाशुषे हविषां दात्रे मर्त्याय यजमानाय तदर्थं रथेन वामं वननीयं धनं वहन्ता वहन्तौ अस्मदस्मत्तो युयुतं पृथक्कुरुतं । किं अनिरां इरान्नं तद्रहितं दारिद्र्यमित्यर्थः अमीवां रोगञ्च हे माध्वी मधुमन्तौ युवां नोस्मान् दिवानक्तं सर्वदा त्रासीथां रक्षतम् ॥ २ ॥

२. अश्विद्वय, हविर्दाता के लिए रथ-द्वारा रमणीय पदार्थ लाते हुए तुम लोग आओ। अन्न की दरिद्रता और रोग हमसे दूर करो। हे मधुमान अश्विद्वय, तुम हमें दिन-रात बचाओ।

आवांरथमवमस्यांव्युष्टौसुम्नायवोवृषणोवर्तयन्तु ।
स्यूमंगभस्तिमृतयुग्भिरश्वैराश्विनावसुमन्तंवहेथाम् ॥ ३ ॥

आ । वाम् । रथम् । अवमस्याम् । विऽउष्टौ । सुम्नऽयवः ।
वृषणः । वर्तयन्तु । स्यूमऽगभस्तिम् । ऋतयुक्ऽभिः ।
अश्वैः । आ । अश्विना । वसुऽमन्तम् । वहेथाम् ॥ ३ ॥

अवमस्यां आसन्नायां व्युष्टौ व्युच्छने उषसि वां युवयोः रथं सुम्नायवः सुखेन योजयन्तोश्वाः वृषणोवर्षका युवां आवर्तयन्तु स्यूमगभस्तिं सुखरश्मिं स्यूतरश्मिं वसुमन्तं प्रदेयधनयुक्तं रथं हे अश्विनाश्विनौ ऋतयुग्भिः उदकयुक्तैरश्वैः उदकप्रदैरश्वैः आवहेथाम् ॥ ३ ॥

३. तुम्हारे रथ में अनायास जोते गये और कामदाता अश्व तुम्हें ले आवें। अश्विद्वय, रश्मिवाले और धन से युक्त रथ को, तुम लोग, जलदाता अश्वों के द्वारा, ढोओ।

योवांरथोनृपतीअस्तिवोळ्हात्रिवन्धुरोवसुमाँउस्रयामा ।
आनएनानासत्योपयातमभियद्वांविश्वप्स्न्योजिगाति ॥ ४ ॥

यः । वाम् । रथः । नृपती इति नृऽपती । अस्ति । वोळ्हा ।
त्रिऽवन्धुरः । वसुऽमान् । उस्रऽयामा । आ । नः । एना । नासत्या ।
उप । यातम् । अभि । यत् । वाम् । विश्वऽप्स्न्यः । जिगाति ॥ ४ ॥

हे नृपती नृणां यजमानानां पालकौ अश्विनौ वां युवयोर्योरथः वोळ्हा युवयोर्वाहकोस्ति सर्वदा सन्निहितोवर्तते कीदृशोसौ त्रिवन्धुरः सारथ्यधिष्ठानस्थानत्रयोपेतः वसुमान् धनवान् उस्रयामा उस्रं दिवसं प्रतिगन्ता एना एनेन रथेन हे नासत्या अश्विनौ नोस्मानुपायातम् यद्रथोयश्चरथोवां विश्वप्स्न्योव्याप्तरूपोभिजिगाति अभिगच्छति अथवा यद्यस्माद्विश्वप्स्न्योवसिष्ठोवां जिगाति स्तौति अतउपायातम् ॥ ४ ॥

४. यजमान-पालको, तुम लोगों का वाहक जो रथ तीन वन्धुरों (सारथियों के बैठने-उठने के तीन स्थानों) से युक्त, धनवान्, दिन के प्रति गमन करनेवाला और व्यापक होकर जानेवाला है, उसी रथ पर तुम हमारे पास आओ।

युवंच्यवानंजरसोमुमुक्तंनिपेदवऊहथुराशुमश्वम् ।
निरंहसस्तमसस्स्पर्तमत्रिंनिजाहुषंशिथिरेधातमन्तः ॥ ५ ॥

युवम् । च्यवानम् । जरसः । अमुमुक्तम् । नि । पेदवे । ऊहथुः ।
आशुम् । अश्वम् । निः । अंहसः । तमसः । स्पर्तम् । अत्रिम् ।
नि । जाहुषम् । शिथिरे । धातम् । अन्तरिति ॥ ५ ॥

हे अश्विनौ युवं युवां च्यवानं जरसोजीर्णाद्रूपात् अमुमुक्तम् अमुञ्चतम युवंच्यवानमश्विनाजरन्तंपुनर्युवानमित्यन्यत्र । तथा पेदवे एतन्नामकाय राज्ञे आशुं शीघ्रगामिनमश्वं निरूहथुः न्यवहतं युद्धे। युवंश्वेतंपेदवइतिनिगमः।तथा अत्रिं महर्षिं अंहसः ऋबीसादग्नेः सकाशात्तमसश्च गुहान्तस्थिताच्च सकाशान्निष्पर्तं न्यपारयतम् । युवमृबीसमुततप्तमत्रयओमन्वन्तं चक्रथुरितिनिगमः। तथा जाहुषं शिथिरे शिथिले भ्रष्टे स्वराष्ट्रेन्तर्मध्ये पुनर्निधातं न्यधातम् परिविष्टं जाहुषंविश्वतःसीमितिह्युक्तम् ॥ ५ ॥

५. तुमने च्यवन ऋषि का बुढ़ापा छुड़ाया था, पेदु नामक राजा के लिए युद्ध में शीघ्रगामी अश्व भेजा था, अत्रि को पाप और अन्धकार से पार किया था और जाहुष को भ्रष्ट-राज्य में पुनः स्थापित किया था।

---

१ ऋ० सं० १. ८. १५. । २ ऋ० सं० १. ८. १९. ।
३ ऋ० सं० ७. ८. १६. । ४ ऋ० सं० १. ८. ११. ।

अथ षष्ठी—

इयंमनीषाइयमश्विनागीरिमांसुवृक्तिंवृषणाजुषेथाम्।
इमाब्रह्माणियुवयून्यग्मन्यूयंपातस्वस्तिभिःसदानः ॥ ६ ॥१८॥

इयम्। मनीषा। इयम्। अश्विना। गीः। इमाम्। सुऽवृक्तिम्।
वृषणा। जुषेथाम्। इमा। ब्रह्माणि। युवऽयूनि।
अग्मन्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ६ ॥ १८ ॥

इयंमनीषेति षष्ठी गता ॥ ६ ॥

६. अश्विद्वय, तुम्हारे लिए यही स्तुति और यही वचन हुआ। कामवर्षक-द्वय, इस शोभन स्तुति की सेवा करो। ये सारे कर्म, तुम्हारी कामना करते हुए, सङ्गत हों। तुम सदा हमें स्वति-द्वारा पालित करो।

॥ इति पञ्चमस्य पञ्चमेष्टादशोवर्गः॥ १८ ॥

आगोमतेति पञ्चर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनं अनुक्रम्यतेच—आगोमतापञ्चेति। विनियोगः प्रातरनुवाकाश्विनशस्त्रयोरुक्तः। आश्विनेपशावाद्याश्वतस्रोयाज्यानुवाक्याः। सूत्रितश्च—आगोमतानासत्यारथेनेतिचतस्रइति।

आगोमतानासत्यारथेनाश्वावतापुरुश्चन्द्रेणयातम्।
अभिवांविश्वानियुतःसचन्तेस्पार्हयाश्रियातन्वाशुभाना ॥ १ ॥

आ। गोऽमता। नासत्या। रथेन। अश्वऽवता। पुरुऽचन्द्रेण।
यातम्। अभि। वाम्। विश्वाः। निऽयुतः। सचन्ते।
स्पार्हया। श्रिया। तन्वा। शुभाना॥ १ ॥

हे नासत्या अश्विनौ गोमता गोयुक्तेन अश्वावता अश्वयुक्तेन अश्वैर्वृषभैश्चोढेनेत्यर्थः यद्वा गोमता गोप्रदेन पुरुश्चन्द्रेण बहुधनेन धनप्रदेनेत्यर्थः तादृशेन रथेन आयातं आगच्छतं वां विश्वा बह्व्योनियुतः स्तुतयः अभिसचन्ते सेवन्तेऽस्मत्प्रेरिताः।हे स्पार्हया स्पृहणीयया श्रिया शोभया तन्वा शरीरेणच शुभाना दीप्यमानौ युवाम्॥ १ ॥

१. नासत्यद्वय, तुम लोग गौ, अश्व और धन से युक्त रथ पर आओ। अनेक स्तुतियाँ तुम्हारी सेवा करती हैं। तुम लोग अभिलषणीय शोभा और शरीर-द्वारा दीप्यमान होओ।

अथ द्वितीया—

आनोदेवेभिरुपयातमर्वाक्सजोषसानासत्यारथेन।
युवोर्हिनःसख्यापित्र्याणिसमानोबन्धुरुततस्यवित्तम्॥ २॥

आ। नः। देवेभिः। उप। यातम्। अर्वाक्। सऽजोषसा।
नासत्या। रथेन। युवोः। हि। नः। सख्या। पित्र्याणि।
समानः। बन्धुः। उत। तस्य। वित्तम्॥ २॥

हे नासत्या अश्विनौ युवां देवेभिरितरैर्देवैः सह सजोषसा समानप्रीतौ परस्परं सन्तौ नोस्माकमर्वागभिमुखं रथेन उपसमीपे आयातं आगच्छतम्। आगमने बन्धुत्वातिशयमाह युवोर्हि युवयोः खलु नोस्माकञ्च सख्या सख्यानि पित्र्याणि पितृतःप्राप्तानि नेदानीं स्तुत्याद्युपाधिना प्राप्तानि भवन्तीत्यर्थः तदेवाह उतापिच युवयोर्ममच बन्धुः बन्धकः पितामहः समानः एकएव तस्य वित्तं तस्येति कर्मणिषष्ठी तं बन्धुं तद्बन्धुत्वं वा वित्तं जानीतम्। विवस्वान् वरुणश्चोभावपि कश्यपाददितेर्जातौ विवस्वानश्विनोर्जनकः वरुणोवसिष्ठस्येतीत्येवं समानबन्धुत्वं तथाच बृहद्देवतायामुक्तम्— अभवन्मिथुनंत्वष्टुःसरण्यूस्त्रिशिराः सह। सवैसरण्युंप्रायच्छत्स्वयमेवविवस्वते॥ १॥ ततःसरण्य्वांजातेतेयमयम्यौविवस्वतः। तावप्युभौयमावेवत्यास्तां यम्याचवैयमः॥ २॥ सृष्ट्वाभर्तुःपरोक्षंतुसरण्यूःसदृशींस्त्रियम्। निक्षिप्यमिथुनंतस्यामश्वाभूत्वाप्रचक्रमे॥ ३॥ अविज्ञानाद्विवस्वांस्तुतस्यामजनयन्मनुम्। राजर्षिरासीत्समनुर्विवस्वानिवतेजसा॥ ४॥ सविज्ञायअपक्रान्तांसरण्यूमात्मरूपिणीम्। त्वाष्ट्रींप्रतिजगामाशुवाजीभूत्वासंलक्षणः॥ ५॥ सरण्यूस्तुविवस्वन्तंविज्ञायहयरूपिणम्। मैथुनायोपचक्रामताञ्चतत्रारुरोहसः॥ ६॥ ततस्तयोस्तुवेगेनशुक्रंतदपतद्भुवि। उपाजिघ्रच्चसात्वश्वातंशुक्रंगर्भकाम्यया॥ ७॥ आघ्राणमात्राच्छुक्रंततकुमारौसंबभूवतुः। नासत्यश्चैवदस्रश्चयौस्तुतावश्विनावपीति॥ २॥

२. नासत्यद्वय, तुम लोग देवों के साथ समान प्रीति से युक्त होकर और रथ पर चढ़कर हमारे पास आओ। तुम्हारे साथ हमारा बन्धुत्व पूर्वजों के समय से ही चला आता है। तुम्हारे और हमारे एक ही बन्धु (=पितामह) हैं। उनका धन भी एक ही है।

अथ तृतीया—

उदुस्तोमासोअश्विनोरबुध्रञ्जामिब्रह्माण्युषसश्चदेवीः।
आविवासन्रोदसीधिष्ण्येमेअच्छाविप्रोनासत्याविवक्ति॥ ३॥

उत्। ऊँ इति। स्तोमासः। अश्विनोः। अबुध्रन्। जामि।
ब्रह्माणि। उषसः। च। देवीः। आऽविवासन्। रोदसी इति।
धिष्ण्ये इति। इमे इति। अच्छ। विप्रः। नासत्या। विवक्ति॥३॥

स्तोमासः स्तोमाः स्तवाः अश्विना अश्विनौ उदु अबुध्रन् उत्कृष्टं बोधयन्ति उइति पूरणः जामि बन्धुनामैतत् बन्धुस्थानीयानि ब्रह्माणि परिवृढानि कर्माणि देवीर्द्योतमानाउषसश्चकारादश्विनौच अबुध्रन् विप्रोमेधावी वसिष्ठः इमे रोदसी द्यावापृथिव्यौ धिष्ण्ये धिषणार्हे स्तुत्ये आविवासन् परिचरन् नासत्या अश्विनौ अच्छ अभिमुखं विवक्ति स्तौति॥३॥

३. अश्विद्वय को स्तुतियां भली भाँति जगाती हैं। बन्धुस्थानीय सारे कर्म प्रकाशमान उषा को जगाते हैं। मेधावी वसिष्ठ स्तुति से द्यावा-पृथिवी की परिचर्या करके नासत्यद्वय के अभिमुख स्तुति करते हैं।

विचेदुच्छन्त्यश्विनाउषासःप्रवांब्रह्माणिकारवोभरन्ते।
ऊर्ध्वंभानुंसवितादेवोअश्रेद्बृहदग्नयःसमिधाजरन्ते॥ ४॥

वि। च। इत्। उच्छन्ति। अश्विना। उषसः। प्र। वाम्।
ब्रह्माणि। कारवः। भरन्ते। ऊर्ध्वम्। भानुम्। सविता।
देवः। अश्रेत्। बृहत्। अग्नयः। सम्ऽइधा। जरन्ते॥ ४॥

हे अश्विनौ उषासः उषसः व्युच्छन्ति चेत् तमांसि विवासयन्ति चेदितिपूरणश्चार्थेवा सच वक्ष्यमाणसूर्याद्यपेक्षकः चेद्योगादनिघातः। अतोवां युवयोः स्तुतिसमयत्वाद्ब्रह्माणि स्तोत्राणि कारवः स्तोतारः प्रभरन्ते प्रकर्षेण संपादयन्ति ऊर्ध्वमश्रेत् आश्रयति भानुं तेजः सविता देवः अग्नयोपि समिधा समिन्धनेन बृहत् अतिमहत् जरन्ते स्तूयन्ते॥ ४॥

४. अश्विद्वय, यदि उषायें अन्धकार दूर करें, तो स्तोता विशेष रूप से तुम्हारा स्तोत्र करेंगे। सविता देवता ऊर्ध्व तेज का आश्रय करते हैं। समिधा के द्वारा अग्निदेव भी भली भाँति स्तुत होते हैं।

आपश्चातादिति पञ्चमी आश्विने पशौ वपायाअनुवाक्या सूत्रितश्च—आपश्चतान्नासत्यापुरस्तादागोमतानासत्यारथेनेति। तत्पाठस्तु—

अथ पंचमी—

आपश्चातान्नासत्यापुरस्तादाश्विनायातमधरादुदक्तात्।
आविश्वतःपाञ्चजन्येनरायायूयंपातस्वस्तिभिःसदानः॥५॥१९॥

आ । पश्चातात् । नासत्या । आ । पुरस्तात् । आ । अश्विना ।
यातम् । अधरात् । उदक्तात् । आ । विश्वतः । पाञ्चऽजन्येन ।
राया । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥ १९ ॥

हे नासत्या अश्विनौ पश्चातात् पश्चाद्देशात् आयातम् तथा पुरस्तात्पूर्वस्माद्देशात् तथा अधरादधस्तनाद्देशात् दक्षिणतः उदक्तादुदग्देशात् सर्वत्रायातमिति संबन्धः किंबहुना विश्वतः सर्वस्माद्देशात्पाञ्चजन्येन पञ्चजनहितेन राया धनेन सहायातम् निषादपञ्चमाश्चत्वारोवर्णाः पञ्चजनाः शिष्टं स्पष्टम् ॥ ५ ॥

५. नासत्यद्वय, पूर्व, पश्चिम, दक्षिण और उत्तर से आओ। पञ्च श्रेणियों (ब्राह्मणादि चार वर्ण और निषाद) का हित करनेवाली सम्पत्ति से भी आओ। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य पञ्चमे एकोनविंशोवर्गः ॥ १९ ॥

अतारिष्मेति पञ्चर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम् अतारिष्मेत्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्र प्रथमा—

अतारिष्मतमसस्पारमस्यप्रतिस्तोमंदेवयन्तोदधानाः ।
पुरुदंसापुरुतमापुराजामर्त्याहवतेअश्विनागीः ॥ १ ॥

अतारिष्म । तमसः । पारम् । अस्य । प्रति । स्तोमम् ।
देवऽयन्तः । दधानाः । पुरुऽदंसा । पुरुऽतमा । पुराऽजा ।
अमर्त्या । हवते । अश्विना । गीः ॥ १ ॥

अस्य तमसोऽज्ञानस्य तत्कार्यस्य जननमरणवतः संसारदुःखस्य अथवा प्रकृतत्वात् प्रयोगविषयाज्ञानस्य पारं अतारिष्म तीर्णाः स्म । किं कुर्वन्तः देवयन्तो देवकामाः स्तोमं स्तुतिं प्रतिदधानाः देवेषु कुर्वाणाः पुरुदंसा बहुकर्माणौ पुरुतमा प्रभूततमौ पुराजा पूर्वजातौ अतएवामर्त्यावमरणधर्माणावश्विनाश्विनौ गीर्गरिता स्तोता वसिष्ठोहवते स्तौति आह्वयति वा ॥ १॥

१. देवाभिलाषी होकर, स्तोत्र करते हुए, हम अज्ञान के पार जायेंगे। हे बहुकर्मा, प्रभूततम, पूर्वजात और अमर्त्य अश्विद्वय, तुम्हें स्तोता बुलाता है।

अथ द्वितीया—

न्युप्रियोमनुषःसादिहोतानासत्यायोयजतेवन्दतेच ।
अश्नीतंमध्वोअश्विनाउपाकआवांवोचेविदथेषुप्रयस्वान् ॥ २ ॥

नि । ऊँ इति । प्रियः । मनुषः । सादि । होता । नासत्या ।
यः । यजते । वन्दते । च । अश्नीतम् । मध्वः । अश्विनौ ।
उपाके । आ । वाम् । वोचे । विदथेषु । प्रयस्वान् ॥ २ ॥

प्रियोयुवयोः प्रियभूतोमनुषोमानुषः मनुषः सकाशाज्जातोवा होता देवानामाह्वाता स्तोतायं निषादि न्यसादि निषण्णोभवति युवयोः कर्मणिवर्ततइत्यर्थः हे नासत्याश्विनौ योयजते यागंकरोति वन्दते स्तौति च तस्य संबन्धिनं मध्वोमधुरं सोमरसं हे अश्विनाश्विनौ उपाकेन्तिकएव समीपेस्थित्वैवाश्नीतं पिबतमित्यर्थः विदथेषु यज्ञेषु वां युवां प्रयस्वान् अन्नवान्सन् आवोचे आह्वये । उपूरणः ॥ २ ॥

२. तुम्हारा प्रिय मनुष्य होता यहाँ बैठा है। नासत्यद्वय, जो तुम्हारा यज्ञ और वन्दन करता है, उसका मधुर सोमरस, पास में ठहरकर; भक्षण करो। अन्नवान् होकर यज्ञ में तुम्हें बुलाता हूँ।

अहेमयज्ञंपथामुराणाइमांसुवृक्तिंवृषणाजुषेथाम् ।
श्रुष्टीवेवप्रेषितोवामबोधिप्रतिस्तोमैर्जरमाणोवसिष्ठः ॥ ३ ॥

अहेम । यज्ञम् । पथाम् । उराणाः । इमाम् । सुऽवृक्तिम् ।
वृषणा । जुषेथाम् । श्रुष्टीवाऽइव । प्रऽइषितः । वाम् ।
अबोधि । प्रति । स्तोमैः । जरमाणः । वसिष्ठः ॥ ३ ॥

उराणा उरुस्तोत्रंकुर्वाणाः स्तोतारोवयं पथां पततां आगच्छताम् देवानामर्थाय यज्ञं यागं तत्साधनं हविर्वा अहेम वर्धयेम हे वृषणा वर्षकौ कामानां इमां सुवृक्तिं शोभनस्तुतिं जुषेथां सेवेथाम् वां युवां श्रुष्टीवेव श्रुष्टीति क्षिप्रनाम क्षिप्रगन्ता दूतइव प्रेषितोहं अबोधि बोधयति शीघ्रं गन्तव्यमिति । किं कुर्वन् स्तोमैः स्तोत्रैः प्रतिजरमाणः प्रतिस्तुवन् कः वसिष्ठोहं अबोधीति ॥ ३ ॥

३. हम महान् स्तोता हैं। हम आगमनशील देवों के लिए यज्ञ को बढ़ाते हैं। कामवर्षक-द्वय, इस सुन्दर स्तुति की सेवा करो। मैं वसिष्ठ, शीघ्रगामी दूत की तरह, तुम्हारे पास प्रेरित होकर, स्तोत्र-द्वारा स्तुति करते हुए प्रबोधित हुआ हूँ।

अथ चतुर्थी—

उपत्यावह्नीगमतोविशंनोरक्षोहणासंभृतावीळुपाणी ।
समन्धांस्यग्मतमत्सराणिमानोमर्धिष्टमागतंशिवेन ॥ ४ ॥

उप॑ । त्या । वह्नी इति॑ । गमतः॑ । विश॑म् । नः॒ । रक्षः॒ऽहना॑ । सम्ऽभृ॑ता ।
वी॒ळुपा॑णी॒ इति॑ वी॒ळुऽपा॑णी । सम् । अन्धां॑सि । अ॒ग्मत ।
म॒त्स॒रा॑णि । मा । नः॒ । म॒र्धि॒ष्टम् । आ । ग॒तम् । शि॒वेन॑ ॥ ४ ॥

त्या त्यौ तौ वह्नी हविषांवोढारौ नोस्माकं विशं प्रजां ऋत्विजं उपगमतः उपगच्छतां की-दृशौ तौ रक्षोहणा रक्षसां हन्तारौ संभृता सम्यग्भृतौ पुष्टांगौ वीळुपाणी दृढपाणी यद्वायमर्ध-र्चोश्वपरतयाव्याख्येयः तथा सति तौ रथस्यवोढारौ दृढपादौ अश्विनोरश्वौ उपगच्छतामिति तस्यार्थः । अन्धांस्यन्नानि मत्सराणि मदकराणि सोमाः समग्मत समगच्छन्त युवां नोस्मान् मामर्धिष्टं माहिंस्तं किंतु शिवेन मङ्गलेन धनेन सार्धमागतमागच्छतम् ॥ ४ ॥

४. वे दोनों हव्यवाहक, राक्षस-नाशक, पुष्टाङ्ग और दृढ़-पाणि हैं। वे हमारी प्रजा के पास उपस्थित हों। तुम मदकर अन्न के साथ सङ्गत होओ। हमारी हिंसा नहीं करना। मङ्गल के साथ आओ।

आप॒श्चात्ता॑न्नासत्या पु॒रस्ता॒दाश्वि॑ना यातमध॒रादुद॑क्तात् ।
आ वि॒श्वतः॒ पाञ्च॑जन्येन रा॒या यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥५॥२०॥

आ । प॒श्चाता॑त् । ना॒स॒त्या॒ । आ । पु॒रस्ता॑त् । आ । अ॒श्वि॒ना॒ ।
या॒तम् । अ॒ध॒रात् । उद॑क्तात् । आ । वि॒श्वतः॑ । पाञ्च॑ऽजन्येन ।
रा॒या । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ५ ॥ २० ॥

आपश्चा दिति पञ्चम्याविनियोगोव्याख्यातचरः ॥ ५ ॥

५. नासत्यद्वय, पूर्व, पश्चिम, दक्षिण और उत्तर दिशाओं से आओ। पञ्च श्रेणियों (ब्राह्मणादि चार वर्ण और निषाद) का हित करनेवाली सम्पत्ति से भी आओ। तुम सदा हमें-स्वस्ति द्वारा पालन करो।

॥ इति पंचमस्य पञ्चमे विंशो वर्गः ॥ २० ॥

इमाउवामिति षळृचं चतुर्थं सूक्तमाश्विनं वसिष्ठस्यार्षं आद्यातृतीयापञ्चम्योबृहत्यः शिष्टाः सतोबृहत्यः तथाचानुक्रान्तम्—इमाउवां षट्प्रागाथमिति। प्रातरनुवाके आश्विनेक्रतौ बार्हतेछन्दस्याश्विनशस्त्रेच सूक्तम् सूत्रितञ्च—इमाउवामयंवामिति । दशरात्रे पञ्चमेहनि प्रउग-शस्त्रे इमाउवामित्ययमाश्विनस्तृचः सूत्रितञ्च—इमाउवांदिविष्टयःपिबासुतस्यरसिनइति ।

तत्र प्रथमा—

इ॒माउ॑वां॒ दिवि॑ष्टय उ॒स्रा ह॑वन्ते अश्विना ।
अ॒यं वा॑म॒ह्वेऽव॑से शचीवसू॒ विशं॑विशं॒ हि गच्छ॑थः ॥ १ ॥

इमाः । ॐ इति । वाम् । दिविष्टयः । उस्रा । हवन्ते । अश्विना ।
अयम् । वाम् । अह्वे । अवसे । शचीवसू इति शचीऽवसू ।
विशम्ऽविशम् । हि । गच्छथः ॥ १ ॥

इमा दिविष्टयोदिवमिच्छन्त्यः प्रजा ऋत्विजोपि उइतिचार्थे हे अश्विना उस्रा वासकौ वां हवन्ते आह्वयन्ति अयं वसिष्ठोपि हे शचीवसू कर्मधनौ वां युवां अवसेस्मद्रक्षणाय युवयोस्तर्पणायवा अह्वे आह्वयामि किमर्थमेवं प्रजाअप्यहमपीत्यादरोक्तिरिति तत्राह हि यस्मात् कारणात् युवां विशंविशं प्रजांप्रजां प्रति गच्छथः ॥ १ ॥

१. निवासप्रद अश्विद्वय, ये स्वर्गकामी लोग तुम्हें बुलाते हैं। कर्म-धनद्वय, रक्षा के लिए मैं वसिष्ठ भी तुम्हें बुलाता हूँ। कारण, तुम प्रत्येक प्रजा के पास जाते हो।

युवंचित्रंददथुर्भोजनंनराचोदेथांसूनृतावते ।
अर्वाग्रथंसमनसानियच्छतंपिबतंसोम्यंमधु ॥ २ ॥

युवम् । चित्रम् । ददथुः । भोजनम् । नरा । चोदेथाम् ।
सूनृताऽवते । अर्वाक् । रथम् । सऽमनसा । नि ।
यच्छतम् । पिबतम् । सोम्यम् । मधु ॥ २ ॥

हे नरा अश्विनौ युवं युवां चित्रं चायनीयं भोजनं धनं दधथुः धारयेथे तद्धनं सूनृतावते स्तुतिवते स्तोत्रे चोदेथां प्रेरयतं तदर्थं समनसा समानमनस्कौ सन्तौ रथं युवयोः संबन्धिनं अर्वागस्मदभिमुखं नियच्छतं नियमतम्। तथा कृत्वा सोम्यं सोमसंबन्धिनं मधु मधुररसं पिबतम् ॥ २ ॥

२. अश्विद्वय, तुम लोग जो चित्र (भोज्य) धन धारण करते हो, स्तोता के पास उसे प्रेरित करो। समान-मन होकर अपना रथ हमारे सामने प्रेरित करो। सोम-सम्बन्धी मधुर रस को पियो।

अथ तृतीया—

आयातमुपभूषतंमध्वःपिबतमश्विना ।
दुग्धंपयोवृषणाजेन्यावसूमानोमर्धिष्टमागतम् ॥ ३ ॥

आ । यातम् । उप । भूषतम् । मध्वः । पिबतम् । अश्विना ।
दुग्धम् । पयः । वृषणा । जेन्यावसू इति । मा ।
नः । मर्धिष्टम् । आ । गतम् ॥ ३ ॥

हे अश्विना युवां आयातमागच्छतं आगत्य चोपसमीमे भूषतं भवतं मध्वः मधुरं सोमरसं पिबतं पीत्वाच हे वृषणा वर्षकौ हे जेन्यावसू जेतव्यधनौ जितधनावित्यर्थः युवां पयोवृष्ट्युदकं अन्तरिक्षात् दुग्धं नोस्मान् मार्माधिष्टं माहिंस्तं ईदृशप्रार्थनाकरणमेवाहिंसा आगतमागच्छतं शीघ्रम् ॥ ३ ॥

३. अश्विद्वय, आओ, पास में ठहरो और मधु (सोमरस) का पान करो। अभीष्टवर्षक और धनञ्जय तुम जल का दोहन करो। हमें नहीं मारना। आओ।

अश्वा॑सो॒ये वा॒मुप॑दा॒शुषो॑गृ॒हंयु॒वांदीय॑न्ति॒बिभ्र॑तः ।
म॒क्षूयु॑भि॒र्न॑रा॒हये॑भिरश्वि॒नादे॑वायातमस्म॒यू ॥ ४ ॥

अश्वा॑सः । ये । वा॒म् । उप॑ । दा॒शुषः॑ । गृ॒हम् । यु॒वाम् । दीय॑न्ति ।
बिभ्र॑तः । म॒क्षुयुऽभिः॑ । न॒रा॒ । हये॑भिः । अ॒श्वि॒ना॒ । आ ।
दे॒वा॒ । या॒त॒म् । अ॒स्म॒यू इत्य॑स्म॒ऽयू ॥ ४ ॥

ये अश्वासोश्वाः वां युवयोः स्वभूता दाशुषोहविर्दातुर्गृहं युवां बिभ्रतोधारयन्तोदीयन्ति गमयन्तीत्यर्थः मक्षूयुभिः शीघ्रगन्तृभिर्हयेभिः हयैरश्वैः हे नरा नेतारौ अश्विना अश्विनौ देवा देवौ अस्मयू अस्मान्कामयमानौ आयातं अस्मद्यज्ञमागच्छतम् ॥ ४ ॥

४. तुम्हारे जो अश्व हव्यदाता के गृह में तुम्हें धारण करते हुए जाते हैं, उन्हीं शीघ्रगामी अश्वों की सहायता से हमारी कामना करके आओ।

अधा॑ह॒यन्तो॑अ॒श्विना॒पृक्षः॑सचन्त॒सूर॑यः ।
ता॒यं॑स॒तोम॒घव॑द्भ्यो॒ध्रु॒वंयशः॑श्छ॒र्दिर॒स्मभ्यं॒नास॑त्या ॥५॥

अध॑ । ह॒ । यन्तः॑ । अ॒श्विना॑ । पृक्षः॑ । स॒च॒न्त॒ । सूर॑यः ।
ता । यं॒स॒तः॒ । म॒घव॑त्ऽभ्यः । ध्रु॒वम् । यशः॑ ।
छ॒र्दिः॑ । अ॒स्मभ्य॑म् । नास॑त्या ॥ ५ ॥

अधाह अपिच अश्विना अश्विनौ यन्तः स्तुतिभिर्गच्छन्तोयजमानाः सूरयोमेधाविनः स्तोतारं पृक्षोन्नं प्रभूतं सचन्त सेवन्ते संयन्तिवा ता तौ युवां मघवद्भ्योन्नवद्भ्योस्मभ्यं ध्रुवं अविचलितं यशोन्नं यशएववा छर्दिर्गृहं यंसतः प्रयच्छतम् हे नासत्याश्विनौ ॥ ५ ॥

५. अश्विद्वय, गमनकर्त्ता स्तोता लोग प्रभूत अन्न का आश्रय करते हैं। तुम हमें अविचल यश और गृह दो। नासत्यद्वय, हम मघवान् (धनी) हैं।

अथ षष्ठी–

प्रयेययुरवृकासोरथाइवनृपातारोजनानाम्।
उतस्वेनशवसाशूशुवुर्नरउतक्षियन्तिसुक्षितिम् ॥६॥२१॥

प्र। ये। ययुः। अवृकासः। रथाःऽइव। नृऽपातारः।
जनानाम्। उत। स्वेन। शवसा। शूशुवुः। नरः। उत।
क्षियन्ति। सुऽक्षितिम्॥ ६ ॥ २१ ॥

ये यजमानाः अवृकासः परकीयधनस्यानादातारः जनानां मनुष्याणां मध्ये नृपातारः ऋत्विग्रूपाणां नृणां रक्षितारः सन्तोययुः युवां प्राप्नुवन्ति हविर्भिः। प्राप्तौ दृष्टान्तः—रथाइव व्रीह्यादिपूर्णा रथायथा प्राप्नुवन्ति स्वामिगृहं। उतेत्ययमुत्तरवाक्यापेक्षः अपिच ते नरोयजमानाः स्वेन शवसा स्वीयेन बलेन शूशुवुः वर्धन्ते उतापिच सुक्षितिं सुनिवासं क्षियन्ति गच्छन्ति प्राप्नुवन्ति॥ ६॥

६. जो दूसरे का धन न ग्रहण कर और मनुष्यों के बीच मनुष्य-रक्षक होकर, रथ की तरह, तुम्हारे पास जाते हैं, वे अपने बल से वर्द्धित होते और रहने के सुन्दर स्थान में जाते हैं।

॥ इति पंचमस्य पञ्चमे एकविंशोवर्गः॥ २१॥

व्युषाआवइत्यष्टर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षम् अत्रानुक्रमणिका व्युषाअष्टाउषस्यंतुवा-इति तुवाइत्युक्तत्वात्तुत्यादिपरिभाषयेदमादीनि सप्तसूक्तान्युषोदेवत्यानि प्रातरनुवाके उषस्येक्रतौ त्रैष्टुभेछन्दसि आश्विनशस्त्रे चेदमादीनिषट्सूक्तानि तथाचसूत्र्यते—व्युषाआवोदिविजाइतिषडिति त्रैष्टुभमिति।ऋग्विधाने आख्यातोविनियोगोत्रलिख्यते—रात्र्याअपरकालेयउत्थायप्रयतःशुचिः। व्युषाइत्युपतिष्ठेतषड्भिःसूक्तैःकृताञ्जलिः॥ १॥ प्राप्नुयात्सहिरण्यानिनानारूपंधनंबहु। गावोश्वान्पुरुषान्धान्यंस्त्रियोवासांस्यजाविकमिति॥ २॥

तत्र प्रथमा–

व्युषाआवोदिविजाऋतेनाविष्कृण्वानामहिमानमागात्।
अपद्रुहस्तमआवरजुष्टमङ्गिरस्तमापथ्याअजीगः॥ १॥

वि। उषाः। आवः। दिविऽजाः। ऋतेन। आविःऽकृण्वाना।
महिमानम्। आ। अगात्। अप। द्रुहः। तमः। आवः।
अजुष्टम्। अङ्गिरःऽतमा। पथ्याः। अजीगरिति॥ १॥

इयमुषाः दिविजाः दिव्यन्तरिक्षे प्रादुर्भूतासती व्यावः व्यौच्छव् विभानं कृतवतीत्यर्थः वसिर्निवासवाची अत्र विपूर्वोव्युच्छनेभवेव् छन्दस्यपिदृश्यतइत्याट् दृशिग्रहणस्य विध्यन्तरोपसंग्रहणार्थत्वादनजादेरप्याडागमः हल्ङ्याब्भ्यइतिलोपः सैवोषाः ऋतेन तेजसा महिमानं स्वमहत्त्वमाविष्कृण्वाना आगाव् आगतवती आगत्यच द्रुहोस्मद्द्रोग्धॄन् अजुष्टं सर्वेषामप्रियं तमश्चअपावः अपवृणोति किञ्च अङ्गिरस्तमा अङ्गेर्गत्यर्थादङ्गिराः गन्तृतमाः पथ्याः पदवीरजीगः उद्गिरति प्राणिनांव्यवहाराय प्रकाशयतीत्यर्थः ॥ १ ॥

१. उषा ने अन्तरिक्ष में प्रादुर्भूत होकर प्रकाश किया। अपने तेज के बल से वे अपनी महिमा को प्रकट करते हुए आईं। उन्होंने अप्रिय शत्रु और अन्धकार को दूर किया। प्राणियों के व्यववहार के लिए सबसे गन्तव्य पथ को प्रकाशित किया।

महेनोंअद्यसुवितायबोध्युषोंमहेसौभंगायप्रयंन्धि।
चित्रंरयिंयशसंधेह्यस्मेदेविमर्तेषुमानुषिश्रवस्युम् ॥ २ ॥

महे। नः। अद्य। सुवितायं। बोधि। उषंः। महे।
सौभंगाय। प्र। यन्धि। चित्रम्। रयिम्। यशसंम्। धेहि। अस्मे
इतिं। देवि। मर्तेषु। मानुषि। श्रवस्युम् ॥ २ ॥

अद्य नोस्माकं महे महते सुविताय सुखप्राप्तये सुखगमनायवा बोधि भव। किञ्च हे उषः महे महते सौभगाय सौभाग्याय प्रयन्धि प्रयच्छ अस्मान्। किंच चित्रं चायनीयं यशसं यशोयुक्तं रयिं धनं धेहि धारय। अस्मे अस्मासु हे मानुषि मनुष्यहिते देवि मर्तेष्वस्मासु श्रवस्युं अन्नवन्तं पुत्रं धेहीत्यनुषङ्गः॥ २ ॥

२. आज हमारे महासुख की प्राप्ति के लिए जागो। उषा, महासौभाग्य प्रदान करो। विचित्र यश से युक्त धन हमारे लिए धारण करो। मनुष्यहितकारिणी देवी, मनुष्यों को अन्नवान् पुत्र दो।

अथ तृतीया—

एतेत्येभानवोंदर्शतायांश्चित्राउषसोंअमृतासआगुः।
जनयंन्तोदैव्यांनिव्रतान्यांपृणन्तोंअन्तरिंक्षाव्यंस्थुः ॥ ३ ॥

एते। त्ये। भानवंः। दर्शतायाः। चित्राः। उषसंः।
अमृतासः। आ। अगुः। जनयंन्तः। दैव्यांनि। व्रतानिं।
आऽपृणन्तंः। अन्तरिंक्षा। वि। अस्थुः ॥ ३ ॥

दर्शताया: दर्शनीयाया: प्रकाशयुक्तायाउषस: एते पुरोदृश्यमाना: त्ये ते प्रसिद्धाश्चित्रा: पूज्याआश्चर्यभूतावा अमृतास:अमरणा अनश्वरा भानवोरश्मय: आ अगु: आगच्छन्ति। किं कुर्वन्त: दैव्यानि देवानां संबन्धीनि व्रतानि कर्माणि जनयन्त: उत्पादयन्त: तदनुकूलप्रकाशप्रदानात्तदुत्पादकत्वमेषां अन्तरिक्षाअन्तरिक्षाणि आपृणन्त आपूरयन्त: एकस्यैवान्तरिक्षस्य वायुमेघपक्षिणामालंबनोपाधिना त्रिविधत्वं अतोबहुवचनमुपपन्नं एवं कुर्वन्तोभानवोव्यस्थु: विविधं तिष्ठंति प्रसरंति ॥ ३ ॥

३. दर्शनीय उषा की ये सब प्रवृद्ध, विचित्र और अविनाशी किरणें, देवों का व्रत उत्पादन करती हुई और सारे अन्तरिक्ष को पूर्ण करती हुई, आती और विविध प्रकार से फैलती है।

एषास्यायुंजानापंराकात्पञ्चंक्षितीःपरिंसद्योजिंगाति।
अभिपश्यन्तीवयुनाजनानांदिवोदुंहिताभुवनस्यपत्नी ॥ ४ ॥

एषा। स्या। युजाना। पराकात्। पञ्च। क्षितीः। परिं।
सद्यः। जिगाति। अभिऽपश्यन्ती। वयुना। जनानाम्।
दिवः। दुहिता। भुवनस्य। पत्नी ॥ ४ ॥

एषा स्या सोषा: पराकात् दूरदेशात् दूरे स्थितापि युजाना उद्योगं कुर्वाणा प्रकाशाय पञ्चक्षिती: निषादपञ्चमाश्चत्वारोवर्णा: सद्य: परिजिगाति परिगच्छति किंकुर्वती जनानां प्राणिनां वयुना प्रज्ञानानि अभिपश्यन्ती साक्षित्वेनावलोकयन्ती कीदृशी सादिवोदुहिता दुहितृस्थानीया भुवनस्य भूतजातस्य पत्नी पालयित्री परिजिगातीत्यन्वय: ॥ ४ ॥

४. यह वही द्युलोक की दुहिता और भुवनों की पालिका उषा प्राणियों के अभिज्ञानों को देखकर और दूसरे भी उद्योग करके पञ्च श्रेणियों (चार वर्ण और निषाद) के पास तुरत जाती हैं।

अथ पंचमी—

वाजिनीवतीसूर्यस्ययोषांचित्रामंघारायईशेवसूंनाम्।
ऋषिष्टुताजरयन्तीमघोन्युषाउंच्छतिवह्निभिर्गृणाना ॥ ५ ॥

वाजिनीऽवती। सूर्यस्य। योषा। चित्रऽमंघा। रायः।
ईशे। वसूनाम्। ऋषिऽस्तुता। जरयन्ती। मघोनी।
उषाः। उच्छति। वह्निऽभिः। गृणाना ॥ ५ ॥

वाजिनीवती बह्वन्ना यद्यप्युषोनामैतत् तथापि चित्रामघेत्यस्यापि उषोनामकस्य पृथग्विद्यमानत्वादत्रैकोयोगरूढोवगन्तव्यः। सूर्यस्य योषा योषित् चित्रामघा विचित्रधना विचित्ररश्म्याख्यधनावा रायोधनस्य अविशिष्टस्य तस्य वसूनां देवमनुष्यादिसर्वाश्रयाणां धनानां चेशे ईष्टे अथवा वसवोवासका रश्मयः तेषामपीष्टे। ऋषिष्टुता ऋषिभिः स्तुता जरयन्ती प्राणिजातानि उषाः खलु पुनः पुनरावर्तमाना प्राणिनामायुः क्षपयति। मघोनी धनवती उषाः वह्निभिः कर्मवोढृभिः यजमानैर्गृणाना स्तूयमाना उच्छति विभानं करोति॥ ५॥

५. अन्नवती, सूर्यगृहिणी, विचित्र धन (रश्मि) वाली उषा धन और देव-धन की स्वामिनी हुई हैं। ऋषियों के द्वारा स्तुता, बुढ़ापा देनेवाली और धनवाली उषा यजमान-द्वारा स्तूयमान होकर प्रभात करती हैं।

अथ षष्ठी—

प्रतिद्युतानामरुषासोअश्वाश्चित्राअदृश्रन्नुषसंवहन्तः।
यातिशुभ्राविश्वपिशारथेनदधातिरत्नंविधतेजनाय॥ ६॥

प्रति। द्युतानाम्। अरुषासः। अश्वाः। चित्राः।
अदृश्रन्। उषसम्। वहन्तः। याति। शुभ्रा। विश्वऽपिशा।
रथेन। दधाति। रत्नम्। विधते। जनाय॥ ६॥

द्युतानां द्योतमानामुषसं वहन्तोधारयन्तः अरुषासः आरोचमानाश्चित्राश्चायनीयाअश्वाः प्रत्यदृश्रन् प्रतिदृश्यन्ते साचोषाः शुभ्रादीप्यमाना विश्वपिशा बहुरूपेण रथेन पाति सर्वत्रगच्छति। विधते परिचरते जनाय रत्नं रमणीयं धनं दधाति ददाति च॥ ६॥

६. जो दीप्तिवाली उषा को ले जाते हैं, वही विचित्र और शोभन अश्व दिखाई दे रहे हैं। वे उषा दिप्तमती होकर अनेक रूपोंवाले रथ से सर्वत्र जाती हैं। वे अपने परिचारक को रत्न देती हैं।

सत्यासत्येभिर्महतीमहद्भिर्देवीदेवेभिर्यजतायजत्रैः।
रुजद्दृळ्हानिददुस्रियाणांप्रतिगावउषसंवावशन्त॥ ७॥

सत्या। सत्येभिः। महती। महत्ऽभिः। देवी। देवेभिः।
यजता। यजत्रैः। रुजत्। दृळ्हानि। ददत्। उस्रियाणाम्।
प्रति। गावः। उषसम्। वावशन्त॥ ७॥

सत्या अन्यैरबाध्या महती पूजनीया प्रवृद्धा वा गुणैः। देवी द्योतमाना यजता यजनीयोषाः सत्येभिः सत्यैर्महद्भिर्देवेभिर्देवैर्यजत्रैरुक्तलक्षणैः किरणैर्निपातभाग्भिरन्यैः देवैर्वा सहिता

सती दृढ्हान्यत्यन्तं स्थिराणि तमांसि रुजव् भिनत्ति उस्रियाणां गोनामैतव् उस्राविणआसां भोगाइति तद्व्युत्पत्तिः तासां सञ्चाराय ददव् ददाति सामर्थ्यात् प्रकाशमित्यर्थः अथवा उस्रियागाः ददव् ददाति स्तोतृभ्यः। किञ्च गावः उपलक्षणमेतत् सर्वेपि तमोवरुद्धाः प्राणिनउषसं प्रति वावशन्त उशन्ति कामयन्ते विशेषेण गवां प्रभाते सञ्चारार्थमुषसोपेक्षितत्वात्तासां प्राधान्येनोक्तिः॥ ७॥

७. सत्यरूपा, महती और यजनीया उषा देवी सत्य, महान् और यजनीय देवों के साथ अत्यन्त स्थिर अन्धकार का भेदन करती हैं। गौओं के चरने के लिए प्रकाश देती हैं। गायें उषा की कामना करती हैं।

नूनोगोमद्वीरवद्धेहिरत्नमुषोअश्वावत्पुरुभोजोअस्मे।
मानोबर्हिःपुरुषतानिदेकर्यूयंपातस्वस्तिभिःसदानः॥ ८॥२२॥

नु। नः। गोऽमत्। वीरऽवत्। धेहि। रत्नम्। उषः। अश्वऽवत्। पुरुऽभोजः। अस्मे इति। मा। नः। बर्हिः। पुरुषता। निदे। कः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ८॥ २२॥

हे उषः नोस्मभ्यं नु क्षिप्रं गोमद्बहुभिर्गोभिर्युक्तं वीरवद्वीरैः पुत्रैरुपेतं अश्ववत् बहुभिरश्वैरुपेतं रत्नं रमणीयं धनं पुरुभोजोबह्वन्नं चास्मे अस्मासु धेहि देहि पादभेदादस्मेइति पुनरभिधानं। नोस्माकं बर्हिर्यज्ञं पुरुषता पुरुषतायां पुरुषसमूहेष्वस्मत्सद्दशेष्वित्यर्थः निदे निंदायै माकः माकार्षीः। यथा ते निन्दन्ति तथा मा कुर्वित्यर्थः॥ ८॥

८. उषा, हमें गौ, वीर और अश्व से युक्त धन दो। हमें बहुत अन्न दो। पुरुषों के बीच हमारे यज्ञ की निन्दा नहीं करना। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य पञ्चमे द्वाविंशो वर्गः॥ २२॥

उदुज्योतिरिति सप्तर्चं षष्ठं सूक्तं त्रैष्टुभमुषस्यं तथाचानुक्रान्तम्—उदुसप्तेति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

तत्र प्रथमा—

उदुज्योतिरमृतंविश्वजन्यंविश्वानरःसवितादेवोअश्रेत्।
क्रत्वादेवानामजनिष्टचक्षुराविरकर्भुवनंविश्वमुषाः॥ १॥

उत्। ऊँ इति। ज्योतिः। अमृतम्। विश्वऽजन्यम्। विश्वानरः। सविता। देवः। अश्रेत्। क्रत्वा। देवानाम्। अजनिष्ट। चक्षुः। आविः। अकः। भुवनम्। विश्वम्। उषाः॥ १॥

अमृतं अमृतत्वसाधकं अविनाशिवा विश्वजन्यं विश्वेषां जनानां हितकरं ज्योतिः विश्वानरः सर्वेषां नेता सवितादेवः उदश्रेत् ऊर्ध्वं श्रयति उइतिपूरणः देवानां व्यवहर्तॄणां स्तोतॄणां वा यजमानानां क्रत्वा कर्मणा निमित्तेन यागानुष्ठानार्थमित्यर्थः । तदर्थं यद्वा देवानां चक्षुश्चक्षुःस्थानीयमौषसं तेजः क्रत्वा कर्मणा निमित्तेन अजनिष्ट प्रादुरभूत् उत्पन्नाचोषा विश्वं भुवनं भूतजातमाविरकः प्रादुरकः अकरोत् समस्तं जगदाविष्कृतवती ॥ १ ॥

१. सबके नेता सविता ऊर्ध्वदेश में अविनाशी और सबके लिए हितैषी ज्योति का आश्रय करते हैं। वह देवों के कर्मों के लिए प्रकट हुए हैं। देवों की नेत्र-स्वरूपिणी होकर उषा ने सारे भुवनों को प्रकट किया है।

प्रमेपन्थांदेवयानांअदृश्रन्नमर्धन्तोवसुभिरिष्कृतासः ।
अभूदुकेतुरुषसःपुरस्तात्प्रतीच्यागादधिहर्म्येभ्यः ॥ २ ॥

प्र । मे । पन्थाः । देवऽयानाः । अदृश्रन् । अमर्धन्तः । वसुऽभिः । इष्कृतासः । अभूत् । ऊँ इति । केतुः । उषसः । पुरस्तात् । प्रतीची । आ । अगात् । अधि । हर्म्येभ्यः ॥ २ ॥

मे मया देवयानाः देवप्रापकाः पन्थाः पन्थानः प्राद्दश्रन् प्रदृश्यन्ते । कीदृशाः पन्थानः अमर्धन्तःअहिंसन्तः वसुभिस्तेजोभिरिष्कृतासः संस्कृताः पुरस्तात् पूर्वस्यांदिशि उषसः केतुः प्रज्ञापकं तेजः अभूत् अचेति ज्ञायते। सोषाश्च प्रतीची प्रत्यगञ्चना अस्मदभिमुखी हर्म्येभ्योधि उच्छ्रितेभ्यः प्रदेशेभ्यः हर्म्यशब्दउन्नतप्रदेशोपलक्षकः आगात् आगच्छति।उःपूरणः॥२॥

२. मैं हिंसा-रहित और तेज-द्वारा सुसंस्कृत देव-यान-पथ को देख चुका हूँ। उषा का केतु (प्रज्ञापक तेज) पूर्व दिशा में था। हमारे अभिमुख होकर उषा उन्नत प्रदेश से आती हैं।

तानीदहानिबहुलान्यासन्याप्राचीनमुदितासूर्यस्य ।
यतःपरिजारइवाचरन्त्युषोददृक्षेनपुनर्यतीव ॥ ३ ॥

तानि । इत् । अहानि । बहुलानि । आसन् । या । प्राचीनम् । उत्ऽइता । सूर्यस्य । यतः । परि । जारःऽइव । आऽचरन्ती । उषः । ददृक्षे । न । पुनः । यतीऽइव ॥ ३ ॥

हे उषः तानीत् तान्येव तव तेजांसि बहुलान्यहानि आसन् उषः प्रकाशयुक्तस्येव कालस्याहःशब्दव्यवहारात् । तानीत्युक्तं कानीत्याह या यानि सूर्यस्य उदिता उदितौ उदये सति प्राचीनं तस्यप्राग्देशं प्रत्युदयन्ति यद्वा सूर्यस्य प्राचीनेदेशे या यान्युदिता उदितानि तानीत्यर्थः हे उषः यतोयैश्च तेजोभिः परिददृक्षे दृश्यसे त्वं जारइव पत्याविव आचरन्तीसमीपे

सञ्चरन्ती साध्वी नारीव सञ्चरन्ती त्वं दृश्यसे यथा लोके दुष्टं भ्रमणशीलमपि पतिमत्यज्यैव साध्वी संचरति तद्वत् तमविमुञ्चतीत्वमित्यर्थः। नपुनर्यतीव यती पतिं परित्यज्य इतस्ततः सञ्चरन्तीव्यभिचारिणीव सूर्यमपरित्यजन्ती त्वं पुनरिवेत्ययं वैलक्षण्यद्योतनार्थः एवं यैस्ते- जोभिः युक्ता परिदृश्यसे तान्येवाहान्यासन्निति संबन्धः ॥ ३ ॥

३. उषा, तुम्हारा जो तेज सूर्योदय के पहले ही उदित होता है और जिस तेज के गुण से तुम कुलटा की तरह न होकर पति-समीप-गामिनी रमणी की तरह देखी जाती हो, वही सब तुम्हारा तेज प्रभूत है।

तइद्देवानांसधमादआसन्नृतावानःकवयःपूर्व्यासः।
गूळ्हंज्योतिःपितरोअन्वविन्दन्सत्यमंत्राअजनयन्नुषासम् ॥ ४ ॥

ते। इत्। देवानाम्। सधऽमादः। आसन्। ऋतऽवानः।
कवयः। पूर्व्यासः। गूळ्हम्। ज्योतिः। पितरः। अनु।
अविन्दन्। सत्यऽमंत्राः। अजनयन्। उषसम् ॥ ४ ॥

तइत् तेङ्गिरसएव ऋषीणां मध्ये देवानां सधमादः सहमाद्यन्त आसन् अभवन् ते इत्यु- क्तं कइत्याह ये ऋतावानः सत्यवन्तः कवयोनूचानाः येवाअनूचानास्तेकवयइतिश्रुतेः।[1] पूर्व्यासः पूर्वकालीनाः पितरः पालयितारः सर्वस्याङ्गिरसोगूळ्हं तमसा आवृतं ज्योतिः सौर्यं तेजोन्ववि- न्दन् लब्धवन्तोमन्त्रसामर्थ्याच्चे सत्यमन्त्राः सत्यस्तुतयः सन्तः उषासं उषसमजनयन् प्रादुरकु- र्वन्। तुरीयेण ब्रह्मणा विन्ददेंनिः।[2] अत्रयस्तमन्वविन्दन्निति निगमौ।[3] अत्रांगिरसां स्तुत्योषसएव स्तुतिर्ज्ञातव्या ॥ ४ ॥

४. जो अङ्गिरोगण सत्यवान्, कवि और प्राचीन समय के पालक हैं; जिन्होंने गूढ़ तेज प्राप्त किया है और जिन्होंने सत्य-स्तुति होकर मन्त्रों के बल से उषा को प्रादुर्भूत किया है, वे ही देवों के साथ एकत्र प्रमत्त हुए थे। अथ पञ्चमी—

समानऊर्वेअधिसंगतासःसञ्जानतेनयतन्तेमिथस्ते।
तेदेवानांनमिनन्तिव्रतान्यमर्धन्तोवसुभिर्यादमानाः ॥ ५ ॥

समाने। ऊर्वे। अधि। समऽगतासः। सम्। जानते। न।
यतन्ते। मिथः। ते। ते। देवानाम्। न। मिनन्ति।
व्रतानि। अमर्धन्तः। वसुऽभिः। यादमानाः ॥ ५ ॥

---

1 ऐ० ब्रा० २. ३८. 2 ऋ० सं० ४. २. १२०। 3 ऋ० सं० ४. २. १२.।

समाने सर्वेषां साधारणे ऊर्वे गोसमूहे पणिभिरपहृते पुनर्लब्धव्ये सतिअधीत्यनर्थकः सङ्गतासोमिलिताः सन्तः ते सञानते एकबुद्धयोभवन्ति न मिथः परस्परं यतंते सहैव साधनमनुतिष्ठन्तीत्यर्थः। तेंगिरसः देवानां व्रतानि कर्माणि यागलक्षणानि नमिनन्ति नहिंसन्ति किन्तु परिपालयन्तीत्यर्थः किंकुर्वन्तोअमर्धन्तोहिंसन्तः वसुभिर्वासकैरुषसांतेजोभिः यादमानाः गच्छन्तः॥ ५॥

५. वे साधारण गौओं के लिए सङ्गत होकर एक-बुद्धि हुए थे। क्या उन लोगों ने परस्पर यत्न नहीं किया था? वे देवों के कर्मों की हिंसा नहीं करते। हिंसा-शून्य और वासप्रद तेज के द्वारा जाते हैं।

प्रतित्वास्तोमैरीळतेवसिष्ठाउषर्बुधःसुभगेतुष्टुवांसः।
गवांनेत्रीवाजपत्नीनउच्छोषःसुजातेप्रथमाजरस्व॥ ६॥

प्रति। त्वा। स्तोमैः। ईळते। वसिष्ठाः। उषःऽबुधः।
सुऽभगे। तुस्तुऽवांसः। गवाम्। नेत्री। वाजऽपत्नी। नः।
उच्छ। उषः। सुऽजाते। प्रथमा। जरस्व॥ ६॥

हे सुभगे देव्युषः त्वा त्वां प्रति उषर्बुधः उषसि बुध्यन्तः तुष्टुवांसः स्तुवन्तोवसिष्ठाः स्तोमैः स्तोत्रैः ईळते स्तुवन्ति गवां नेत्री प्रापयित्री वाजपत्नी अन्नस्य पालयित्री अन्नदात्रीत्यर्थः ईदृशी त्वं नोस्मदर्थं उच्छ विभाहि। हेउषः सुजाते सुप्रादुर्भावे प्रथमाइतरदेवेभ्योमुख्यभूता जरस्व॥ ६॥

६. सुभगा उषा, प्रातःकाल जगे हुए स्तोता वसिष्ठगण स्तोत्र-द्वारा तुम्हारी स्तुति करते हैं। तुम गौओं की प्रापिका और अन्न-पालिका हो। हमारे लिए प्रभात करो। सुजन्मा उषा, तुम प्रथम स्तुत हो।

अथ सप्तमी—

एषानेत्रीराधसःसूनृतानामुषाउच्छन्तीरिभ्यतेवसिष्ठैः।
दीर्घश्रुतंरयिमस्मेदधानायूयंपातस्वस्तिभिःसदानः॥ ७॥ २३॥

एषा। नेत्री। राधसः। सूनृतानाम्। उषाः। उच्छन्ती।
रिभ्यते। वसिष्ठैः। दीर्घऽश्रुतम्। रयिम्। अस्मे इति। दधाना।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ७॥ २३॥

एषोषा राधसः स्तोतुः सूनृतानां स्तुतीनां नेत्री सती उच्छन्ती तमोविवासयन्ती वसिष्ठैर्वसिष्ठगोत्रोत्पन्नैः रिभ्यते स्तूयते दीर्घश्रुतं दीर्घं श्रूयमाणं सर्वत्र प्रसिद्धं रयिं धनमस्मे अस्मासु दधाना धारयन्ती शिष्टं गतम्॥ ७॥

७. यह उषा स्तोता की स्तुतियों की नेत्री हैं। यह अन्धकार को दूर

कर और सर्वत्र प्रसिद्ध धन हमें देकर वसिष्ठों-द्वारा स्तुत होती हैं। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य पञ्चमे त्रयोविंशोवर्गः ॥२३॥

उपोरुरुचेइति षळृचं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम् तथाचानुक्रान्तम्—उपोरुरुचेषळिति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

उपो॑रुरुचेयुव॒तिर्नयोषा॒विश्वं॒जी॒वंप्र॑सु॒वन्ती॒च॒राये॑।
अभू॑द॒ग्निःस॒मिधे॒मानु॑षाणा॒मक॒र्ज्योति॒र्बाध॑माना॒तमां॑सि ॥ १ ॥

उपो॒ इति॑। रु॒रु॒चे॒। यु॒व॒तिः। न। योषा॑। विश्व॑म्।
जी॒वम्। प्र॒ऽसु॒वन्ती॑। च॒रायै॑। अभू॑त्। अ॒ग्निः। स॒म्ऽइधे॑।
मानु॑षाणाम्। अकः॑। ज्योतिः॑। बाध॑माना। तमां॑सि ॥ १ ॥

इयमुषाः उपो समीपेएव सूर्यस्य रुरुचे दीप्यते युवतिः यौवनोपेता योषान योषिदिव सा यथा वस्त्राभरणादिना पत्युः समीपे प्रदीप्यते तद्वत् किं कुर्वन्ती विश्वं सर्वं जीवंजीवसंघं चरायै सञ्चाराय प्रसुवन्ती प्रेरयन्ती। किञ्चाग्निः मानुषाणां मनुष्याणामर्थाय समिधे भूत् समिन्धनीयोभवत्। कृत्यार्थेकेन्। समिद्धःसन् तमांस्यन्धकारान् बाधमाना बाधमानं बाधकं ज्योतिस्तेजः सद्यः अकः अकार्षीत् अथवा औषसं ज्योतिस्तमांसि बाधमाना बाध्यमानानि अकः अकरोत् ॥ १ ॥

१. तरुणी पत्नी की तरह उषा सारे जीवों को, संचरण के लिए, प्रेरित करते हुए सूर्य के पास ही दीप्ति पाती हैं। अग्नि मनुष्यों के समिन्धन के योग्य हुए हैं। अग्नि अन्धकार-नाशक तेज का प्रकाश करते हैं। अथ द्वितीया—

विश्वं॒प्रती॒ची॒स॒प्रथा॒उद॑स्था॒द्रुश॒द्वासो॒बिभ्र॑ती॒शु॒क्रम॑श्वैत्।
हिर॑ण्यवर्णा॒सु॒दृशी॑कसन्दृ॒ग्गवां॒मा॒ता॒ने॒त्र्यह्ना॒मरोचि ॥ २ ॥

विश्व॑म्। प्र॒ती॒ची। स॒ऽप्रथाः॑। उत्। अ॒स्था॒त्। रुश॑त्। वासः॑।
बिभ्र॑ती। शु॒क्रम्। अ॒श्वै॒त्। हिर॑ण्यऽवर्णा। सु॒दृशी॑कऽसंदृक्।
गवा॑म्। मा॒ता। ने॒त्री। अह्ना॑म्। अरो॒चि॒ ॥ २ ॥

विश्वं कृत्स्नं जगत् प्रति प्रतीची अभिमुखी सप्रथाः सर्वतः पृथुतरा उदस्थात् उदगच्छत् उदिता च रुशत् दीप्तं शुक्रं तेजोमयं वासोवसनीयं तेजःसमूहं बिभ्रती धारयन्ती अश्वैत् वर्धते हिरण्यवर्णा हितरमणीयवर्णोपेता सुदृशीकसंदृक् संदर्शयतीति संदृक्तेजः सुष्ठु दर्शनीयं

संदृक्तेजोयस्याः सा तादृशी गवांवाचां गवामेववा माता निर्मात्री उषःकालेहि पक्षिमनुष्यादीनां वाचोनिर्गच्छन्ति गवामपि तस्मिन्काले सञ्चारात्तन्निर्मातृत्वं अथवा रश्मीनांनिर्मात्री-अरोचि रोचते अह्नां नेत्री दिवसानां प्रापयित्री ॥ २ ॥

२. सारे संसार की अभिमुखी और सर्वत्र प्रसिद्धा उषा उदित हुई। तेजोमय वसन धारण करके वर्द्धित हुई। हिरण्यवर्ण, दर्शनीय और तेज से युक्त वाक्यों की माता और दिनों की नेत्री उषा शोभा पा रही हैं।

देवानांचक्षुःसुभगावहन्तीःश्वेतंनयन्तीसुदृशीकमश्वम्।
उषाअदर्शिरश्मिभिर्व्यक्ताचित्रामघाविश्वमनुप्रभूता ॥ ३ ॥

देवानाम्। चक्षुः। सुऽभगा। वहन्ती। श्वेतम्। नयन्ती।
सुऽदृशीकम्। अश्वम्। उषाः। अदर्शि। रश्मिऽभिः। विऽअक्ता।
चित्रऽमघा। विश्वम्। अनु। प्रऽभूता ॥ ३ ॥

देवानां चक्षुश्चक्षुःस्थानीयं तेजोवहन्ती धारयन्ती सुभगा शोभनधना सुदृशीकं सुदर्शनं अश्वं सर्वदागन्तारं आदित्यं नयन्ती प्रापयन्ती किं श्वेतं श्वेतवर्णोपेतं सूर्यं प्रकाशयुक्तं कुर्वतीत्यर्थः। कीदृशी उषाः रश्मिभिः स्वकीयैर्व्यक्ता अदर्शि दृश्यतेच चित्रामघा चित्रधना विश्वमनु सर्वं जगदनुलक्ष्य प्रभूता प्रवृद्धा सर्वजगद्व्यवहारायेत्यर्थः ॥ ३ ॥

३. देवों के नेत्र स्थानीय तेज का बहन करनेवाली, सुभगा, अपनी किरणों से प्रकाशिता, विचित्र धनवाली और संसार के सम्बन्ध में प्रवृद्धा उषा सुदर्शन अश्व को श्वेतवर्ण करते दिखाई दे रही हैं।

अथ चतुर्थी—

अन्तिवामादूरेअमित्रमुच्छोर्वींगव्यूतिमभयंकृधीनः।
यावयद्वेषआभरावसूनिचोदयराधोगृणतेमघोनि ॥ ४ ॥

अन्तिऽवामा। दूरे। अमित्रम्। उच्छ। उर्वीम्। गव्यूतिम्।
अभयम्। कृधि। नः। यवय। द्वेषः। आ। भर।
वसूनि। चोदय। राधः। गृणते। मघोनि ॥ ४ ॥

हे उषः अन्तिवामा अन्ति अस्मदन्तिके वामं वननीयं धनं यस्याः सा अन्तिवामा त्वं अमित्रं अस्मच्छत्रुं दूरे अस्मत्तोविप्रकृष्टदेशे वर्तमानं कृत्वा व्युच्छ विभाहि यथा मित्रोदूरेभवति तथा व्युच्छेत्यर्थः तथा उर्वीं गव्यूतिं भूमिं अभयं नोस्माकं कृधि कुरु किञ्च द्वेषोस्मद्द्वेष्टॄन् यावय अस्मत्तः पृथक्कुरु। वसूनि शत्रूणां धनानि आभर आहर। राधोधनं चोदय प्रेरय गृणते स्तुवते मह्यं हे मघोनि हेधनवति ॥ ४ ॥

४. उषा, हमारे पास तुम वननीय (विचित्र) धनवाली होकर और हमारे शत्रु को दूर करके विभासित होओ। हमारी विस्तृत गोचर-भूमि को भय-रहित करो। द्वेषियों को अलग करो। शत्रुओं का धन ले आओ। धनवाली उषा, स्तोता के पास धन भेजो।

अस्मेश्रेष्ठेभिर्भानुभिर्विभाह्युषोदेविप्रतिरन्तीनआयुः।
इषंचनोदधतीविश्ववारेगोमदश्वावद्रथवच्चराधः ॥ ५ ॥

अस्मे इति । श्रेष्ठेभिः । भानुऽभिः । वि । भाहि । उषः ।
देवि । प्रऽतिरन्ती । नः । आयुः । इषम् । च । नः । दधती ।
विश्वऽवारे । गोऽमत् । अश्वऽवत् । रथऽवत् । च । राधः ॥ ५ ॥

हे उषोदेवि अस्मे अस्मभ्यं श्रेष्ठेभिः प्रशस्यैर्भानुभीरश्मिभिः प्रकाशैर्विभाहि प्रकाशय किंकुर्वती नोस्माकमायुरायुष्यं प्रकर्षेण तिरन्ती प्रवर्धयन्ती । हे विश्ववारे विश्वैः संभजनीये देवि नोस्मभ्यमिषश्च गोमत् गोभिर्बहुभिरुपेतं अश्वावत् अश्वैश्चोपेतं रथवद्रथैरुपेतं राधोधनञ्च दधती विभाहीति ॥ ५ ॥

५. उषादेवी, हमारी आयु बढ़ाते हुए, श्रेष्ठ किरणों के साथ, हमारे लिए प्रकाशित होओ। सबकी वरणीया (स्वीकरणीया) उषा, हमें लक्ष्य करके गौ और अश्व से युक्त धन धारण करते हुए, प्रकाशित होओ।

यांत्वादिवोदुहितर्वर्धयन्त्युषःसुजातेमतिभिर्वसिष्ठाः।
सास्मासुधारयिमृष्वंबृहन्तंयूयंपातस्वस्तिभिःसदानः ॥ ६ ॥२४॥

याम् । त्वा । दिवः । दुहितः । वर्धयन्ति । उषः । सुऽजाते ।
मतिऽभिः । वसिष्ठाः । सा । अस्मासु । धाः । रयिम् । ऋष्वम् ।
बृहन्तम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥ २४ ॥

हे दिवोदुहितरुषः सुजाते शोभनजनने यां त्वा त्वां मतिभिः स्तोत्रैर्वसिष्ठाः वर्धयन्ति सा त्वमस्मासु वसिष्ठेषु ऋष्वं प्रदीप्तं बृहन्तं महान्तं रयिं धनं धाः धेहि । शिष्टं गतम् ॥ ६॥

६. हे द्युलोक की पुत्री और सुजन्मा उषा, वसिष्ठ लोग स्तुति-द्वारा तुम्हें वर्द्धित करते हैं। तुम हमें रमणीय और महान् धन दो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य पञ्चमे चतुर्विंशोवर्गः ॥ २४॥

प्रतिकेतवइति पञ्चर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यं प्रतिपञ्चेत्यनुक्रमणिका । उक्तोविनियोगः ।

तत्र प्रथमा—

प्रति॑के॒तवः॑प्रथ॒माअ॑दृश्रन्नू॒र्ध्वाअ॑स्याअ॒ञ्जयो॒विश्र॑यन्ते।
उषो॑अ॒र्वाचा॑बृह॒तारथे॑न॒ज्योति॑ष्मतावा॒मम॒स्मभ्यं॑वक्षि॥ १॥

प्रति॑। के॒तवः॑। प्र॒थ॒माः। अ॒दृ॒श्र॒न्। ऊ॒र्ध्वाः। अ॒स्याः।
अ॒ञ्जयः॑। वि। श्र॒य॒न्ते॒। उष॑ः। अ॒र्वाचा॑। बृ॒ह॒ता।
रथे॑न। ज्योति॑ष्मता। वा॒मम्। अ॒स्मभ्य॑म्। व॒क्षि॒॥ १॥

अस्याः प्रथमाः प्रथमोत्पन्नाः केतवः प्रज्ञापकारश्मयः प्रत्यदृश्रन् प्रतिदृश्यन्ते अस्या अञ्जयोव्यञ्जकारश्मयः ऊर्ध्वा ऊर्ध्वमुखा विश्रयन्ते विविधं सर्वत्र श्रयन्ति हे उषोदेवि अर्वाचा अस्मदभिमुखेनागच्छता बृहता महता ज्योतिष्मता तेजोवता रथेन वामं वननीयं धनमस्मभ्यं वक्षि वहसि॥ १॥

१. प्रथम उत्पन्न केतु देखे जाते हैं। इनकी व्यञ्जक रश्मियाँ ऊर्ध्व-मुख होकर सर्वत्र आश्रय करती हैं। उषादेवी, हमारे सामने आये हुए, विशाल और ज्योतिष्क रथ-द्वारा हमारे लिए रमणीय धन ढोओ।

प्रति॑षीम॒ग्निर्ज॑रते॒समि॑द्धः॒प्रति॒विप्रा॑सोम॒तिभि॑र्गृ॒णन्त॑ः।
उ॒षाया॑ति॒ज्योति॑षा॒बाध॑माना॒विश्वा॒तमां॑सिदु॒रि॒तापदे॒वी॥ २॥

प्रति॑। सी॒म्। अ॒ग्निः। ज॒र॒ते॒। सम्ऽइ॑द्धः। प्रति॑। विप्रा॑सः।
म॒तिऽभिः॑। गृ॒णन्त॑ः। उ॒षाः। या॒ति॒। ज्योति॑षा। बाध॑माना।
विश्वा॑। तमां॑सि। दुः॒ऽइ॒ता। अप॑। दे॒वी॥ २॥

अग्निः समिद्धः सन् सीं सर्वतः प्रतिजरते अभिवर्धते विप्रासोविप्रा मेधाविन ऋत्विजश्च मतिभिः स्तुतिभिरुषसंप्रति गृणन्तः स्तुवन्तोजरन्ते उषाश्च देवी ज्योतिषा विश्वा सर्वाणि तमांसिदुरितास्मद्दुरितानि अपबाधमाना याति ऊर्ध्वंगच्छति॥ २॥

२. समिद्ध होकर अग्नि सर्वत्र बढ़ते हैं। मेधावी लोग स्तुति-द्वारा उषा की स्तुति करते हुए प्रवृद्ध होते हैं। उषादेवी भी ज्योति-द्वारा सारे अन्धकारों और पापों को रोकते हुए जाती हैं।

अथ तृतीया—

ए॒ताउ॒त्याःप्रत्य॑दृश्रन्पु॒रस्ता॒ज्ज्योति॒र्यच्छ॑न्तीरु॒षसो॒विभा॒तीः।
अजी॑जन॒न्त्सूर्यं॑य॒ज्ञम॒ग्निम॑पा॒चीनं॒तमो॑अगा॒दजु॑ष्टम्॥ ३॥

एताः । ऊँ इति॑ः । त्याः । प्रति॑ । अ॒दृ॒श्र॒न् । पु॒रस्ता॑त् । ज्योति॑ः ।
यच्छ॑न्तीः । उ॒षस॑ः । वि॒ऽभा॒तीः । अजी॑जनन् । सूर्य॑म् । य॒ज्ञम् ।
अ॒ग्निम् । अ॒पा॒चीन॑म् । तम॑ः । अ॒गा॒त् । अजु॑ष्टम् ॥ ३ ॥

एता उइतिपूरणः त्याः ताः प्रसिद्धा एता विभातीर्विभात्योविभानं कुर्वत्योज्योतिस्तेजः यच्छन्तीः प्रयच्छन्त्यः उषसः पुरस्तात्पूर्वस्यां दिशि प्रत्यदृश्रन् प्रतिदृश्यन्ते ताउषसः सूर्यं यज्ञं अग्निंच अजीजनन्प्रादुरकुर्वन् उषसउदयानन्तरं तेषां संभवात्तज्जनकत्वमुपचर्यते किञ्च अपाचीनं नीचीनमजुष्टमप्रियं सर्वेषां दृष्टिनिरोधकत्वादप्रियत्वं तादृशं तमःअगात् अपगतमभूत् ॥ ३ ॥

३. ये सब प्रभात-कारिणी और तेजःप्रदायिनी उषायें पूर्व दिशा में देखी जाती हैं। इन्होंने सूर्य्य, अग्नि और यज्ञ को प्रादुर्भूत किया, जिससे नीचगामी और अप्रिय अन्धकार दूर हुआ।

अचे॑तिदि॒वोदु॑हि॒ताम॒घोनी॒विश्वे॑पश्यन्त्यु॒षसं॑विभा॒तीम् ।
आस्था॒द्रथं॑स्व॒धया॑यु॒ज्यमा॑न॒माय॒मश्वा॑सः॒सु॒युजो॒वह॑न्ति ॥ ४ ॥

अचे॑ति । दि॒वः । दु॒हि॒ता । म॒घोनी॑ । विश्वे॑ । प॒श्य॒न्ति॒ । उ॒षस॑म् ।
वि॒ऽभा॒तीम् । आ । अ॒स्था॒त् । रथ॑म् । स्व॒धया॑ । यु॒ज्यमा॑नम् ।
आ । यम् । अश्वा॑सः । सु॒ऽयुज॑ः । वह॑न्ति ॥ ४ ॥

दिवोदुहिता मघोनी धनवती उषाः अचेति सर्वैर्ज्ञायते विश्वे सर्वेपि प्राणिनोविभातीं उच्छन्तीं उषसं पश्यन्ति तादृशी देवी स्वधयान्नेन युज्यमानं रथं आस्थात् आतिष्ठत् आरोहति यं रथं सुयुजः शोभनयोजना अश्वासोऽश्वाः आवहन्ति अभिमतदेशं प्रापयन्ति तं रथमास्थादिति ॥ ४ ॥

४. द्युलोक की पुत्री और धनवती उषा जानी गई हैं। सभी लोग प्रभातकारिणी उषा को देखते हैं। वे अन्नवाले रथ पर चढ़ी हैं। सुयोजित अश्व इस रथ को ले जाते हैं।

प्रति॑त्वा॒द्यसु॒मन॑सोबुधन्ता॒स्माका॑सोम॒घवा॑नोव॒यंच॑ ।
ति॒ल्वि॒ला॒यध्व॑मुषसोविभा॒तीर्यू॒यंपा॑तस्व॒स्तिभि॒ःसदा॑नः ॥५॥२५॥

प्रति॑ । त्वा॒ । अ॒द्य । सु॒ऽमन॑सः । बु॒ध॒न्त॒ । अ॒स्माका॑सः ।
म॒घऽवा॑नः । व॒यम् । च॒ । ति॒ल्वि॒ला॒यध्व॑म् । उ॒ष॒सः॒ । वि॒ऽभा॒तीः ।
यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । नः॒ ॥ ५ ॥ २५ ॥

हे उषसस्त्वा त्वां अद्यास्मिन्काले सुमनसः शोभनस्तुतिका मघवानो हविर्लक्षणान्नवन्तोऽस्माकासोस्माका अस्मदीयाः पुरुषा ऋत्विजः यद्वा मघवानइत्येतत् वयमित्येतस्य विशेषणं हविष्मन्तोवयं प्रतिबुधन्त प्रत्यबोधयन् स्तुतिभिः। हे उषसोयूयंच विभातीः व्युच्छंत्यः सत्यस्तिल्विलायध्वं जगत् स्निग्धभूमिकं कुरुत तिलस्नेहने इत्यस्मात्तिलुः तिलुरिलाभूमिः यस्य तत्तिल्विलं तत्कुरुत। शिष्टं स्पष्टम् ॥ ५॥

५. उषा, हम और हमारे सुमना तथा धनवान् लोग आज तुम्हें जगाते हैं। उषाओ, तुम लोग प्रभात-कारिणी होकर संसार को स्निग्ध करो। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य पञ्चमे पञ्चविंशोवर्गः॥ २५॥

व्युषाआवइति पञ्चर्चं नवमं सूक्तं वसिष्ठस्यार्षमुषस्यं त्रैष्टुभं व्युषाइत्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

व्यु१षाआवःपथ्या३जनानांपञ्चक्षितीर्मानुषीर्बोधयन्ती।
सुसंदृग्भिरुक्षभिर्भानुमश्रेद्विसूर्योरोदसीचक्षसावः॥ १॥

वि। उषाः। आवः। पथ्या। जनानाम्। पञ्च। क्षितीः।
मानुषीः। बोधयन्ती। सुसंदृक्ऽभिः। उक्षऽभिः। भानुम्। अश्रेत्।
वि। सूर्यः। रोदसी इति। चक्षसा। आवरित्यावः॥ १॥

जनानां सर्वप्राणिनां पथ्या पथिहितोषाः व्यावः व्यौच्छत्। यद्वा जनानां हिताय व्यौच्छदिति योज्यम्। किंकुर्वती मानुषीर्मनुष्यरूपाःपञ्चक्षितीः निषादपञ्चमांश्चतुरोवर्णान्बोधयन्ती ईदृश्युषाः। सुसन्दृग्भिःसन्दृश्यते सन्दर्शयतीतिवा सन्दृक् तेजः सुतेजोभिः उक्षभिः गोभिर्भानुमश्रेत्। अरुणैरुषाआजिमधावन्निंतिहिश्रुतिः। अरुण्योगावउषसामितिनिरुक्तम्। सूर्यश्च रोदसी द्यावापृथिव्यौ तमोयुक्ते चक्षसा प्रकाशकेन तेजसा व्यावोविवृणोति॥ १॥

१. मनुष्यों की हितैषिणी उषा अन्धकार का विनाश करती हैं, पञ्चश्रेणियों के मनुष्यों को जगाती हैं और उत्तम तेजवाली किरणों-द्वारा सूर्य का आश्रय करती हैं। सूर्य भी तेज से द्यावापृथिवी को आवृत करते हैं। अथ द्वितीया—

व्यञ्जतेदिवोअन्तेष्वक्तून्विशोनयुक्ताउषसोयतन्ते।
सन्तेगावस्तमआवर्तयन्तिज्योतिर्यच्छन्तिसवितेवबाहू॥ २॥

---

१ ऐ० ब्रा० ४. ९। २ निघंटु १. १५।

वि । अञ्जते । दिवः । अन्तेषु । अक्तून् । विशः । न । युक्ताः ।
उषसः । यतन्ते । सम् । ते । गावः । तमः । आ । वर्तयन्ति ।
ज्योतिः । यच्छन्ति । सविताऽइव । बाहू इति ॥ २ ॥

उषसः अक्तून् तेजांसि दिवोन्तरिक्षस्यान्तेषु पर्यन्तप्रदेशेषु व्यञ्जते व्यक्तीकुर्वन्तीत्यर्थः युक्ताः परस्परं संयुक्ताः विशोन प्रजाइव सेनाइव यतन्ते प्रयतन्ते तमोनाशनायात्र गमनाय वा। अथ प्रत्यक्षवादः हे उषस्ते तव गावोरश्मयस्तमोन्धकारं समावर्तयन्ति नाशयन्ति ज्योतिस्तेजोयच्छन्ति प्रयच्छन्ति । सविता सूर्योबाहूइव ॥ २ ॥

२. उषायें अन्तरिक्ष-प्रदेश में तेज व्यक्त करती हैं और परस्पर मिलकर, प्रजा की तरह, तमोनाश के लिए, चेष्टा करती हैं। उषा, तुम्हारी किरणें अन्धकार का विनाश करती हैं। सूर्य की भुजाओं की तरह वे ज्योति प्रदान करती हैं।

अभूदुषाइन्द्रतमामघोन्यजीजनत्सुवितायश्रवांसि ।
विदिवोदेवीदुहितादधात्यङ्गिरस्तमासुकृतेवसूनि ॥ ३ ॥

अभूत् । उषाः । इन्द्रऽतमा । मघोनी । अजीजनत् । सुविताय ।
श्रवांसि । वि । दिवः । देवी । दुहिता । दधाति ।
अङ्गिरःऽतमा । सुऽकृते । वसूनि ॥ ३ ॥

इन्द्रतमा सर्वस्येश्वरतमा मघोनी धनवती उषा अभूत् प्रादुरभूत् सुविताय कल्याणाय श्रवांस्यन्नानि अजीजनत् उदपादयत् प्रकाशितवतीत्यर्थः दिवोदुहिता देवीद्योतमाना अंगिरस्तमा गन्तृतमा यद्वा अङ्गिरोगोत्रैर्भरद्वाजैः सह रात्रेरप्युत्पत्तेः रात्र्यवसानस्योषारूपत्वादङ्गिरस्तमेत्युच्यते भारद्वाजैरात्रेः सहोत्पत्तिरनुक्रमण्यामुक्ता रात्रिःकुशिकः सौभरो रात्रिर्वाभारद्वाजीति तादृश्युषाः सुकृते यजमानाय वसूनि धनानि विदधाति करोति ॥ ३ ॥

३. सबसे बढ़कर स्वामिनी और धनवती उषा प्रादुर्भूत हुईं। उन्होंने सबके कल्याण के लिए अन्न उत्पन्न किया है। स्वर्ग की पुत्री और सबसे उत्तम अङ्गिरा (गतिशीला अथवा अङ्गिरोगोत्रोत्पन्ना) उषा देवी सुकृति के लिए धन धारण करती हैं।

तावदुषोराधोअस्मभ्यंरास्वयावत्स्तोतृभ्योअरदोगृणाना ।
यांत्वाजज्ञुर्वृषभस्यारवेणविदृळ्हस्यदुरोअद्रेरौर्णोः ॥ ४ ॥

तावत् । उषः । राधः । अस्मभ्यम् । रास्व । यावत् । स्तोतृऽभ्यः ।
अरदः । गृणाना । याम् । त्वा । जज्ञुः । वृषभस्य । रवेण ।
वि । दृळ्हस्य । दुरः । अद्रेः । और्णोः ॥ ४ ॥

हे उषोयावद्राधोधनं स्तोतृभ्यः पूर्वं अरदोदत्तवत्यसि तावद्राधोधनं गृणाना स्तूयमानाः अस्मभ्यमपि रास्व देहि यां त्वा त्वां वृषभस्य रवेण लुप्तोपमैषा वृषभस्येति कर्मणिषष्ठी वृषभं रवेणेव त्वां प्रकाशेन जज्ञुः जानन्ति प्राणिनः । अथवा वृषभस्यप्रवृद्धस्य स्तोत्रस्य रवेण शब्देन जज्ञुः ज्ञापयन्ति दृह्लस्य दृढस्याद्रेः दुरोद्वाराणि पणिभिर्गाः प्रवेश्य पिहितानि व्यौर्णोः विवृतान्यकरोः ॥ ४ ॥

४. उषा, तुमने प्राचीन स्तोताओं को जितना धन दिया है, उतना हमें भी दो। वृषभ (प्रवृद्ध स्तोत्र) के शब्द से तुम्हें प्राणी जानते हैं। प्राणियों-द्वारा गोहरण के समय तुमने दृढ़ पर्वत का द्वार खोला था।

देवंदेवंराधसेचोदयन्त्यस्मद्र्यक्सूनृताईरयन्ती ।
व्युच्छन्तीनःसनयेधियोधायूयंपातस्वस्तिभिःसदानः ॥५॥२६॥

देवम्ऽदेवम् । राधसे । चोदयन्ती । अस्मद्र्यक् । सूनृताः ।
ईरयन्ती । विऽउच्छन्ती । नः । सनये । धियः । धाः ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥ २६ ॥

देवंदेवं सर्वमपिस्तोतारं राधसे धनाय चोदयन्ती प्रेरयन्ती अस्मद्र्यक् अस्मदभिमुखं सूनृता वचांसि ईरयन्ती प्रेरयन्ती व्युच्छन्ती व्युच्छनं कुर्वती नोस्माकं सनये दानाय धनलाभाय धियोबुद्धीः धाः धेहि शिष्टं स्पष्टम् ॥ ५॥

५. धन के लिए स्तोताओं को और हमारे सामने सूनृत (सच्चे) वाक्य को प्रेरित करते हुए, तमोविनाशिनी होकर, हमारे दान के लिए अपनी बुद्धि को स्थिर करो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य पञ्चमे षड्विंशोवर्गः ॥ २६ ॥

प्रतिस्तोमेभिरिति त्र्यृचात्मकं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम् प्रतित्र्यृचमित्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्र प्रथमा—

प्रतिस्तोमेभिरुषसंवसिष्ठागीर्भिर्विप्रासःप्रथमाअबुध्रन् ।
विवर्तयन्तींरजसीसमन्तेआविष्कृण्वतींभुवनानिविश्वा ॥ १ ॥

प्रति । स्तोमेभिः । उषसम् । वसिष्ठाः । गीःऽभिः । विप्रासः । प्रथमाः ।
अबुध्रन् । विऽवर्तयन्तीम् । रजसी इति । समन्ते इति समऽअन्ते ।
आविःऽकृण्वतीम् । भुवनानि । विश्वा ॥ १ ॥

विप्रासोमेधाविनोवसिष्ठाः वसिष्ठगोत्राः स्तोमेभिः स्तोतृभिः प्रयुज्यमानागीर्भिः स्तुतिभिः प्रथमा इतरयजमानेभ्यः पूर्वंभूताःसन्तः उषसं प्रत्यबुध्रन् प्रतिबोधयन्ति। कीदृशीमुषसं च रजसी द्यावापृथिव्यौ समन्ते समानपर्यन्ते एकीभूतप्रान्ते विवर्तयन्तीं व्यावर्तयन्तीं विश्वा सर्वाणि भुवनानि भूतजातान्याविष्कृण्वतीं प्रकटीकुर्वतीं स्वभासा ॥ १ ॥

१. मेधावी (विप्र) वसिष्ठगण ने स्तोत्र और स्तव के द्वारा उषा देवी को, सभी लोगों से पहले, जगाया था। उषा समान प्रान्तवाली, द्यावा-पृथिवी को आवृत करती और प्राणियों को प्रकाशित करती हैं।

एषास्यानव्यमायुर्दधानागूढ्वीतमोज्योतिषोषाअबोधि।
अग्रंएतियुवतिरह्रयाणाप्राचिकितत्सूर्यंयज्ञमग्निम् ॥ २ ॥

एषा। स्या। नव्यम्। आयुः। दधाना। गूढ्वी। तमः।
ज्योतिषा। उषाः। अबोधि। अग्रे। एति। युवतिः।
अह्रयाणा। प्र। अचिकितत्। सूर्यम्। यज्ञम्। अग्निम् ॥ २ ॥

एषोषाः स्या सा गतदिवसेषु प्रसिद्धा अदृश्यमानैषा नव्यं नवतरं आयुरायुष्यं यौवनमित्यर्थः तादृशं दधाना धारयन्ती गूढ्वी गूढंतमोन्धकारं ज्योतिषा स्वतेजसा निवारयन्ती अबोधि बुध्यते अग्रे पुरोदेशे सूर्यस्य पुरस्तात् देवानामग्रेवा इतरदेवेभ्यः पूर्वमित्यर्थः युवतिः नित्यतरुणी सर्वत्रमिश्रयन्ती वा अह्रयाणा लुप्तोपमैषा अलज्जा युवतिरिव सायथा पत्युरग्रे सञ्चरति तद्वत् सूर्यस्य पुरस्तादेति एवंभूतासती सूर्यं यज्ञमग्निं च प्राचिकितत् प्रज्ञापयति ॥२॥

२. यह वही उषा हैं, जो नवयौवन धारण करके और तेज-द्वारा निगूढ़ अन्धकार को विनष्ट करके जागती हैं। लज्जाहीना युवती की तरह यह सूर्य के सम्मुख आगमन करती और सूर्य, यज्ञ तथा अग्नि को सूचित करती हैं।

अथ तृतीया—

अश्वावतीर्गोमतीर्नउषासोवीरवतीःसदमुच्छन्तुभद्राः।
घृतंदुहानाविश्वतःप्रपीतायूयंपातस्वस्तिभिःसदानः ॥ ३ ॥२७॥

अश्वऽवतीः। गोऽमतीः। नः। उषसः। वीरऽवतीः। सदम्।
उच्छन्तु। भद्राः। घृतम्। दुहानाः। विश्वतः। प्रऽपीताः।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ३ ॥ २७ ॥

अश्वावतीर्बहुभिर्नोस्मभ्यं प्रदेयैरश्वैस्तद्वत्यः तथा गोमतीर्गोमत्यो गोप्रदाः वीरवतीर्वीरवत्यः पुत्रप्रदाः अतएवभद्राः स्तुत्याउषासउषसः सदं सर्वदा उच्छंतु पुनः कीदृश्यः घृतं उदकं दुहानाः दोग्ध्यः विश्वतः प्रपीताः सर्वतः प्रवृद्धाः । यूयंपातेतिगतम् ॥ ३ ॥

३. अनेक अश्वों और गौओंवाली तथा स्तुत्य उषायें सदा अन्धकार दूर करती हैं। वे जल दूहती और सर्वत्र बढ़ती हैं। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य पञ्चमे सप्तविंशोवर्गः ॥२७ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टके पञ्चमोध्यायः समाप्तः॥ ५॥

## ॥ श्रीगणेशाय नमः ॥



यस्यनिःश्वसितं वेदा योवेदेभ्योखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥१॥ अथ षष्ठोध्यायोव्याख्यायते। सप्तमे मण्डले पञ्चमेनुवाके दशसूक्तानि व्याकृतानि प्रत्युअदर्शीति षळृचमेकादशं सूक्तम् वसिष्ठस्यार्षमुषस्यम् प्रथमाद्या अयुजो बृहत्यः द्वितीयाद्यायुजः सतोबृहत्यः तथाचानुक्रान्तं—प्रत्युषट्प्रागाथमिति। प्रातरनुवाके उषस्येक्रतौ बार्हतेछन्दसि आश्विनशस्त्रेच इदंसूक्तं सूत्रितञ्च—प्रत्युअदर्शिसहवामेनेति बार्हतमिति।

तत्र प्रथमा—

ॐम् प्रत्युंअदर्श्यायत्यु॑१च्छन्तींदुहिताद्विवः।
अपोमहिंव्ययतिचक्षसेतमोज्योतिंष्कृणोतिसूनरीं ॥ १ ॥

प्रतिं। ॐ इतिं। अदर्शि। आऽयती। उच्छन्ती। दुहिता। द्विवः। अपो इतिं। महिं। व्ययति। चक्षसे। तमः। ज्योतिः। कृणोति। सूनरीं ॥ १ ॥

आयती आगच्छन्ती व्युच्छन्ती तमांसि विवासयन्ती वर्जयन्ती दिवः द्युलोकस्य सूर्यस्यवा दुहिता पुत्री एवंभूताउषाःप्रत्यदर्शि सर्वैः प्रतिदृश्यते उइतिपूरकः सोषा महि महत् तमोनैशमन्धकारं अप उ इति निपातद्वयसमुदायः अपेत्यस्यार्थे अपोव्ययति अपवृणोति। किमर्थं चक्षसे दर्शनार्थं एवं कृत्वा सूनरी जनानांसुष्ठु नेत्री उषा ज्योतिः प्रकाशं कृणोति करोति॥१॥

१. द्युलोक वा सूर्य की पुत्री और अन्धकार-नाशिनी उषा आती हुई देखी जाती हैं। सबके देखने के लिए वह रात्रि के घोर अन्धकार को दूर करती हैं और मनुष्यों की नेत्री होकर तेज का विकास करती हैं।

अथ द्वितीया—

उदुस्रियाःसृजतेसूर्यःसचाँउद्यन्नक्षत्रमर्चिवत्।
तवेदुंषोव्युषिसूर्यस्यचसंभक्तेनंगमेमहि ॥ २ ॥

उत्। उस्रियाः। सृजते। सूर्यः। सचा। उत्ऽयन्। नक्षत्रम्। अर्चिऽवत्। तव। इत्। उषः। विऽउषि। सूर्यस्य। च। सम्। भक्तेन। गमेमहि ॥ २ ॥

सूर्यः सर्वस्य प्रेरकआदित्यः उस्रियाः रश्मीन् सचा सह युगपदेव उत्सृजते उद्गमयति तथा उद्यत् उद्गच्छत् प्रादुर्भवन्नक्षत्रं नभसि दृश्यमानं ग्रहनक्षत्रादिकं अर्चिवत् दीप्तिमत्करोति सौरेण तेजसाहि नक्तं चन्द्रप्रभृतीनि नक्षत्राणि भासन्ते। सुषुम्नः सूर्यरश्मिश्चन्द्रमागन्धर्वइति-हिनिगमः। एवञ्च सति हे उषः उषोदेवते तव सूर्यस्यच व्युषि विवासने प्रकाशने सति भक्ते-नान्नेन सङ्गमेमहि वयं सगच्छेमहि इच्छन्दः पूरकः॥ २ ॥

२. सूर्य किरणों को एक साथ फेंकते हैं। सूर्य प्रकट होकर ग्रह-नक्षत्रादिकों को प्रकाशशाली करते हैं। उषा, तुम्हारा और सूर्य का प्रकाश होने पर हम अन्न के साथ मिलें वा अन्न को प्राप्त करें।

प्रतित्वादुहितर्दिवउषोजीराअभुत्स्महि।
यावहसिपुरुस्पार्हंवनन्वतिरत्नंनदाशुषेमयः॥ ३ ॥

प्रति। त्वा। दुहितः। दिवः। उषः। जीराः। अभुत्स्महि।
या। वहसि। पुरु। स्पार्हम्। वनन्ऽवति।
रत्नम्। न। दाशुषे। मयः॥ ३ ॥

हे दिवोदुहितः दिवोन्तरिक्षाज्जायमाने हेउषः उषोदेवते त्वा त्वां जीराः क्षिप्रकारिणोवयं प्रत्यभुत्स्महि प्रतिबोद्धारोभवेम हे वनन्वति वननं संभजनं संभक्तव्यं धनं वा तद्वति या त्वं पुरु बहु स्पार्हं स्पृहणीयं धनं वहसि प्रापयसि दाशुषे हवींषि दत्तवते यजमानाय रत्नं न रमणीयं धनमिव मयः सुखंच या त्वं वहसि तां त्वां प्रत्यभुत्स्महीत्यन्वयः॥ ३ ॥

३. द्युलोक-पुत्री उषा, हम शीघ्रकर्मी होकर तुम्हें जगावेंगे। धन-शालिनी उषा, तुम अभिलषणीय बहुत धन का वहन करती हो। यजमान के लिए रत्न और सुख का वहन करती हो।

अथ चतुर्थी—

उच्छन्तीयाकृणोषिमंहनामहिप्रख्यैदेविस्वर्दृशे।
तस्यास्तेरत्नभाजईमहेवयंस्याममातुर्नसूनवः॥ ४ ॥

उच्छन्ती। या। कृणोषि। मंहना। महि। प्रऽख्यै।
देवि। स्वः। दृशे। तस्याः। ते। रत्नऽभाजः।
ईमहे। वयम्। स्याम। मातुः। न। सूनवः॥ ४ ॥

---

१ तै० सं० ३. २. २।

हे महि महति देवि दानादिगुणयुक्ते उषोदेवते व्युच्छन्ती तमांसि वर्जयन्ती मंहना महिम्नायुक्ता यद्वा मंहतिर्दानकर्मा दानयुक्ता या त्वं स्वः सर्वंजगत् प्रख्यै प्रबोधनार्थं दृशे दर्शनार्थञ्च कृणोषि करोषि। तस्यास्तादृश्याः रत्नभाजः रत्नानां रमणीयानां धनानां भाजयित्र्याः सेवयित्र्याः ईमहे याचामहे किं रत्नभाजइति समभिव्याहारात् रत्नानीति गम्यते। अपिच वयं ते तव प्रियतमाः स्याम भवेम मातुर्न सूनवः यथा मातुर्जनन्याः सूनवः पुत्राः प्रियतमाभवन्ति तद्वत् ॥ ४ ॥

४. महती देवी, तुम अन्धकार का नाश करनेवाली और महिमावाली हो। तुम सारे जगत् का प्रबोधन और उसे दर्शन के योग्य करती हो। तुम रत्नवाली हो। तुमसे हम याचना करते हैं। जैसे पुत्र माता के लिए प्रिय होता है, वैसे ही हम तुम्हारे होंगे।

तच्चित्रंराधआभरोषोयद्दीर्घश्रुत्तमम्।
यत्तेदिवोदुहितर्मर्तभोजनंतद्रास्वभुनजामहै ॥ ५ ॥

तत्। चित्रम्। राधः। आ। भर। उषः। यत्। दीर्घश्रुत्ऽतमम्।
यत्। ते। दिवः। दुहितः। मर्तऽभोजनम्। तत्। रास्व।
भुनजामहै ॥ ५ ॥

हे उषः तच्चित्रं चायनीयं राधोधनं आभराहर अस्मभ्यं प्रयच्छ। यद्धनं दीर्घं श्रुत्तमं देशकालयोर्विप्रकर्षेप्यतिशयेन श्रोतव्यम् अपिच हे दिवोदुहितः ते तव त्वया देयं मर्तभोजनं मर्तानां मनुष्याणां भोगयोग्यं यदन्नमप्यस्ति तद्रास्व देह्यस्मभ्यम् वयञ्च त्वद्दत्तं धनमन्नञ्च भुनजामहै अभ्यवहरेम ॥ ५ ॥

५. उषा, जो धन अत्यन्त दूर के स्थान में विख्यात है, वही विचित्र धन ले आओ। द्युलोक दुहिता, तुम्हारे पास मनुष्यों के लिए भोज्य जो अन्न है, वह दो। हम भी भोग करेंगे।

अथ षष्ठी—

श्रवःसूरिभ्योअमृतंवसुत्वनंवाजाँअस्मभ्यंगोमतः।
चोदयित्रीमघोनःसूनृतावत्युषाउच्छदपस्रिधः ॥ ६ ॥ १ ॥

श्रवः। सूरिऽभ्यः। अमृतम्। वसुऽत्वनम्। वाजान्।
अस्मभ्यम्। गोऽमतः। चोदयित्री। मघोनः।
सूनृताऽवती। उषाः। उच्छतु। अप। स्रिधः ॥ ६ ॥ १ ॥

हे उषः सूरिभ्यः स्तोतृभ्योस्मभ्यं अमृतं मरणरहितं नित्यं वसुत्वनं वासकं वसुत्वयुक्तं वा श्रवः श्रवणीयं यशः रास्वेत्यनुषङ्गः तथा गोमतः वहुभिर्गोभिर्युक्तान् वाजान् अन्नानि चास्मभ्यं रास्व। शिष्टः परोक्षकृतः मघोनोहविष्मतोयजमानस्य चोदयित्री प्रेरयित्री सूनृतावती प्रियसत्यात्मिका वाक् सूनृता तद्वती उषाः स्रिधः शोषकान् शत्रून् अपोच्छत् अपगमयतु ॥ ६॥

६. उषा, स्तोताओं को अमर, निवास-प्रद और प्रसिद्ध यश दो। हमें अनेक गौओं से युक्त अन्न दो। यजमान की प्रेरिका और सत्य वचनवाली उषा शत्रुओं को दूर करें।

॥ इति पंचमस्य षष्ठे प्रथमोवर्गः ॥ १ ॥

इन्द्रावरुणेति दशर्चं द्वादशं सूक्तं वसिष्ठस्यार्षं जागतम् इदमादीनि चत्वारिसूक्तानीन्द्रावरुणदेवतानि तथाचानुक्रान्तम्—इन्द्रावरुणादशैन्द्रावरुणाह जागतंत्विति। तृतीयेसवने उक्थ्ये प्रशास्तुः शस्त्रे एतत्सूक्तम् सूत्रितंच—इन्द्रावरुणायुवमोवांराजानाविति।

इन्द्रावरुणायुवमध्वरायनोविशेजनायमहिशर्मयच्छतम्।
दीर्घप्रयज्युमतियोवनुष्यतिवयंजयेमपृतनासुदूढ्यः ॥ १ ॥

इन्द्रावरुणा। युवम्। अध्वराय। नः। विशे। जनाय।
महि। शर्म। यच्छतम्। दीर्घऽप्रयज्युम्। अति। यः।
वनुष्यति। वयम्। जयेम। पृतनासु। दुःऽध्यः ॥ १ ॥

हे इन्द्रावरुणा इन्द्रावरुणौ युवं युवां नोस्माकं विशे निवेशयित्रे परिचारकाय जनाय पुत्रपौत्रादिलक्षणाय अध्वराय यज्ञानुष्ठानार्थं महि महत् शर्म गृहं सुखंवा यच्छतं प्रयच्छतम् अपिच दीर्घप्रयज्युं दीर्घप्रततयज्ञं अस्मदीयं जनं यः शत्रुरतिवनुष्यति अति जिघांसति पृतनासु संग्रामेषु दूढ्यः दुर्धियः दुष्टाभिसन्धीन् तान् शत्रून् वयं जयेमाभिभवेम ॥ १ ॥

१. इन्द्र और वरुण, तुम हमारे परिचारक के लिए, यज्ञ-कर्तार्थ, महागृह दो। जो शत्रु बहुत समय तक यज्ञकर्त्ता को मारता है, युद्ध में हम उसी दुर्बुद्धि शत्रु को जीतेंगे।

अथ द्वितीया—

सम्राळन्यःस्वराळन्यउच्यतेवांमहान्ताविन्द्रावरुणामहावसू।
विश्वेदेवासःपरमेव्योमनिसंवामोजोवृषणासंबलंदधुः ॥ २ ॥

सम्ऽराट्। अन्यः। स्वऽराट्। अन्यः। उच्यते। वाम्। महान्तौ।
इन्द्रावरुणा। महावसू इति महाऽवसू। विश्वे। देवासः। परमे।
विऽओमनि। सम्। वाम्। ओजः। वृषणा। सम्। बलम्। दधुः ॥ २ ॥

द्वितीयः पादःपरोक्षकृतः शिष्टाःप्रत्यक्षकृताः हे इन्द्रावरुणौ वां युवयोर्मध्ये अन्यएकोवरुणः सम्राट् सम्यग्राजमानइत्युच्यते । तासम्राजाघृतासुतीत्यादिषुकीर्त्यते[1]। अन्यइन्द्रः स्वराट् स्वयमेव अन्यनिरपेक्षयैव राजमानइत्युच्यते । स्वराळिन्द्रोदमइत्यादिषुकीर्त्यते[2]। तथाविधाविन्द्रावरुणा इन्द्रावरुणौ महान्तौ गुणैरधिकौ महावसू महाधनौ च भवतः । हे वृषणा कामानां वर्षितारावविन्द्रावरुणौ वां युवां परमे व्योमनि उत्कृष्टे आकाशे विश्वेदेवासः सर्वेदेवाः ओजः सन्दधुः समयोजयन् शरीरदार्ढ्याय तद्धेतुभूतं तदोजइत्युच्यते स्मर्यतेच ओजःसाष्टमीदशेति तथा बलं वृत्रवधादेः कार्यस्य हेतुभूतं सामर्थ्यंच युवाभ्यां सन्दधुः समयोजयन् ॥ २ ॥

२. इन्द्र और वरुण, तुम महान् हो और महाधनवाले हो। तुममें से एक (वरुण) सम्राट् हैं और दूसरे (इन्द्र) स्वयं विराजमान हैं। कामवर्षक-द्वय, उत्तम आकाश में विश्वदेवों ने तुम्हें तेज प्रदान किया था—साथ ही बल भी प्रदान किया था।

अन्वपांखान्यतृन्तमोजसासूर्यमैरयतंदिविप्रभुम् ।
इन्द्रावरुणामदेअस्यमायिनोपिन्वतमपितःपिन्वतंधियः ॥ ३ ॥

अनु । अपाम् । खानि । अतृन्तम् । ओजसा । आ । सूर्यम् ।
ऐरयतम् । दिवि । प्रऽभुम् । इन्द्रावरुणा । मदे । अस्य ।
मायिनः । अपिन्वतम् । अपितः । पिन्वतम् । धियः ॥ ३ ॥

हे इन्द्रावरुणौ अपामुदकानां खानि द्वाराणि वृत्रेण पिहितानि ओजसा बलेन अन्वतृन्तं अन्वविध्यतं आवरकस्य वृत्रस्य वधेन वृष्टिप्रतिबन्धं निराकृतवन्तावित्यर्थः तथा सूर्यं सर्वस्य प्रेरकमादित्यं दिव्यंतरिक्षे प्रभुं प्रभूतं सन्तं ऐरयतं अभ्यगमयतम् स्वर्भानुना वृतं सूर्यं तद्वधेन प्रकाशितवन्तावित्यर्थः हे इन्द्रावरुणा इन्द्रावरुणौ मायिनः प्रज्ञाकरस्य अस्यसोमस्य पानेन मदे हर्षेसति अपितः जलरहितानदीः अपिन्वतं जलेनापूरयतम् । तथाच निवित्पदमाम्नायते—अस्यमदेजरितरिंद्रोजिन्वदजुवोपिन्वदपितइति । अपिच धियः कर्माण्यस्माभिरनुष्ठितानि कर्माणि पिन्वतं सिञ्चतं फलेन पूरयतम् ॥३॥

३. इन्द्र और वरुण, तुम लोगों ने बल-द्वारा जल का द्वार (वृष्टि) उद्घाटित किया था। तुमने सबके प्रेरक सूर्य को आकाश में गमन कराया था। इस मायी (प्रज्ञोत्पादक) सोम के पान से आनन्द होने पर तुम लोग सूखी नदियों को जल से पूर्ण करो और कर्मों को भी पूर्ण करो।

युवामिद्युत्सुपृतनासुवह्नयोयुवांक्षेमस्यप्रसवेमितज्ञवः ।
ईशानावस्वउभयस्यकारवइन्द्रावरुणासुहवाहवामहे ॥ ४ ॥

---

1 ऋ० सं० २. ८. ८। 2 ऋ० सं० १. ४. २८।

युवाम् । इत् । युत्ऽसु । पृतनासु । वह्नयः । युवाम् । क्षेमस्य ।
प्रऽसवे । मितऽज्ञवः । ईशाना । वस्वः । उभयस्य । कारवः ।
इन्द्रावरुणा । सुऽहवा । हवामहे ॥ ४ ॥

हे इन्द्रावरुणौ वह्नयोहविषां स्तोत्राणां वा वोढारः ऋत्विजः युत्सु युद्धेषु पृतनासु शत्रुसेनासु रक्षणार्थं युवामित् युवामेव हवन्ते आह्वयन्ति मितज्ञवः संकुचितजानुकाः अंगिरसोपि क्षेमस्य रक्षणस्य प्रसवे उत्पादने निमित्तभूते सति युवामेव हवन्ते अतः कारणात् हे इन्द्रावरुणौ कारवः स्तोतारोवयमपि उभयस्य दिव्यस्य पार्थिवस्य च वस्वोवसुनोधनस्य ईशाना ईश्वरौ सुहवा सुखेन ह्वातव्यौ युवामेव हवामहे आह्वयामहे ॥ ४ ॥

४. इन्द्र और वरुण, स्तोता लोग, युद्धस्थल में, शत्रु-सेना के बीच, रक्षा के लिए और संकुचितजानु अङ्गिरा लोग रक्षण के लिए, तुम्हें ही बुलाते हैं। तुम लोग दिव्य और पार्थिव---दोनों धनों के ईश्वर और अनायास बुलाने योग्य हो। हम स्तोता तुम्हें बुलाते हैं।

इन्द्रावरुणायदिमानिचक्रथुर्विश्वाजातानिभुवनस्यमज्मना ।
क्षेमेणमित्रोवरुणंदुवस्यतिमरुद्भिरुग्रःशुभमन्यईयते ॥ ५ ॥२॥

इन्द्रावरुणा । यत् । इमानि । चक्रथुः । विश्वा । जातानि ।
भुवनस्य । मज्मना । क्षेमेण । मित्रः । वरुणम् । दुवस्यति ।
मरुत्ऽभिः । उग्रः । शुभम् । अन्यः । ईयते ॥ ५ ॥ २ ॥

हे इन्द्रावरुणौ यत् यौ युवां भुवनस्य लोकस्य संबन्धीनि इमानि परिदृश्यमानानि विश्वा सर्वाणि जातानि जातिमन्तिभूतजातानि मज्मना आत्मीयेन बलेन चक्रथुः कृतवन्तौ तयोर्युवयोर्मध्ये एकं वरुणं क्षेमेण रक्षणहेतुना मित्रोदेवोदुवस्यति परिचरति मित्रावरुणौ हि परस्परं प्राप्तसख्यौ अतएव सहचरौ दृश्येते अन्यएकः इन्द्रः मरुद्भिर्मरुद्गणैः उग्रः उद्गूर्णबलः सन् शुभं शोभनमलंकारं ईयते प्राप्नोति यद्वा मरुद्भिर्मध्यस्थानैर्देवगणैःसार्धं उग्रओजस्वी इन्द्रः शुभमुदकं ईयते प्रेरयति ॥ ५ ॥

५. इन्द्र और वरुण, तुम लोगों ने संसार के सारे प्राणियों का निर्माण किया है। तुम लोगों में से मङ्गल के लिए एक (वरुण) की परिचर्या मित्र करते हैं और दूसरे (इन्द्र) मरुतों के साथ तेजस्वी होकर शोभन अलंकार प्राप्त करते हैं।

॥ इति पञ्चमस्य षष्ठे द्वितीयोवर्गः ॥ २ ॥

महेशुल्कायवरुणस्यनुत्विषओजोमिमातेध्रुवमस्ययत्स्वम् ।
अजामिमन्यःश्नथयन्तमातिरद्दभ्रेभिरन्यःप्रवृणोतिभूयसः ॥ ६ ॥

महे । शुल्कार्य । वरुणस्य । नु । त्विषे । ओजः । मिमाते इति ।
ध्रुवम् । अस्य । यत् । स्वम् । अजामिम् । अन्यः । श्नथयन्तम् ।
आ । अतिरत् । दभ्रेभिः । अन्यः । प्र । वृणोति । भूयसः ॥ ६ ॥

वरुणस्य उपलक्षणमेतत् इन्द्रस्य वरुणस्यच त्विषे दीप्त्यर्थं ओजोबलं नु क्षिप्रं मिमाते स्तोत्रेण निर्मिमाते यजमानपत्न्यौ स्तोत्रेण हि बलं जायते किमर्थं महे महते शुल्काय धनाय ईदृशस्य धनस्य लाभार्थं अस्येन्द्रस्य वरुणस्यच ध्रुवं नित्यं स्वं स्वकीयं असाधारणं यदोजोविद्यते तदोजोमिमाते इत्यन्वयः तयोरिन्द्रावरुणयोः अन्यएकोवरुणः अजामिं अबन्धुं अस्तुवन्तं श्नथयन्तं हिंसन्तं कर्माण्यकुर्वन्तं अस्तोतारमयजमानं च आतिरत् अभिहन्ति अन्यएकः इन्द्रः दभ्रेभिः अल्पैरेवोपायैः भूयसः बहुतरान् शत्रून्प्रवृणोति प्रकर्षेणावृतान् बाधितान्करोति यद्वा भूयसोयजमानान् प्रवृणोति प्रवरानुत्कृष्टान् करोति ॥ ६ ॥

६. महान् धन की प्राप्ति के लिए, इन्द्र और वरुण के प्रकाशनार्थ, शीघ्र बल प्राप्त हो जाता है। इन दोनों का यह बल नित्य और असाधारण है। इनमें से एक जन (वरुण) हिंसाकारी का अपघात करते हैं और दूसरे (इन्द्र) अल्प उपायों से ही अनेक शत्रुओं को बाधित करते हैं।

नतमंहोनदुरितानिमर्त्यमिन्द्रावरुणानतपःकुतश्चन ।
यस्यदेवागच्छथोवीथोअध्वरंनतंमर्तस्यनशतेपरिह्वृतिः ॥ ७ ॥

न । तम् । अंहः । न । दुःऽइतानि । मर्त्यम् । इन्द्रावरुणा ।
न । तपः । कुतः । चन । यस्य । देवा । गच्छथः । वीथः ।
अध्वरम् । न । तम् । मर्तस्य । नशते । परिऽह्वृतिः ॥ ७ ॥

हे इन्द्रावरुणा इन्द्रावरुणौ तं मर्त्यं मनुष्यं अंहः पापं ननशते नव्यामोति नच दुरितानि दुर्गमनानि पापफलानिच प्राप्नुवन्ति कुतश्चन कस्मादपि निमित्तात्तपः सन्तापश्च तं नप्राप्नोति हे देवादेवौ दानादिगुणयुक्ताविन्द्रावरुणौ यस्य मर्तस्य मनुष्यस्य अध्वरं यज्ञं गच्छथः प्राप्नुथोयुवाम् वीथः कामयेथेच यस्य हवींषि तं मनुष्यं परिह्वृतिः परिबाधा नशते उक्तप्रकारेण नव्यामोति ॥ ७ ॥

७. इन्द्र और वरुण देवो, तुम जिस मनुष्य के यज्ञ में गमन करते हो, जिसकी कामना करते हो, उसके पास बाधा नहीं जा सकती, पाप नहीं जा सकता, दुष्कर्म नहीं जा सकता और किसी भी कारण से उसके पास सन्ताप भी नहीं जा सकता।

अर्वाङ्नराद‍ैव्येनावसागतंशृणुतंहवंयदिमेजुजोषथः ।
युवोर्हिसख्यमुतवायदाप्यंमार्डीकमिन्द्रावरुणानियच्छतम् ॥८॥

अर्वाक् । नरा । दैव्येन । अवसा । आ । गतम् । शृणुतम् । हवम् ।
यदि । मे । जुजोषथः । युवोः । हि । सख्यम् । उत । वा । यत् ।
आप्यम् । मार्डीकम् । इन्द्रावरुणा । नि । यच्छतम् ॥ ८ ॥

हे नरा नेताराविन्द्रावरुणौ दैव्येन देवसंबन्धिना अवसा रक्षणेन सह अर्वागस्मदभिमुखं आगतमागच्छतम् आगत्यच मदीयं स्तोत्रं हवं श्रृणुतम् । यदि मे मम जुजोषथः प्रीयेथे मयिप्रीतिरस्तिचेत् युवाभ्यां आगन्तव्यं मदीयं स्तोत्रं श्रोतव्यश्च भवतीत्यर्थः । युवोर्हि युवयोः खलु यत्सख्यं सखित्वं उतवा अपिच यदाप्यं आपित्वं बान्धवं मार्डीकं मृडीकस्य सुखस्य साधनं तदुभयं हे इन्द्रावरुणौ नियच्छतं अस्मभ्यं प्रयच्छतं ॥ ८ ॥

८. नेता इन्द्र और वरुण, यदि मुझसे प्रसन्न हो, तो दिव्य रक्षा के साथ मेरे सामने आओ। स्तोत्र श्रवण करो। तुम लोगों के सखित्व (मित्रता) और बन्धुत्व (कुटुम्बत्व) सुख के साधक हैं। हमें दोनों दो।

अस्माकमिन्द्रावरुणाभरेभरेपुरोयोधाभवतंकृष्टचोजसा ।
यद्वांहवन्तउभयेअधस्पृधिनरस्तोकस्यतनयस्यसातिषु ॥ ९ ॥

अस्माकम् । इन्द्रावरुणा । भरेऽभरे । पुरःऽयोधा । भवतम् ।
कृष्टिऽओजसा । यत् । वाम् । हवन्ते । उभये । अध ।
स्पृधि । नरः । तोकस्य । तनयस्य । सातिषु ॥ ९ ॥

हे कृष्टचोजसा शत्रूणां कर्षणकं ओजोबलं ययोः तादृशौ हे इन्द्रावरुणौ भरेभरे संग्रामेसंग्रामे अस्माकं पुरोयोधा पुरस्ताद्योधारौभवतं यत् यौ वां युवां उभये उभयविधाः पूर्वकालीना इदानींतनाश्च नरो नेतारः स्तोतारः स्पृधि युद्धे यौ युवां हवन्ते अध अपिच तोकस्य पुत्रस्य तनयस्य पौत्रस्य सातिषु संभजनीयेषु निमित्तभूतेषुच यौ युवां हवन्ते तावस्माकं पुरोयोधा भवतमित्यन्वयः ॥ ९ ॥

९. शत्रु-कर्षक तेजवाले इन्द्र और वरुण, प्रत्येक संग्राम में हमारे अग्रणी योद्धा बनो। तुम्हें प्राचीन और आधुनिक—दोनों प्रकार के नेता ही युद्ध में और पुत्र, पौत्र आदि की प्राप्ति में बुलाते हैं।

अथ दशमी—

अस्मेइन्द्रोवरुणोमित्रोअर्यमाद्युम्नंयच्छन्तुमहिशर्मसप्रथः ।
अवध्रंज्योतिरदितेर्ऋतावृधोदेवस्यश्लोकंसवितुर्मनामहे ॥ १० ॥३॥

अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् ।
यच्छन्तु । महि । शर्म । सऽप्रथः । अवध्रम् । ज्योतिः । अदितेः ।
ऋतऽवृधः । देवस्य । श्लोकम् । सवितुः । मनामहे ॥ १० ॥ ३ ॥

अस्मे अस्मभ्यं इन्द्रादयः द्युम्नं द्योतमानं धनं यच्छन्तु प्रयच्छंतु तथा महि महत् सप्रथः सर्वतः पृथु विस्तीर्णं शर्म गृहं च प्रयच्छन्तु अपिच ऋतावृधः ऋतस्य यज्ञस्य वर्धयित्र्याः अदितेरदीनाया देवमातुः ज्योतिस्तेजश्च नोस्माकं अवध्रं अहिंसकमस्तु वयंच देवस्य दानादिगुणयुक्तस्य सवितुः सर्वस्य प्रेरकस्य श्लोकं स्तोत्रं मनामहे जानीमः कुर्मइत्यर्थः । यद्वा देवेन सवित्रा अस्मभ्यं देयं श्लोकं यशः मनामहे याचामहे ॥ १० ॥

१०. इन्द्र, वरुण, मित्र और अर्यमा हमें प्रकाशमान धन और महान् विस्तीर्ण गृह प्रदान करें। यज्ञ-वर्द्धिका अदिति का तेज हमारे लिए अहिंसक हो। हम सविता देवता की स्तुति करेंगे।

॥ इति पञ्चमस्य षष्ठे तृतीयोवर्गः ॥३॥

युवांनरेति दशर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षं जागतमैन्द्रावरुणं युवांनरेत्यनुक्रान्तम् । आभिप्लविकेषूक्थ्येषु स्तोमवृद्धौ प्रशास्तुः इदंसूक्तमावापार्थं सूत्रितंच—युवांनरापुनीषेवामिति ।

तत्र प्रथमा—

युवांनरापश्यंमानासआप्यंप्राचागव्यन्तःपृथुपर्शवोययुः ।
दासाचवृत्राहतमार्याणिचसुदासमिन्द्रावरुणावंसावतम् ॥ १ ॥

युवाम् । नरा । पश्यंमानासः । आप्यम् । प्राचा । गव्यन्तः ।
पृथुऽपर्शवः । ययुः । दासा । च । वृत्रा । हतम् । आर्याणि ।
च । सुऽदासम् । इन्द्रावरुणा । अवसा । अवतम् ॥ १ ॥

हे नरा नेताराविन्द्रावरुणौ युवां षष्ठयर्थे द्वितीया युवयोः आप्यं बन्धुभावं पश्यमानासः पश्यन्तः युष्मद् बान्धवलाभार्थिनः गव्यन्तो गा आत्मनइच्छन्तोयजमानाः पृथुपर्शवः पृथुर्विस्तीर्णः पर्शुः पार्श्वास्थि येषां ते तथोक्ताः विस्तीर्णाश्वपर्शुहस्ताः सन्तः प्राचा प्राचीनं ययुः बर्हिराहरणार्थं गच्छन्ति पर्श्वाहि बर्हिराच्छिद्यते । तथाच तैत्तिरीयकम्—अश्वपर्श्वाबर्हिरच्छैतीति । हे इन्द्रावरुणौ युवां दासा दासानि उपक्षपयितॄणि च वृत्रा वृत्राण्यावरकाणि

१ तै० ब्रा० ३. २. २.

शत्रुजातानि आर्याणि कर्मानुष्ठानपराणिच शत्रुजातानि हतं हिंस्तम् अपिच सुदासं अस्मद्या-ज्यं एतत्संज्ञं राजानं अवसा रक्षणेन सार्धं अवतमागच्छतम् ॥ १ ॥

१. नेता इन्द्र और वरुण, तुम्हारी मित्रता देखकर, गो-प्राप्ति की इच्छा से, मोटे परशु (घास काटदे का हथियार) वाले यजमान पूर्व दिशा की ओर गये। तुम लोग दास, वृत्र और सुदास-शत्रु आर्यगण को मार डालो और सुदास राजा के लिए, रक्षण के साथ, आओ।

यत्रानरःसमयन्तेकृतध्वजोयस्मिन्नाजाभवतिकिंचनप्रियम्।
यत्राभयन्तेभुवनास्वर्दृशस्तत्रानइन्द्रावरुणाधिवोचतम् ॥ २ ॥

यत्र। नरः। सम्ऽअयन्ते। कृतऽध्वजः। यस्मिन्। आजा।
भवति। किम्। चन। प्रियम्। यत्र। भयन्ते। भुवना।
स्वःऽदृशः। तत्र। नः। इन्द्रावरुणा। अधि। वोचतम् ॥ २ ॥

यत्र यस्मिन्संग्रामे नरोमनुष्याः कृतध्वजः उच्छ्रितध्वजाः समयन्ते युद्धार्थं संगच्छन्ते यस्मिंश्च आजा आजौ युद्धे चनेति निपातद्वयसमुदायोविभज्ययोजनीयः किञ्च किमपि प्रियमनुकूलं नभवति अपितु सर्वं दुष्करं भवति। यत्रच युद्धे भुवना भुवनानि भूतजातानि स्वर्दृशः शरीरपातादूर्ध्वं स्वर्गस्य द्रष्टारोवीताश्च भयन्ते बिभ्यति तत्र तादृशे संग्रामे हे इन्द्रावरुणौ नोस्मानधिवोचतं अस्मत्पक्षपातवचनौ भवतम् ॥ २ ॥

२. जहाँ मनुष्य ध्वजा उठाकर युद्धार्थ मिलते हैं, जिस युद्ध में कुछ भी अनुकूल नहीं होता और जिसमें प्राणी स्वर्ग-दर्शन करते हैं, उस युद्ध में, हे इन्द्र और वरुण, हमारे पक्षपात की बातें कहना।

अथ तृतीया—

संभूम्याअन्ताध्वसिराअदृक्षतेन्द्रावरुणादिविघोषआरुहत्।
अस्थुर्जनानामुपमामरातयोर्वागवसाहवनश्रुतागतम् ॥ ३ ॥

सम्। भूम्याः। अंताः। ध्वसिराः। अदृक्षत। इन्द्रावरुणा। दिवि।
घोषः। आ। अरुहत्। अस्थुः। जनानाम्। उप। माम्। अरातयः।
अर्वाक्। अवसा। हवनऽश्रुता। आ। गतम् ॥ ३ ॥

हे इन्द्रावरुणौ भूम्याअन्ताः पर्यन्ताः ध्वसिराः सैनिकैर्ध्वस्ताः समदृक्षत संदृश्यन्ते तथा दिवि द्युलोके घोषः सैनिकानां शब्दश्च आरुहत् आरूढोभवत् जनानामस्मदीयानां भटानां अरातयः शत्रवः मामुपास्थुः उपास्थिताः एवं प्रवर्तमानेस्मिन् युद्धे हे हवनश्रुता आह्वानश्रवणशीलाविन्द्रावरुणौ अर्वागस्मदभिमुखं अवसा रक्षणेन सह आगतमागच्छतम् ॥ ३ ॥

३. इन्द्र और वरुण, पृथिवी के सारे अन्न सैनिकों-द्वारा विनष्ट होकर दिखाई देते हैं। सैनिकों का कोलाहल द्युलोक में फैल रहा है। मेरी सेना के सारे शत्रु मेरे पास आये हुए हैं। हे हनन-श्रवणकारी इन्द्र और वरुण, रक्षण के साथ, हमारे पास आओ।

इन्द्रावरुणावधनाभिरप्रतिभेदंवन्वन्ताप्रसुदासमावतम् ।
ब्रह्माण्येषांशृणुतंहवीमनिसत्यातृत्सूनामभवत्पुरोहितिः ॥ ४ ॥

इन्द्रावरुणा । वधनाभिः । अप्रति । भेदम् । वन्वन्ता ।
प्र । सुऽदासम् । आवतम् । ब्रह्माणि । एषाम् । शृणुतम् । हवीमनि ।
सत्या । तृत्सूनाम् । अभवत् । पुरःऽहितिः ॥ ४ ॥

हे इन्द्रावरुणा इन्द्रावरुणौ वधनाभिर्वधकैरायुधैः अप्रतिगतं अप्राप्तं भेदम् एतत्संज्ञं सुदासः शत्रुं वन्वन्ता हिंसन्तौ युवां सुदासं शोभनं ददातीति सुदाः एतत्संज्ञं मम याज्यं राजानं प्रावतं प्रकर्षेणारक्षतम् एषां तृत्सूनां मम याज्यानां ब्रह्माणि स्तोत्राणि शृणुतं अशृणुतं कदा हवीमनि आहूयन्तेस्मिन्युद्धार्थं परस्परमिति हवीमा संग्रामः तस्मिन् यस्मादेवं तस्मात् तृत्सूनां एतत्संज्ञानां मम याज्यानां पुरोहितिः मम पुरोधानं सत्या सत्यफलमभवत् तेषु यन्मम पौरोहित्यं तत्सफलं जातमित्यर्थः ॥ ४ ॥

४. इन्द्र और वरुण, आयुध-द्वारा अप्राप्त भेद नामक शत्रु को मारते हुए तुम लोगों ने सुदास राजा की रक्षा की थी और तृत्सुओं के स्तोत्रों को सुना था। युद्ध-काल में तृत्सुओं का पौरोहित्य सफल हुआ था।

अथ पंचमी—

इन्द्रावरुणावभ्यातपन्तिमाघान्यर्योवनुषामरातयः ।
युवंहिवस्वउभयस्यराजथोधस्मानोवतंपार्येदिवि ॥ ५ ॥ ४ ॥

इन्द्रावरुणौ । अभि । आ । तपन्ति । मा । अघानि । अर्यः ।
वनुषाम् । अरातयः । युवम् । हि । वस्वः । उभयस्य । राजथः ।
अध । स्म । नः । अवतम् । पार्ये । दिवि ॥ ५ ॥ ४ ॥

हे इन्द्रावरुणौ अर्यः अरेः शत्रोः संबन्धीनि अघान्याहन्तॄण्यायुधानि मा मां अभ्यातपन्ति अभितोबाधन्ते अपिच वनुषां हिंसकानां मध्ये अरातयः अभिगमनशीलाः शत्रवश्च मामभितपन्ति युवं हि युवां खलु उभयस्य पार्थिवस्य दिव्यस्यच वस्वोवसुनोधनस्य राजथः ईशाथे राजतिरैश्वर्यकर्मा अधस्म अतः कारणात् पार्ये तरणीये दिवि दिवसे युद्धदिने नोस्मानवतं रक्षतम् ॥ ५ ॥

॥ इति पञ्चमस्य षष्ठे चतुर्थोवर्गः ॥ ४ ॥

५. इन्द्र और वरुण, मुझे चारों ओर से शत्रुओं के हथियार घेर रहे हैं और हिंसकों के बीच मुझे शत्रु बाधा दे रहे हैं। तुम लोग दोनों (दिव्य और पार्थिव) प्रकार के धनों के स्वामी हो; इसलिए युद्ध के दिनों में हमारी रक्षा करो।

युवांहवन्तउभयासआजिष्विन्द्रंचवस्वोवरुणंचसातये।
यत्रराजभिर्दशभिर्निबाधितंप्रसुदासमावतंतृत्सुभिःसह ॥ ६ ॥

युवाम्। हवन्ते। उभयासः। आजिषु। इन्द्रम्। च। वस्वः।
वरुणम्। च। सातये। यत्र। राजऽभिः। दशऽभिः।
निऽबाधितम्। प्र। सुऽदासम्। आवतम्। तृत्सुऽभिः। सह ॥ ६ ॥

उभयासः उभयविधाः सुदाःसंज्ञोराजा तत्सहायभूतास्तृत्सवश्च एवं द्विप्रकाराजनाः आजिषु संग्रामेषु इन्द्रश्च वरुणश्च युवां हवन्ते आह्वयन्ते किमर्थं वस्वोधनस्य सातये संभजनार्थं यत्र येष्वाजिषु दशभिर्दशसंख्याकैः राजभिः शत्रुभूतैः नृपैः निबाधितं नितरां हिंसितं सुदासं तृत्सुभिः सहवर्तमानं प्रावतं युवां प्रकर्षेणारक्षतं तेष्वाजिष्वित्यन्वयः ॥ ६ ॥

६. युद्ध-काल में दोनों (सुदास और तृत्सु) प्रकार के लोग. धन-प्राप्ति के लिए इन्द्र और वरुण को बुलाते हैं। इस युद्ध में दस राजाओं-द्वारा प्रपीड़ित सुदास को, तृत्सुओं के साथ, तुमने बचाया था।

दशराजानःसमिताअयज्यवःसुदासमिन्द्रावरुणानयुयुधुः।
सत्यानृणामद्मसदामुपस्तुतिर्देवाएषामभवन्देवहूतिषु ॥ ७ ॥

दश। राजानः। सम्ऽइताः। अयज्यवः। सुऽदासम्।
इन्द्रावरुणा। न। युयुधुः। सत्या। नृणाम्। अद्मऽसदाम्।
उपऽस्तुतिः। देवाः। एषाम्। अभवन्। देवऽहूतिषु ॥ ७ ॥

हे इन्द्रावरुणौ दशसंख्याकाः राजानः सुदासः शत्रवः समिताः संगताः परस्परं समवेताः अयज्यवःअयजमानाःएवंभूतास्ते सुदासं एतत्संज्ञं एकमपिराजानं न युयुधुः न सम्प्रजह्रुः युवाभ्यामनुगृहीतं तं प्रहर्तुं न शेकुः तदानीं अद्मसदां अद्मनि अन्ने हविषि सीदतीति अद्मसदऋत्विजः हविर्भिर्युक्तानां नृणां यज्ञस्य नेतॄणां ऋत्विजां उपस्तुतिः स्तोत्रं सत्या सफलाभूत् अपिच एषां देवहूतिषु देवाहूयन्तेयेषु इतिदेवहूतयोयज्ञाः तेषु सर्वे च देवाअभवन् युष्मदनुग्रहात्प्रादुर्भवन्ति ॥ ७ ॥

७. इन्द्र और वरुण, दस यज्ञ-हीन राजा परस्पर मिलकर भी सुदास राजा पर प्रहार करने में समर्थ नहीं हुए। हव्य-युक्त यज्ञ में नेताओं का स्तोत्र सफल हुआ है। इनके यज्ञ में समस्त देवता आविर्भूत हुए थे।

दाशराज्ञेपरियत्तायविश्वतःसुदासंइन्द्रावरुणावशिक्षतम् ।
श्वित्यंचोयत्रनमसाकपर्दिनोधियाधीवन्तोअसपन्ततृत्सवः ॥८॥

दाशऽराज्ञे । परिऽयत्ताय । विश्वतः । सुऽदासे । इन्द्रावरुणौ ।
अशिक्षतम् । श्वित्यंचः । यत्र । नमसा । कपर्दिनः ।
धिया । धीऽवन्तः । असपन्त । तृत्सवः ॥ ८ ॥

हे इन्द्रावरुणौ दाशराज्ञे दशशब्दस्य छान्दसोदीर्घः विभक्तिव्यत्ययः दशभीराजभिः शत्रुभूतैः विश्वतः सर्वतः परियत्ताय परिवेष्टिताय सुदासे राज्ञे अशिक्षतं बलं प्रायच्छतम् यत्र यस्मिन्देशे श्वित्यञ्चः श्वितं श्वैत्यं नैर्मल्यं अञ्चन्तोगच्छन्तः कपर्दिनोजटिलाधीवन्तः कर्मभि-र्युक्तास्तृत्सवः वसिष्ठशिष्याः एतत्संज्ञाऋत्विजः नमसा हविर्लक्षणेनान्नेन धिया स्तुत्या च अ-सपन्त पर्यचरन् तस्मिन्देशे युवां तस्मै राज्ञे बलं प्रायच्छतमित्यर्थः ॥ ८ ॥

८. जहाँ निर्मल, जटावाले और कर्मठ तृत्सुगण (वसिष्ठ-शिष्य) अन्न और स्तुति के साथ परिचर्या किया करते हैं, उसी देश में दस राजाओं द्वारा चारों ओर से घेरे हुए सुदास को, हे इन्द्र और वरुण, तुम लोगों ने बल प्रदान किया था।

अथ नवमी—

वृत्राण्यन्यःसमिथेषुजिघ्नतेव्रतान्यन्योअभिरक्षतेसदा ।
हवामहेवांवृषणासुवृक्तिभिरस्मेइन्द्रावरुणाशर्मयच्छतम् ॥ ९ ॥

वृत्राणि । अन्यः । सम्ऽइथेषु । जिघ्नते । व्रतानि । अन्यः ।
अभि । रक्षते । सदा । हवामहे । वाम् । वृषणा । सुवृक्तिऽभिः ।
अस्मे इति । इन्द्रावरुणा । शर्म । यच्छतम् ॥ ९ ॥

हे इन्द्रावरुणौ युवयोरन्यएकइन्द्रः वृत्राणि शत्रून् समिथेषु संग्रामेषु जिघ्नते हन्ति अ-न्यएकोवरुणः सदा सर्वदा व्रतानि कर्माणि अभिरक्षते अभितः सर्वतोरक्षति हे वृषणा कामा-नां वर्षिताराविन्द्रावरुणौ तथाविधौ वां युवां सुवृक्तिभिः सुप्रवृत्ताभिः स्तुतिभिः हवामहे आ-ह्वयामहे आहूतौ च युवां अस्मे अस्मभ्यं शर्म सुखं यच्छतं दत्तम् ॥ ९ ॥

९. इन्द्र और वरुण, तुममें से एक (इन्द्र) युद्ध में वृत्रों का नाश करते हैं और दूसरे (वरुण) व्रत वा कर्म की रक्षा करते हैं। अभीष्ट-वर्षक-द्वय, सुन्दर स्तुति-द्वारा तुम्हें हम बुलाते हैं। तुम हमें सुख दो।

अस्मेइन्द्रोवरुणोमित्रोअर्यमाद्युम्नंयच्छन्तुमहिशर्मसप्रथः ।
अवध्रंज्योतिरदितेर्ऋतावृधोदेवस्यश्लोकंसवितुर्मनामहे ॥ १० ॥५॥

अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् । यच्छन्तु ।
महि । शर्म । सऽप्रथः । अवध्रम् । ज्योतिः । अदितेः ।
ऋतऽवृधः । देवस्य । श्लोकम् । सवितुः । मनामहे ॥ १० ॥ ५ ॥

अस्मे इन्द्रइति व्याख्यातेयम् अक्षरार्थस्तु इन्द्रादयोस्मभ्यं द्योतमानं धनंप्रयच्छंतु सर्वंतोविस्तीर्णं महद्गृहञ्च यज्ञस्य वर्धयित्र्याः अदीनायादेवमातुः तजेश्च अस्माकमबाधकं भवतु वयञ्च प्रेरकस्य देवस्य स्तोत्रं मनामहे कुर्महे ॥ १०॥

१०. इन्द्र, वरुण, मित्र और अर्यमा हमें प्रकाशमान धन और महान् विस्तीर्ण गृह प्रदान करें। यज्ञ-वर्द्धिका अदिति का तेज हमारे लिए अहिंसक हो। हम सविता देवता की स्तुति करते हैं।

॥ इति पञ्चमस्य षष्ठे पञ्चमोवर्गः ॥ ५ ॥

आवामिति पञ्चर्चं चतुर्दशं सूक्तम् वासिष्ठं त्रैष्टुभमैन्द्रावरुणम् अनुक्रान्तञ्च—आवांपञ्चेति । उक्थ्ये तृतीयसवने मैत्रावरुणशस्त्रे इदंसूक्तम् सूत्रितञ्च—आवांराजानाविन्द्रावरुणामधुमत्तमस्येति याज्येति ।

तत्र प्रथमा—

आवांराजानावध्वरेववृत्यांहव्येभिरिन्द्रावरुणानमोभिः ।
प्रवांघृताचीबाह्वोर्दधानापरित्मनाविषुरूपाजिगाति ॥ १ ॥

आ । वाम् । राजानौ । अध्वरे । ववृत्याम् । हव्येभिः ।
इन्द्रावरुणा । नमःऽभिः । प्र । वाम् । घृताची । बाह्वोः ।
दधाना । परि । त्मना । विषुऽरूपा । जिगाति ॥ १ ॥

हे राजानौ राजमानौ ईश्वरौवा इन्द्रावरुणौ अध्वरे हिंसारहितेस्मिन्यागे वां युवां हव्येभिर्हविर्भिर्नमोभिः स्तोत्रैश्च आववृत्यां आवर्तयामि अपिच बाह्वोर्हस्तयोर्दधाना धार्यमाणा विषुरूपा रूप्यतइति रूपं हविः विविधहविर्युक्ता घृताची घृतमञ्चन्ती जुहू त्मना आत्मना स्वयमेव वां युवां परि प्रजिगाति अभिप्रगच्छति यद्वा विषुरूपा नानाविधरूपौ वामिति योज्यम् ॥१॥

१. इन्द्र और वरुण, इस यज्ञ में, मैं तुम्हें, हव्य और स्तोत्र-द्वारा, आवर्त्तित करता हूँ। हाथों में धृत नाना रूपोंवाली जुहू स्वयं तुम लोगों की ओर जाती है।

युवोरा॒ष्ट्रंबृ॒हदि॑न्वति॒द्यौर्यौसे॒तृभि॑रर॒ज्जुभिः॑सिनी॒थः।
परि॑नो॒हेळो॒वरु॑णस्यवृ॒ज्याउ॒रुंन॒इन्द्रः॑कृणवदु॒लो॒कम् ॥ २ ॥

युवोः॑। रा॒ष्ट्रम्। बृ॒हत्। इ॒न्व॒ति॒। द्यौः। यौ। से॒तृऽभिः॑।
अ॒र॒ज्जुऽभिः॑ सि॒नी॒थः। परि॑। न॒ः। हेळः॑। वरु॑णस्य। वृ॒ज्या॒ः।
उ॒रुम्। न॒ः। इन्द्रः॑। कृ॒णव॒त्। उँ॒ इति॑। लो॒कम् ॥ २ ॥

हे इन्द्रावरुणौ युवोर्युवयोः बृहन्महत् राष्ट्रं राज्यं द्यौः द्युलोकरूपं इन्वति वृष्ट्या सर्वान् प्रीणयति यौ युवां सेतृभिर्बन्धकैः अरज्जुभिः रज्जुरहितैः रोगादिभिः सिनीथः पापकृतोव-ध्नीथः षिञ् बन्धने इतिधातुः तयोर्मध्ये वरुणस्य वारयितुर्देवस्य हेळः क्रोधः नोस्मान्परिवृज्याः परिवृणक्तु परित्यज्यान्यत्रगच्छतु। इन्द्रउ इन्द्रश्च उरुं विस्तीर्णं लोकं स्थानं कृणवत्करोतु ॥ २ ॥

२. इन्द्र और वरुण, तुम्हारा स्वर्गरूप विशाल राष्ट्र वृष्टि-द्वारा सबको प्रसन्न करता है। तुम लोग रज्जुशून्य और बाधक उपायों से पापी को बाँधो। वरुण का क्रोध हम लोगों की रक्षा करके गमन करे। इन्द्र भी स्थान को विस्तृत करें।

कृ॒तंनो॑य॒ज्ञंवि॒दथे॑षु॒चारुं॑कृ॒तंब्रह्मा॑णिसू॒रिषु॑प्रश॒स्ता।
उपो॑र॒यिर्दे॒वजू॑तोनएतु॒प्रणः॑स्पा॒र्हाभि॑रू॒तिभि॑स्तिरेतम् ॥ ३ ॥

कृ॒तम्। न॒ः। य॒ज्ञम्। वि॒दथे॑षु। चारु॑म्। कृ॒तम्। ब्रह्मा॑णि।
सू॒रिषु॑। प्र॒ऽश॒स्ता। उपो॒ इति॑। र॒यिः। दे॒वऽजू॑तः। न॒ः।
ए॒तु॒। प्र। न॒ः। स्पा॒र्हाभिः॑। ऊ॒तिऽभिः॑। ति॒रे॒त॒म् ॥ ३ ॥

हे इन्द्रावरुणौ नोस्माकं विदथेषु गृहेषु क्रियमाणं यज्ञं चारुं शोभनं फलसहितं कृतं कुरुतम् तथा सूरिषु स्तोतृष्वस्मासु विद्यमानानि ब्रह्माणि परिवृढानि स्तोत्राणि प्रशस्ता प्र-शस्तानि उत्कृष्टानि फलभाञ्जि कृतं कुरुतम्। अपिच देवजूतः देवाभ्यां युवाभ्यां प्रेरितोरयि-र्धनं नोस्मानुपैतु प्राप्नोतु तथा स्पार्हाभिः स्पृहणीयाभिरूतिभिः रक्षाभिर्नोस्मान् प्रतिरेतं युवां वर्धयेथाम् प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ ३ ॥

३. इन्द्र और वरुण, हमारे गृह के यज्ञ को मनोरम करो। स्तोताओं के स्तोत्र को उत्तम करो। देवों-द्वारा प्रेरित धन हमारे पास आवे। अभिलषणीय रक्षा-द्वारा वे हमें वर्द्धित करें।

अस्मेइन्द्रावरुणाविश्ववांरंरयिंधंत्तंवसुमन्तंपुरुक्षुम्।
प्रयआदित्योअनृंतामिनात्यमिंताशूरोंदयतेवसूंनि ॥ ४ ॥

अस्मे इतिं । इन्द्रावरुणा । विश्वऽवांरम् । रयिम् । धत्तम् ।
वसुंऽमन्तम् । पुरुऽक्षुम् । प्र । यः । आदित्यः । अनृंता ।
मिनातिं । अमिंता । शूरंः । दयते । वसूंनि ॥ ४ ॥

हे इन्द्रावरुणौ अस्मे अस्मभ्यं रयिं धनं धत्तं प्रयच्छतम् कीदृशं विश्ववारं विश्वैः सर्वै-वंरणीयं संभजनीयं वसुमन्तं निवासयुक्तं पुरुक्षुं बह्वन्नं पुरुभिर्बहुभिः प्रशस्यं वा आदित्यः अदितेः पुत्रोयोवरुणः अनृता अनृतानि सत्यरहितानि भूतानि प्रमिनाति प्रहिनस्ति मीञ् हिं-हिंसायामितिधातुः शूरः शौर्यवान् सवरुणः अमिता अमितानि अपरिमितानि वसूनि धनानि दयते स्तोतृभ्योददाति ॥ ४ ॥

४. इन्द्र और वरुण हमें सबके लिए वरणीय निवास-स्थान और बहुत अन्नवाला धन दो। जो आदित्य (वरुण) असत्य का विनाश करते हैं, वही शूर लोगों को अपरिमित धन देते हैं।

इयमिन्द्रंवरुंणमष्टमेगीःप्रावंत्तोकेतनंयेतूतुंजाना।
सुरत्नांसोदेववींतिंगमेमयूयंपातस्वस्तिभिःसदांनः ॥ ५ ॥ ६ ॥

इयम् । इन्द्रंम् । वरुंणम् । अष्ट । मे । गीः । प्र । आवत् । तोके ।
तनंये । तूतुंजाना । सुऽरत्नांसः । देवऽवींतिम् । गमेम ।
यूयम् । पात । स्वस्तिऽभिः । सदां । नः ॥ ५ ॥ ६ ॥

मे मदीया इयं गीः स्तुतिः इन्द्रं वरुणंच अष्ट अश्नुतां व्याप्नोतु तथा तूतुजाना मया-प्रेर्यमाणा सा तोके पुत्रे तनये पौत्रे च विषये प्रावत् प्ररक्षत्वस्मान् वयञ्च सुरत्नासः शोभनध-नाः सन्तोदेववीतिं देवैः कामयितव्यं यज्ञं गमेम प्राप्नुयाम । हे इन्द्रावरुणादयः सर्वेदेवाः यूयं स्वस्तिभिः कल्याणैर्नोस्मान्सदा सर्वदा पात रक्षत ॥ ५ ॥

५. मेरी यह स्तुति इन्द्र और वरुण को व्याप्त करे। मेरी की हुई स्तुति, पुत्र और पौत्र के सम्बन्ध में, हमारी रक्षा करे। हम सुन्दर रत्नवाले होकर यज्ञ पावेंगे। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य षष्ठे षष्ठोवर्गः ॥ ६ ॥

पुनीषेवामिति पंचर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रावरुणं पुनीषइत्यनुक्रान्तं। आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ प्रशास्तुः इदमावापार्थं सूत्रितंच—युवांनरापुनीषेवामिति।

तत्र प्रथमा--

पुनीषेवामरक्षसंमनीषांसोममिन्द्रायवरुणायजुह्वत्।
घृतप्रतीकामुषसंनदेवींतानोयामंन्नुरुष्यतामभीके॥ १॥

पुनीषे। वाम्। अरक्षसम्। मनीषाम्। सोमम्। इन्द्राय।
वरुणाय। जुह्वत्। घृतऽप्रतीकाम्। उषसम्। न। देवीम्।
ता। नः। यामन्। उरुष्यताम्। अभीके॥ १॥

हे इन्द्रावरुणौ वां युवाभ्यां युवयोरर्थं अरक्षसं रक्षोरहितां राक्षसैरसंस्पृष्टां मनीषां स्तुतिं पुनीषे शोधयामि किंकुर्वन् इन्द्राय वरुणायच सोमं जुह्वत् इन्द्रंवरुणंचोद्दिश्य सोमं अग्नौप्रक्षिपन्। कीदृशीं मनीषाम् देवीं द्योतमानाम् उषसंन उषसमिव घृतप्रतीकांदीप्तावयवां शिष्टःपरोक्षकृतः ता ताविन्द्रावरुणौ अभीके अभिगते युद्धे यामन् यामनि युद्धार्थं गमनेसति नोस्मान् उरुष्यतां रक्षताम्॥ १॥

१. इन्द्र और वरुण, तुम लोगों के लिए अग्नि में सोम की आहुति करते हुए दीप्तमती उषा की तरह दीप्ताङ्ग और राक्षस-शून्या स्तुति का मैं शोधन करता हूं। वे युद्ध उपस्थित होने पर यात्रा करते समय हमें बचावें।

अथ द्वितीया—

स्पर्धन्तेवाउदेवहूयेअत्रयेषुध्वजेषुदिद्यवःपतन्ति।
युवंताँइन्द्रावरुणावमित्रान्हतंपराचःशर्वाविषूचः॥ २॥

स्पर्धन्ते। वै। ऊँ इति। देवऽहूये। अत्र। येषु। ध्वजेषु।
दिद्यवः। पतन्ति। युवम्। तान्। इन्द्रावरुणौ।
अमित्रान्। हतम्। पराचः। शर्वा। विषूचः॥ २॥

देवहूये देवाविजिगीषवोयोद्धारोहूयन्ते युद्धार्थं परस्परमाहूयन्ते इतिदेवहूयः सङ्ग्रामः अत्रास्मिन् देवहूये संग्रामे स्पर्धन्ते वै शत्रवोस्माभिः स्पर्धन्ते खलु उइतिपूरकः येषु संग्रामेषु

ध्वजेषु पताकासु दिद्यवः शत्रुक्षिप्तान्यायुधानि पतन्ति तान् तेषु संग्रामेषु विद्यमानान् अमित्रान् शत्रून् हे इन्द्रावरुणौ युवं युवां शर्वा शरुणा हिंसकेनायुधेन पराचः पराङ्मुखान् विषूचः विविधगतींश्च हतं हिंस्तं तथा ते शत्रवः पराङ्मुखाः इतस्ततः पलायमानाश्च भवन्ति तथा तान्बाधेथामित्यर्थः ॥ २ ॥

२. परस्पर स्पर्द्धावाले युद्ध में हमसे शत्रु स्पर्द्धा करते हैं। जिस युद्ध में ध्वजा के ऊपर आयुध गिरते हैं, उसमें, हे इन्द्र और वरुण, तुम लोग हिंसक आयुध-द्वारा पराङमुख और विविध गतियोंवाले शत्रुओं का नाश करो।

आप॑श्चि॒द्धि स्वय॑शस॒ः सद॑ःसु दे॒वीरिन्द्रं॒ वरु॑णं दे॒वता॒ धुः।
कृ॒ष्टीर॒न्यो धा॒रय॑ति॒ प्रवि॑क्ता वृ॒त्राण्य॒न्यो अ॑प्र॒तीनि॑ ह॒न्ति ॥ ३ ॥

आप॑ः। चि॒त्। हि। स्वऽय॑शसः। सद॑ःऽसु। दे॒वीः। इन्द्र॑म्। वरु॑णम्। दे॒वता॑। धुरिति॒ धुः। कृ॒ष्टीः। अ॒न्यः। धा॒रय॑ति। प्रऽवि॑क्ताः। वृ॒त्राणि॑। अ॒न्यः। अ॒प्र॒तीनि॑। ह॒न्ति॒ ॥ ३ ॥

आपश्चित् अविकाराः सोमाश्च स्वयशसः स्वायत्तयशस्काः देवीर्द्योतमानाः सन्तः सदःसु सदनेषु स्थानेषु इन्द्रं वरुणंच देवता एते द्वेदेवते धुः धारयन्ति अवस्थापयन्ति सोमेनाप्यायिताहि देवताः स्वेस्वेस्थानेवतिष्ठन्ते। यद्वा वसतीवर्याख्या आपएव सोमाभिषवद्वारा सदनेषु इन्द्रं वरुणञ्च धारयन्ति तयोरिन्द्रावरुणयोरन्यएकः प्रविक्ताः पृथक्कृताः पुण्यापुण्यविवेकेन विचित्रफलभोक्त्रीः कृष्टीः प्रजा असाङ्कर्येण धारयति अन्यइन्द्रः वृत्राणि शत्रुजातानि अप्रतीनि अन्यैरप्रतिगतानि हन्ति हिनस्ति ॥ ३ ॥

३. सारे सोम स्वायत्त यशवाले और द्योतमान होकर गृहों में इन्द्र और वरुण देवों को धारण करते हैं। उनमें से एक (वरुण) प्रजागण को अलग-अलग करके धारण करते हैं और दूसरे (इन्द्र) दूसरों-द्वारा अप्रतिहत शत्रुओं का विनाश करते हैं।

स सु॒क्रतु॑र्ऋ॒तचि॑दस्तु॒ होता॒ य आ॑दित्या॒ शव॑सा वां॒ नम॑स्वान्।
आ॒व॒वर्त॒दव॑से वां ह॒विष्मा॒नस॒दित्स सु॑वि॒ताय॒ प्रय॑स्वान् ॥ ४ ॥

सः। सु॒ऽक्रतु॑ः। ऋ॒तऽचित्। अ॒स्तु॒। होता॑। यः। आ॒दि॒त्या॒। शव॑सा। वा॒म्। नम॑स्वान्। आ॒ऽव॒वर्त॑त्। अव॑से। वा॒म्। ह॒विष्मा॑न्। अस॑त्। इत्। सः। सु॒वि॒ताय॑। प्रय॑स्वान् ॥ ४ ॥

सुक्रतुः शोभनकर्मा शोभनप्रज्ञोवा सहोता स्तोता ऋतचित् ऋतस्योदकस्य यज्ञस्यवा चेता निचेतास्तु भवतु हे आदित्याअदितेःपुत्राविन्द्रावरुणौ छान्दसः सांहितिकोह्रस्वः योनमस्वान् नमसा स्तुत्यानमस्कारेणवा युक्तःसन् शवसा बलेन युक्तौ वां युवां परिचरतीतिशेषः ससुक्रतुरित्यन्वयः। अपिच यो हविष्मान् हविर्भिर्युक्तः सन् अवसे तर्पणार्थं वां युवां आववर्तत् आवर्तयेत् सयजमानः प्रयस्वानन्नवान्भूत्वा सुविताय सुष्ठु प्राप्तव्याय फलाय असदित् भवेदेव ॥ ४ ॥

४. आदित्यो (अदिति-पुत्रो), तुम लोग बलशाली हो। जो नमस्कार के साथ तुम्हारी सेवा करता है, वही शोभन कर्मवाला होता यज्ञ-ज्ञाता हो। जो हव्यवाला व्यक्ति, तृप्ति के लिए, तुम्हें आवर्त्तित करता है, वह अन्नवान् होकर प्राप्तव्य फल को पाता है।

इयमिन्द्रंवरुणमष्टमेगीःप्रावत्तोकेतनयेतूतुजाना।
सुरत्नासोदेववीतिंगमेमयूयंपातस्वस्तिभिःसदानः ॥ ५ ॥ ७ ॥

इयम्। इन्द्रम्। वरुणम्। अष्ट। मे। गीः। प्र। आवत्।
तोके। तनये। तूतुजाना। सुऽरत्नासः। देवऽवीतिम्। गमेम।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ५ ॥ ७ ॥

व्याख्यातेयं मदीयास्तुतिरिन्द्रं वरुणं चाश्नुतम् मया प्रेर्यमाणा सा पुत्रे पौत्रेच विषये अस्मान् प्ररक्षतु वयं शोभनधनाः सन्तः उत्तरोत्तरं यज्ञं प्राप्नुयाम हे इन्द्रावरुणादयोदेवाः अस्मान्सर्वदा कल्याणैः रक्षत ॥ ५ ॥

५. मेरी यह स्तुति इन्द्र और वरुण को व्याप्त करे। मेरी की हुई स्तुति, पुत्र और पौत्र के बारे में, मेरी रक्षा करे। सुन्दर रत्नवाले होकर हम यज्ञ पावेंगे। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य षष्ठे सप्तमोवर्गः ॥ ७ ॥

धीरात्वस्येत्यष्टर्चं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वरुणदेवत्यं तथाचानुक्रान्तम्—धीराष्टौवारुणंहेति। गतोविनियोगः।

तत्र प्रथमा—

धीरात्वस्यमहिनाजनूंषिवियस्तस्तंभरोदसीचिदुर्वी।
प्रनाकंमृष्वंनुनुदेबृहंतंद्वितानक्षत्रंपप्रथंच्चभूम ॥ १ ॥

धीरां । तु । अस्य । महिना । जनूंषि । वि । यः । तस्तम्भं ।
रोदसी इति । चित् । उर्वी इति । प्र । नाकंम् । ऋष्वम् ।
नुनुदे । बृहन्तंम् । द्विता । नक्षत्रम् । पप्रथंत् । च । भूमं ॥ १ ॥

अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना तु क्षिप्रं धीरा धीराणि धैर्यवन्ति भवन्ति योवरुणः उर्वी विस्तीर्णे रोदसी चिद् द्यावापृथिव्यावपि वितस्तंभ विविधं स्तब्धे स्वकीये स्थाने स्थिते अकरोद् यश्च बृहन्तं महान्तं नाकमादित्यं नक्षत्रं च ऋष्वं दर्शनीयं द्विता द्वैधं प्रनुनुदे प्रेरयतिस्म अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथेति द्विप्रकारः। भूम भूमिं च यः पप्रथद् अप्रथयद् विस्तारितवान् तस्यास्य वरुणस्येत्यन्वयः ॥१॥

१. महिमा से वरुण का जन्म धीर वा स्थिर हुआ है। इन्होंने विशाल द्यावा-पृथिवी को स्थापित कर रक्खा है। इन्होंने आकाश और दर्शनीय नक्षत्र को दो बार प्रेरित किया है। इन्होंने भूमि को विस्तृत किया है।

उतस्वयातन्वा३संवदेतत्कदान्व१न्तर्वरुणेभुवानि ।
किंमेहव्यमहृणानोजुषेतकदामृळीकंसुमनाअभिख्यम् ॥ २ ॥

उत । स्वया । तन्वा । सम् । वदे । तत् । कदा । नु । अन्तः ।
वरुणे । भुवानि । किम् । मे । हव्यम् । अहृणानः ।
जुषेत । कदा । मृळीकम् । सुऽमनाः । अभि । ख्यम् ॥ २ ॥

वरुणं शीघ्रं दिदृक्षमाणऋषिरनयावितर्कयति उतेति विचिकित्सायाम् उत किं स्वया तन्वा स्वीयेन आत्मीयेन शरीरेण संवदे सहवदनं करोमि आहोस्विद् तत्तेन वरुणेन सहसंवदे कदानु कदा खलु वरुणे देवे अन्तर्भूतोभवानि वरुणस्य चित्ते संलग्नोभवानीत्यर्थः अपिच मे मदीयं हव्यं स्तोत्रं हविर्वा अहृणानोक्रुध्यन् वरुणः किं केन हेतुना जुषेत सेवेत सुमनाः शोभनमनस्कः सन्नहं कदा कस्मिन्काले मृळीकं सुखयितारं वरुणं अभिख्यं अभिपश्येयम् ॥२॥

२. क्या मैं अपने शरीर के साथ अथवा वरुण के साथ रहूँगा? कब वरुण के पास ठहरूँगा? क्या वरुण क्रोध-शून्य होकर मेरे हव्य की सेवा करेंगे? मैं सुन्दर मतवाला होकर कब सुखप्रद वरुण को देख पाऊँगा?

अथ तृतीया—

पृच्छेतदेनोवरुणदिदृक्षूपोएमिचिकितुषोविपृच्छम् ।
समानमिन्मेकवयश्चिदाहुरयंहतुभ्यंवरुणोहृणीते ॥ ३ ॥

पृच्छे । तत् । एनः । वरुण । दिदृक्षु । उपो इति । एमि ।
चिकितुषः । विऽपृच्छम् । समानम् । इत् । मे । कवयः ।
चित् । आहुः । अयम् । ह । तुभ्यम् । वरुणः । हृणीते ॥ ३ ॥

हे वरुण तदेनः पापं पृच्छे त्वां पृच्छामि दिदृक्षु छान्दसः सुलोपः द्रष्टुमिच्छन्नहं येन पापेन हेतुना त्वदीयैः पाशैर्बद्धोस्मि पृष्टःसन् तत्पापं कथय अहं विपृच्छं विविधं प्रष्टुं चिकितुषोविदुषोजनान् उपोएमि उपागाम् ते कवयश्चित् क्रान्तदर्शिनोजनाश्च मे मह्यं समानमित् समानमेव एकरूपमेव आहुः अकथयन् यदाहुस्तदाह हे स्तोतः तुभ्यं अयं ह अयमेव वरुणो-हृणीते क्रुध्यतीति अतः क्रोधं परित्यज्य अस्मान्पाशेभ्योमोचय ॥ ३ ॥

३. वरुण, देखने की इच्छा करके मैं उस पाप की बात तुमसे पूछूंगा। मैं विविध प्रश्नों के लिए विद्वानों के पास गया हूं। सभी कवि (क्रान्तदर्शी) मुझे एक-समान बोल चुके हैं कि "ये वरुण तुमसे क्रुद्ध हुए हैं।"

किमागआसवरुणज्येष्ठंयत्स्तोतारंजिघांससिसखायम् ।
प्रतन्मेवोचोदूळभस्वधावोवत्वानेनानमसातुरइयाम् ॥ ४ ॥

किम् । आगः । आस । वरुण । ज्येष्ठम् । यत् । स्तोतारम् ।
जिघांससि । सखायम् । प्र । तत् । मे । वोचः । दुःऽदभ ।
स्वधाऽवः । अव । त्वा । अनेनाः । नमसा । तुरः । इयाम् ॥ ४ ॥

हे वरुण ज्येष्ठमधिकं किं आगः आस कोपराधोमयाकृतोबभूव यत् येन आगसा सखायं मित्रभूतं सन्तं स्तोतारं जिघांससि हन्तुमिच्छसि । हे दूळभ दुर्दभ अन्यैर्बाधितुमशक्य स्वधावस्तेजस्विन् हे वरुण तदागः मे मह्यं प्रवोचः प्रब्रूहि एवं सति तस्यप्रायश्चित्तं कृत्वा अनेनाः अपापः सन्नहंतुरस्त्वरमाणः शीघ्रः नमसा नमस्कारेण हविषा वा त्वा त्वां अवेयां अवगच्छेयम् ॥ ४ ॥

४. वरुण, मैंने ऐसा क्या अपराध किया है कि तुम मेरे मित्र स्तोता को मारने की इच्छा करते हो? दुर्द्धर्ष तेजस्वी वरुण, मुझसे ऐसा (पाप) कहो कि मैं क्षिप्रकारी होकर, नमस्कार के साथ, प्रायश्चित्त करके तुम्हारे पास गमन करूं। अथ पञ्चमी—

अवद्रुग्धानिपित्र्यासृजानोवयावयंचकृमातनूभिः ।
अवराजन्पशुतृपंनतायुंसृजावत्संनदाम्नोवसिष्ठम् ॥ ५ ॥

अवं । द्रुग्धानि । पित्र्या । सृज । नः । अवं । या । वयम् ।
चकृम । तनूभिः । अवं । राजन् । पशुऽतृपम् । न । तायुम् ।
सृज । वत्सम् । न । दाम्नः । वसिष्ठम् ॥ ५ ॥

हे वरुण पित्र्या पितृतः प्राप्तानि नोस्मदीयानि द्रुग्धानि द्रोहान् बन्धनहेतुभूतान् अवसृज विमुञ्च अस्मत्तोविश्लेषय वयंच या यानि द्रोहजातानि तनुभिः शरीरैः चकृम कृतवन्तः स्म तानिच अवसृज । हे राजन् राजमान वरुण पशुतृपं न तायुं स्तैन्यप्रायश्चित्तं कृत्वा अवसाने घासादिभिः पशूनां तर्पयितारं स्तेनमिव दाम्नोरज्जोर्वत्सं न वत्समिव च वसिष्ठं मां बन्धकात्पापादवसृज विमुञ्च ॥ ५ ॥

५. वरुण, हमारे पितृक्रमागत द्रोह को छुड़ाओ। हमने अपने शरीर से जो कुछ किया है, उसे भी छुड़ाओ। राजा वरुण, पशु चुराकर प्रायश्चित्त-रूप पशु को घास आदि खिलाकर तृप्त करनेवाले चोर की तरह और रस्सी से बँधे बछड़े की तरह मुझे पाप से छुड़ाओ।

नसस्वोदक्षोवरुणध्रुतिःसासुरामन्युर्विभीदकोअचित्तिः ।
अस्तिज्यायान्कनीयसउपारेस्वप्नश्चनेदनृतस्यप्रयोता ॥ ६ ॥

न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः ।
विऽभीदकः । अचित्तिः । अस्ति । ज्यायान् । कनीयसः ।
उपऽअरे । स्वप्नः । चन । इत् । अनृतस्य । प्रऽयोता ॥ ६ ॥

हे वरुण सः स्वोदक्षः पुरुषस्य स्वरूपवद्बलं पापप्रवृत्तौ कारणं न भवति किं तर्हि ध्रुतिः स्थिरा उत्पत्तिसमयएव निर्मिता दैवगतिः कारणम् । ध्रुगतिस्थैर्ययोरितिधातुः। साच ध्रुतिः वक्ष्यमाणरूपासुरा प्रमादकारिणी मन्युः क्रोधश्च गुर्वादिविषयः सन् अनर्थहेतुः विभीदकः द्यूतसाधनोक्षः सच द्यूतेषु पुरुषं प्रेरयन्ननर्थहेतुर्भवति अचित्तिः अज्ञानं अविवेककारणं अतईदृशी दैवकॢप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् अपिच कनीयसःअल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तौ उपारे उपागते समीपे नियंतृत्वेनस्थितः ज्यायानधिकः ईश्वरोस्ति सएव तं पापेप्रवर्तयति तथाचाम्नातम्—एषत्येवासाधुकर्मकारयति तंयमधोनिनीषतइति[1] । एवंच सतिस्वप्नश्चनस्वप्नोपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति इदितिपूरकः स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते किमुवक्तव्यं जाग्रतिकृतैः कर्मभिः पापान्युत्पद्यन्तइति । अतोममापराधोदैवागतइति हे वरुण त्वया क्षन्तव्य इतिभावः ॥ ६ ॥

६. वह पाप अपने दोष से नहीं होता। वह भ्रम, क्रोध, द्यूत-क्रीड़ा अथवा अज्ञान आदि दैव-गति के कारण होता है। कनिष्ठ (अल्पज्ञ

1 बृहदारण्यके ।

पुरुष) को ज्येष्ठ (ईश्वर) भी कुपथ में ले जाते हैं। स्वप्न में भी दैवगति से पाप उत्पन्न हो जाते हैं।

अरंदासोनमीळ्हुषेकराण्यहंदेवायभूर्णयेनागाः।
अचेतयदचितोदेवोअर्योगृत्संरायेकवितरोजुनाति ॥ ७ ॥

अरम्। दासः। न। मीळ्हुषे। कराणि। अहम्। देवाय।
भूर्णये। अनागाः। अचेतयत्। अचितः। देवः। अर्यः।
गृत्सम्। राये। कविऽतरः। जुनाति ॥ ७ ॥

मीळ्हुषे सेक्त्रे कामानां वर्षित्रे भूर्णये जगतोभर्त्रे देवाय दानादिगुणयुक्ताय वरुणाय अनागाः तत्प्रसादात् अपापः सन्नहं अरं अलं पर्याप्तं कराणि परिचरणं करवाणि दासोन यथा भृत्यः स्वामिने सम्यक्परिचरति तद्वत् अर्यः स्वामी सच देवः अचितः अजानतोस्मान् अचेतयत् चेतयतु प्रज्ञापयतु गृत्सं स्तोतारंच कवितरः प्राज्ञतरोदेवः राये धनाय धनप्राप्त्यर्थं जुनाति जुनातु प्रेरयतु ॥ ७ ॥

७. काम-वर्षी और पोषक वरुण को, पाप-शून्य होकर, मैं, दास की तरह, यथेष्ट रूप से सेवा करूँगा। हम अज्ञानी हैं; स्वामी वरुण हमें ज्ञान दें। ज्ञानी वरुण स्तोता को धन के लिए प्रेरित करें।

एकादशिने वारुणे पशौ अयमितिपुरोडाशस्यानुवाक्या सूत्रितंच—अयंसुतुभ्यंवरुणस्वधावएवावन्दस्ववरुणंबृहन्तमिति।

अयंसुतुभ्यंवरुणस्वधावोहृदिस्तोमउपश्रितश्चिदस्तु।
शंनःक्षेमेशमुयोगेनोअस्तुयूयंपातस्वस्तिभिःसदानः ॥ ८ ॥ ८ ॥

अयम्। सु। तुभ्यम्। वरुण। स्वधाऽवः। हृदि। स्तोमः।
उपऽश्रितः। चित्। अस्तु। शम्। नः। क्षेमे। शम्। ऊँ इति।
योगे। नः। अस्तु। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ८ ॥ ८ ॥

हे स्वधावः अन्नवन्वरुण तुभ्यं त्वदर्थं क्रियमाणः अयं एतत्सूक्तात्मकः स्तोमः स्तोत्रं हृदि त्वदीये हृदये सु सुष्ठु उपश्रितः उपगतः समवेतोस्तु चिदितिपूरकः अप्राप्तस्य प्रापणं योगः प्राप्तस्य रक्षणं क्षेमः नोस्मदीये क्षेमे रक्षणे शं उपद्रवाणांशमनमस्तु योगेच नोस्मदीये प्रापणे शमु शमनमेवास्तु उपद्रवाणां हे वरुणादयोदेवाः यूयं नोस्मान्सर्वदा स्वस्तिभिरविनाशैः पात रक्षत ॥ ८ ॥

८. अन्नवान् वरुण, तुम्हारे लिए बनाया हुआ यह सूक्त-रूप स्तोत्र तुम्हारे हृदय में भली भाँति निहित हो। लाभ हमारे लिए मङ्गलमय हो; क्षेम (धन-रक्षा) हमारे लिए मङ्गलमय हो। तुम हमें सदा स्वस्ति-द्वारा पालन करो। ॥ इति पञ्चमस्य षष्ठेष्टमोवर्गः ॥ ८ ॥

रदत्पथइति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणं अनुक्रान्तञ्च—रदत्सप्तेति । गतोविनियोगः ।

तत्र प्रथमा—

रदत्पथोवरुणःसूर्यायप्रार्णांसिसमुद्रियानदीनाम् ।
सर्गोनसृष्टोअर्वतीॠतायंचकारमहीरवनीरहभ्यः ॥ १ ॥

रदत् । पथः । वरुणः । सूर्याय । प्र । अर्णांसि । समुद्रिया ।
नदीनाम् । सर्गः । न । सृष्टः । अर्वतीः । ऋतऽयन् ।
चकार । महीः । अवनीः । अहऽभ्यः ॥ १ ॥

अयं वरुणोदेवः सूर्याय सर्वस्य प्रेरकायादित्याय पथोमार्गान् अन्तरिक्षप्रदेशान् प्ररदत् प्रायच्छत् समुद्रिया समुद्रे उदधौ भवानि यद्वा समुद्रवन्त्यस्मादापइति समुद्रमन्तरिक्षं तत्र भवान्यर्णांस्युदकानि नदीनां नदीः प्रति प्रासृजत् सर्गोन सृज्यते युद्धभूमौ सादिनाप्रेर्यतइति सर्गोश्वः सयथा सृष्टः प्रेरितः अर्वतीः वडवाः प्रति शीघ्रं गच्छति तद्वत् ऋतायन् ऋतं शीघ्रं गमनमात्मनइच्छन् महीर्महतीः अवनीरात्रीः अहभ्यः अहोभ्यः सकाशात् चकार भेदेन कृतवान् अस्तंगच्छन् सूर्यएव वरुणइत्युच्यते सहि स्वगमनेन रात्रीर्जनयति ॥ १ ॥

१. इन्हीं वरुणदेव ने सूर्य के लिए अन्तरिक्ष में मार्गप्रदान किया था। वरुण ने नदियों को अन्तरिक्ष में उत्पन्न जल प्रदान किया था। अश्व जैसे घोड़ी के प्रति दौड़ता है, वैसे ही शीघ्र जाने की इच्छा करके वरुण अथवा सूर्य ने विशाल रात्रियों को दिन से अलग किया था।

अथ द्वितीया—

आत्मातेवातोरजआनवीनोत्पशुर्नभूर्णिर्यवसेससवान् ।
अन्तर्महीबृहतीरोदसीमेविश्वातेधामवरुणप्रियाणि ॥ २ ॥

आत्मा । ते । वातः । रजः । आ । नवीनोत् । पशुः । न । भूर्णिः ।
यवसे । ससऽवान् । अन्तः । मही इति । बृहती इति ।
रोदसी इति । इमे इति । विश्वा । ते । धाम । वरुण । प्रियाणि ॥२॥

हे वरुण ते त्वदीयः त्वया अन्तरिक्षे प्रेर्यमाणो वातो वायुरात्मा सर्वस्य प्राणिजातस्य प्राणरूपेण धारयिता सच रजउदकं आनवीनोत् समन्तात्प्रेरयति वातेनहि वृष्टिर्जायते भूर्णिर्जगतोभर्ता सवायुर्यवसे घासे प्रक्षिप्ते सति पशुर्न यथा पशुरन्नवान्भवति तद्वत् ससवान् स-

समित्यन्ननाम तद्वान्भवति हविर्लक्षणमन्नमपि तस्मै प्रयच्छतीत्यर्थः यद्वा सनोतेः क्सौ रूपं ततः ससवान् संभक्तवान् वातः घासे सति पशुर्यथा भारवाहीभवति तद्वत् जगतोभर्ता। हे वरुण मही महत्यौ बृहती परिवृढे इमे रोदसी द्यावापृथिव्यौ अन्तर्मध्ये द्यावापृथिव्योर्मध्ये इत्यर्थः ते तव विश्वा सर्वाणि धाम धामानि स्थानानि तेजांसि वा प्रियाणि सर्वेषां प्रीतिकराणि भवन्ति ॥ २ ॥

२. वरुण, तुम्हारा वायु जगत् की आत्मा है। वह जल को चारों ओर भेजता है। घास देने पर जैसे पशु अन्नवान् (भारवाही) होता है, वैसे ही संसार का भरण करनेवाला वायु अन्नवान् होता है। महती और बड़ी द्यावा-पृथिवी के बीच के तुम्हारे सारे स्थान लोकप्रिय हैं।

परि॒स्पशो॒वरु॑णस्य॒स्मदि॑ष्टाउ॒भेप॑श्यन्ति॒रोद॑सीसु॒मेके॑ ।
ऋ॒तावा॑नःक॒वयो॑य॒ज्ञधी॑रा॒ःप्रचे॑तसो॒यइ॒षय॑न्त॒मन्म॑ ॥ ३ ॥

परि॑ । स्पश॑ः । वरु॑णस्य । स्मत्ऽइ॑ष्टाः । उ॒भे इति॑ । प॒श्य॒न्ति॒ । रोद॑सी॒ इति॑ । सु॒मेके॒ इति॑ सु॒ऽमेके॑ । ऋ॒तऽवा॑नः । क॒वय॑ः । य॒ज्ञऽधी॑राः । प्रऽचे॑तसः । ये । इ॒षय॑न्त । मन्म॑ ॥ ३ ॥

स्पशन्ति स्पृशंतीति स्पशश्चाराः वरुणस्य देवस्य स्पशश्चाराः स्मदिष्टाः स्मदित्ये तत्प्रशस्यार्थे सहार्थेच वर्तते प्रशस्तगतयः यद्वा सहप्रेषिताः सन्तः सुमेके शोभनमेहने सुरूपेवा उभे रोदसी द्यावापृथिव्यौपरिपश्यन्ति परितईक्षन्ते उभयोर्लोकयोर्वर्तमानान् पुण्यापुण्यकारिणोजनान्पश्यन्तीत्यर्थः यस्मादेवंतस्मात् तद्भीत्या ऋतावानः कर्मवन्तः यज्ञधीराः यज्ञेषु कृतबुद्धयः प्रचेतसः प्राज्ञाः कवयः क्रान्तदर्शिनोयेजनाः मन्म मन्मानि स्तोत्राणि इषयन्त गमयन्ति वरुणं प्रापयन्ति तानपि परिपश्यन्तीत्यर्थः अतोस्मानपि स्तोतॄन् ज्ञात्वा पापान्मुञ्चत्वित्यृषिराशास्ते ॥ ३ ॥

३. वरुण के सारे अनुचरों की गति प्रशंसनीय है। वे सुन्दर रूपोंवाली द्यावा-पृथिवी को भली भाँति देखते हैं। वे कर्मी, यज्ञ-धीर और प्राज्ञ कवियों के स्तोत्रों को भी चारों ओर से देखते हैं।

अथ चतुर्थी—

उ॒वाच॑मे॒वरु॑णो॒मेधि॑राय॒त्रिःस॒प्तनामाघ्न्या॑बिभर्ति ।
वि॒द्वान्प॒दस्य॒गुह्या॒नवो॑चद्यु॒गाय॒विप्र॒उप॑राय॒शिक्ष॑न् ॥ ४ ॥

उ॒वाच॑ । मे॒ । वरु॑णः । मेधि॑राय । त्रिः । स॒प्त । नाम॑ । अघ्न्या॑ । बि॒भ॒र्ति॒ । वि॒द्वान् । प॒दस्य॑ । गुह्या॑ । न । वो॒च॒त् । यु॒गाय॑ । विप्र॑ः । उप॑राय । शिक्ष॑न् ॥ ४ ॥

मेधिराय मेधाविने मे मह्यं वरुण उवाच उक्तवान् किमुक्तवान् तदाह त्रिः सप्त एकविंशतिसंख्याकानि नाम नामानि अघ्न्या गौर्बिभर्ति धारयतीति वागत्रगौरुच्यते साच उरसि कंण्ठे शिरसिच बद्धानि गायत्र्यादीनि सप्तछन्दसां नामानि बिभर्ति। यद्वा वेदात्मिकावाक् एकविंशतिसंस्थानां यज्ञानां नामानि बिभर्ति धारयति। अपरआह गौः पृथिवी तस्या श्च गौःग्मा ज्मेति पठितान्येकविंशतिनामानीति। अपिच विद्वान् जानन् विप्रोमेधावी सवरुणः युगाय युक्ताय उपराय उपसमीपे रममाणाय अन्तेवासिने मह्यं शिक्षन् उपदिशन् पदस्योत्कृष्टस्य स्थानस्य ब्रह्मलोकलक्षणस्य संबन्धीनि गुह्या गुह्यानि रहस्यानि उपदेशगम्यानि नशब्दश्चार्थे नामानि च वोचत् उक्तवान् अतोहं वरुणस्यशिष्योस्मि तस्मात्सवरुणोस्मात् पापात् मोचयत्वित्यर्थः॥४॥

४. मैं मेधावी ऋत्विक् हूँ। वरुण ने मुझसे कहा था कि पृथिवी अथवा वाक् के इक्कीस (उर, कण्ठ और शिर में गायत्र्यादि सात-सात छन्दोंवाले) नाम हैं। विद्वान् और मेधावी वरुण ने योग्य अन्तेवासी (छात्र) को उपदेश देकर, उत्तम स्थान में, इन सब गोपनीय बातों को भी बताया है।

ति॒स्रो द्यावो॒ निहि॑ता अ॒न्तर॑स्मिन्ति॒स्रो भूमी॒रुप॑राः॒ षड्वि॑धानाः।
गृत्सो॒ राजा॒ वरु॑णश्चक्र ए॒तं दि॒वि प्रे॒ङ्खं हि॑र॒ण्ययं॑ शु॒भे कम्॥ ५॥

ति॒स्रः। द्याव॑ः। निऽहि॑ताः। अ॒न्तः। अ॒स्मिन्। ति॒स्रः। भूमीः॑। उप॑राः। षट्ऽवि॑धानाः। गृत्सः॑। राजा॑। वरु॑णः। च॒क्रे॒। ए॒तम्। दि॒वि। प्र॒ऽई॒ङ्खम्। हि॒र॒ण्यय॑म्। शु॒भे। कम्॥ ५॥

तिस्रःत्रिप्रकाराः उत्तममध्यमाधमभावेन त्रिविधाः द्यावोद्युलोकाः अस्मिन्वरुणे अन्तर्मध्ये निहिताः तिस्रः पूर्ववत्त्रिविधाः भूमीः भूम्यश्च षड्विधानाः विधानं विधा वसंताद्यृतुभेदेन षड्विधाः प्रकाराः यासु तादृश्यः उपराः अस्मिन्नेव वरुणे उप्ताः अन्तर्भूताः लोकानां त्रित्वंच त्रयोवाइमे-त्रिवृतोलोकाइत्यादिनाब्राह्मणेनावगम्यते। तिस्रोभूमीर्धारयन्त्रीतिनिगमश्चभवति। इमौ लोकौ आवृत्य वरुणस्तिष्ठतीत्यर्थः अपिच गृत्सःस्तुत्यः राजा ईश्वरः सवरुणः दिव्यन्तरिक्षे हिरण्ययं हिरण्मयं सुवर्णमयं हितरमणीयं वा प्रेंखं दोलावत् दिग्द्वयसंस्पर्शिनं एतं सूर्यं शुभेकं दीप्त्यर्थं चक्रे कृतवान् दिविसूर्यमदधात्सोममद्राविति हिश्रूयते॥ ५॥

५. इन वरुण के भीतर तीन (उत्तम, मध्यम और अधम) प्रकार के द्युलोक हैं। इनमें तीन (उत्तम, मध्यम और अधम) प्रकार की भूमियाँ और छः (छः ऋतुएँ) प्रकार की दशायें भी हैं। वरुण राजा ने स्वर्ण के झूले की तरह सूर्य को, दीप्ति के लिए निर्माण किया है।

वारुणे पशौ अवसिन्धुमितिवपायाअनुवाक्या सूत्रितश्च—अवसिन्धुंवरुणोद्यौरिवस्थादयंसुतुभ्यंवरुणस्वधावइति।

१ ऐ० ब्रा० २. १७.।     २ ऋ० सं० २. ७. ७.।     ३ ऋ० सं० ४. ४. ३०.।

सैषा षष्ठी—

अव॒सिन्धुं॒वरु॑णो॒द्यौरि॑वस्थाद्द्र॒प्सोनश्वे॒तोमृ॒गस्तुवि॑ष्मान् ।
ग॒म्भी॒रशं॑सो॒रज॑सोवि॒मानः॑सुपा॒रक्ष॑त्रः॒स॒तोअ॒स्यराजा॑ ॥ ६ ॥

अव॑ । सिन्धु॑म् । वरु॑णः । द्यौःऽइ॑व । स्था॒त् । द्र॒प्सः । न ।
श्वे॒तः । मृ॒गः । तुवि॑ष्मान् । गं॒भी॒रऽशं॑सः । रज॑सः । वि॒ऽमान॑ः ।
सु॒पा॒रऽक्ष॑त्रः । स॒तः । अ॒स्य । राजा॑ ॥ ६ ॥

द्यौरिव सूर्यइव दीप्तोवरुणः सिन्धुं समुद्रं अवस्थाव वेलायामवस्थापयति यथावेलां नातिक्रामति तथा करोतीत्यर्थः। कीदृशोवरुणः द्रप्सोन द्रवणशीलउदकबिन्दुरिव श्वेतः शुभ्रवर्णः मृगः लुप्तोपममेतत् गौरमृगइव तुविष्मान् बलवान्प्रवृद्धोवा गंभीरशंसः गंभीरोमहान् शंसः स्तोत्रं यस्य सतथोक्तः रजसः उदकस्य विमानोनिर्माता सुपारक्षत्रः सुष्ठु दुःखाव् पारकं क्षत्रं बलं धनं वा यस्य तादृशोवरुणः सतोविद्यमानस्यास्य जगतोराजा ईश्वरोभवति ॥ ६ ॥

६. सूर्य की तरह दीप्त वरुण ने समुद्र को स्थापित किया है। वरुण जल-बिन्दु की तरह शुभ्र, गौर मृग की तरह बली, गम्भीर स्तोत्र वाले, जल के रचयिता, दुःख से पार पानेवाले बल से युक्त और संसार के समस्त विद्यमान पदार्थों के राजा हैं।

योमृ॒ळया॑तिच॒क्रुषे॑चि॒दागो॑व॒यंस्या॑म॒वरु॑णे॒अना॑गाः ।
अनु॑व्र॒तान्यदि॑तेर्ऋ॒धन्तो॑यू॒यंपा॑तस्व॒स्तिभिः॒सदा॑नः ॥ ७ ॥ ९ ॥

यः । मृ॒ळया॑ति । च॒क्रुषे॑ । चि॒त् । आगः॑ । व॒यम् । स्या॒म॒ ।
वरु॑णे । अना॑गाः । अनु॑ । व्र॒तानि॑ । अदि॑तेः । ऋ॒धन्तः॑ ।
यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ७ ॥ ९ ॥

आगोपराधं चक्रुषे चित् कृतवतेपि स्तोत्रे योवरुणः मृळयाति उपदयांकरोति तस्मिन्वरुणे अनागाः अनागसः अनपराधाः सन्तोवयं स्याम वर्तमानाभवेम। किंकुर्वन्तः अदितेरदीनस्य वरुणस्य सम्बन्धीनि व्रतानि कर्माणि अनु आनुपूर्व्येण ऋधन्तः समर्धयन्तः हे वरुणादयोदेवाः यूयं अस्मान् सर्वदा कल्याणैः पालयत ॥ ७ ॥

७. अपराध करने पर भी वरुण दया करते हैं। अदीन (धनी) वरुण के कर्मों को हम यथाक्रम समृद्ध करके उनके पास अपराध-शून्य हों। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य षष्ठे नवमोवर्गः ॥ ९ ॥

प्रशुन्ध्युवमिति सप्तर्चमष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणं प्रशुन्ध्युवमित्यनुक्रान्तम्। गतोविनियोगः।

तत्र प्रथमा—

प्रशुन्ध्युवंवरुणायप्रेष्ठांमतिंवसिष्ठमीळ्हुषेभरस्व।
यईमर्वाञ्चंकरतेयजंत्रंसहस्रांमघंवृषणंबृहन्तम्॥ १॥

प्र। शुन्ध्युवम्। वरुणाय। प्रेष्ठाम्। मतिम्। वसिष्ठ।
मीळ्हुषे। भरस्व। यः। ईम्। अर्वाञ्चम्। करते। यजत्रम्।
सहस्रऽमघम्। वृषणम्। बृहन्तम्॥ १॥

ऋषिरात्मानमेव प्रत्यक्षीकृत्य स्तुतौ नियुंक्ते हे वसिष्ठ त्वं मीळ्हुषे सेक्त्रे वरुणाय शुन्ध्युवं शोधयित्रीं यद्वा स्वतएव शुद्धां प्रेष्ठां प्रियतमां मतिं मननीयामीदृशीं स्तुतिं प्रभरस्व प्रहर प्रापय। योवरुणः ईमेनं सूर्यं अर्वाञ्चं अस्मदभिमुखं करते अन्तरिक्षे करोति तस्मै वरुणायेत्यन्वयः कीदृशं सूर्यं यजत्रं यष्टव्यं सहस्रामघं बहुधनं वृषणं कामानां वर्षकं बृहन्तं महान्तम्॥ १॥

१. वसिष्ठ, तुम कामवर्षक वरुण को उद्देश्य करके स्वयं शुद्ध और प्रियतम स्तुति करो। वरुण यजनीय, बहु-धनवान् और अभीष्ट-वर्षी और विशाल हैं। वरुण सूर्य को हमारे अभिमुख करते हैं।

अधान्वस्यसंदृशंजगन्वानग्नेरनीकंवरुणस्यमंसि।
स्व१र्यदश्मन्नधिपाउअन्धोभिमावपुर्दृशयेनिनीयात्॥ २॥

अध। नु। अस्य। सम्ऽदृशम्। जगन्वान्। अग्नेः।
अनीकम्। वरुणस्य। मंसि। स्वः। यत्। अश्मन्। अधिऽपाः।
ऊँ इति। अन्धः। अभि। मा। वपुः। दृशये। निनीयात्॥ २॥

अध अधुना अस्य वरुणस्य संदृशं सन्दर्शनं नु क्षिप्रं जगन्वान् गतवानहं अग्नेरनीकं ज्वालासंघं मंसि स्तवानि तं वरुणं यष्टुमितिशेषः यद्यदा वरुणः स्वः सुखकरं अश्मन् अश्मनि अभिषवार्थे पाषाणे अवस्थितमभिषुतमित्यर्थः ईदृशं अन्धः सोमलक्षणमन्नं अधिपाः अधिकं पाता भवेद् छान्दसः षष्ठ्यभावः उइतिपूरकः तदानीं मा मां वपुः शरीरं स्वकीयं वपुरितिरूपनाम प्रशस्तं रूपं वा दृशये दर्शनार्थं अभिनिनीयादभिप्रापयेव॥ २॥

२. इस समय में शीघ्र वरुण का सुन्दर दर्शन करके अग्नि की ज्वालाओं की स्तुति करता हूँ। जब वरुण सुखकर पाषाण में अवस्थित इस सोम को अधिक मात्रा में पीते हैं, उस समय दर्शन के लिए मुझे प्रशस्त रूप (शरीर) देते हैं।

आयद्रुहाववरुणश्चनावंप्रयत्समुद्रमीरयावमध्यंम् ।
अधियदपांस्नुभिश्चरावप्रप्रेंखईंखयावहैशुभेकम् ॥ ३ ॥

आ । यत् । रुहावं । वरुणः । च । नावंम् । प्र । यत् ।
समुद्रम् । ईरयाव । मध्यंम् । अधि । यत् । अपाम् ।
स्नुऽभिः । चराव । प्र । प्रऽईंखे । ईंखयावहै । शुभे । कम् ॥ ३ ॥

यद्यदा वरुणे प्रसन्ने सति अहं वरुणश्चोभौ नावं द्रुममयीं तरणसाधनभूतां आरुहाव उभावारूढावभूविव तां च नावं यद्यदा समुद्रं मध्यं समुद्रस्य मध्यं प्रति प्रेरयाव प्रकर्षेण गमयाव यद्यदा च अपामुदकानां अधि उपरि स्नुभिः गन्त्रीभिरन्याभिरपि नौभिः चराव वर्तावहै तदानीं शुभे शोभार्थं प्रेंखे नौरूपायां दोलायामेव प्रेंखयावहै निम्नोन्नतैस्तरङ्गैरितश्चेतश्च प्रविचलन्तौ संक्रीडावहै कमितिपूरकः यद्वा क्रियाविशेषणं कं सुखं यथाभवति तथेत्यर्थः ॥ ३ ॥

३. जिस समय में और वरुण, दोनों नाव पर चढ़े थे, जिस समय समुद्र के बीच में नाव को, भली भाँति, प्रेरित किया था, जिस समय जल के ऊपर गति-परायण नाव पर हम थे, उस समय शोभा के लिए नौका-रूपी झूले पर हमने सुख से क्रीड़ा की थी।

वसिष्ठंहवरुणोनाव्याधादृषिंचकारस्वपामहोंभिः ।
स्तोतारंविप्रःसुदिनत्वेअह्नांयान्नुद्यावस्ततनन्यादुषासः ॥ ४ ॥

वसिष्ठम् । ह । वरुणः । नावि । आ । अधात् । ऋषिम् ।
चकार । सुऽअपाः । महःऽभिः । स्तोतारम् । विप्रः । सुदिनऽत्वे ।
अह्नाम् । यात् । नु । द्यावः । ततनन् । यात् । उषसः ॥ ४ ॥

एवं वसिष्ठेनात्मनोक्ते यद्वरुणेन कृतं तद्दर्शयति वसिष्ठं ह वसिष्ठं खलु वरुणोनावि स्वकीयायां आ अधात् आरोहयत् तथा तमृषिं अवोभिः रक्षणैः स्वपां स्वपसं शोभनकर्माणं चकार वरुणः कृतवान् अपिच विप्रोमेधावी वरुणः अह्नां दिवसानां मध्ये सुदिनत्वे यत्फलत्वेन शोभनदि-नत्वं तत्र स्तोतारं अस्थापयदितिशेषः। किंकुर्वन् यात् यातोगच्छतोद्यावोदिवसान् यात् यातीः उषासः उषसाउपलक्षितारात्रीश्च नु क्षिप्रं ततनन् सूर्यात्मना विस्तारयन् ॥ ४ ॥

४. मेधावी वरुण ने (सूर्यात्म-रूप से) दिन और रात्रि का विस्तार करके दिनों के बीच सुन्दर दिन में वसिष्ठ को (मुझे) नौका पर चढ़ाया था। वरुण ने रक्षणों के द्वारा वसिष्ठ को सुकर्मा किया था।

अथ पंचमी—

क्व१॒त्यानि॒नौस॒ख्याबभूवुःसचा॑वहे॒यद॑वृ॒कंपु॒राचि॑त्।
बृ॒हन्तं॒मानं॑वरुणस्वधावःस॒हस्र॑द्वारंजगमागृ॒हन्ते॑ ॥ ५ ॥

क्वं॑। त्यानि॑। नौ। स॒ख्या। ब॒भू॒वुः। सचा॑वहे॒ इति॑। यत्।
अ॒वृ॒कम्। पु॒रा। चि॒त्। बृ॒हन्त॑म्। मान॑म्। व॒रु॒ण। स्व॒धा॒ऽव॒ः।
स॒हस्र॑ऽद्वारम्। ज॒ग॒म॒। गृ॒हम्। ते॒ ॥ ५ ॥

हे वरुण त्यानि तानि पुरातनानि नौ आवयोः सख्या सख्यानि सखित्वानि क्व कुत्र बभूवुः पुरा पूर्वस्मिन् काले अवृकं अहिंस्यं आत्यन्तिकं यत्सख्यमस्ति तत्सचावहे आवां सेवावहे चिदिति पूरकः अपिच हे स्वधावः अन्नवन्वरुण ते त्वदीयं गृहं जगम गच्छानि लोडर्थे लिट् कीदृशं गृहं बृहन्तं महान्तं मानं मान्त्यस्मिन्सर्वाणि भूतानीति मानं सर्वस्य भूतजातस्य परिच्छेदकमित्यर्थः सहस्रद्वारं बहुद्वारम् ॥ ५ ॥

५. वरुण, हम लोगों की पुरानी मैत्री कहाँ हुई थी? पूर्व समय में हम लोगों में जो हिंसा-शून्य मित्रता हुई थी, हम लोग उसी को निबाहते हैं। अन्नवान् वरुण, तुम्हारे महान्, प्राणियों के विभेदक और हजार दरवाजोंवाले गृह में मैं जाऊँगा।

अथ षष्ठी—

यआ॒पिर्नित्यो॑वरुणप्रि॒यःसन्त्वामागां॑सिकृ॒णव॒त्सखा॑ते।
मात॒एन॑स्वन्तोयक्षिन्भुजेमय॒न्धिष्मा॒विप्र॑स्तुव॒तेवरू॑थम् ॥ ६ ॥

यः। आ॒पिः। नित्यः॑। व॒रु॒ण। प्रि॒यः। सन्। त्वाम्। आगां॑सि।
कृ॒णव॑त्। सखा॑। ते॒। मा। ते॒। एन॑स्वन्तः। य॒क्षि॒न्।
भु॒जे॒म॒। य॒न्धि। स्म॒। विप्रः॑। स्तु॒व॒ते। वरू॑थम् ॥ ६ ॥

हे वरुण योवसिष्ठोनित्योध्रुवः आपिर्बन्धुः औरसः पुत्रइत्यर्थः यः पूर्वं प्रियःसन् त्वां प्रति आगांसि अपराधान्कृणवत् अकरोत् सइदानीं ते तव सखा समानख्यानः प्रियोस्तु। हे यक्षिन् यजनार्ह वरुण ते तव स्वभूतावयं एनस्वन्तः एनसा पापेन युक्ताः सन्तोमाभुजेम माभुंज्महि त्वत्प्रसादात् पापरहिताएव सन्तोभोगान् भुनजामहै विप्रोमेधावी त्वंच स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वरूथं अनिष्टवारकं वरणीयं वा गृहं यन्धि प्रयच्छ स्मेतिपूरकः ॥ ६ ॥

६. वरुण, जो वसिष्ठ नित्य बन्धु (औरस पुत्र) हैं, जिन्होंने पूर्व समय में प्रिय होकर तुम्हारे प्रति अपराध किया था, वह इस समय तुम्हारे सखा हों। यजनीय वरुण, हम तुम्हारे आत्मीय हैं; इसलिए पाप-युक्त होकर हम भोग न भोगने पावें। तुम मेधावी हो; स्तोताओं को वरणीय गृह प्रदान करो।

ध्रुवासुत्वासुक्षितिषुक्षियन्तोव्य१स्मत्पाशंवरुणोमुमोचत्।
अवोवन्वानाअदितेरुपस्थाद्यूयंपातस्वस्तिभिःसदानः ॥७॥१०॥

ध्रुवासु। त्वा। आसु। क्षितिषु। क्षियन्तः। वि। अस्मत्।
पाशम्। वरुणः। मुमोचत्। अवः। वन्वानाः। अदितेः।
उपऽस्थात्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ७ ॥ १० ॥

ध्रुवासु नित्यासु आसु दृश्यमानासु क्षितिषु भूमिषु क्षियन्तः निवसन्तोवयं हे वरुण त्वा त्वां स्तुमइतिशेषः सच वरुणः अस्मद् अस्मत्तः पाशं बन्धकं पापं विमुमोचद् मोचयेद् तथा अदितेः अखण्डनीयायाः पृथिव्याः उपस्थादुपस्थानाद् अवोरक्षणं वरुणेन दत्तं वन्वानाः संभजमानावयं स्याम अन्यद्गतम् ॥ अत्र ऋग्विधानम्—ध्रुवासुत्वासुक्षितिषु जपन्बन्धात्प्रमुच्यते। तिष्ठन्रात्रौजपेदेतां पिशाचस्तंनगच्छतीति ॥ ७ ॥

७. इन सब नित्य भूमियों में निवास करते हुए हम तुम्हारा स्तोत्र करते हैं। वरुण हमारा बन्धन छुड़ावें। हम अखण्डनीय पृथिवी के पास से वरुण की रक्षा का भोग करें। हमें तुम सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य षष्ठे दशमोवर्गः ॥ १० ॥

मोषुवरुणेति पञ्चर्चमेकविंशं सूक्तं वसिष्ठस्यार्षंवारुणंअन्त्याजगती शिष्टाश्चतस्रोगायत्र्यः तथाचानुक्रान्तम् मोषुपञ्चगायत्रं जगत्यन्तमिति। गतोविनियोगः।

मोषुवरुणमृन्मयंगृहंराजन्नहंगमम्। मृळासुक्षत्रमृळय ॥ १ ॥

मो इति। सु। वरुण। मृत्ऽमयम्। गृहम्। राजन्। अहम्।
गमम्। मृळ। सुऽक्षत्र। मृळय ॥ १ ॥

हे राजन्नीश्वर वरुण त्वदीयं मृन्मयं मृदादिनिर्मितं गृहं मो माउ मैव अहं गमं गतोस्मि अपितु सुशोभनं सुवर्णमयमेव त्वदीयं गृहं प्राप्तवानि सत्वं मां मृळ सुखय हे सुक्षत्र शोभनधन वरुण मृळय उपदयाञ्च कुरु ॥ १ ॥

१. राजा वरुण, तुम्हारे मिट्टी के मकान को मैं न पाऊँ (सोने का घर पाऊँ)। शोभन-धन वरुण, मुझे सुखी करो, दया करो।

यदेमिप्रस्फुरन्निवदृतिर्नध्मातोअद्रिवः। मृळासुक्षत्रमृळय ॥२॥

यत् । एमि । प्रस्फुरन्ऽइव । दृतिः । न । ध्मातः ।
अद्रिऽवः । मृळ । सुऽक्षत्र । मृळय ॥ २ ॥

हे अद्रिवः आयुधवन्वरुण यद्यदा प्रस्फुरन्निव शैत्येन प्रविचलन्निव त्वद्भयाद्वेपमानः दृतिर्न दृतिरिव ध्मातो वायुना पूर्णः सन् त्वया बद्धोहं एमि गच्छामि तदानीं मृळ सुखय हे सुक्षत्र सुधन मृळय दयां कुरु ॥ २ ॥

२. आयुधवाले वरुण, मैं काँपता हुआ, वायु-चालित बादल की तरह, जाता हूँ। शोभन-धन वरुण, मुझे सुखी करो, दया करो।

क्रत्वःसमहदीनताप्रतीपंजगमाशुचे । मृळासुक्षत्रमृळय ॥ ३ ॥

क्रत्वः । समह । दीनता । प्रतिऽईपम् । जगम ।
शुचे । मृळ । सुऽक्षत्र । मृळय ॥ ३ ॥

हे समह सधन शुचे स्वभावतोनिर्मल वरुण दीनता दीनतया अशक्तत्वेन क्रत्वः कर्मणः कर्तव्यत्वेन विहितस्य श्रौतस्मार्तादिलक्षणस्य प्रतीपं प्रतिकूलं अननुष्ठानं जगम प्राप्तवानस्मि अतएव त्वया बद्धः तादृशं मां मृळ सुखय अन्यद्गतम् ॥३॥

३. धनी और निर्मल वरुण, दीनता वा असमर्थता के कारण श्रौत, स्मार्त्त आदि अनुष्ठानों की मैंने प्रतिकूलता की है। सुधन वरुण, मुझे सुखी करो, दया करो।

अपांमध्येतस्थिवांसंतृष्णाविदज्जरितारम् । मृळासुक्षत्रमृळय ॥ ४ ॥

अपाम् । मध्ये । तस्थिऽवांसम् । तृष्णा । अविदत् ।
जरितारम् । मृळ । सुऽक्षत्र । मृळय ॥ ४ ॥

अपां समुद्राणामुदकानां मध्ये तस्थिवांसं स्थितवन्तमपि जरितारं तव स्तोतारं मां तृष्णा पिपासा अविदत् आप्तवती लवणोत्कटस्य समुद्रजलस्य पानानर्हत्वात् अतस्तादृशं मां मृळ सुखय अन्यद्गतम् ॥ ४ ॥

४. समुद्र जल में रहकर भी मुझ स्तोता को पिपासा लग गई (क्योंकि समुद्र का जल पीने योग्य नहीं होता)। सुधन वरुण, मुझे सुखी करो, दया करो।

देवसुवां हविःषु वारुणस्य हविषः यत्किञ्चेदमितियाज्या सूत्रितञ्च—यत्किञ्चेदंवरुणदैव्येजनउपतेस्तोमान्पशुपाइवाकरमिति द्वे इति ।

यत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्या३श्चरामसि ।
अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः॥५॥११॥

यत् । किम् । च । इदम् । वरुण । दैव्ये । जने । अभिऽद्रोहम् ।
मनुष्याः । चरामसि । अचित्ती । यत् । तव । धर्म । युयोपिम ।
मा । नः । तस्मात् । एनसः । देव । रिरिषः ॥ ५ ॥ ११ ॥

हे वरुण दैव्ये देवसमूहरूपे जने यदिदं किञ्चनाभिद्रोहम् अपकारजातं मनुष्यावयं चरामसि चरामः निर्वर्तयामः तथा अचित्ती अचित्त्या अज्ञानेन तवत्वदीयं यद्धर्मकारकं कर्म युयोपिम वयं विमोहितवन्तः हे देव तस्मादेनसः पापाद् नोस्मान् मारीरिषः माहिंसीः ॥ ५ ॥

५. वरुण, हम मनुष्य हैं; इसलिए देवों का जो हमने अपकार किया है और अज्ञानता के कारण तुम्हारे जिस कार्य में हमने असावधानी की है, उन सब पापों (अपराधों) के कारण हमें नहीं मारना।

॥ इति पञ्चमस्य षष्ठे एकादशोवर्गः ॥ ११ ॥

॥ इतिसप्तमे मण्डले पञ्चमोनुवाकः ॥ ५ ॥

षष्ठेनुवाके पञ्चदश सूक्तानि तत्र प्रवीरयेति सप्तर्चं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम् यासुपञ्चम्याद्यासु द्विवचनमस्ति ताऐन्द्रवायव्यः तथाचानुक्रान्तम्—प्रवीरयासप्त वायव्यं त्वैन्द्रश्च या द्विवदुक्ताइति । तृतीयेछन्दोमे प्रउगशस्त्रे प्रवीरयेतिवायव्यस्तृचः सूत्रितश्च प्रवीरयाशुचयोदद्रिरेवा तेसत्येनमनसादीध्यानाइति ।

प्रवीरयाशुचयोदद्रिरेवामध्वर्युभिर्मधुमन्तःसुतासः ।
वहवायोनियुतोयाह्यच्छापिबासुतस्यान्धसोमदाय ॥ १ ॥

प्र । वीरऽया । शुचयः । दद्रिरे । वाम् । अध्वर्युऽभिः ।
मधुऽमन्तः । सुतासः । वह । वायो इति । निऽयुतः । याहि ।
अच्छ । पिब । सुतस्य । अन्धसः । मदाय ॥ १ ॥

हे वायो वीरया वीराय विविधमीरयित्रे सुपांसुलुगिति चतुर्थ्यायाजादेशः वां ते व्यत्ययेन द्विवचनं तुभ्यं शुचयः शुद्धाः मधुमन्तः माधुर्योपेताः सुतासः अभिषुताः सोमाः ऐतरेयिभिः नवमेहनि प्रउगे अध्वर्युभिः अध्वरस्यनेतृभिः ऋत्विग्भिः प्रदद्रिरे प्रदीयन्ते दददानेइत्यस्यैतद्रूपम् यतएवमतः कारणात् हे वायो नियुतोवडवाः वह रथं प्रापय तेन रथेन अच्छ याहि अस्मद्यज्ञमभिगच्छ अभिगत्यच सुतस्याभिषुतस्य अन्धसः अन्नस्य सोमलक्षणस्य स्वकीयं भागं पिब किमर्थम् मदाय मदोत्पत्त्यर्थं ॥ १ ॥

१. वायु, तुम वीर हो। शुद्ध, मधुरता-पूर्ण और अभिषुत सोम को अध्वर्युगण तुम्हारे उद्देश से प्रेरित करते हैं। तुम नियुद्गण (अश्वों) को रथ में जोतो, सामने आओ और आनन्द के लिए अभिषुत सोमरस के भाग का भक्षण करो।

शुनासीरीयेपर्वणि वायव्यस्य हविषईशानायेति पुरोनुवाक्या सूत्रितश्च—सत्वंनोदेवमनसे शानायप्रहुतिंयस्तआनडिति । वायव्येपशावेवैषपशुपुरोडाशस्ययाज्या सूत्रितंच—ईशानाय प्रहुतिं यस्तआनट् प्रवोवायुंरथयुजं कृणुध्वमिति ।

सैषात्र द्वितीया—

ईशानायप्रहुंतिंयस्तआनट्शुचिंसोमंशुचिपास्तुभ्यंवायो ।
कृणोषितंमर्त्येषुप्रशस्तंजातोजातोजायतेवाज्यंस्य ॥ २ ॥

ईशानायं । प्रऽहुंतिम् । यः । ते । आनट् । शुचिम् । सोमंम् ।
शुचिऽपाः । तुभ्यंम् । वायो इतिं । कृणोषिं । तम् । मर्त्येषु ।
प्रऽशस्तम् । जातःऽजांतः । जायते । वाजी । अस्य ॥ २ ॥

हे वायो ईशानाय ईश्वराय ते तुभ्यं त्वदर्थं प्रहुतिं प्रकृष्टामाहुतिं चरुपुरोडाशादिसाध्यां योयजमान आनट् व्यामोत् दद्यादित्यर्थः तथा हे शुचिपाः शुद्धस्य सोमस्य पातर्वायो तुभ्यं शुचिं शुद्धं सोमं च यः प्रयच्छति मर्त्येषु मनुष्येषु मध्ये तं यजमानं प्रशस्तं मुख्यं कृणोषि करोषि सच जातोजातः सर्वत्र प्रादुर्भूतः प्रख्यातः सन् वाजी अस्य प्राप्तस्य धनस्य प्राप्तये जायते अवकल्पते सर्वं धनं लभते इत्यर्थः ॥ २ ॥

२. वायु, तुम ही ईश्वर हो। जो यजमान तुम्हें उत्तम आहुति देता है और सोमपायी वरुण, जो तुम्हें पवित्र सोम प्रदान करता है, उसे मनुष्यों में तुम प्रधान बनाओ। वह सर्वत्र प्रख्यात होकर प्राप्तव्य धन प्राप्त करता है।

नियुत्वद्गुणविशिष्टवायुदेवताके पशौ रायेनुयमिति पुरोडाशस्य याज्या सूत्रितश्च—रायेनुयंजज्ञतूरोदसीमे प्रवायुमच्छाबृहतीमनीषेति ।

सैषात्र तृतीया—

रायेनुयंजज्ञतूरोदंसीमेरायेदेवीधिषणांधातिदेवम् ।
अधंवायुंनियुतंःसश्चतस्वाउतश्वेतंवसुंधितिंनिरेके ॥ ३ ॥

राये । नु । यम् । जज्ञतुः । रोदंसी इतिं । इमे इतिं । राये । देवी ।
धिषणां । धाति । देवम् । अधं । वायुम् । निऽयुतंः । सश्चत ।
स्वाः । उत । श्वेतम् । वसुंऽधितिम् । निरेके ॥ ३ ॥

इमे रोदसी द्यावापृथिव्यौ यं वायुं राये धनार्थं नु क्षिप्रं जज्ञतुर्जनयामासतुः तं देवं दानादिगुणयुक्तं वायुं देवी द्योतमाना धिषणा स्तुतिः राये धनार्थं धाति धारयति धनं यथा लभ्यते तथा प्रेरयतीत्यर्थः अध अधुना एवं स्तुतौ प्रवृत्तायां स्वाः स्वकीया नियुतोवडवाः रथवाहाः वायुं सश्चत सचन्ते सेवन्ते उतापिच श्वेतं शुभ्रवर्णं निरेके नितरां रेको रिक्तता निरेकः दारिद्र्यमित्यर्थः तस्मिन् सति वसुधितिं वसूनां धातारं प्रदातारं तं वायुं नियुतोस्मद्यज्ञं प्रापयन्तीतिशेषः ॥ ३ ॥

३ इन द्यावा-पृथिवी ने जिन वायु को, धन के लिए, उत्पन्न किया है और प्रकाशमाना स्तुति, धन के लिए, जिन वायुदेव को धारण करती है, इस समय वह वायु, अपने अश्वों-द्वारा, सेवित होते हैं।

द्वितीये छन्दोमे प्रउगशस्त्रे वायव्यतृचस्य उच्छन्नुषसइति तृतीया सूत्रितश्च—उच्छन्नुषसः सुदिनाअरिप्राइत्येकपातिन्यइति ।

उच्छन्नुषसः सुदिनाअरिप्राउरुज्योतिर्विविदुर्दीध्यानाः ।
गव्यंचिदूर्वमुशिजोविवव्रुस्तेषामनुप्रदिवःसस्रुरापः ॥ ४ ॥

उच्छन् । उषसः । सुऽदिनाः । अरिऽप्राः । उरु । ज्योतिः ।
विविदुः । दीध्यानाः । गव्यम् । चित् । ऊर्वम् । उशिजः ।
वि । वव्रुः । तेषाम् । अनु । प्रऽदिवः । सस्रुः । आपः ॥ ४ ॥

येङ्गिरसोवायुमस्तोषत तेषां अरिप्राः पापरहिता उषसः सुदिनाः शोभनदिनस्य हेतुभूताः सत्यः उच्छन् औच्छन् व्यवासयन् तेच दीध्यानाः दीप्यमानाः सन्तः उरु विस्तीर्णं ज्योतिः सूर्याख्यं विविदुः वायोः प्रसादादलभन्त । अपिच उशिजः कामयमानाः तेअंगिरसः गव्यं चित् गोसङ्घरूपमपि ऊर्वं धनं पणिभिरपहृतं विवव्रुः व्यवृण्वन् अलभन्त । तथा तेषामङ्गिरसामर्थाय प्रदिवः पुराण्यः आपः अनुसस्रुः अन्वसरन् अन्वगच्छन् हिताः हिताचरणपरा आसन्नित्यर्थः आवरकस्यासुरस्य वायुनाहननात् असुरेणाहृतानुषःप्रभृतीन् पुनर्लब्धवन्तइत्यर्थः ॥ ४ ॥

४. पाप-शून्या उषायें सुदिनों की कारण-भूता होकर अन्धकार नष्ट करती हैं। दीप्यमाना होकर उन्होंने विस्तीर्ण ज्योति प्राप्त की है। अङ्गिरा लोगों ने गोरूप धन प्राप्त किया था। अङ्गिरा लोगों का प्राचीन जल ने अनुसरण किया था।

तृतीये छन्दोमे प्रउगशस्त्रे तेसत्येनेत्यैन्द्रवायवस्तृचः सूत्रितंच—तेसत्येनमनसादीध्यानादिविक्षयन्तारजसः पृथिव्यामिति ।

तेसत्येनमनसादीध्यानाःस्वेनयुक्तासःक्रतुनावहन्ति ।
इन्द्रवायूवीरवाहंरथंवामीशानयोरभिपृक्षःसचन्ते ॥ ५ ॥

ते । स॒त्येन॑ । मन॑सा । दीध्या॑नाः । स्वेन॑ । यु॒क्तास॑ः । क्रतु॑ना ।
व॒ह॒न्ति॒ । इन्द्र॑वायू इति॑ । वी॒र॒ऽवाह॑म् ।
रथ॑म् । वा॒म् । ई॒शा॒नयो॑ः । अ॒भि । पृक्ष॑ः । स॒च॒न्ते॒ ॥ ५ ॥

ते प्रसिद्धाः सत्येन यथार्थेन मनसा मननीयेन स्तोत्रेण युक्ताः दीध्याना दीप्यमानाः स्वेन स्वकीयत्वे विहितेन क्रतुना कर्मणा नित्यनैमित्तिकात्मना युक्तासोयुक्ताः एवंभूताः यजमानाः हे इन्द्रवायू वीरवाहं वीरैः विशेषेण ईरयितृभिः स्तोतृभिः वहनीयं प्रापणीयं । यद्वा वीरैरश्वैर्वहनीयं ईशानयोरीश्वरयोर्वां युवयोः स्वभूतं रथं वहन्ति स्वं स्वं यज्ञं प्रापयन्ति । तत्र च पृक्षोन्नानि हविर्लक्षणानि अभिसचन्ते युवामभिसेवन्ते ॥ ५ ॥

५. इन्द्र और वायु यजमान लोग यथार्थ मन से मननीय स्तोत्र-द्वारा दीप्यमान होकर अपने कर्म-द्वारा वीरों-द्वारा प्रापणीय रथ का अपने-अपने यज्ञ में वहन करते हैं, तुम लोग ईश्वर हो। सारे अन्न तुम्हारी सेवा करते हैं।

ई॒शा॒नासो॒येदध॑ते॒स्व॑र्णो॒गोभि॒रश्वे॑भि॒र्वसु॑भि॒र्हिर॑ण्यैः ।
इन्द्र॑वायूसू॒रयो॒विश्व॒मायु॒रर्व॑द्भिर्वी॒रैःपृत॑नासु॒सह्युः ॥ ६ ॥

ई॒शा॒नास॑ः । ये । दध॑ते । स्व॑ः । नः॒ । गोभि॑ः । अश्वे॑भिः ।
वसु॑ऽभिः । हिर॑ण्यैः । इन्द्र॑वायू इति॑ । सू॒रय॑ः । विश्व॑म् ।
आयु॑ः । अर्व॑त्ऽभिः । वी॒रैः । पृत॑नासु । स॒ह्युः ॥ ६ ॥

हे इन्द्रवायू ईशानासः ईश्वराः प्रभवोयेजनाः नोस्मभ्यं गोभिरश्वेभिरश्वैर्वसुभिर्निवासकैः हिरण्यैश्च सहितं स्वः सुष्ठु अरणीयं सुखं दधते ददति प्रयच्छन्ति । यद्वा हिरण्यव्यतिरिक्तानि धनानि वसूनि तैर्हिरण्यैश्च सहेत्यर्थः । ते सूरयो दातारः विश्वं व्याप्तमायुरन्नं जीवनं वा शत्रूणां स्वभूतं पृतनासु संग्रामेषु अर्वद्भिरश्वैः वीरैः शूरभटैश्च साधनभूतैः सह्युः अभिभवेयुः यद्वा सहार्थे तृतीया अर्वद्भिः वीरैः पुत्रैश्च सहितं शत्रूणामायुरभिभवेयुरित्यर्थः ॥ ६ ॥

६. इन्द्र और वायु, जो क्षमता-शाली जन हमें गो, अश्व, निवास-प्रद धन और हिरण्य के साथ सुख प्रदान करते हैं, वे ही दातागण युद्ध में अश्व और वीरों की सहायता से व्याप्त जीवन (आयु) को जीत लेते हैं।

अर्व॑न्तो॒नश्र॒वसो॒भिक्ष॑माणाइन्द्रवा॒यूसु॑ष्टु॒तिभि॒र्वसि॑ष्ठाः ।
वा॒ज॒यन्त॒ःस्वव॑सेहुवेमयू॒यंपा॑तस्व॒स्तिभि॒ःसदा॑नः ॥ ७ ॥ १२ ॥

अर्वन्तः । न । श्रवसः । भिक्षमाणाः । इन्द्रवायू इति ।
सुस्तुतिऽभिः । वसिष्ठाः । वाजऽयन्तः । सु । अवसे । हुवेम ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७॥ १२ ॥

अर्वन्तोन अश्वाइव हविषां वोढारः श्रवसोन्नस्य द्वितीयार्थे षष्ठी अन्नं भिक्षमाणाः याचमानाः वाजयन्तः वाजं बलमात्मन इच्छन्तो वसिष्ठाः वयं स्ववसे शोभनरक्षणाय सुष्टुतर्पणाय वा सुष्टुतिभिः शोभनाभिः स्तुतिभिः इन्द्रवायू इन्द्रं वायुं च हुवेम आह्वयेमहि । अन्यद्गतम् ॥७॥

७. अश्व की तरह हविर्वाहक, अन्नप्रार्थी और बलेच्छु वसिष्ठगण उत्तम रक्षा के लिए उत्तम स्तुति-द्वारा इन्द्र और वायु को बुलाते हैं। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य षष्ठे द्वादशो वर्गः ॥ १२ ॥

कुविदंगेति सप्तर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यं कुविदंगेत्यनुक्रान्तम् । गतः सूक्तविनियोगः । वायव्ये पशौ कुविदंगेति वपायाज्या सूत्रितश्च—कुविदङ्गनमसायेवृधासईशानायप्रहुतिंयस्तआनळिति ।

कुविदङ्गनमसायेवृधासःपुरादेवाअनवद्यासआसन् ।
तेवायवेमनवेबाधितायावासयन्नुषसंसूर्येण ॥ १ ॥

कुवित् । अङ्ग । नमसा । ये । वृधासः । पुरा । देवाः ।
अनवद्यासः । आसन् । ते । वायवे । मनवे । बाधिताय ।
अवासयन् । उषसम् । सूर्येण ॥ १ ॥

दीव्यंति स्तुवन्तीति देवाः स्तोतारः पुरा पूर्वस्मिन्काले ये वृद्धासो वृद्धादेवाः स्तोतारः कुविदिति बहुनाम अङ्गेति क्षिप्र नाम कुविद्बहुशः अङ्ग क्षिप्रं कृतेन नमसा वायुविषयेण स्तोत्रेण नमस्कारेण वा अनवद्यासः अवद्यरहिताः आसन् तेद्यापि वायवे हवींषि दातुं सूर्येण सह उषसं अवासयन् उषसो वृष्टिं सूर्योदयश्च वायुयागार्थं कुर्वन्तीत्यर्थः । किमर्थं मनवे मनुष्याणां बाधिताय बाधितानां पुत्रादीनां रक्षणार्थमित्यर्थः यद्वा मनवे बाधितायेति षष्ठ्यर्थे चतुर्थी बाधितस्य मनोः प्रजापतेर्यागे वायवे हवींषि दातुमित्यन्वयः ॥ १ ॥

१. प्राचीन समय में जो प्रवृद्ध स्तोता लोग वायुदेव के लिए किये गये अनेक स्तोत्रों के कारण प्रशस्य हुए थे, उन्होंने विपद्ग्रस्त मनुष्यों के उद्धार के लिए, वायु को हवि देने के निमित्त, सूर्य के साथ उषा को एकत्र ठहराया था।

द्वितीये छन्दोमे प्रउगशस्त्रे ऐन्द्रवायवतृचस्य उशन्तेत्येषा प्रथमा सूत्रितश्च—उशन्तादूतानदभायगोपायावत्तरस्तन्वोयावदोजइत्येकाद्वेचेति ।

सैषा द्वितीया—

उशन्तादूतानदभायगोपामासश्चपाथःशरदश्चपूर्वीः ।
इन्द्रवायूसुष्टुतिर्वामियानामार्डीकमीट्टेसुवितंचनव्यम् ॥ २ ॥

उशन्ता । दूता । न । दभाय । गोपा । मासः । च । पाथः ।
शरदः । च । पूर्वीः । इन्द्रवायू इति । सुऽस्तुतिः । वाम् ।
इयाना । मार्डीकम् । ईट्टे । सुवितम् । च । नव्यम् ॥ २ ॥

हे इन्द्रवायू उशन्ता उशन्तौ कामयमानौ दूता दूतौ देवतेर्गतिकर्मणो दूतशब्दः गन्तारौ गोपा गोपायितारौ ईदृशौ युवां दभाय हिंसायै नाभवतम् अपितु मासो मासांश्च पूर्वीर्बह्वीः शरदः संवत्सरांश्च चिरकालमस्मान्पाथो रक्षतम् । अपिच हे इन्द्रवायू सुष्टुतिरस्मदीया शोभना स्तुतिः वां युवां इयाना गच्छन्ती प्राप्नुवन्ती मार्डीकं सुखं ईट्टे याचते । यद्वा सुखं यथा भवति तथा युवामीट्टे स्तौति । तथा नव्यं प्रशस्यं सुवितं सुष्ठुप्राप्यं धनञ्च ईट्टे ॥ २ ॥

२. इन्द्र और वायु, तुम कामयमान दूत और रक्षक हो। तुम लोग हिंसा नहीं करना। महीनों और वर्षों रक्षा करना। सुन्दर स्तुति तुम्हारे पास जाकर सुख और प्रशंसनीय तथा सुलभ्य धन की याचना करती है।

नियुत्वद्वायुदेवताके पशौ पीवोअन्नानिति वपायायाज्या सूत्रितश्च—पीवोअन्नाँरयिवृधः सुमेधा रायेनुयंजज्ञतूरोदसीमेइति । तथा द्वितीये छन्दोमे प्रउगशस्त्रे वायव्यतृचस्य एषैव द्विती-या सूत्रितश्च—पीवोअन्नाँरयिवृधःसुमेधा उच्छन्नुषसःसुदिनाअरिप्राइति ।

सैषा तृतीया—

पीवोअन्नाँरयिवृधःसुमेधाःश्वेतःसिषक्तिनियुतामभिश्रीः ।
तेवायवेसमनसोवितस्थुर्विश्वेन्नरःस्वपत्यानिचक्रुः ॥ ३ ॥

पीवःऽअन्नान् । रयिऽवृधः । सुऽमेधाः । श्वेतः । सिसक्ति ।
निऽयुताम् । अभिऽश्रीः । ते । वायवे । सऽमनसः वि ।
तस्थुः । विश्वा । इत् । नरः । सुऽअपत्यानि । चक्रुः ॥ ३ ॥

पीवोअन्नान् पीवांसि स्थूलानि प्रभूतान्यन्नानि येषांतान् रयिवृधः रय्या धनेन वृद्धान् एवं भूतानाढ्यजनान् सुमेधाः शोभनप्रज्ञः नियुतां वडवानां वाहानां अभिश्रीरभिश्रयणीयः श्वे-तः श्वेतवर्णोवायुःसिषक्ति सेवते । तेच जनाः समनसः समानमनस्काः सन्तः वायवे वायुमुद्दिश्य यष्टुं वितस्थुः विविधमवतिष्ठन्ते । स्थित्वा च ते नरः कर्मणां नेतारोजनाःविश्वेद् विश्वानि सर्वा-

ण्येव स्वपत्यानि शोभनापत्यहेतूनि यद्वा सुष्ठु अपतनकारणानि वायुदेवत्यानि कर्माणि चक्रुः कुर्वन्ति ॥ ३ ॥

३. सुबुद्धि और अपने अश्वों के लिए आश्रयणीय श्वेतवर्ण वायु प्रचुर अन्नवाले और धन-वृद्ध व्यक्तियों को आश्रित करते हैं। वे व्यक्ति भी समान-मना होकर वायु के निमित्त यज्ञ करने के लिए नाना प्रकार से अवस्थित हुए हैं। उन्होंने सुन्दर सन्तति के कारण-भूत कार्यों को किया था।

द्वितीये छन्दोमे प्रउगशस्त्रे ऐन्द्रवायवतृचस्य यावत्तरइत्यादिके द्वे ऋचौ सूक्तं तु पूर्वमेवोदाहृतम्।

यावत्तरस्तन्वो३यावदोजोयावन्नरश्चक्षसादीध्यानाः।
शुचिंसोमंशुचिपापातमस्मेइन्द्रवायूसदतंबर्हिरेदम् ॥ ४ ॥

यावत्। तरः। तन्वः। यावत्। ओजः। यावत्। नरः।
चक्षसा। दीध्यानाः। शुचिम्। सोमम्। शुचिऽपा। पातम्।
अस्मे इति। इन्द्रवायू इति। सदतम्। बर्हिः। आ। इदम् ॥ ४ ॥

हे इन्द्रवायू युवयोस्तन्वः शरीरस्य तरो वेगो यावदस्ति यावच्च ओजो बलं यावच्च नरः कर्मणां नेतार ऋत्विजः चक्षसा ज्ञानेन दीध्यानाः दीप्यमानाः भवन्ति तस्य सर्वस्यानुरूपं शुचिपा शुचेः सोमस्य पाताराविन्द्रवायू शुचिंशुद्धं सोमं अस्मे अस्मदीयं पातं पिबतम्। इदं वेद्यां स्तीर्णं बर्हिश्च आसदतं पानार्थमासीदतं बर्हिषि उपविशतमित्यर्थः ॥ ४ ॥

४. जब तक तुम्हारे शरीर का वेग है, जब तक बल है और जब तक नेता लोग ज्ञान-बल से प्रकाशमान रहते हैं, तब तक हे विशुद्ध सोम को पीनेवाले हे इंद्र और वायु, तुम लोग हमारे विशुद्ध सोम का पान करो और इन कुशों पर बैठो।

नियुवानानियुतःस्पार्हवीराइन्द्रवायूसरथंयातमर्वाक्।
इदंहिवांप्रभृतंमध्वोअग्रमधप्रीणानाविमुमुक्तमस्मे ॥ ५ ॥

निऽयुवाना। निऽयुतः। स्पार्हऽवीराः। इन्द्रवायू इति। सऽरथम्।
यातम्। अर्वाक्। इदम्। हि। वाम्। प्रऽभृतम्। मध्वः। अग्रम्।
अध। प्रीणाना। वि। मुमुक्तम्। अस्मे इति ॥ ५ ॥

हे इन्द्रवायू स्पार्हवीराः स्पृहणीयस्तोतृकान् नियुतआत्मीयानश्वान् सरथं उभयोः समानमेकं रथं नियुवाना निमिश्रयन्तौ युवां अर्वागस्मदभिमुखं यातम् गच्छतम्। इदं हि इदं खलु मध्वो मधुरस्य सोमस्य अग्रं ग्रहेष्वाद्यमैन्द्रवायवाख्यं ग्रहं वां युवयोरर्थं प्रभृतं प्रकर्षेण हृतं

होमार्थमुत्तरवेदिं प्रतिनीतम् अध अथ तादृशस्य सोमस्य पानानन्तरं प्रीणाना प्रीयमाणौ युवां अस्मे अस्मान् विमुमुक्तं पापाद्विमोचयतम् ॥ ५ ॥

५. इन्द्र और वायु, तुम लोग अभिलषणीय स्तोतावाले हो। अपने अश्वों को एक रथ में जोतो। तुम लोग सामने आओ। इस मधुर सोम का अग्रभाग तुम लोगों के लिए लाया गया है। पीने के अनन्तर तुम लोग प्रसन्न होकर हमें पापों से छुड़ाओ।

प्रथमे छन्दोमे प्रउगशस्त्रे ऐन्द्रवायवतृचस्य यावांशतमिति तृतीया सूत्रितंच—यावांशतंनियुतोयाः सहस्रमित्येकपातिन्यइति।

यावांशतंनियुतोयाःसहस्रमिन्द्रवायूविश्ववाराःसचन्ते।
आभिर्यातंसुविदत्राभिरर्वाक्पातंनराप्रतिभृतस्यमध्वः ॥ ६ ॥

याः। वाम्। शतम्। निऽयुतः। याः। सहस्रम्। इन्द्रवायू इति।
विश्वऽवाराः। सचन्ते। आ। आभिः। यातम्। सुऽविदत्राभिः।
अर्वाक्। पातम्। नरा। प्रतिऽभृतस्य। मध्वः ॥ ६ ॥

हे इन्द्रवायू या नियुतः शतं शतसंख्याकाः सत्यः वां युवां सचन्ते सेवन्ते याश्च विश्ववारा विश्वैर्वरणीया नियुतः सहस्रं सहस्रसंख्याकाः सत्यः युवां सचन्ते सुविदत्राभिः शोभनधनप्रदाभिराभिर्नियुद्भिरर्वाक् अस्मदभिमुखं आयातमागच्छतम् हे नरा नेतारौ प्रतिभृतस्य उत्तरवेदिं प्रतिनीतस्य मध्वोमधुरस्य सोमस्य द्वितीयार्थे षष्ठी ईदृशं सोमं पातं पिबतम् ॥६॥

६. इन्द्र और वायु, जो तुम्हारे अश्व शत-संख्यक होकर तुम्हारी सेवा करते हैं और जो सबके वरणीय अश्व सहस्रसंख्यक होकर तुम्हारी सेवा करते हैं, उन्हीं शोभन धन देनेवाले अश्वों के साथ हमारे सामने आओ।

अथ सप्तमी—

अर्वन्तोनश्रवसोभिक्षमाणाइन्द्रवायूसुष्टुतिभिर्वसिष्ठाः।
वाजयन्तःस्ववसेहुवेमयूयंपातस्वस्तिभिःसदानः ॥ ७ ॥ १३ ॥

अर्वन्तः। न। श्रवसः। भिक्षमाणाः। इन्द्रवायू इति।
सुस्तुतिऽभिः। वसिष्ठाः। वाजऽयन्तः। सु। अवसे। हुवेम।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ७ ॥ १३ ॥

व्याख्यातेयं अक्षरार्थस्तु अश्वाइव हविषां वोढारः अन्नं याचमानाः बलं कामयमानाः वसिष्ठाः वयं शोभनरक्षणाय शोभनैः स्तोत्रैः इन्द्रवायू आह्वयेमहीति ॥ ७ ॥

॥ इति पञ्चमस्य षष्ठे त्रयोदशोवर्गः ॥ १३ ॥

७. अश्व की तरह हविर्वाहक, अन्नप्रार्थी और बलेच्छु वसिष्ठगण, उत्तम रक्षण के लिए उत्तम स्तुति-द्वारा, इन्द्र और वायु को बुलाते हैं। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

आवायोइति पञ्चर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम् अनुक्रान्तञ्च—आवायो- पञ्चेति । शुनासीरीये पर्वणि वायोर्नियुत्वतो यागस्य आवायो इत्यनुवाक्या सूत्रितञ्च—आ- वायोभूषशुचिपाउपनःमयाभिर्यासिदाश्वांसमच्छेति । नियुत्वद्वायुदेवताके पशावेषैव वपाया अनुवाक्या प्रथमे छन्दोमे प्रउगशस्त्रे वायव्यतृचस्यैषैवाद्या सूत्रितञ्च—समुद्रादूर्मिरित्याज्यमा- वायोभूषशुचिपाइति ।

आवायोभूषशुचिपाउपनःसहस्रंतेनियुतोविश्ववार ।
उपोतेअन्धोमद्यमयामियस्यदेवदधिषेपूर्वपेयम् ॥ १ ॥

आ । वायो इति । भूष । शुचिऽपाः । उप । नः । सहस्रम् ।
ते । निऽयुतः । विश्वऽवार । उपो इति । ते । अन्धः ।
मद्यम् । अयामि । यस्य । देव । दधिषे । पूर्वऽपेयम् ॥ १ ॥

हे शुचिपाः शुचेः शुद्धस्य सोमस्य पातर्वायो नोस्माकं उपसमीपे आभूष आगच्छ भू- प्राप्तावित्यस्यैतद्रूपम् हे विश्ववार विश्वैर्वरणीय ते तव वाहनभूताः नियुतोवडवाः सहस्रं सहस्र- सङ्ख्याका विद्यन्ते यतएवं अतः शीघ्रमागच्छ । ते तव मद्यं मदकरं सोमलक्षणमन्धोन्नं उपो उप उपायामि उपयतं पात्रे गृहीतमासीव् । हे देव वायो यस्य सोमस्य पूर्वपेयं प्रथमपानं द- धिषे दधासि धारयसि ऐन्द्रवायवग्रहे प्रथमे वषट्कारे केवलाय वायवे हूयते द्वितीये तु इ- न्द्रवायुभ्यामिति वायोः प्रथमपानं तादृशमन्धः उपायामीत्यन्वयः ॥ १ ॥

१. पवित्र सोम को पीनेवाले वायु, हमारे समीप आओ। हे सबके वरणीय, तुम्हारे सब अश्व हजार हैं। वायु, तुम जिस सोम के प्रथम पान के अधिकारी हो, वही मदकर सोम पात्र में तुम्हारे लिए रक्खा हुआ है।

प्रथमे छन्दोमे प्रउगशस्त्रे ऐन्द्रवायवतृचस्य प्रसोतेत्याद्या सूत्रितञ्च—प्रसोताजीरो अध्व- रेष्वस्थाद्येवायवइन्द्रमादनासइति ।

सैषा द्वितीया—

प्रसोताजीरोअध्वरेष्वस्थात्सोममिन्द्रायवायवेपिबध्यै ।
प्रयद्वांमध्वोअग्रियंभरन्त्यध्वर्यवोदेवयन्तःशचीभिः ॥ २ ॥

प्र । सोता । जीरः । अध्वरेषु । अस्थात् । सोमम् । इन्द्राय ।
वायवे । पिबध्यै । प्र । यत् । वाम् । मध्वः । अग्रियम् ।
भरन्ति । अध्वर्यवः । देवऽयन्तः । शचीभिः ॥ २ ॥

जीरः क्षिप्रकारी सोता अभिषोता अध्वर्युः इन्द्राय वायवे च पिबध्यै पानार्थं अध्वरेषु यागेषु सोमं प्रास्थात् प्रातिष्ठिपत् पुरस्तादुत्तरवेदिं प्रापितवान्। हे इन्द्रवायू यत् येषु यज्ञेषु मध्वः सोमस्य अग्रियं अग्रभवं प्रथमभागं देवयन्तो देवकामाः अध्वर्यवः शचीभिः कर्मभिः अभिषवादिलक्षणैः वां युवयोरर्थं प्रभरन्ति प्रकर्षेण भरन्ति संपादयन्ति तेष्वध्वरेष्वित्यन्वयः॥२॥

२. क्षिप्रकारी और सोम का अभिषव करनेवाले अध्वर्यु ने इन्द्र और वायु के पीने के लिए यज्ञ में सोम रक्खा है। इन्द्र और वायु, देवाभिलाषी अध्वर्युओं ने कर्म-द्वारा तुम्हारे लिए इस यज्ञ में सोम का अग्र भाग प्रस्तुत किया है।

शुनासीरीये पर्वणि नियुत्वद्वायोर्यागस्य प्रयाभिरिति याज्या सूत्रितञ्च—प्रयाभिर्यासिदाश्वांसमच्छसत्वंनोदेवमनसेति। तद्देवत्ये पशावेषैव पुरोडाशस्यानुवाक्या सूत्रितञ्च—प्रयाभिर्यासिदाश्वांसमच्छानोनियुद्भिःशतिनीभिरिति। प्रथमे छन्दोमे प्रउगशस्त्रे एषैव वायव्यतृचस्य तृतीया सूत्रितञ्च—आवायोभूषशुचिपाउपनःप्रयाभिर्यासिदाश्वांसमच्छेति।

प्रयाभिर्यासिदाश्वांसमच्छानियुद्भिर्वायविष्टयेदुरोणे।
निनोरयिंसुभोजसंयुवस्वनिवीरंगव्यमश्व्यंचराधः॥ ३॥

प्र। याभिः। यासि। दाश्वांसम्। अच्छ। नियुत्ऽभिः।
वायो इति। इष्टये। दुरोणे। नि। नः। रयिम्। सुऽभोजसम्।
युवस्व। नि। वीरम्। गव्यम्। अश्व्यम्। च। राधः॥ ३॥

हे वायो दुरोणे यज्ञगृहे स्थितं दाश्वांसं हविषां दातारं यजमानं इष्टये यागाय याभिर्नियुद्भिर्वडवाभिरच्छ यासि अभिगच्छसि ताभिरस्मान् प्रत्यागच्छेति शेषः। आगत्यच नोस्मभ्यं सुभोजसं शोभनान्नयुक्तं रयिं धनं नियुवस्व नितरां मिश्रय प्रयच्छ। तथा वीरं पुत्रं गव्यं गोसंघं अश्व्यमश्वसंघं एतदुभयात्मकं राधोधनञ्च नियुवस्व प्रयच्छ॥ ३॥

३. वायु, गृह में अवस्थित हव्यदाता के सम्मुख यज्ञ के लिए जिन नियुतों (अश्वों) के साथ जाते हो, उन्हीं अश्वों के साथ आओ। हमें सुन्दर अन्नवाला धन दो। वीर पुत्र तथा गौ और अश्व से युक्त वैभव दो।

प्रथमे छन्दोमे प्रउगशस्त्रे ऐन्द्रवायवतृचस्य येवायवइन्द्रेति द्वितीया सूत्रितञ्च—येवायवइन्द्रमादनासोयावांशतंनियुतोयाःसहस्रमिति।

सैषा चतुर्थी—

[५]

येवायवइन्द्रमादनासआदेवासोनितोशनासोअर्यः।
घ्नन्तोवृत्राणिसूरिभिःष्यामसासह्वांसोयुधानृभिरमित्रान्॥ ४॥

ये । वायवे । इन्द्रऽमादनासः । आऽदेवासः । निऽतोशनासः ।
अर्यः । घ्नन्तः । वृत्राणि । सूरिऽभिः । स्याम ।
ससह्वांसः । युधा । नृऽभिः । अमित्रान् ॥ ४ ॥

ये सूरयः स्तोतारः इन्द्रमादनासः स्तोत्रैरिन्द्रस्य तर्पयितारः तथा वायवे वायोश्चमादनास्तर्पका भवन्ति येच आदेवासः आगतैः देवैरुपेताः अतएव अर्यः अरेः शत्रोर्नितोशनासो निहन्तारः तैरस्मदीयैः सूरिभिः स्तोतृभिः वृत्राणि शत्रून् घ्नन्तः हिंसन्तः स्याम भवेम । किंकुर्वन्तः अमित्रान् शत्रुभटान् नृभिरस्मदीयैः पुरुषैः युधा युद्धेभिः ससह्वांसोभिभवन्तः ॥ ४ ॥

४. जो स्तोता इन्द्र और वायु की तृप्ति करते हैं, वे देव-युक्त हैं; इसलिए वे शत्रुओं के विनाशक हैं। उन्हीं की सहायता से हम शत्रु-विनाश में समर्थ हों। उन्हीं अपने स्तोताओं द्वारा युद्ध में हम शत्रुओं का पराभव कर सकें।

नियुत्वद्वायुदेवताके पशौ आनोनियुद्भिरिति हविषोनुवाक्या सूत्रितश्च—आनोनियुद्भिः शतिनीभिरध्वरंपीवोअन्नाँरयिवृधःसुमेधाइति ।प्रथमे छन्दोमे प्रउगे वायव्यतृचस्यैषैव तृतीया सूत्रितश्च—आनोनियुद्भिःशतिनीभिरध्वरंप्रसोताजीरोअध्वरेष्वस्थादिति ।

आनोनियुद्भिःशतिनीभिरध्वरंसहस्रिणीभिरुपयाहियज्ञम् ।
वायोअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥५॥१४॥

आ । नः । नियुत्ऽभिः । शतिनीभिः । अध्वरम् । सहस्रिणीभिः ।
उप । याहि । यज्ञम् । वायो इति । अस्मिन् । सवने ।
मादयस्व । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥ १४ ॥

हे वायो नोस्माकं अध्वरं हिंसारहितं यज्ञं शतिनीभिः शतसंख्यावतीभिः सहस्रिणीभिः सहस्रसंख्यावतीभिश्च नियुद्भिर्वडवाभिः उपायाहि उपागच्छ तदनन्तरं अस्मिन् सवने प्रातः सवने मादयस्व सोमेन तृप्यस्व अन्यद्गतम् ॥ ५ ॥

५. वायु, शतसंख्या और सहस्र संख्यावाले अपने अश्वों के साथ हमारे हिंसा-शून्य यज्ञ के समीप आगमन करो। इस यज्ञ में सोम पीकर प्रमत्त होओ। तुम सदा स्वस्ति-द्वारा हमें पालन करो।

॥ इति पञ्चमस्य षष्ठे चतुर्दशोवर्गः ॥ १४ ॥

शुचिम्मित्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्राग्नं अनुक्रम्यते हि शुचिंन्वष्टावैन्द्राग्नंत्विति । गतः सूक्तविनियोगः ऐन्द्राग्नस्य पशोर्वपायाः शुचिमित्येषायाज्या सूत्रितश्च—शुचिंनुस्तोमंनवजातमद्य गीर्भिर्विप्रःप्रमतिमिच्छमानइति ।

सैषा प्रथमा—

शुचिंनुस्तोमंनवंजातमुद्येन्द्राग्नीवृत्रहणाजुषेथाम् ।
उभाहिवांसुहवाजोहवीमिताावाजंसद्यउशतेधेष्ठा ॥ १ ॥

शुचिम् । नु । स्तोमम् । नवंऽजातम् । अद्य । इन्द्राग्नी इति ।
वृत्रऽहना । जुषेथाम् । उभा । हि । वाम् । सुऽहवा ।
जोहवीमि । ता । वाजम् । सद्यः । उशते । धेष्ठा ॥ १ ॥

हे वृत्रहणा वृत्राणां शत्रूणां हन्ताराविन्द्राग्नी शुचिं शुद्धं निरवद्यं नवजातमिदानीमुत्पन्नं स्तोमं मदीयं स्तोत्रं अद्यास्मिन्काले नु क्षिप्रं जुषेथां सेवेथाम् हि यस्मात्सुहवा सुखमाह्वातुं शक्यौ उभा उभौ वां युवां जोहवीमि पुनः पुनराह्वयामि अतआगत्य सेवेथामित्यर्थः। किञ्च ता तौ तथाविधौ युवां उशते कामयमानाय यजमानाय वाजमन्नं बलं वा सद्यस्तदानीमेव शीघ्रं धेष्ठा धातृतमौ भवतम् ॥ १॥

१. वृत्रघ्न इन्द्र और अग्नि, शुद्ध और नवोत्पन्न मेरा स्तोत्र आज सेवन करो। तुम लोग सुख से बुलाने योग्य हो। तुम दोनों को बार-बार बुलाता हूँ। यजमान तुम्हारी अभिलाषा करता है। उसे शीघ्र अन्न प्रदान करो।

तासांनसीशवसानाहिभूतंसाकंवृधाशवसाशूशुवांसा ।
क्षयंन्तौरायोयवंसस्यभूरेःपृंक्तंवाजस्यस्थविरस्यघृष्वेः॥ २ ॥

ता । सानसी इति । शवसाना । हि । भूतम् । साकम्ऽवृधा ।
शवसा । शूशुऽवांसा । क्षयन्तौ । रायः । यवसस्य ।
भूरेः । पृंक्तम् । वाजस्य । स्थविरस्य । घृष्वेः ॥ २ ॥

हे इन्द्राग्नी ता तौ तादृशौ सानसी सर्वैः संभजनीयौ युवां शवसाना शवोबलं तद्वदाचरन्तौ हि खलु भूतं बलमिव शत्रूणां भंजकावास्तामित्यर्थः। कीदृशौ सन्तौ साकं वृधासह प्रवृद्धौ शवसा बलेन शूशुवांसा वर्धमानौ तथा रायोधनस्य भूरेर्बहुलस्य यवसस्य अन्नस्य क्षयन्तावीश्वरौ एवंविधौ युवां स्थविरस्य स्थूलस्य घृष्वेः शत्रूणां घर्षकस्य वाजस्यान्नस्य क्रियाग्रहणमपि कर्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थेषष्ठी। ईदृशमन्नं पृंक्तं संयोजयतं अस्मभ्यं प्रयच्छतमित्यर्थः ॥ २ ॥

२. इन्द्र और अग्नि, तुम लोग भली भाँति भजन के योग्य हो। तुम बल की तरह शत्रुओं के भञ्जक बनो। तुम लोग एक साथ प्रवृद्ध बल-द्वारा वर्द्धमान तथा प्रचुर धन और अन्न के ईश्वर हो। तुम स्थूल और शत्रु-विनाशक अन्न हमें दो।

अथ तृतीया—

उपोहयद्विदथंवाजिनोगुर्धीभिर्विप्राःप्रमतिमिच्छमानाः ।
अर्वन्तोनकाष्ठांनक्षमाणाइन्द्राग्नीजोहुवतोनरस्ते ॥ ३ ॥

उपो इति । ह । यत् । विदथम् । वाजिनः । गुः । धीभिः ।
विप्राः । प्रऽमतिम् । इच्छमानाः । अर्वन्तः । न । काष्ठाम् ।
नक्षमाणाः । इन्द्राग्नी इति । जोहुवतः । नरः । ते ॥ ३ ॥

वाजिनो हविष्मन्तो विप्रा मेधाविनः प्रमतिं प्रकृष्टां मतिं इन्द्राग्न्योरनुग्रहबुद्धिं इच्छमाना आत्मनइच्छन्तः यत् ये यजमानाः विदथं विदंति जानन्ति देवान् तत्र यष्टव्यत्वेनेति विदथो-यज्ञः तं धीभिः कर्मभिः बुद्धिभिर्वा उपोगुः उपगच्छन्ति उइतिपूरकः ते नरः कर्मणां नेतारो-जनाः अर्वन्तो न काष्ठां । यथा अश्वाः शीघ्रं युद्धभूमिं व्याप्नुवन्ति तथा नक्षमाणा ऐन्द्राग्नानि कर्माणि व्याप्नुवन्तः इन्द्राग्नी इन्द्रमग्निं च जोहुवतः पुनःपुनराह्वयन्तोभवंति ॥ ३ ॥

३. जो हविवाले और कृपाभिलाषी मेधावी (विप्र) लोग अनुष्ठान-द्वारा यज्ञ को प्राप्त करते हैं, वे ही नेता लोग—जैसे अश्व युद्ध-भूमि को व्याप्त करते हैं वैसे ही—इन्द्र और अग्नि के कर्मों को व्याप्त करके उन्हें बार-बार बुलाते हैं।

अमावास्यायां ऐन्द्राग्नस्य हविषः गीर्भिरित्येषा याज्या सूत्रितंच—इन्द्राग्नीअवसागतं गीर्भिर्विप्रः प्रमतिमिच्छमानइति । ऐन्द्राग्नेपशौ पुरोडाशस्यैषैव याज्या सूत्रंतूदाहृतम् ।

गीर्भिर्विप्रःप्रमतिमिच्छमानईट्टेरयिंयशसंपूर्वभाजम् ।
इन्द्राग्नीवृत्रहणासुवज्राप्रनोनव्येभिस्तिरतंदेष्णैः ॥ ४ ॥

गीःऽभिः । विप्रः । प्रऽमतिम् । इच्छमानः । ईट्टे । रयिम् ।
यशसम् । पूर्वऽभाजम् । इन्द्राग्नी इति । वृत्रऽहना ।
सुऽवज्रा । प्र । नः । नव्येभिः । तिरतम् । देष्णैः ॥ ४ ॥

हे इन्द्राग्नी प्रमतिं युवयोरनुग्रहबुद्धिं इच्छमान इच्छन् विप्रोमेधावी वसिष्ठः यशसं यशसायुक्तं पूर्वभाजं पूर्वमेवसंभजनीयं रयिं धनमुद्दिश्य गीर्भिःस्तुतिभिः ईट्टे युवां स्तौति हे वृत्रहणा वृत्रस्याहन्तारौ सुवज्रा शोभनायुधाविन्द्राग्नी नव्येभिर्नवतरैः प्रशस्तैः देष्णैर्दात-व्यैर्धनैर्नोस्मान् प्रतिरतं प्रवर्धयतम् ॥ ४ ॥

४. इन्द्र और अग्नि, कृपाप्रार्थी विप्र यशवाले और प्रथम उपभोग्य धन के लिए स्तुति-द्वारा तुम्हारा स्तवन करता है। वृत्रघ्न और सुन्दर आयुधवाले इन्द्र और अग्नि, नये और देने योग्य धन के द्वारा हमें प्रवर्द्धित करो।

अथ पंचमी—

संयन्महीमिथतीस्पर्धमानेतनूरुचाशूरसातायतैते ।
अदेवयुंविदथेदेवयुभिःसत्राहतंसोमसुताजनेन ॥ ५ ॥ १५ ॥

सम् । यत् । मही इति । मिथती इति । स्पर्धमाने इति ।
तनूऽरुचा । शूरऽसाता । यतैते । अदेवऽयुम् । विदथे ।
देवयुऽभिः । सत्रा । हतम् । सोमऽसुता । जनेन ॥ ५ ॥ १५ ॥

मही महत्यौ मिथती परस्परं हिंसन्त्यौ यद्वा मेथतिराक्रोशकर्मा परस्परमाक्रोशंत्यौ स्पर्धमाने स्पर्धां कुर्वंत्यौ तनूरुचा आत्मीयेन तेजसा संपन्ने यत् ये शूरसाता शूरसातौ रणे यतैते जेतुं यत्नं कुर्वन्त्यौ वैरिसेने देवयुभिः देवान्कामयमानैः सह विदथे यज्ञे अदेवयुं सत्रा हतं संततं हिंस्तं । तथा सोमसुता सोममभिषुण्वता जनेन यजमानसंघेन असोमसुतं जनं हिंस्तं ॥ ५ ॥

५. विशाल, परस्पर युद्ध करती हुई, स्पर्द्धा करनेवाली तथा युद्ध में प्रयत्न करती हुई दोनों शत्रु-सेनाओं को, अपने तेज-द्वारा, सदा विनष्ट करो। सोमाभिषवकर्त्ता और देवाभिलाषी यजमान की सहायता से यज्ञ में देवाभिलाष न करनेवाले व्यक्ति का विनाश करो।

॥ इति पंचमस्य षष्ठे पञ्चदशोवर्गः ॥ १५ ॥

इमामुषुसोमंसुतिमुपंनएन्द्राग्नीसौमनसायंयातम् ।
नूचिद्धिपरिमम्नाथेअस्मानावांशश्वद्भिर्ववृतीयवाजैः ॥ ६ ॥

इमाम् । ऊँ इति । सु । सोमऽसुतिम् । उप । नः । आ ।
इन्द्राग्नी इति । सौमनसाय । यातम् । नु । चित् । हि । परिमम्नाथे
इति परिऽमम्नाथे । अस्मान् । आ । वाम् । शश्वत्ऽभिः ।
ववृतीय । वाजैः ॥ ६ ॥

हे इन्द्राग्नी इमामु इमामेव नोस्मदीयां सोमसुतिं सोमाभिषवक्रियां सौमनसाय सुमनसोभावाय सु सुष्ठु उपायातम उपागच्छतम्। अपिच युवां अस्मान् परित्यज्य नूचिव नैव मम्नाथे अन्यान् न मन्येथे। अस्मानेव सर्वदा बुध्येथे। हि यस्मादेवं तस्मात् वां युवां शश्वद्भिर्बहुभिर्वाजैरन्नैर्हविर्लक्षणैः आववृतीय आवर्तयामि ॥ ६ ॥

६. इन्द्र और अग्नि, सुन्दर मन के लिए हमारी इस सोमाभिषवकर्म में आगमन करो। तुम लोग हमें छोड़कर दूसरे को नहीं जानते हो; इसलिए मैं तुम्हें प्रचुर अन्न-द्वारा आवर्त्तित करता हूँ।

अथ सप्तमी—

सोअ॑ग्नए॒नान॑म॑सा॒समि॒द्धोच्छा॒मि॒त्रंवरु॑ण॒मिन्द्रं॑वोचेः ।
यत्सी॒माग॑श्चकृ॒मातत्सुमृ॑ळ॒तद॑र्य॒मादि॑तिःशिश्रथन्तु ॥ ७ ॥

सः । अ॒ग्ने॒ । ए॒ना । नम॑सा । सम्ऽइ॑द्धः । अच्छ॑ । मि॒त्रम् ।
वरु॑णम् । इन्द्र॑म् । वो॒चे॒ः । यत् । सी॒म् । आग॑ः । च॒कृ॒म ।
तत् । सु । मृ॒ळ । तत् । अ॒र्य॒मा । अदि॑तिः । शि॒श्र॒थ॒न्तु॒ ॥ ७॥

हे अग्ने सत्वं एना एनेन मनसा अन्नेन अस्मदीयेन हविषा समिद्धः सन् दीप्तः सन् मित्रं वरुणं इन्द्रं च अच्छवोचेः अभिब्रूयाः अयमस्मदीयोरक्षणीयइति कथय । वयं यदागोप-राधं सीमिति परिग्रहार्थीयः सीं सर्वतोवाङ्मनःकायैश्चकृम कृतवन्तोवयं तत्तस्मादागसः सुमृळ अस्मान् सुष्ठु रक्ष । तच्चागः अर्यमा अदितिः मित्रादयश्च शिश्रथन्तु अस्मत्तोवियोजयन्तु॥ ७॥

७. अग्नि, तुम इस अन्न-द्वारा समिद्ध होकर मित्र, इन्द्र और मित्र को कहो कि यह हमारा रक्षणीय है। हम लोगों ने जो अपराध किया है, उससे हमारी रक्षा करो। अर्यमा और अदिति भी हमारे उस अपराध को हटावें।

ए॒ताअ॑ग्नआशुषा॒णास॑इ॒ष्टीर्यु॒वो॒ःसचा॒भ्य॑श्याम॒वाजा॑न् ।
मेन्द्रो॑नो॒विष्णु॑र्म॒रुत॒ःपरि॑ख्यन्यू॒यंपा॑तस्व॒स्तिभि॒ःसदा॑नः ॥८॥१६॥

ए॒ताः । अ॒ग्ने॒ः । आ॒शु॒षा॒णास॑ः । इ॒ष्टीः । यु॒वोः । सचा॑ । अ॒भि ।
अ॒श्या॒म॒ । वाजा॑न् । मा । इन्द्र॑ः । न॒ः । विष्णु॑ः । म॒रुत॑ः ।
परि॑ । ख्य॒न् । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । न॒ः ॥ ८ ॥ १६ ॥

हे अग्ने उपलक्षणमेतत् हे इन्द्राग्नी एताः इष्टीः इमान्यज्ञान् आशुषाणासः आशु शीघ्रं संभजमानावयं युवोर्युवयोः स्वभूतान्वाजानन्नानि सचासह युगपदेव अभ्यश्याम अभिप्राप्नु-याम अपिच इन्द्रोविष्णुर्मरुतश्च नोस्मान् मापरिख्यन् अस्मान्परित्यज्यान्यान् माद्राक्षुः सर्वदा-स्मानेव पश्यन्तु । अन्यद्गतम् ॥ ८ ॥

८. अग्नि, शीघ्र इस यज्ञ का आश्रय करते हुए हम एक साथ ही तुम्हारा अन्न प्राप्त करें। इन्द्र, विष्णु और मरुद्गण हमें छोड़कर दूसरे को न देखें। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य षष्ठे षोडशोवर्गः ॥ १६ ॥

इयंवामिति द्वादशर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षमैन्द्राग्नं द्वादशी अनुष्टुप् शिष्टागायत्र्यः त-थाचानुक्रान्तम्—इयंवांद्वादशगायत्रमन्त्यानुष्टुबिति । ज्योतिष्टोमे प्रातःसवनेच्छावाकशस्त्रे आ-

द्वितीनवर्चः शस्यन्ते सूत्र्यतेहि—इयंवामस्यमन्मनइति नवेति । आभिप्लविकेषूक्थ्येषु स्तोमेषु वृद्धावच्छावाकस्य प्रातःसवने इदंसूक्तमावापार्थम् उत्तमावर्जं । सूत्रितञ्च—इयंवामस्यमन्मन-इत्येकादशेति । चातुर्विंशिकेहनि प्रातःसवने एतस्यैवाद्यस्तृचः सूत्रितंच—इयंवामस्यमन्मनइ-न्द्राग्नीयुवामिमइति ।

तत्र प्रथमा—

इयंवा॑मस्य॒मन्म॑नइन्द्रा॑ग्नीपू॒र्व्यस्तु॑तिः । अ॒भ्राद्वृ॒ष्टिरि॑वाजनि ॥१॥

इ॒यम् । वा॒म् । अ॒स्य । मन्म॑नः । इन्द्रा॑ग्नी॒ इति॑ । पू॒र्व्यऽस्तु॑तिः ।

अ॒भ्रात् । वृ॒ष्टिःऽइ॑व । अ॒ज॒नि॒ ॥ १ ॥

हे इन्द्राग्नी इयं पूर्व्यस्तुतिः पूर्व्या मुख्यास्तुतिः अस्य मन्मनः स्तोतुः अस्माद्वसिष्ठाव् वां युवाभ्यां युवयोरर्थं अभ्राव् मेघाव् वृष्टिरिव बह्वी सती अजनि प्रादुर्भूता तां श्रृणुतमित्युत्तरेण संबन्धः ॥ १ ॥

१. इन्द्र और अग्नि, जैसे मेघ से वर्षा होती है, वैसे ही इस स्तोता से यह प्रधान स्तुति उत्पन्न हुई है।

शृ॒णु॒तंज॑रि॒तुर्हव॒मिन्द्रा॑ग्नी॒वन॑तं॒गिरः॑ । ई॒शा॒नापि॑प्यतं॒धियः॑ ॥ २ ॥

शृ॒णु॒तम् । ज॒रि॒तुः । हव॑म् । इ॒न्द्रा॑ग्नी॒ इति॑ । वन॑तम् ।

गिरः॑ । ई॒शा॒ना । पि॒प्य॒त॒म् । धियः॑ ॥ २ ॥

हे इन्द्राग्नी जरितुः स्तोतुः हवमाह्वानं युवां श्रृणुतं श्रुत्वा च गिरस्तदीयास्तुतिर्वनतं संभजतम् तथा ईशाना ईश्वरौ युवां धियः अनुष्ठितानि कर्माणि पिप्यतं तत्स्थैः फलैः पूरयतम् ॥२॥

२. इन्द्र और अग्नि, स्तोता का आह्वान सुनो। उसकी स्तुति का भोग करो। तुम लोग ईश्वर हो। अनुष्ठित कर्म की पूर्त्ति करो।

अथ तृतीया—

मापा॑प॒त्वाय॑नोन॒रेन्द्रा॑ग्नी॒माभिश॑स्तये । मानो॑रीरधतं॒नि॒दे ॥ ३ ॥

मा । पा॒प॒ऽत्वाय॑ । नः॒ । न॒रा॒ । इन्द्रा॑ग्नी॒ इति॑ । मा ।

अ॒भिऽश॑स्तये । मा । नः॒ । री॒र॒ध॒त॒म् । नि॒दे ॥ ३ ॥

हे नरानेताराविन्द्राग्नी नोस्मान् पापत्वाय पापवत्वाय हीनभावाय मारीरधतं मावशीकुरुतम् । तथा अभिशस्तये शत्रुभिः कृतायाभिशंसनाय मारीरधतं मावशीकुरुतम् । तथा निदे नि-न्दकाय यजमानाय नोस्मान् मारीरधतं मावशीकुरुतम् ॥ ३ ॥

३. नेता इन्द्र और अग्नि, हमें हीनभाव, पराभव और निन्दा के लिए परवश नहीं करना।

चातुर्विंशिकेहनि प्रातः सवनेच्छावाकस्य इन्द्रेअग्नेत्ययं षळहस्तोत्रियसंज्ञकस्तृचः सू-
त्रितश्च—इन्द्रेअग्नानमोबृहत्ताहुवेययोरिदमिति ।

तृचे प्रथमा सूक्ते चतुर्थी—

इन्द्रेअग्नानमोबृहत्सुवृक्तिमेरयामहे । धियाधेनाअवस्यवः ॥४॥

इन्द्रे । अग्ना । नमः । बृहत् । सुऽवृक्तिम् । आ । ईरयामहे ।
धिया । धेनाः । अवस्यवः ॥ ४ ॥

अवस्यवः रक्षणकामाः वयं इन्द्रे देवे अग्ना अग्नौ च बृहत् बृंहणं वर्धकं हविर्लक्षणमन्नं
सुवृक्तिं सुप्रवृक्तां स्तुतिंच आ ईरयामहे अभिप्रेरयामः । तथा धिया कर्मणा युक्ताः धेनाः वाङ्-
नामैतत् अप्रगीताः स्तुतिवाचश्च अभि प्रेरयामः ॥ ४ ॥

४. रक्षाभिलाषी होकर हम विशाल हव्य, सुन्दर स्तुति और कर्म-
युक्त वाक्य, इन्द्र और अग्नि के पास भेजते हैं।

ताहिशश्वन्तईळतइत्थाविप्रासऊतये । सबाधोवाजसातये ॥ ५ ॥

ता । हि । शश्वन्तः । ईळते । इत्था । विप्रासः ।
ऊतये । सऽबाधः । वाजऽसातये ॥ ५ ॥

ता हि तौ खलु इन्द्राग्नी शश्वन्तः बहवः विप्रासोमेधाविनोजनाः ऊतये रक्षणाय इत्था
इत्थमनेन प्रकारेण ईळते स्तुवन्ति । तथा सबाधः समानं बाधमानाः परस्परं बाध्यमानाः ज-
नाः वाजसातये अन्नलाभाय तावेवेन्द्राग्नी ईळते स्तुवन्ति यद्वा वाजसातिरिति सङ्ग्रामनाम
सङ्ग्रामार्थम् ॥ ५ ॥

५. रक्षण के लिए मेधावी लोग उन दोनों इन्द्र और अग्नि की इस
प्रकार स्तुति करते हैं। समान बाधा पाये हुए लोग भी अन्न-प्राप्ति के
लिए स्तुति करते हैं।

तावांगीर्भिर्विपन्यवःप्रयस्वन्तोहवामहे । मेधसातासनिष्यवः॥६॥१७॥

ता । वाम् । गीःऽभिः । विपन्यवः । प्रयस्वन्तः ।
हवामहे । मेधऽसाता । सनिष्यवः ॥ ६ ॥ १७ ॥

विपन्यवः स्तोत्रमिच्छन्तः प्रयस्वन्तःहविर्लक्षणेनान्नेनोपेताःसनिष्यवः सनि धनमात्मन-
इच्छन्तोवयं मेधसाता मेधानां यागानां सातौ संभजने निमित्तभूते सति हे इन्द्राग्नी ता तौ
वां युवां गीर्भिः स्तुतिभिः हवामहे आह्वयामहे ॥ ६ ॥

६. स्तोत्र के इच्छुक, अन्नवान् और धनाभिलाषी होकर हम यज्ञ
की प्राप्ति के लिए तुम दोनों को, स्तुति-द्वारा, बुलावें।

॥ इति पञ्चमस्य षष्ठे सप्तदशोवर्गः ॥ १७ ॥

अमावास्यायामैन्द्राग्नस्यहविषः इन्द्राग्नीअवसेत्यनुवाक्या सूत्रितश्च—इन्द्राग्नीअवसाग-तंगीर्भिर्विप्रः प्रमतिमिच्छमानइति ।

सैषा सप्तमी—

इन्द्रा॑ग्नी॒अव॒सागं॑तम॒स्मभ्यं॑चर्षणीसहा । मानो॑दु॒ःशंस॑ईशत ॥७॥

इन्द्रा॑ग्नी॒ इति॑ । अव॑सा । आ । ग॒त॒म् । अ॒स्मभ्य॑म् ।
च॒र्ष॒णि॒ऽस॒हा॒ । मा । न॒ः । दु॒ःऽशंस॑ः । ई॒श॒त॒ ॥ ७ ॥

हे चर्षणीसहा चर्षणीनां मनुष्याणां शत्रुभूतानामभिभवितारौ हे इन्द्राग्नी अस्मभ्यं स्तोतृभ्योदेयेन अवसा अन्नेनसह आगतं आगच्छतम् दुःशंसोदुष्टाभिशंसनः पारुष्यवादी शत्रुश्च नोस्मान् माईशत ईशिष्ट अस्मान् बाधितुं मा शक्नोतु ॥ ७ ॥

७. इन्द्र और अग्नि, तुम मनुष्यों (शत्रुओं) को आविर्भूत करते हो। हमारे लिए तुम, अन्न के साथ, आओ। कठोर वचनवाला व्यक्ति हमारा प्रभु न हो।

माकस्यं॑नो॒अर॑रुषोधू॒र्तिःप्रण॒ङ्मर्त्य॑स्य । इन्द्रा॑ग्नी॒शर्म॑यच्छतम् ॥८॥

मा । कस्य॑ । न॒ः । अर॑रुषः । धू॒र्तिः । प्रणं॑क् ।
मर्त्य॑स्य । इन्द्रा॑ग्नी॒ इति॑ । शर्म॑ । य॒च्छ॒त॒म् ॥ ८ ॥

हे इन्द्राग्नी कस्य कस्यचिदपि अररुषः अरेर्मर्त्यस्य मनुष्यसंबन्धिनी धूर्तिः हिंसा नोस्मान् माप्रणक् मा प्राप्नोति शर्मसुखं च अस्मभ्यं यच्छतं दत्तम् ॥ ८ ॥

८. इन्द्र और अग्नि, हमें किसी भी शत्रु की हिंसा न मिले। हमें सुख दो।

गोम॒द्धिर॑ण्यव॒द्वसु॒यद्वा॒मश्वा॑वदीम॑हे । इन्द्रा॑ग्नी॒तद्व॑नेमहि ॥ ९ ॥

गोऽम॑त् । हिर॑ण्यऽवत् । वसु॑ । यत् । वा॒म् । अश्व॑ऽवत् ।
ईम॑हे । इन्द्रा॑ग्नी॒ इति॑ । तत् । व॒ने॒म॒हि॒ ॥ ९ ॥

हे इन्द्राग्नी गोमत् गोभिर्युक्तं हिरण्यवत् हिरण्यैः सुवर्णैर्युक्तम् अश्वावत् अश्वैश्चोपेतं यद्वसु वां युवां ईमहे याचामहे तद्वसु युवयोः प्रसादात् वयं वनेमहि संभजेमहि ॥ ९ ॥

९. इन्द्र और अग्नि, हम जो तुम्हारे पास गौ, हिरण्य और स्वर्ण से युक्त धन की याचना करते हैं, उसका हम भोग कर सकें।

चातुर्विंशिकेहनि प्रातःसवने अच्छावाकशस्त्रे यत्सोमआसुतइत्यारंभणीया अहर्गणेषुच द्वितीयादिष्वहस्सु एषा प्रातःसवने तेनैवशंसनीया सूत्रितञ्च—यत्सोमआसुतेनरइत्यारंभणीयाः शस्त्वेति ।

सैषा दशमी—

यत्सोमआसुतेनरइन्द्राग्नीअजोहवुः । सप्तीवन्तासपर्यवः ॥ १० ॥

यत् । सोमे । आ । सुते । नरः । इन्द्राग्नी इति ।
अजोहवुः । सप्तिऽवन्ता । सपर्यवः ॥ १० ॥

सोमे सुते अभिषुते सति नरः कर्मणां नेतारः ऋत्विजः सपर्यवः परिचरणकामाः सन्तः सप्तीवन्ता प्रशस्ताश्वौ इन्द्राग्नीइन्द्रमग्निं च यद्यदा अजोहवुरभिह्वयन्ते तदा युवामागच्छतमितिशेषः ॥ १० ॥

१०. सोम के अभिषुत होने पर कर्म-नेता लोग सेवाभिलाषी होकर उत्तम अश्वाले इन्द्र और अग्नि का बार-बार आह्वान करते हैं।

उक्थेभिर्वृत्रहंतमायामन्दानाचिदागिरा । आङ्गूषैराविवासतः ॥ ११ ॥

उक्थेभिः । वृत्रहन्ऽतमा । या । मन्दाना । चित् ।
आ । गिरा । आङ्गूषैः । आऽविवासतः ॥ ११ ॥

वृत्रहन्तमा वृत्राणामावरकाणां हन्तृतमौ मन्दाना मोदमानौ या याविन्द्राग्नी उक्थेभिः शस्त्रैः गिरा च स्तुत्या च आविवासतः परिचर्येते व्यत्ययेन कर्मणि कर्तृप्रत्ययः चिदितिचार्थे आङ्गूषैरन्यैश्च स्तोत्रैः यावाविवासतः परिचर्येते तौ युवां आगच्छतमितिशेषः ॥ ११ ॥

११. सबसे बढ़कर वृत्र-हन्ता और अतीव आनन्द-मग्न इन्द्र और अग्नि की, हम, उक्थ (शस्त्र नाम की स्तुति) और स्तोत्र तथा अन्य स्तवों-द्वारा परिचर्या करते हैं।

अथ द्वादशी—

ताविद्दुःशंसंमर्त्यंदुर्विद्वांसंरक्षस्विनम् ।
आभोगंहन्मनाहतमुदधिंहन्मनाहतम् ॥ १२ ॥ ॥ १८ ॥

तौ । इत् । दुःऽशंसम् । मर्त्यम् । दुःऽविद्वांसम् । रक्षस्विनम् ।
आऽभोगम् । हन्मना । हतम् । उदऽधिम् । हन्मना । हतम् ॥ १२ ॥ १८ ॥

हे इन्द्राग्नी तौ युवां दुःशंसं दुष्टाभिशंसनं दुर्विद्वांसं दुर्विज्ञानं रक्षस्विनं बलवन्तं आभोगं आहृत्यास्मत्तोपहृत्य भोक्तारंमर्त्यं मनुष्यं शत्रुं हन्मना हननसाधनेनायुधेन हतं हिंस्तं उ-क्तमेवार्थं दृष्टान्तेन द्रढयति—उदधिं लुप्तोपममेतत् उदधानं कुंभमिव यथा कुंभअनायासेनभि-द्यन्ते एवमनायासेनैव शत्रुं आयुधेन युवां हिंस्तम् ॥ १२ ॥

१२. इन्द्र और अग्नि, तुम लोग दुष्ट धारणा और दुष्ट ज्ञानवाले तथा बलवान् और अपहरण करनेवाले मनुष्य को आयुध-द्वारा, घड़े की तरह, फोड़ो।

॥ इति पञ्चमस्य षष्ठेष्टादशोवर्गः ॥ १८ ॥

प्रक्षोदसेति षळृचं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं सरस्वतीदेवताकम् तृतीयातु सरस्वद्दे-वताका अनुक्रम्यतेच—प्रक्षोदसाषट् सारस्वतंतु तृतीयासरस्वतइति । गतःसूक्तविनियोगः । प्र-थमेछन्दोमे प्रउगशस्त्रे प्रक्षोदसाधायसासस्नएषेति प्रउगमिति।सारस्वतेपशौ प्रक्षोदसेति वपा-यायांज्या सूत्रितश्च—प्रक्षोदसाधायसासस्नएषा पावीरवीकन्याचित्रायुरिति ।

**प्रक्षोदसाधायसासस्नएषासरस्वतीधरुणमायसीपूः ।**
**प्रबाबधानारथ्येवयातिविश्वाअपोमहिनासिन्धुरन्याः ॥ १ ॥**

प्र । क्षोदसा । धायसा । सस्ने । एषा । सरस्वती । धरुणम् ।
आयसी । पूः । प्रऽबाबधाना । रथ्याऽइव । याति ।
विश्वाः । अपः । महिना । सिन्धुः । अन्याः ॥ १ ॥

सरस्वती एषा । नदीवन्निगमा एषा दृश्यमानानदीरूपा सरस्वती आयसी अयसानि-र्मिता पूः पुरीव धरुणं लिङ्गव्यत्ययः धरुणा धारयित्री धायसा धारकेण क्षोदसा उदकेन प्रस-स्ने प्रधावति शीघ्रं गच्छति । सिन्धुः स्यन्दनशीला नदीरूपा सा अन्या विश्वाः सर्वाअपः आ-पगाः महिना महिम्ना प्रबाबधाना भृशं बाधमाना रथ्येव प्रतोलीव विस्तीर्णासती याति ग-च्छति । यद्वा रथ्येव रथिनेव यथा रथी रथेन मार्गस्थं तरुगुल्मादिकं चूर्णीकृत्यगच्छति त-द्वत्स्वकीयेन वेगेन सर्वं पिंषती गच्छतीत्यर्थः ॥ १ ॥

१. यह सरस्वती लौह-निर्मित पुरी की तरह धारयित्री होकर धारक जल के साथ प्रधावित होती है। वह अपनी महिमा-द्वारा अन्य सारी बहनेवाली जल-रूपिणी नदियों को बाधा देते हुए सारथि की तरह जाती हैं।

सारस्वतएवपशौ वपाया एकाचेतदित्यनुवाक्या सूत्रितं च—एकाचेतत्सरस्वतीनदीनामु-तस्यानःसरस्वतीजुषाणेति ।

सैषा द्वितीया–

एकाचेतत्सरस्वतीनदीनांशुचिर्यतीगिरिभ्यआसमुद्रात् ।
रायश्चेतन्तीभुवनस्यभूरेर्घृतंपयोदुदुहेनाहुषाय ॥ २ ॥

एका । अचेतत् । सरस्वती । नदीनाम् । शुचिः । यती ।
गिरिऽभ्यः । आ । समुद्रात् । रायः । चेतन्ती । भुवनस्य ।
भूरेः । घृतम् । पयः । दुदुहे । नाहुषाय ॥ २ ॥

सहस्रवत्सरेण क्रतुना यक्ष्यमाणो नाहुषोनामराजा सरस्वतीं नदीं प्रार्थयामास साच तस्मै सहस्रसंवत्सरपर्याप्तं पयोघृतंच प्रददौ अयमर्थोत्र प्रतिपाद्यते–नदीनामन्यासां मध्ये शुचिः शुद्धा गिरिभ्यः सकाशात् आसमुद्रात् समुद्रपर्यन्तं यती गच्छन्ती एका सरस्वती नदी अचेतत् नाहुषस्य प्रार्थनामज्ञासीत् तथा भुवनस्य भूतजातस्यभूरेर्बहुलस्य रायोधनानि चेतन्ती प्रज्ञापयन्ती प्रयच्छन्ती नाहुषाय राज्ञे घृतं पयश्च सहस्रसंवत्सरक्रतोः पर्याप्तं दुदुहे दुग्धवती दत्तवती ॥२॥

२. नदियों में विशुद्धा, पर्वत से लेकर समुद्र तक जानेवाली और अकेली सरस्वती ने नहुष राजा की प्रार्थना को जाना। उन्होंने भुवनस्य प्रचुर धन प्रदान करके नहुष के लिए (हजार वर्षों के लिए) घी और दूध दूहा था अर्थात् नहुष को दिया था।

सरस्वद्देवताकेपशौ सवावृधइति पुरोडाशस्ययाज्या सूत्रितंच–सवावृधेनर्योयोषणासुय-स्यव्रतंपशवोयन्तिसर्वइति ।

सैषा तृतीया–

सवावृधेनर्योयोषणासुवृषाशिशुर्वृषभोयज्ञियासु ।
सवाजिनंमघवद्भ्योदधातिविसातयेतन्वंमामृजीत ॥ ३ ॥

सः । ववृधे । नर्यः । योषणासु । वृषा । शिशुः । वृषभः ।
यज्ञियासु । सः । वाजिनम् । मघवत्ऽभ्यः । दधाति । वि ।
सातये । तन्वम् । ममृजीत ॥ ३ ॥

समध्यमस्थानोवायुः सरस्वान् नर्योनरेभ्योहितः योषणासु यतः वृषा सेचनसमर्थः शिशुः अल्पः प्रादुर्भावसमये अल्पतया दृश्यमानः वृषभोवर्षिता एवंभूतः सरस्वान् यज्ञियासु यज्ञार्हासु योषणासु योषित्सु आत्मनः कलत्रभूतासु मध्यमस्थानास्वप्सु मध्ये ववृधे वर्धते सतादृशः सरस्वान् मघवद्भ्यो हविष्मद्भ्यो यजमानेभ्यः वाजिनं बलिनं पुत्रं दधाति ददाति

तथा सातये लाभार्थं तन्वं तेषां शरीरं विमामृजीत विमार्ष्टि लाभार्थं संस्करोतीत्यर्थः यद्यप्येषा सरस्वतःस्तुतिः तथापि सरस्वत्याः प्रीणनार्थं तत्स्तवनमिति छान्दोमिके सारस्वते तृचे अस्या उक्तोविनियोगोन विरुध्यते॥ ३ ॥

३. मनुष्यों की भलाई के लिए वर्षा करने में समर्थ और शिशु (प्रादुर्भाव के समय में छोटे) सरस्वान् (मध्यमस्थान वायु) यज्ञ के योग्य योषित (मध्यम-स्थान-वर्ती जल-समूह) के बीच बढ़े थे। वह हविष्मान् यजमानों को बली पुत्र देते हैं और लाभ के लिए उनके शरीर का संस्कार करते हैं।

दशरात्रेष्टमेहनि प्रउगे उतस्यानइति सारस्वतः सप्तमस्तृचः सूत्रितश्च—उतस्यानःसरस्वतीजुषाणा सरस्वत्यभिनोनेषिवस्यइति ।

उ॒तस्या॒नः॒सर॑स्वतीजु॒षा॒णोप॑श्रवत्सु॒भगा॒य॒ज्ञेअ॒स्मिन् ।
मि॒तज्ञु॑भि॒र्न॑म॒स्यै॑रिया॒नारा॒यायु॒जाचि॒दुत्त॑रा॒सखि॑भ्यः ॥ ४ ॥

उ॒त । स्या । नः॒ । सर॑स्वती । जु॒षा॒णा । उप॑ । श्र॒व॒त् ।
सु॒ऽभगा॑ । य॒ज्ञे । अ॒स्मिन् । मि॒तज्ञु॑ऽभिः । न॒म॒स्यैः॑ ।
इ॒या॒ना । रा॒या । यु॒जा । चि॒त् । उत्ऽत॑रा । सखि॑ऽभ्यः ॥ ४ ॥

उतापिच जुषाणा प्रीयमाणा सुभगा शोभनधना स्या सा सरस्वती नोस्माकमस्मिन्यज्ञे उपश्रवत् अस्मदीयाःस्तुतीरुपश्रृणोतु।कीदृशी सा मितज्ञुभिः प्रह्वैर्जानुभिः नमस्यैर्नमस्कारैर्देवैः इयाना उपगम्यमाना चिच्छब्दश्चार्थे युजा नित्ययुक्तेन राया धनेन च संगता सखिभ्यःउत्तरा उत्कृष्टतरा ईदृशी अस्मदीयाःस्तुतीः उपश्रृणोत्वित्यन्वयः ॥ ४ ॥

४. शोभन-धना सरस्वती प्रसन्न होकर हमारे इस यज्ञ में स्तुति सुनें। पूजनीय देवता लोग घुटने टेककर सरस्वती के निकट जाते हैं। सरस्वती नित्य धनवाली और अपने सखा लोगों के लिए अत्यन्त दयावती हैं।

पवित्रेष्ट्यां सारस्वतस्य हविषोइमाजुह्वानाइतियाज्या सूत्रितश्च—इमाजुह्वानायुष्मदानमोभिर्दधिक्राव्णोअकारिषमिति ।

इ॒माजुह्वा॑नायु॒ष्मदानमो॑भि॒ःप्रति॒स्तोमं॑सरस्वतिजुषस्व ।
तव॒शर्म॑न्प्रि॒यत॑मे॒दधा॑ना॒उप॑स्थेयामश॒र॒णंनवृ॒क्षम् ॥ ५ ॥

इ॒मा । जुह्वा॑नाः । यु॒ष्मत् । आ । नम॑ःऽभिः । प्रति॑ । स्तोम॑म् ।
सर॑स्व॒ति॒ । जु॒ष॒स्व॒ । तव॑ । शर्म॑न् । प्रि॒यऽत॑मे । दधा॑नाः ।
उप॑ । स्थे॒या॒म॒ । श॒र॒ण॒म् । न । वृ॒क्षम् ॥ ५ ॥

हे सरस्वति इमा इमान्यस्मदीयानि हवींषि जुह्वानास्तुभ्यं जुह्वतोवयं नमोभिः त्वद्विषयैर्नमस्कारैः युष्मत् त्वत्सकाशात् आ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः आददीमहि धनानीति शेषः स्तोमं चास्मदीयं प्रतिजुषस्व प्रतिसेवस्व वयश्च प्रियतमे अतिशयेन प्रिये तव त्वदीये शर्मन् शर्मणि सुखे दधानाः निधीयमानाः सन्तः शरणं न वृक्षं आश्रयभूतं वृक्षमिव उपस्थेयाम त्वां उपतिष्ठेम संगच्छेमहि ॥ ५ ॥

५. सरस्वती हम इस हव्य का हवन करते हुए नमस्कार-द्वारा तुम्हारे पास से धन प्राप्त करेंगे। हमारी स्तुति की सेवा करो। हम लोग तुम्हारे अतीव प्रिय घर में अवस्थिति करते हुए आश्रय-भूत वृक्ष की तरह तुम्हारे साथ मिलेंगे।

अयमुतेसरस्वतिवसिंष्ठोद्वारांवृतस्यंसुभगेव्यांवः।
वर्धंशुभ्रेस्तुवतेरांसिवाजांन्यूयंपांतस्वस्तिभिःसदांनः ॥६ ॥१९॥

अयम्। ऊँ इति। ते। सरस्वति। वसिंष्ठः। द्वारौ। ऋतस्यं। सुऽभगे। वि। आवरित्यांवः। वर्धं। शुभ्रे। स्तुवते। रासि। वाजांन्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ६ ॥ १९ ॥

हे सुभगे शोभनधने सरस्वति अयं वसिष्ठः ते त्वां यन्तुः ऋतस्य यज्ञस्य संबन्धिन्यौ द्वारौ पूर्वापरे व्यावः विवृणोति उइतिपूरकः हे शुभ्रे शुभ्रवर्णे देवि वर्ध वर्धस्व तथा स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वाजानन्नानि रासि प्रदेहि अन्यद्गतम् ॥ ६ ॥

६. सुधना सरस्वती, तुम्हारे लिए यह वसिष्ठ (स्तोता) यज्ञ का द्वार खोलता है। शुभ्र-वर्णा देवी, बढ़ो और स्तोता को अन्न दो। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य षष्ठे एकोनविंशोवर्गः ॥ १९ ॥

बृहदुगायिषइति षळृचं सप्तमं सूक्तं वसिष्ठस्यार्षं आद्याबृहती द्वितीया सतोबृहती तृतीया प्रस्तारपंक्तिः शिष्टास्तिस्रोगायत्र्यः आद्यस्तृचः सरस्वतीदेवताकः अन्त्यश्च सरस्वद्देवताकः तथा चानुक्रान्तम्—बृहदुप्रगाथः प्रस्तारपंक्तिः परास्तिस्रोगायत्र्यः सरस्वतइति। पञ्चमेहनिप्रउगशस्त्रे आद्यः प्रगाथः सारस्वतस्तृचः सूत्रितश्च—बृहदुगायिषेवचइति बार्हतं प्रउगं प्रगाथानेकइति।

तत्र प्रथमा—

बृहदुंगायिषेवचोंसुर्यानदीनांम्।
सरंस्वतीमिन्मंहयासुवृक्तिभिःस्तोमैर्वसिष्ठरोदंसी ॥ १ ॥

बृहत् । ऊँ इति । गायिषे । वचः । असुर्या । नदीनाम् ।
सरस्वतीम् । इत् । महय । सुवृक्तिऽभिः । स्तोमैः ।
वसिष्ठ । रोदसी इति ॥ १ ॥

अनया ऋषिरात्मानं संबोध्य सरस्वत्याःस्तुतौ प्रेरयति हे वसिष्ठ त्वं बृहद् बृहदेव महदेव वचः स्तोत्रं गायिषे गायसि किमर्थं नदीनां मध्ये असुर्या असुरशब्दाच्चतुर्थ्येकवचनस्यडचादेशः असुरायै बलवत्यै नदीरूपायै सरस्वत्यै अस्याः प्रीणनार्थमित्यर्थः तथा रोदसी द्यावापृथिव्योः स्थितां दिवि देवतारूपेण भूम्यांवाग्रूपेण निवसन्तीं सरस्वतीमिव् सरस्वतीमेव सुवृक्तिभिः सुष्ठु दोषवर्जितैः स्तोमैः स्तोत्रैर्महय पूजय सर्वदा सरस्वतीमेव स्तुहि नान्यां देवतामिति भावः ॥ १ ॥

१. वसिष्ठ, तुम नदियों में बलवती सरस्वती के लिए बृहत् स्तोत्र गाओ। द्यावा-पृथिवी में वर्त्तमान सरस्वती की ही, निर्दोष स्तोत्रों-द्वारा पूजा करो।

अथ द्वितीया—

उभेयत्तेमहिनाशुभ्रेअन्धसीअधिक्षियन्तिपूरवः ।
सानोबोध्यवित्रीमरुत्सखाचोदराधोमघोनाम् ॥ २ ॥

उभे इति । यत् । ते । महिना । शुभ्रे । अन्धसी इति ।
अधिऽक्षियन्ति । पूरवः । सा । नः । बोधि । अवित्री ।
मरुत्ऽसखा । चोद । राधः । मघोनाम् ॥ २ ॥

हे शुभ्रे शुभ्रवर्णे सरस्वति यत् यस्यास्ते तव महिना महिम्ना उभे अन्धसी उभयविधं दिव्यं पार्थिवं चान्नं ग्राम्यमारण्यं वा पूरवः पूरयितव्या मनुष्याः अधिक्षियन्ति अधिगच्छन्ति सा त्वं अवित्री रक्षित्री सती नोस्मान् बोधि बुध्यस्व । अपिच मरुत्सखा मरुतोमाध्यमिकादेवगणाः ते सखायोयस्या माध्यमिकाया वाचः तादृशी त्वं मघोनां हविर्लक्षणधनोपेतानामस्माकं राधोधनं चोद प्रेरय ॥ २॥

२. शुभ्रवर्णा सरस्वती, तुम्हारी महिमा-द्वारा मनुष्य दिव्य और पार्थिव दोनों प्रकार का अन्न प्राप्त करता है। तुम रक्षिका होकर हमें जानो। मरुतों की सखी होकर तुम हविर्दाताओं के पास धन भेजो।

भद्रमिद्भद्राकृणवत्सरस्वत्यकवा... ...तवाजिनीवती ।
गृणानाजमदग्निवत्स्तुवानाचवसिष्ठवत् ॥ ३ ॥

भ॒द्रम् । इत् । भ॒द्रा । कृ॒ण॒व॒त् । सर॑स्वती । अक॑वऽअरी ।
चे॒त॒ति॒ । वा॒जिनी॑ऽवती । गृ॒णा॒ना ।
ज॒म॒द॒ग्नि॒ऽवत् । स्तु॒वा॒ना । च॒ । व॒सि॒ष्ठ॒ऽवत् ॥ ३ ॥

भद्रा कल्याणी भजनीयावा सरस्वती भद्रमित् भद्रमेव कल्याणमेव कृणवत् अस्माकं करोतु।तथा अकवारी अकुत्सितगमना वाजिनीवति चेतति अन्नवती चेतयतु अस्मान् प्रज्ञापयतु । यद्वा मदीयं स्तोत्रं चेतति जानातु। तथा जमदग्निवत् जमदग्निना ऋषिणेव मया गृणाना स्तूयमाना वसिष्ठवत् अर्हार्थेवतिप्रत्ययः वसिष्ठार्हं वसिष्ठस्यानुरूपं स्तुवाना स्तूयमाना च भव ॥ ३ ॥

३. कल्याण-कारिणी सरस्वती केवल कल्याण करें। सुन्दर-गमना और अन्नवती होकर हमारी प्रज्ञा उत्पन्न करें। जमदग्नि ऋषि की तरह मेरे स्तव करने पर तुम वसिष्ठ के उपयुक्त स्तोत्र प्राप्त करो।

सरस्वद्देवताके पशौ जनीयन्तइति तिस्रः पशुपुरोडाशहविषां क्रमेणानुवाक्याः सूत्रितश्च-जनीयन्तोन्वग्रवइतितिस्रो दिव्यंसुपर्णंवायसंबृहन्तमिति ।

ज॒नी॒यन्तो॒न्वग्र॑वःपु॒त्री॒यन्त॑ःसु॒दान॑वः । सर॑स्वन्तंहवामहे ॥ ४ ॥

ज॒नि॒ऽयन्त॑ः । नु । अग्र॑वः । पु॒त्रि॒ऽयन्त॑ः । सु॒ऽदान॑वः ।
सर॑स्वन्तम् । ह॒वा॒म॒हे॒ ॥ ४ ॥

जनीयन्तः जायन्तआस्वपत्यानीति जनयोजायाः ताइच्छन्तः पुत्रीयन्तः पुत्रान्कामयमानाः सुदानवः शोभनदानाः अग्रवः उपगन्तारोवयं नु अद्य सरस्वन्तं देवं हवामहे स्तुमहे आह्वयामहे वा ॥ ४ ॥

४. हम स्त्री और पुत्र के अभिलाषी तथा सुन्दर दानवाले स्तोता हैं। हम सरस्वान् देवता की स्तुति करते हैं।

येते॑सरस्वऊ॒र्मयो॒मधु॑मन्तोघृ॒त॒श्चुत॑ः । तेभि॑र्नोऽवि॒ताभ॑व ॥ ५ ॥

ये । ते॒ । सर॑स्वः । ऊ॒र्मय॑ः । मधु॑ऽमन्तः । घृ॒त॒ऽश्चुत॑ः ।
तेभि॑ः । नः॒ । अ॒वि॒ता । भ॒व॒ ॥ ५ ॥

हे सरस्वः सरस्वन् देव ते त्वदीयाः ये ऊर्मयोजलसंघा मधुमन्तोरसवन्तः घृतश्चुतः घृतस्य वृष्ट्युदकस्य क्षारिणोभवन्ति तेभिस्तैरूर्मिभिः नोस्माकमविता रक्षिताभव ॥ ५॥

५. सरस्वान्, तुम्हारे जो जल-संघ रसवान् और वृष्टि-जल देनेवाले हैं उन्हीं के द्वारा हमारे रक्षक होओ।

अन्वारंभणीयायां सरस्वतोयागस्य पीपिवांसमित्यनुवाक्या सूत्रितश्च—पीपिवांसंसरस्वतोदिव्यंसुपर्णंवायसंबृहन्तमिति ।

सैषा षष्ठी—

पीपिवांसंसरस्वतःस्तनंयोविश्वदर्शतः। भक्षीमहिप्रजामिषम्॥६॥२०॥

पीपिऽवांसम्। सरस्वतः। स्तनम्। यः। विश्वऽदर्शतः।
भक्षीमहि। प्रऽजाम्। इषम्॥ ६॥ २०॥

पीपिवासं प्रवृद्धं सरस्वतोदेवस्य स्तनं शब्दायमानं स्तनवद्रसाधारं वा मेघं भक्षीमहि भजेमहि प्राप्नुयाम। योविश्वदर्शतोविश्वैः सर्वैर्दर्शतोभवति दृश्यमानोभवति तं स्तनं मेघमित्यर्थः तथा प्रजां पुत्रादिरूपां इषमन्नंच सरस्वतः प्रसादाद्भक्षीमहि॥ ६॥

६. प्रवृद्ध सरस्वान् देव के स्तनवत् रसाधार को हम प्राप्त हों। वह सरस्वान्, सबके दर्शनीय हैं हम प्रज्ञा और अन्न प्राप्त करें।

॥ इति पञ्चमस्य षष्ठे विंशोवर्गः॥ २०॥

यज्ञेदिवइति दशर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं प्रथमायाइन्द्रः तृतीयानवम्योरिन्द्राब्रह्मणस्पती देवता दशम्याइन्द्राबृहस्पती शिष्टानांतु बृहस्पतिः। तथाचानुक्रान्तम्—यज्ञेदशैंद्याद्दि बार्हस्पत्यमन्त्यैन्द्रीच तृतीयानवम्यावैन्द्राब्राह्मणस्पत्यइति। आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ ब्राह्मणाच्छंसिनः इदमुत्तरंच सूक्तमावापार्थं सूत्रितश्च यज्ञेदिवइति सूक्तेइति।

यज्ञेदिवोनृषदनेपृथिव्यानरोयत्रदेवयवोमदन्ति।
इन्द्राययत्रसवनानिसुन्वेगमन्मदायप्रथमंवयश्च॥ १॥

यज्ञे। दिवः। नृऽसदने। पृथिव्याः। नरः। यत्र।
देवऽयवः। मदन्ति। इन्द्राय। यत्र। सवनानि।
सुन्वे। गमत्। मदाय। प्रथमम्। वयः। च॥ १॥

यत्र यस्मिन्यज्ञे देवयवोदेवान् कामयमाना नरोनेतारऋत्विजोमदन्ति हृष्यंति यत्र यस्मिंश्च सवनानि अभिषोतव्याः सोमाः इन्द्राय इन्द्रार्थं सुन्वे अभिषूयन्ते पृथिव्याः संबन्धिनि नृषदने नृणां नेतॄणां सदनभूते तस्मिन्यज्ञे प्रथमं सर्वेभ्योदेवेभ्यः पूर्वं दिवोद्युलोकात् इन्द्रः गमत् आगच्छतु किमर्थं मदाय मदार्थं सोमं पातुमित्यर्थः तथा वयश्च गन्तारः तदीयाअश्वाश्च गमत् आगच्छन्तु॥ १॥

१. जिस यज्ञ में देवाभिलाषी नेता लोग मत्त होते हैं, पृथिवी के नेताओं के जिस यज्ञ में सारे सवन (सोम) इन्द्र के लिए अभिषुत होते हैं, उसी यज्ञ में, हृष्ट होने के लिए, द्युलोक से इन्द्र प्रथम आगमन करें और गमन-परायण अश्वगण भी आवें।

अथ द्वितीया—

आदैव्यांवृणीमहेवांसिबृहस्पतिर्नोमहआसखायः ।
यथाभवेममीळ्हुषेअनागायोनोदातापरावतःपितेव ॥ २ ॥

आ । दैव्या । वृणीमहे । अवांसि । बृहस्पतिः । नः ।
महे । आ । सखायः । यथा । भवेम । मीळ्हुषे । अनागाः ।
यः । नः । दाता । पराऽवतः । पिताऽइव ॥ २ ॥

हे सखायः समानख्यानाः स्तोतारः वयं दैव्या दैव्यानि देवसंबन्धीनि अवांसि रक्षणानि आवृणीमहे अभिभजामहे प्रार्थयामहे नोस्माकं हविः बृहस्पतिःबृहतां पालयिता देवः आमहे महतिर्दानार्थः आमहते आदत्ते लोपस्तआत्मनेपदेष्विति तल्लोपः योबृहस्पतिः परावतोदूरदेशाव् धनान्याहृत्य पुत्रेभ्यः पितेव नोस्मभ्यं दाताभवति तस्मै मीळ्हुषे सेक्रे बृहस्पतये अनागाः अनागसः अनपराधा यथावयं भवेम हे सखायः तथा यूयं परिचरतेति शेषः ॥ २ ॥

२. सखा लोग, हम देवों की रक्षा के लिए प्रार्थना करते हैं। बृहस्पति हमारे हव्य को स्वीकार करें। जैसे दूर देश से धन ले आकर पिता पुत्र को देता है, वैसे ही बृहस्पति हमें दान करते हैं। जैसे हम काम-वर्षक बृहस्पति के निकट अपराधी न होने पावें, वैसे ही करो।

तमुज्येष्ठंनमसाहविर्भिःसुशेवंब्रह्मणस्पतिंगृणीषे ।
इन्द्रंश्लोकोमहिदैव्यःसिषक्तुयोब्रह्मणोदेवकृतस्यराजा ॥ ३ ॥

तम् । ऊँ इति । ज्येष्ठम् । नमसा । हविःऽभिः । सुऽशेवम् ।
ब्रह्मणः । पतिम् । गृणीषे । इन्द्रम् । श्लोकः । महि । दैव्यः ।
सिसक्तु । यः । ब्रह्मणः । देवऽकृतस्य । राजा ॥ ३ ॥

ज्येष्ठं प्रशस्यतमं सुशेवं सुसुखं ब्रह्मणोमन्त्रस्य पतिं पालयितारं एतत्सज्ञं तमु तमेव, देवं नमसा नमस्कारेण हविर्भिश्चरुपुरोडाशादिभिश्च सार्धं गृणीषे गृणे स्तुवे । अपिच महि महान्तमिन्द्रं दैव्यः देवार्हः श्लोकः अस्मदीयः स्तावकोमन्त्रः सिषक्तु सेवतां ब्रह्मणोन्नस्य मन्त्रस्यवा देवकृतस्य देवैः स्तोतृभिः कृतस्य यइन्द्रोब्रह्मणस्पतिर्वा राजा ईश्वरोभवति तमिन्द्रं तं ब्रह्मणस्पतिमिति संबन्धः ॥ ३ ॥

३. ज्येष्ठ और सुन्दर सुखवाले उन ब्रह्मणस्पति की, नमस्कार और हव्य-द्वारा, मैं स्तुति करता हूँ। जो देव-(स्तोतृ) कृत मन्त्र के राजा हैं, देवार्ह श्लोक उन्हीं महान् इन्द्र की सेवा करो।

अथ चतुर्थी—

सआन्नोयोनिंसदतुप्रेष्ठोबृहस्पतिर्विश्ववारोयोअस्ति।
कामोरायःसुवीर्यस्यतंदात्पर्षन्नोअतिसश्चतोअरिष्टान्॥ ४॥

सः। आ। नः। योनिम्। सदतु। प्रेष्ठः। बृहस्पतिः। विश्वऽवारः।
यः। अस्ति। कामः। रायः। सुऽवीर्यस्य। तम्।
दात्। पर्षत्। नः। अति। सश्चतः। अरिष्टान्॥ ४॥

प्रेष्ठः प्रियतमः सबृहस्पतिः नोस्माकं योनिं स्थानं वेदिलक्षणं आसदतु आसीदतु आगत्योपविशतु योबृहस्पतिः विश्ववारः विश्वैर्वरणीयोस्ति भवति। अपिच रायोधनस्य सुवीर्यस्य शोभनवीर्यस्य च यः कामोस्माकमभिलाषोस्ति तं कामं अस्मभ्यं दात् ददातु काम्यमानं यच्छत्वित्यर्थः। तथा सश्चतः उपद्रवैः संसक्तान् नोस्मानरिष्टानहिंसितान्कृत्वा अति पर्षत् अतिपारयतु शत्रून्॥ ४॥

४. वही प्रियतम ब्रह्मणस्पति हमारे स्थान (वेदी) पर बैठें। वह सबके वरणीय हैं। हमारी धन और शोभन वीर्य की जो अभिलाषा है, उसे ब्रह्मणस्पति पूर्ण करें। हम उपद्रवों से युक्त हैं। वह हमें अहिंसित करके पार करें।

तमानोअर्कममृतायजुष्टमिमेधासुरमृतासःपुराजाः।
शुचिक्रन्दंयजतंपस्त्यानांबृहस्पतिमनर्वाणंहुवेम ॥ ५॥ २१॥

तम्। आ। नः। अर्कम्। अमृताय। जुष्टम्। इमे। धासुः।
अमृतासः। पुराऽजाः। शुचिऽक्रन्दम्। यजतम्। पस्त्यानाम्।
बृहस्पतिम्। अनर्वाणम्। हुवेम॥ ५॥ २१॥

तं सर्वत्रभोक्तव्यतयाप्रसिद्धं अमृताय अमरणत्वाय जीवनाय जुष्टं पर्याप्तमर्कमर्चनसाधनमन्नं पुराजाः पुराजाताइमे अमृतासः अमरणादेवाः बृहस्पतेराज्ञया नोस्मभ्यं आधासुः प्रदधुः। वयं च शुचिक्रन्दं शुद्धस्तोत्रं पस्त्यानां पस्त्यमितिगृहनाम तेन तद्वन्तोलक्ष्यन्ते गृहिणां यजतं यष्टव्यं अनर्वाणं अप्रत्यृतं केनाप्यप्रतिगतं बृहस्पतिं बृहतां पालकं देवं हुवेम आह्वयाम स्तुयेम वा॥ ५॥

५. प्रथम उत्पन्न हुए अमर देवगण हमें वही यथेष्ट और पूजा-साधन अन्न दें। हम शुद्ध स्तोत्रवाले, गृहियों के यज्ञ-योग्य और अप्रतिगत बृहस्पति को बुलाते हैं।

॥ इति पञ्चमस्य षष्ठे एकविंशोवर्गः॥ २१॥

अथ षष्ठी—

तंशग्मासोअरुषासोअश्वाबृहस्पतिंसहवाहोवहन्ति ।
सहश्चिद्यस्यनीलवत्सधस्थंनभोनरूपमरुषंवसानाः ॥ ६ ॥

तम् । शग्मासः । अरुषासः । अश्वाः । बृहस्पतिम् । सहऽवाहः ।
वहन्ति । सहः । चित् । यस्य । नीलऽवत् । सधऽस्थम् ।
नभः । न । रूपम् । अरुषम् । वसानाः ॥६॥

शग्मासः शग्माः सुखकराः शक्तावा अरुषासः आरोचमानाः सहवाहः संहत्यवाहका-अश्वाः तं बृहस्पतिं वहन्ति वहन्तु । यस्य बृहस्पतेः सहश्चित् बलंच भवति नीलवत् नीलं निलयोनिवासः तद्युक्तं सधस्थं सहस्थानंच यस्य तं बृहस्पतिमित्यन्वयः कीदृशाअश्वाः नभोन आदित्यमिव अरुषं आरोचमानं रूपं वसानाः धारयन्तः ॥ ६ ॥

६. सुखकर, रुचिकर, वहनशील और आदित्य की तरह ज्योतिवाले अश्वगण उन्हीं बृहस्पति को वहन करें। बृहस्पति के पास बल और निवास के लिए गृह है।

सहिशुचिःशतपत्रःसशुन्ध्युर्हिरण्यवाशीरिषिरःस्वर्षाः ।
बृहस्पतिःसःस्वावेशऋष्वःपुरूसखिभ्यआसुतिंकरिष्ठः ॥ ७ ॥

सः । हि । शुचिः । शतऽपत्रः । सः । शुन्ध्युः । हिरण्यऽवाशीः ।
इषिरः । स्वःऽसाः । बृहस्पतिः । सः । सुऽआवेशः । ऋष्वः ।
पुरु । सखिऽभ्यः । आऽसुतिम् । करिष्ठः ॥ ७ ॥

सहि सखलु बृहस्पतिः शुचिः शुद्धः शतपत्रः बहुविधवाहनः सएवशुन्ध्युः सर्वेषां शोधयिता हिरण्यवाशीः वाशीति वाङ्नाम हितरमणीयवाक् यद्वा वाशीभिस्तक्षताश्मन्मयीभिरिति निगमात्[1] । वाशी आयुधं स्वर्णमयायुधः इषिरोगन्ता अभ्येषणीयोवा स्वर्षाः स्वर्गस्यसंभक्ता यद्वा सरणशीलस्योदकस्य सनिता दाता सएव बृहस्पतिः स्वावेशः सुनिवासः ऋष्वः दर्शनीयः ईदृशोदेवः । सखिभ्यः स्तोतृभ्यः पुरु बहुलं आसुतिमन्नं करिष्ठः कर्तृतमो दातृतमो-भवति ॥ ७ ॥

७. बृहस्पति पवित्र हैं। उनके अनेक वाहन हैं। वे सबके शोधक हैं। वे हित और रमणीय वाक्यवाले हैं। वे गमनशील, स्वर्ग-भोक्ता, दर्शनीय और उत्तम निवासवाले हैं। वे स्तोताओं को सबसे अधिक अन्न देते हैं।

---

1 ऋ० सं० ८. ५. १९.।

अथाष्टमी—

देवीदेवस्यरोदसीजनित्रीबृहस्पतिंवावृधतुर्महित्वा ।
दक्षाय्यायदक्षतासखायःकरद्ब्रह्मणेसुतरासुगाधा ॥ ८ ॥

देवी इति । देवस्य । रोदसी इति । जनित्री इति । बृहस्पतिम् ।
वावृधतुः । महिऽत्वा । दक्षाय्याय । दक्षत । सखायः ।
करत् । ब्रह्मणे । सुऽतरा । सुऽगाधा ॥ ८ ॥

देवी देव्यौ दानादिगुणयुक्ते देवस्य बृहस्पतेर्जनित्री जनयित्र्यौ रोदसी द्यावापृथिव्यौ महित्वा महत्वेन युक्तं बृहस्पतिं ववृधतुः वर्धयामासतुः हे सखायोयूयमपि दक्षाय्याय वर्धनीयाय द्वितीयार्थे चतुर्थी वर्धनीयं तं बृहस्पतिं दक्षत वर्धयत । सच बृहस्पतिः ब्रह्मणे बृंहिवाय प्रभूतायान्नाय तदर्थं सुतरा सुतरणानि सुखेन तरणीयानि सुगाधा सुखेनावगाहनीयानि उदकानि करत् करोतु ॥ ८ ॥

८. बृहस्पति देव की जननी देवी द्यावापृथिवी अपनी महिमा के जोर से बृहस्पति को वर्द्धित करें। सखा लोग, वर्द्धनीय बृहस्पति को वर्द्धित करो। वे प्रचुर अन्न के लिए जल-राशि को तरल और स्नान के योग्य बनाते हैं।

इयंवांब्रह्मणस्पतेसुवृक्तिर्ब्रह्मेन्द्रायवज्रिणेअकारि ।
अविष्टंधियोजिगृतंपुरन्धीर्जजस्तमर्योवनुषामरातीः ॥ ९ ॥

इयम् । वाम् । ब्रह्मणः । पते । सुऽवृक्तिः । ब्रह्म । इन्द्राय ।
वज्रिणे । अकारि । अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः ।
जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥ ९ ॥

हे ब्रह्मणस्पते तुभ्यं वज्रिणे वज्रवतेइन्द्राय च वां युवाभ्यां तादर्थ्ये चतुर्थी ब्रह्म मंत्ररूपा इयं सुवृक्तिः सुप्रवृत्तास्तुतिः अकारि मया कृताभूत् तौ युवां धियोस्मदीयानि कर्माणि अविष्टं रक्षतं। तथा पुरन्धीः पुरुधीः बह्वीःस्तुतीः जिगृतं निगिरतं श्रृणुतमितियावत् । अर्यः अरीः अभिगंत्रीः वनुषां संभक्तॄणामस्माकं अरातीः शत्रुसेनाः जजस्तं उपक्षपयतम् ॥ ९ ॥

९. ब्रह्मणस्पति, तुम्हारी और वज्रवाले इन्द्र के लिए मैंने मन्त्र-रूप सुन्दर स्तुति की। तुम दोनों हमारे अनुष्ठान की रक्षा करो। अनेक स्तुतियाँ सुनो। हम तुम्हारे सभक्त हैं। हमारी आक्रमणशील शत्रु-सेना विनष्ट करो।

तृतीये सवने उक्थ्ये ब्राह्मणाच्छंसिनो बृहस्पतेयुवमिति शस्त्रयाज्या सूत्रितश्च—बृहस्पतेयुवमिन्द्रश्चवस्वइति याज्येति । वाजपेयेतिरिक्तोक्थ्यस्य एषैवपरिधानीया सूत्रितश्च--बृहस्पतेयुवमिन्द्रश्चवस्वइति परिधानीयेति ।

सैषा दशमी--

बृहस्पतेयुवमिन्द्रश्चवस्वोदिव्यस्येशाथेउतपार्थिवस्य ।
धत्तंरयिंस्तुवतेकीरयेचिद्यूयंपातस्वस्तिभिःसदानः ॥ १० ॥२२॥

बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य ।
ईशाथे इति । उत । पार्थिवस्य । धत्तम् । रयिम् । स्तुवते ।
कीरये । चित् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥१०॥२२॥

हेबृहस्पते त्वञ्च इन्द्रश्च युवं युवां दिव्यस्य दिविभवस्य वस्वोवसुनोधनस्य उतापि च पार्थिवस्य पृथिव्यां भवस्य धनस्य ईशाथे अतः कारणात् स्तुवते स्तोत्रं कुर्वते कीरये स्तोतृनामैतत् स्तोत्रे रयिं धनं धत्तं दत्तं चिदिति पूरणः अन्यद्गतम् ॥ १० ॥

१०. बृहस्पति, तुम और इन्द्र—दोनों पार्थिव और स्वर्गीय धन के स्वामी हो। इसलिए स्तोता को धन देते हो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य षष्ठे द्वाविंशोवर्गः ॥ २२ ॥

अध्वर्यवइति सप्तर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं सप्तस्यैन्द्राबार्हस्पत्या तथाचानुक्रान्तम्—अध्वर्यवःसप्तोक्तदेवतान्त्येति ।पूर्वसूक्तेनसहोक्तोविनियोगः ।

तत्र प्रथमा—

अध्वर्यवोरुणंदुग्धमंशुंजुहोतनवृषभायक्षितीनाम् ।
गौराद्वेदीयाँअवपानमिन्द्रोविश्वाहेद्यातिसुतसोममिच्छन् ॥ १ ॥

अध्वर्यवः । अरुणम् । दुग्धम् । अंशुम् । जुहोतन । वृषभाय ।
क्षितीनाम् । गौरात् । वेदीयान् । अवऽपानम् । इन्द्रः ।
विश्वाहा । इत् । याति । सुतऽसोमम् । इच्छन् ॥ १ ॥

हे अध्वर्यवोध्वरस्यनेतारऋत्विजः क्षितीनां जनानां मध्ये वृषभाय श्रेष्ठायेन्द्राय अरुणमारोचमानं दुग्धं अभिषुतं अंशुं सोमं जुहोतन जुहुत अवपानं अवक्रम्यस्थितं दूरस्थं पातव्यं सोमं गौराव् गौरमृगादपि वेदीयान् अतिशयेन विद्वान् इन्द्रः सुतसोमं अभिषुतसोमं यजमानमिच्छन् अन्विच्छन् विश्वाहा विश्वान्यहानि इत् एव सर्वदैव याति गच्छति अतस्तस्माइन्द्राय सोमं जुहोतेत्यन्वयः ॥ १ ॥

१. अध्वर्युओ, मनुष्यों में श्रेष्ठ इन्द्र के लिए रुचिकर और अभिषुत सोम का हवन करो। गौर मृग की अपेक्षा भी जल्दी दूरस्थित और पीने योग्य सोम को जानकर, सोम का अभिषव करनेवाले यजमान को खोजते हुए बराबर आया करते हैं।

यद्दंधिषेप्रदिविचार्वन्नंदिवेदिवेपीतिमिदंस्यवक्षि ।
उतहृदोतमनसाजुषाणउशन्निन्द्रप्रस्थितान्पाहिसोमान् ॥ २ ॥

यत् । दधिषे । प्रऽदिवि । चारु । अन्नम् । दिवेऽदिवे । पीतिम् ।
इत् । अस्य । वक्षि । उत । हृदा । उत । मनसा । जुषाणः ।
उशन् । इन्द्र । प्रऽस्थितान् । पाहि । सोमान् ॥ २ ॥

हे इन्द्र प्रदिवि प्रगतेषु दिवसेषु पूर्वस्मिन्काले चारु शोभनं यत् सोमलक्षणमन्नं दधिषे पानेनोदरे धारयसि अस्य सोमस्य पीतिमित् पानमेव दिवेदिवे प्रतिदिवसं इदानीमपि वक्षि कामयसे वशकान्तावित्यस्य सिपि शपोलुकि षत्वकत्वषत्वेष्वेतद्रूपम् उतापिच हे इन्द्र हृदा हृदयेन उत शब्दश्चार्थे मनसा च जुषाणः सेवमानः उशन् अस्मान् कामयमानस्त्वं प्रस्थितान् पुरस्तान्नीतान् उत्तरवेदिस्थान् सोमान् पाहि पिब ॥ २ ॥

२. इन्द्र, पूर्व समय में जिस शोभन अन्न (सोम) को तुम धारण करते थे, इस समय भी प्रतिदिन उसी सोम को पीने की इच्छा करो। इन्द्र, हृदय और मन से हमारी इच्छा करते हुए, सम्मुख लाये गये, सोम का पान करो।

जज्ञानःसोमंसहसेपपाथप्रतेमातामहिमानमुवाच ।
एन्द्रपप्राथोर्व१न्तरिक्षंयुधादेवेभ्योवरिवश्चकर्थ ॥ ३ ॥

जज्ञानः । सोमम् । सहसे । पपाथ । प्र । ते । माता ।
महिमानम् । उवाच । आ । इन्द्र । पप्राथ । उरु । अन्तरिक्षम् ।
युधा । देवेभ्यः । वरिवः । चकर्थ ॥ ३ ॥

हे इन्द्र त्वं जज्ञानोजायमानएव सहसे बलाय सोमं पपाथ पीतवानसि ते तव महिमानं महत्त्वं माता त्वदीया जननी अदितिः प्रोवाच प्रोक्तवती संवादसूक्ते अयंपन्थाइत्यादिके। नहीन्वस्येत्यर्धर्चादारभ्य अदित्याइन्द्रमहत्वस्योक्तत्वात्। अतः कारणात् हे इन्द्र त्वं उरु विस्तीर्णमन्तरिक्षं आपप्राथ स्वतेजसा आपूरितवानसि। अपिच युधा युद्धेन देवेभ्यः स्तोतृभ्योदेवेभ्यएववा वरिवोधनं चकर्थ कृतवानसि॥ ३॥

३. इन्द्र, जन्म लेने के साथ ही तुमने, बल के लिए, सोमपान किया था। तुम्हारी माता अदिति ने तुम्हारी महिमा बताई है। तुमने विस्तृत अन्तरिक्ष को अपने तेज से पूर्ण किया है। युद्ध से देवों के लिए तुमने धन उत्पन्न किया है।

यद्योधयामहतोमन्यमानान्त्साक्षामतान्बाहुभिःशाशदानान्।
यद्वानृभिर्वृतइन्द्राभियुध्यास्तंत्वयाजिंसौश्रवसंजयेम॥ ४॥

यत्। योधयाः। महतः। मन्यमानान्। साक्षाम। तान्।
बाहुऽभिः। शाशदानान्। यत्। वा। नृऽभिः। वृतः। इन्द्र।
अभिऽयुध्याः। तम्। त्वया। आजिम्। सौश्रवसम्। जयेम॥ ४॥

हे इन्द्र महतः प्रभूतान् मन्यमानान् शत्रून्यद्यदा योधयाः अस्माभिर्योधयेः तैः सहयोद्धुं बलं प्रयच्छेरित्यर्थः तदानीं शाशदानान् हिंसतस्तान् शत्रून् बाहुभिः आयुधनिरपेक्षैः हस्तैरेव त्वत्प्रसादात् साक्षाम सहेम अभिभवेम। यद्वा यदिवा हे इन्द्र नृभिः नेतृभिर्मरुद्भिर्वृतः त्वमेवाभियुध्याः अस्मदीयान् शत्रूनभियुध्यस्व सौश्रवसं श्रवोन्नं यशोवा शोभनस्य श्रवसोहेतुं तमाजिं संग्रामं त्वया सहायेन वयं जयेम॥ ४॥

४. इन्द्र, जिस समय प्रभूत और अभिमान से युक्त शत्रुओं के साथ हमारा युद्ध कराओगे, उस समय उन हिंसक शत्रुओं को हाथों से ही हम पराजित करेंगे। यदि तुम मरुतों के साथ स्वयं ही युद्ध करोगे, तब सुन्दर अन्न के कारण उस संग्राम को तुम्हारी सहायता से हम जीत लेंगे।

प्रेन्द्रस्यवोचंप्रथमाकृतानिप्रनूतनामघवायाचकार।
यदेददेवीरसंहिष्टमायाअथाभवत्केवलःसोमोअस्य॥ ५॥

प्र। इन्द्रस्य। वोचम्। प्रथमा। कृतानि। प्र। नूतना।
मघऽवा। या। चकार। यदा। इत्। अदेवीः। असहिष्ट।
मायाः। अथ। अभवत्। केवलः। सोमः। अस्य॥ ५॥

---

१ ऋ० सं० ३.५.२५।

इन्द्रस्य कृतानि वीर्यकर्माणि प्रथमा प्रथमानि पुरातनानि प्रवोचं प्रब्रवीमि। मघवा धनवानिन्द्रः या यानि चकार कृतवान् नूतना नूतनान्यभिनवानिच तानि प्रवोचं यदेव् यदैव अदेवीः आसुरीर्मायाः तैः कृताः असहिष्ट अभ्यभूत् अथानन्तरमेव अस्येन्द्रस्य सोमः केवलः असाधारणोऽभवत् तदा प्रभृत्येव सोमस्येन्द्रस्य चासाधारणः संबन्धोजातइत्यर्थः ॥ ५ ॥

५. मैं इन्द्र के पुराने कर्मों को कहता हूँ। इन्द्र ने जो नया कर्म किया हैं, उसे भी मैं कहूँगा। इन्द्र ने आसुरी माया को परास्त किया है, इसलिए केवल इन्द्र के लिए ही सोम है, अर्थात् सोम से इन्द्र का असाधारण सम्बन्ध है।

तवेदंविश्वमभितःपशव्यं१यत्पश्यसिचक्षसासूर्यस्य ।
गवामसिगोपतिरेकइन्द्रभक्षीमहितेप्रयतस्यवस्वः ॥ ६ ॥

तव । इदम् । विश्वम् । अभितः । पशव्यम् । यत् । पश्यसि ।
चक्षसा । सूर्यस्य । गवाम् । असि । गोऽपतिः । एकः ।
इन्द्र । भक्षीमहि । ते । प्रऽयतस्य । वस्वः ॥ ६ ॥

हे इन्द्र पशव्यं पशवोद्विविधाः द्विपादश्चतुष्पादश्च तेभ्योहितं अभितः सर्वतोविद्यमानं इदं विश्वं सर्वं जगत् तव तवैव स्वभूतं सूर्यस्य प्रेरकस्यादित्यस्य चक्षसा तेजसा यद्विश्वं पश्यसि त्वं प्रकाशयसि अपिच हे इन्द्र एकएव त्वं गोपतिरसि नकेवलमेकस्याएव गोपतिः अपितु सर्वासामित्याह गवामिति अतः कारणात् ते त्वया प्रयतस्य प्रत्तस्य द्वितीयार्थेषष्ठी प्रत्तं वस्वोधनं भक्षीमहि भजेमहि ॥ ६ ॥

६. इन्द्र, पशुओं (प्राणियों) के लिए हितकर यह जो विश्व चारों ओर अवस्थित है और जिसे तुम सूर्य के तेज से देखते हो, सो सब तुम्हारा ही है। अकेले ही तुम समस्त गौओं के स्वामी हो। तुम्हारे दिये हुए धन का हम भोग करते हैं।

बृहस्पतेयुवमिन्द्रश्चवस्वोदिव्यस्येशाथेउतपार्थिवस्य ।
धत्तंरयिंस्तुवतेकीरयेचिद्यूयंपातस्वस्तिभिःसदानः ॥ ७ ॥ २३ ॥

बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति ।
उत । पार्थिवस्य । धत्तम् । रयिम् । स्तुवते । कीरये ।
चित् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥ २३ ॥

व्याख्यातेयं अक्षरार्थस्तु हे बृहस्पते त्वञ्चेन्द्रश्च युवां दिव्यस्य पार्थिवस्य चोभयविधस्य धनस्येश्वरौभवथः। तौ युवां स्तुवते स्तोत्रे धनं दत्तमिति ॥ ७ ॥

७. बृहस्पति, तुम और इन्द्र—दोनों ही पार्थिव और स्वर्गीय धन के स्वामी हो। तुम दोनों स्तोत्रकर्त्ता स्तोता को धन देते हो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पंचमस्य षष्ठे त्रयोविंशोवर्गः ॥ २३ ॥

परोमात्रयेति सप्तर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं उरुंयज्ञायेत्याद्यास्तिस्रः ऐन्द्रावैष्णव्यः शिष्टाः केवलं विष्णुदेवताकाः तथाचानुक्रान्तम् परोवैष्णवंतूरुमित्यैंद्र्यश्चतिस्रइति । गतःसूक्तविनियोगः । विष्णुदेवताकेपशौ परोमात्रयेति पुरोडाशस्ययाज्या सूत्रितश्च—परोमात्रयातन्वावृधानेरावतीधेनुमतीहिभूतमिति ।

परोमात्रयातन्वावृधानन्नतेमहित्वमन्वश्नुवन्ति ।
उभेतेविद्मरजसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्से ॥ १ ॥

परः । मात्रया । तन्वा । वृधान । न । ते । महिऽत्वम् ।
अनु । अश्नुवन्ति । उभे इति । ते । विद्म । रजसी इति ।
पृथिव्याः । विष्णो इति । देव । त्वम् । परमस्य । वित्से ॥ १ ॥

परइति सकारान्तं परस्तादित्यस्यार्थे परशब्दाच्छान्दसोसिप्प्रत्ययः परोदिवापरएनापृथिव्येतियथा । मात्रयेति पञ्चम्यर्थे व्यत्ययेन तृतीया मात्रायाः परः परस्ताद्वर्तमानया अपरिमितया तन्वा शरीरेण वृधान वर्धमान हे विष्णो ते तव महित्वं महत्त्वं नान्वश्नुवन्ति नानुव्याप्नुवन्ति त्रैविक्रमसमये यत्तवमाहात्म्यं तत्सर्वैरपि जनैर्ज्ञातुं नशक्यतइत्यर्थः । ते तव उभे रजसी उभौ लोकौ पृथिव्या आरभ्य पृथिवीमन्तरिक्षञ्च विद्म जानीमोवयं चक्षुषोपलभामहे नान्यत् हेदेव द्योतमान विष्णो त्वमेव परमस्य स्वर्गादेरुत्कृष्टलोकस्य द्वितीयार्थेषष्ठी परमं लोकं वित्से जानासि अतस्तव महत्वं नकेनापि व्याप्तुं शक्यमितिभावः ॥ १ ॥

१. विष्णु, तुम शब्द-स्पर्शादि पञ्चतन्मात्राओं से अतीत शरीर से (त्रिविक्रम वा वामन अवतार के समय) बढ़ने पर कोई तुम्हारी महिमा नहीं जान सकता। हम तुम्हारे दोनों लोकों (पृथिवी से अन्तरिक्ष तक) को जानते हैं। किन्तु तुम ही, हे देव, परम लोक को जानते हो।

पूर्वोक्तेएवपशौ नतेविष्णोइति वपायाअनुवाक्या सूत्रितश्च—नतेविष्णोजायमानोनजातस्तवविष्णोसुमतिंविश्वजन्यामिति ।

---

१ ऋ० सं० ८. ३.१७।

सैषा द्वितीया—

नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमन्तमाप ।
उदस्तभ्नानाकमृष्वंबृहन्तंदाधर्थप्राचींककुभंपृथिव्याः ॥ २ ॥

न । ते । विष्णो इति । जायमानः । न । जातः । देव । महिम्नः ।
परम् । अन्तम् । आप । उत् । अस्तभ्नाः । नाकम् । ऋष्वम् ।
बृहन्तम् । दाधर्थ । प्राचीम् । ककुभम् । पृथिव्याः ॥ २ ॥

हे देव दानादिगुणयुक्त विष्णो ते तव महिम्नः महत्त्वस्य परं विप्रकृष्टं अन्तमवसानं जायमानः प्रादुर्भवन् जनः नाप नप्राप्नोति । तथा जातः प्रादुर्भूतोपि जनोनैव प्राप्नोति तव महत्त्वस्यावसानं नास्ति अतएव सर्वैर्नज्ञायतइतिभावः कोसौ महिमा तमाह ऋष्वं दर्शनीयं बृहन्तं महान्तं नाकं द्युलोकं उदस्तभ्नाः त्वंऊर्ध्वमधारयः यथा अधोनपतति तथा पृथिव्याभूमेः संबंधिनीं प्राचीं ककुभञ्च दाधर्थ धारितवानसि उपलक्षणमेतत् सर्वस्य भूतजातस्य तथाचमंत्रान्तरम्—यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वेति ॥ २ ॥

२. विष्णुदेव, जो पृथिवी में हो चुके हैं और जो जन्म लेंगे, उनमें से कोई भी तुम्हारी महिमा का अन्त नहीं पा सकता। दर्शनीय और विराट् द्युलोक को तुमने ऊपर धारण कर रक्खा है। तुमने पृथिवी की पूर्व दिशा को धारण कर रक्खा है।

पूर्वोक्तएवपशौ इरावतीइति हविषोयाज्या सूत्रितञ्च—इरावतीधेनुमतीहिभूतं विश्वकर्मन्हविषावावृधानइति द्वेइति ।

सैषा तृतीया—

इरावतीधेनुमतीहिभूतंसूयवसिनीमनुषेदशस्या ।
व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैः ॥ ३ ॥

इरावती इतीराऽवती । धेनुमती इति धेनुऽमती । हि । भूतम् ।
सुयवसिनी इति सुऽयवसिनी । मनुषे । दशस्या । वि । अस्तभ्नाः ।
रोदसी इति । विष्णो इति । एते इति । दाधर्थ ।
पृथिवीम् । अभितः । मयूखैः ॥ ३ ॥

---

१ ऋ० सं० २. २. २४. ।

हे द्यावापृथिव्यौ मनुषे स्तुवते मनुष्याय दशस्या दित्सया युक्ते युवां इरावती अन्नवत्यौ धेनुमती गोमत्यौ सूयवसिनी शोभनयवसेच भूतमभूतम् हिशब्दः प्रसिद्धौ विष्णुना विक्रान्तत्वाद् युवामेव खलु पूर्वमभूतमित्यर्थः। हे विष्णो एते इमे रोदसी द्यावापृथिव्यौ व्यस्तभ्नाः विविधमधारयः पृथिवीमूर्ध्वमुखत्वेन द्यामधोमुखत्वेनेति विविधत्वम्।अपिच पृथिवीं प्रथितामिमां भूमिं अभितः सर्वत्रस्थितैर्मयूखैः पर्वतैर्दाधर्थ धारितवानसि यथा न चलति तथा दृढीकृतवानित्यर्थः पर्वताहि विष्णोः स्वभूताः विष्णुःपर्वतानामधिपतिरितिश्रुतेः ॥ ३ ॥

३. द्यावा-पृथिवी, तुम स्तोता मनुष्य को दान करने की इच्छा से अन्नवाली, धेनुवाली और सुन्दर जौवाली हुई हो। विष्णु, द्यावा-पृथिवी को तुमने विविध प्रकार से नीचे-ऊपर धारण कर रक्खा है। सर्वत्रस्थित पर्वत द्वारा तुमने उस पृथिवी को धारण कर रक्खा है।

उरुंयज्ञायचक्रथुरुलोकंजनयन्तासूर्यमुषासमग्निम्।
दासस्यचिद्वृषशिप्रस्यमायाजघ्नथुर्नरापृतनाज्येषु ॥ ४ ॥

उरुम्। यज्ञाय। चक्रथुः। ऊँ इति। लोकम्। जनयन्ता।
सूर्यम्। उषसम्। अग्निम्। दासस्य। चित्। वृषऽशिप्रस्य।
मायाः। जघ्नथुः। नरा। पृतनाज्येषु ॥ ४ ॥

हे इन्द्राविष्णू यज्ञाय यजमानाय उरुं विस्तीर्णं लोकं स्वर्गाख्यं चक्रथुरु कृतवन्तौखलु युवां। किं कुर्वन्तौ सूर्यं सर्वस्य प्रेरकमादित्यं उषसं तमोनिवारकमुषःकालं अग्निञ्च असुरैरावृतं जनयन्ता जनयन्तौ पुनः प्रादुर्भावयन्तौ हे नरा नेताराविन्द्राविष्णू वृषशिप्रस्य एवत्संज्ञकस्य दासस्य चिद् उपक्षपयितुः असुरस्य मायाः पृतनाज्येषु संग्रामेषु जघ्नथुः जिहिंसथुर्युवां सूर्यादिकं जनयन्तावित्युच्यते ॥ ४ ॥

४. इन्द्र और विष्णु, सूर्य, अग्नि और उषा को उत्पन्न करके तुमने यजमान के लिए विशाल स्वर्ग का निर्माण किया है। नेताओ, तुमने वृषशिप्र नाम के दास की माया को सग्राम में विनष्ट किया है।

इन्द्राविष्णूदृंहिताःशंबरस्यनवपुरोनवतिंचश्नथिष्टम्।
शतंवर्चिनःसहस्रंचसाकंहथोअप्रत्यसुरस्यवीरान्[1] ॥ ५ ॥

इन्द्राविष्णू इति। दृंहिताः। शम्बरस्य। नव। पुरः।
नवतिम्। च। श्नथिष्टम्। शतम्। वर्चिनः। सहस्रम्। च।
साकम्। हथः। अप्रति। असुरस्य। वीरान् ॥ ५ ॥

1 तै० सं० ३. ४. ५.।

हे इन्द्राविष्णू दृंहिताः दृढीकृताः नव नवतिंच नवोत्तरनवतिसंख्याकाः पुरः पुराणि शं-बरस्य स्वभूतानि श्नथिष्टम् अहिंसिष्टम् । श्नथहिंसायाम् । अपिच शतं सहस्रञ्च वर्चिनोऽसुर-स्यवीरान् अप्रति प्रतिद्वंद्विनोयथानभवन्ति तथा साकं सह संघशएव हथः अहिंसिष्टम् । यो-वर्चिनः शतमिन्द्रः सहस्रमितिहि निगमान्तरम् ॥ ५ ॥

५. इन्द्र और विष्णु, तुमने शम्बर की ९९ और दृढ़ पुरियों को नष्ट किया है। तुमने वर्चि नाम के असुर के सौ और हजार वीरों को (ताकि वे फिर सामने खड़े न हो सकें) नष्ट किया है।

इयंमनीषाबृहतीबृहन्तोरुक्रमातवसावर्धयन्ती ।
ररेवांस्तोमंविदथेषुविष्णोपिन्वतमिषोवृजनेष्विन्द्र ॥ ६ ॥

इयम् । मनीषा । बृहती । बृहन्ता । उरुऽक्रमा । तवसा ।
वर्धयन्ती । ररे । वाम् । स्तोमम् । विदथेषु । विष्णो इति ।
पिन्वतम् । इषः । वृजनेषु । इन्द्र ॥ ६ ॥

बृहती महती इयं मनीषा मननीया स्तुतिः बृहन्ता बृहन्तौ महान्तौ उरुक्रमा विस्तीर्ण-विक्रमौ विष्णुना सहैकार्थीभावात् इन्द्रस्याप्युरुक्रमत्वम् तवसा तवइति बलस्य वृद्धेर्वा नाम-धेयं तद्वन्तौ एवंभूतौ युवां वर्धयन्ती प्रवृद्धौ कुर्वती अस्माभिः कृता हे विष्णो हे इन्द्र वि-दथेषु यज्ञेषु वां युवाभ्यां स्तोमं उक्तलक्षणं स्तोत्रं ररे ददे रादानइतिधातुः तौ युवां वृजनेषु बलेषु निमित्तसप्तमी इषोन्नानि पिन्वतं अस्मभ्यं वर्धयतम् ॥ ६ ॥

६. यह महती स्तुति वृहत्, विस्तीर्ण, विक्रम से युक्त और बलवान् इन्द्र तथा विष्णु को बढ़ावेगी। विष्णु और इन्द्र, यज्ञस्थल में तुम लोगों को स्तोत्र प्रदान किया है। युद्ध में तुम हमारा अन्न बढ़ाना।

अभ्युदयेष्टौ विष्णोः शिपिविष्टस्य वषट्तइत्येषानुवाक्या सूत्रितञ्च—भद्रावेहस्तासुकृ-तोतपाणी वषट्तेविष्णवासआकृणोमीति[1] ।

सैषा सप्तमी—

वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टहव्यम् ।
वर्धन्तुत्वासुष्टुतयोगिरोमेयूयंपातस्वस्तिभिःसदानः ॥ ७ ॥ २४ ॥

वषट् । ते । विष्णो इति । आसः । आ । कृणोमि । तत् ।
मे । जुषस्व । शिपिऽविष्ट । हव्यम् । वर्धन्तु । त्वा । सुऽस्तुतयः ।
गिरः । मे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥ २४ ॥

---

1 ऋ० सं० २. ६.१३.।

हे विष्णो ते तुभ्यं आसः आस्यात् आ अभिमुखं वषट्कृणोमि वषट्करोमि वषट्कारेण हविर्ह्वयामि। हे शिपिविष्ट शिपयोरश्मयः तैराविष्ट विष्णो तत् वषट्कृतं मे मदीयं हव्यं हविर्जुषस्व सेवस्व। सुष्टुतयः शोभनस्तुत्यात्मिका गिरोवाचश्च त्वा त्वां वर्धन्तु वर्धयन्तु। अन्यद्गतम्॥७॥

७. विष्णु, तुम्हारे लिए यज्ञ में मुख से मैंने वषट्कार किया है। शिपिविष्ट (तेजवाले) विष्णु, हमारे उस हव्य का आश्रय करो। हमारी शोभन स्तुति और वाक्य तुम्हें बढ़ावें। तुम सदा स्वस्ति-द्वारा हमें पालन करो।

॥ इति पञ्चमस्य षष्ठे चतुर्विंशोवर्गः ॥२४॥

नूमर्तइति सप्तर्चं द्वादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैष्णवम् नूमर्तइत्यनुक्रान्तम् उक्थ्येच्छावाकशस्त्रे इदंशंसनीयं सूत्रितश्च—ऋतुर्जनित्रीनूमर्तोभवामित्रइति।

नूमर्तोदयतेसनिष्यन्योविष्णवउरुगायायदाशत्।
प्रयःसत्राचामनसायजातएतावन्तंनर्यमाविवासात्॥ १ ॥

नु। मर्तः। दयते। सनिष्यन्। यः। विष्णवे। उरुऽगायाय। दाशत्। प्र। यः। सत्राचा। मनसा। यजाते। एतावन्तम्। नर्यम्। आऽविवासात्॥ १ ॥

समर्तोमनुष्यः सनिष्यन् धनमिच्छन् नु क्षिप्रं दयते धनमादत्ते दयतिराङ्पूर्वोर्थेद्रष्टव्यः योमनुष्यः उरुगायाय बहुभिः कीर्तनीयाय विष्णवे दाशत् हवींषि दद्यात् यश्च सत्राचा सहाञ्चता मनसा मननेन स्तोत्रेण प्रयजाते प्रकर्षेण पूजयेत् एतावन्तं एतावत् परिमाणं महान्तं नर्यं नरेभ्योहितं विष्णुं आविवासात् नमस्कारादिभिः परिचरेत् समर्तोदयतइत्यन्वयः। यद्वा सनिष्यन्निति सनतेर्लाभार्थस्य लृटि रूपम् समर्तः सनिष्यन् धनादीनि लप्स्यमानोभवन्नेव हविरादिकं नु क्षिप्रं दयते विष्णवे ददातीति योज्यम्॥ १ ॥

१. जो मनुष्य बहुतों के कीर्त्तन-योग्य विष्णु को हव्य प्रदान करता है, जो एक साथ कहे मन्त्रों से पूजा करता है और मनुष्यों के हितैषी विष्णु की सेवा करता है, वही मनुष्य धन की इच्छा करके उसे शीघ्र प्राप्त करता है।

विष्णुदेवत्येपशौ पुरोडाशस्य त्वंविष्णोइत्यनुवाक्या सूत्रितश्च—त्वंविष्णोसुमतिंविश्वजन्यां विचक्रमेपृथिवीमेषएतामिति।

त्वंविष्णोसुमतिंविश्वजन्यामप्रयुतामेवयावोमतिंदाः।
पर्चोयथानःसुवितस्यभूरेरश्वावतःपुरुश्चन्द्रस्यरायः॥ २ ॥

त्वम् । विष्णो इति । सुऽमतिम् । विश्वऽजन्याम् । अप्रऽयुताम् ।
एवऽयावः । मतिम् । दाः । पर्चः । यथा । नः ।
सुवितस्य । भूरेः । अश्वऽवतः । पुरुऽचन्द्रस्य । रायः ॥ २ ॥

हे एवयावः एवाः माप्तव्याः कामाः तान् यावयति मापयति स्तोतॄनित्येवयावः हे एवयावन् विष्णो त्वं विश्वजन्यां सर्वजनहितां अप्रयुतां दोषैर्वियुक्तां सुमतिं मतिं अनुग्रहबुद्धिं दाः अस्मभ्यं देहि सुवितस्य सुष्ठु प्राप्तव्यस्य भूरेर्बहुलस्य अश्वावतोश्वयुक्तस्य पुरुश्चन्द्रस्य पुरूणां बहूनां आह्लादकस्य रायोधनस्य पर्चः संपर्कोनोस्माकं यथा भवति तथा देहीत्यन्वयः ॥ २ ॥

२. मनोरथ-पूरक विष्णु, सबके लिए हितकारक और दोष-रहित अनुग्रह हमें प्रदान करो। जिससे भली भाँति पाने योग्य, अनेक अश्वोंवाले और बहुतों के लिए आह्लादक धन प्राप्त किया जाय, ऐसा करो।

वैष्णव्यस्योपांशुयाजस्य त्रिर्देवइतियाज्या सूत्रितश्च—इदंविष्णुर्विचक्रमे त्रिर्देवःपृथिवीमेषएतामिति । वैष्णव्येपशावप्येषैव वपायाज्या सूत्रितश्च—त्रिर्देवःपृथिवीमेषएतां परोमात्रयातन्वावृधानेति ।

त्रिर्देवःपृथिवीमेषएतांविचक्रमेशतर्चसंमहित्वा ।
प्रविष्णुरस्तुतवसस्तवीयान्त्वेषंह्यस्यस्थविरस्यनाम ॥ ३ ॥

त्रिः । देवः । पृथिवीम् । एषः । एताम् । वि । चक्रमे ।
शतऽअर्चसम् । महिऽत्वा । प्र । विष्णुः । अस्तु । तवसः ।
तवीयान् । त्वेषम् । हि । अस्य । स्थविरस्य । नाम ॥ ३ ॥

एषदेवोदानादिगुणयुक्तोविष्णुः शतर्चसं शतसंख्यान्यर्चींषि यस्यास्तादृशीं एतां पृथिवीं उपलक्षणमेतत् पृथिव्यादीन् त्रीन् लोकान् महित्वा महत्त्वेन त्रिर्विचक्रमे त्रिभिः पदैर्विक्रान्तवान् तवसः तवस्विनोवृद्धादपि तवीयान् तवस्वितरोविष्णुः प्रास्तु अस्माकं प्रभवतु स्वामीभवतु अस्यस्थविरस्य वृद्धस्य विष्णोर्नाम नामकं रूपं विष्णुरित्येतन्नामैववा त्वेषं हि यस्माद्दीप्तं तस्मात् कारणात् सविष्णुः प्रभवत्वित्यर्थः ॥ ३ ॥

३. इन विष्णुदेव ने सौ किरणों से युक्त पृथिवी पर अपनी महिमा से तीन बार चरण-क्षेप किया अर्थात् पृथिव्यादि तीनों लोकों को (वामनावतार में) घेर डाला। वृद्ध से वृद्ध विष्णु हमारे स्वामी हों। प्रवृद्ध विष्णु का रूप दीप्ति-युक्त है।

पूर्वोक्तएवपशौ विचक्रमइति वपायाअनुवाक्या सूत्रितश्च—विचक्रमेपृथिवीमेषएतां त्रिर्देवःपृथिवीमेषएतामिति।

सैषा चतुर्थी—

विचक्रमेपृथिवीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ।
ध्रुवासोअस्यकीरयोजनासउरुक्षितिंसुजनिमाचकार ॥ ४ ॥

वि । चक्रमे । पृथिवीम् । एषः । एताम् । क्षेत्राय । विष्णुः ।
मनुषे । दशस्यन् । ध्रुवासः । अस्य । कीरयः । जनासः ।
उरुऽक्षितिम् । सुऽजनिमा । चकार ॥ ४ ॥

एषदेवोविष्णुः एतां पृथिवीं पृथिव्यादीनिमांस्त्रीन् लोकान् क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् असुरेभ्योपहृत्य प्रदास्यन् विचक्रमे विक्रान्तवान् अस्यच विष्णोः कीरयः स्तोतारोजनासोजनाः ध्रुवासो निश्चलाभवन्ति ऐहिकामुष्मिकयोर्लाभेन स्थिराभवन्तीत्यर्थः । सुजनिमा शोभनानि जनिमानि कीर्तनस्मरणादिना सुखहेतुभूतानि यस्य तादृशोविष्णुः उरुक्षितिं विस्तीर्णनिवासं चकार स्तोतृभ्यः करोति ॥ ४ ॥

४. इस पृथिवी को मनुष्य के निवास के लिए देने की इच्छा करके इन विष्णु ने पृथिवी को पदक्रमण किया था। इन विष्णु के स्तोता निश्चल होते हैं। सुजन्मा विष्णु ने विस्तृत निवास-स्थान बनाया था।

तृतीयसवने अतिरात्रादूर्ध्वं सोमातिरेकेसति नैमित्तिके होतुःशस्त्रे प्रतत्तेअद्येति स्तोत्रियस्तृचः आभ्युदयेष्टौविष्णोः शिपिविष्टस्य प्रतत्तेअद्येतियाज्या सूत्रितश्च—वषट्तेविष्णवासआकृणोमि प्रतत्तेअद्यशिपिविष्टनामेति ।

सैषा पञ्चमी—

प्रतत्तेअद्यशिपिविष्टनामार्यःशंसामिवयुनानिविद्वान् ।
तंत्वागृणामितवसमतव्यान्क्षयन्तमस्यरजसःपराके ॥ ५ ॥

प्र । तत् । ते । अद्य । शिपिऽविष्ट । नाम । अर्यः । शंसामि ।
वयुनानि । विद्वान् । तम् । त्वा । गृणामि । तवसम् । अतव्यान् ।
क्षयन्तम् । अस्य । रजसः । पराके ॥ ५ ॥

हे शिपिविष्ट रश्मिभिराविष्ट विष्णो ते तव तत्प्रसिद्धं विष्णुरिति प्रख्यातं नाम अर्यः स्वामी स्तुतीनां हविषां वा तथा वयुनानि ज्ञातव्यान्यर्थजातानि विद्वान् जानन्नहं अद्येदानीं

प्रशंसामि प्रकर्षेण स्तौमि तवसं प्रवृद्धं तं त्वा त्वां विष्णुं अतव्यान् अतवीयान् अवृद्धतरोहं गृणामि स्तौमि कीदृशं अस्य रजसोलोकस्य पराके दूरदेशे क्षयन्तं निवसन्तम् ॥ ५ ॥

५. शिपिविष्ट विष्णु, आज हम स्तुतियों के स्वामी और ज्ञातव्य विषयों को जानकर तुम्हारे उस प्रसिद्ध नाम का कीर्त्तन करेंगे। तुम प्रवृद्ध हो और हम अवृद्ध हैं, तो भी तुम्हारी स्तुति करेंगे; क्योंकि तुम रज (लोक) के पार में रहते हो।

अथ षष्ठी—

किमित्तेविष्णोपरिचक्ष्यंभूत्प्रयद्ववक्षेशिपिविष्टोअस्मि ।
मावर्पोअस्मदपगूहएतद्यदन्यरूपःसमिथेबभूथ ॥ ६ ॥

किम् । इत् । ते । विष्णो इति । परिऽचक्ष्यम् । भूत् । प्र । यत् ।
ववक्षे । शिपिऽविष्टः । अस्मि । मा । वर्पः । अस्मत् । अप ।
गूहः । एतत् । यत् । अन्यऽरूपः । सम्ऽइथे । बभूथ ॥ ६ ॥

पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमरूपान्तरं धारयन् संग्रामे वसिष्ठस्य साहाय्यंचकार तंजानन् ऋषिरनया प्रत्याचष्टे । अत्रनिरुक्तम्—शिपिविष्टोविष्णुरिति विष्णोर्द्वेनामनीभवतः कुत्सितार्थीयंपूर्वं भवतीत्यौपमन्यवः किंते विष्णो प्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेपइव निर्वेष्टितोस्मीत्यप्रतिपन्नरश्मिरपिवा प्रशंसानामैवाभिप्रेतंस्यात् किं ते विष्णो प्रख्यातमेतद्भवत्यप्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोस्मीति प्रतिपन्नरश्मिः शिपयोत्ररश्मयउच्यन्ते तैराविष्टोभवति मावर्पोअस्मदपगूहएतत् वर्पइतिरूपनाम वृणोतीति सतोयदन्यरूपः समिथे संग्रामेभवसि संयतरश्मिरिति[1] । तत्र कुत्सितार्थपक्षे योजना हेविष्णो ते तव तन्नामास्मभ्यं प्रववक्षे प्रब्रूषे शिपिविष्टोस्मीति अन्तर्णीतोपमानमेतत् शेपइवनिर्वेष्टितः तेजसा अनाच्छादितोभवामीति तदश्लीलार्थत्वादिदं नाम न प्रशस्तमित्यर्थः । तन्नाम किं परिचक्ष्यं वर्जनीयं परित्याज्यं विरुद्धार्थप्रतिपादकत्वात् स्वतएव परित्यक्तं हि तत् । शिष्टं समानंपूर्वेण अतउक्तरूपविलक्षणं यद्वैष्णवरूपमस्ति एतद्वर्पोरूपं अस्मत् अस्माकं मापगूहः अपगूढं संवृतं मा कुरु गुहूसंवरणे अपितु तदेवरूपं प्रकटय वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत् यत् यस्मात्तु अन्यत् रूपान्तरमेव धारयन् समिथे संग्रामे बभूथ अस्माकं सहायोभवसि तस्मादिदं गूहनं न कार्यमिति । प्रशंसापक्षेतु हेविष्णो ते तव तन्नाम किं परिचक्ष्यं भूत् किं प्रख्यापनीयं भवति न प्रख्यापनीयं । किं तन्नाम । शिपिविष्टोरश्मिभिराविष्टोस्मीति यन्नाम प्रब्रूषे यतएवं प्रख्यातरूपस्त्वं अतोस्माकं एतद्वैष्णवं रूपं संवृतं माकार्षीः

---

1. नि० ५. ७.

इदानीं गूढरूपोपि यद्यस्मात्त्वं समिथे संग्रामे अन्यरूपः कृत्रिमरूपात् यदन्यद्वैष्णवं रूपं शौर्यादिलक्षणं तादृग्रूपः एव बभूथ भवसि तस्मात्त्वं गूढोपि ज्ञायसएवेति व्यर्थमेव तस्य रूपस्य गूहनं अतोबहुतेजस्कं यद्वैष्णवं रूपं तदस्माकं प्रदर्शयेति तात्पर्यार्थः ॥ ६ ॥

६. विष्णु, मैं जो "शिपिविष्ट" (संयत-रश्मि) नाम कहता हूँ, उसे प्रख्यापित (अस्वीकार) करना क्या तुम्हें उचित है ? युद्ध में तुमने अन्य प्रकार का रूप धारण किया है। हमारे पास से अपना शरीर नहीं छिपाओ।

**वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टहव्यम् ।**
**वर्धन्तुत्वासुष्टुतयोगिरोमेयूयंपातस्वस्तिभिःसदानः ॥ ७ ॥ २५ ॥**

**वषट् । ते । विष्णो इति । आसः । आ । कृणोमि । तत् । मे ।**
**जुषस्व । शिपिऽविष्ट । हव्यम् । वर्धन्तु । त्वा । सुऽस्तुतयः ।**
**गिरः । मे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥ २५ ॥**

व्याख्यातेयम् अक्षरार्थस्तु हे विष्णो तुभ्यं आस्यात् आस्येन वषट्करोमि वषट्कृतं तन्मदीयं हविः हे शिपिविष्ट सेवस्व शोभनस्तुतिरूपामदीयावाचश्च त्वां वर्धयन्त्विति। शिष्टपादः सिद्धः ॥ ७ ॥

७. विष्णु, तुम्हारे लिए मुख से मैं वषट्कार करता हूँ; इसलिए, हे शिपिविष्ट, मेरे उस हव्य का आश्रय करो। मेरी सुन्दर स्तुति और वाक्य तुम्हें वर्द्धित करें। तुम सदा हमें स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य षष्ठे पञ्चविंशोवर्गः ॥ २५ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥
इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येपञ्चमाष्टकेषष्ठोध्यायः॥६॥

## ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदा योवेदेभ्योखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ सप्तमोऽव्याख्यायते—सप्तममण्डलस्य षष्ठेनुवाके द्वादशसूक्तानि व्याख्यातानि । तिस्रोवाचइतिषळृचं त्रयोदशं सूक्तम् अत्रानुक्रम्यते—तिस्रःषट् पार्जन्यंत्विति । एते कुमारआग्नेयोपश्यद्वसिष्ठएववेति वक्ष्यमाणत्वादग्निपुत्रः कुमारऋषिः वसिष्ठोवा अनुक्तत्वात्त्रिष्टुप् इदमुत्तरञ्च पर्जन्यदैवत्यम् । अत्र शौनकः—आस्यदघ्नं विगाह्यापः प्राङ्मुखः प्रयतः शुचिः । सूक्ताभ्यां तिस्रआदिभ्यामुपतिष्ठेत भास्करम् । अनश्नतैतज्जप्तव्यं वृष्टिकामेन यत्नतः । पंचरात्रेप्यतिक्रान्ते महतीं वृष्टिमाप्नुयादिति ॥

तत्र प्रथमा—

ॐम् तिस्रोवाचःप्रवंदुज्योतिरग्राया एतद्दुह्रेमधुदोघमूधः ।
सवत्संकुण्वन्गर्भमोषधीनांसद्योजातोवृषभोरोरवीति ॥ १ ॥

तिस्रः । वाचः । प्र । वद । ज्योतिःऽअग्राः । याः । एतत् ।
दुह्रे । मधुऽदोघम् । ऊधः । सः । वत्सम् । कृण्वन् ।
गर्भम् । ओषधीनाम् । सद्यः । जातः । वृषभः । रोरवीति ॥ १ ॥

ऋषिरात्मानं स्तुतौ प्रेरयति हे ऋषे तिस्रः त्रिविधाः ऋग्यजुःसामात्मिकाः स्तुतिरूपावाचःप्रवद प्रब्रूहि कीदृश्योवाचः ज्योतिर्द्योतमानः प्रणवःअग्रे प्रमुखोयासांतादृशीः या वाचः मधुदोघं मधुनउदकस्य दोहकं वृष्ट्युदकस्य कर्तारं एतत् नभसि दृश्यमानं ऊधः उद्धतं मेघं यद्वा लुप्तोपममेतत् ऊध इव पयसआश्रयभूतं मेघं दुह्रे दुहते दुहेर्लटिलोपस्तआत्मनेपदेष्विति तलोपः बाहुलकोरुट् स्तोत्रैः प्रीतोहि पर्जन्यः मेघैर्वर्षयति अतो वाचएव दुहन्तीत्युपचर्यते यद्वा वदेति व्यत्ययेन मध्यमः तिस्रइति द्रुतविलम्बितमध्यमभेदेन त्रिविधाः ज्योतिरग्राः विद्युत्प्रमुखावाचः प्रवदतेति या गर्जितलक्षणावाचः वृष्टिप्रदमेतं मेघं दुह्रे उदकानि दुहन्ति एवंभूतः सच पर्जन्यः वत्सं सह निवसन्तं वैद्युताग्निं कृण्वन्प्रादुष्कुर्वन् तमेव ओषधीनां व्रीह्यादीनांच गर्भं कुर्वन् सद्यः शीघ्रं जातः प्रादुर्भूतो वृषभो वर्षितासन् रोरवीति भृशं शब्दायते ॥ १ ॥

१. अग्र भाग में ओङ्कार (वा बिजली) वाले ऋक्, यजुः और साम नाम के (अथवा द्रुत, विलम्बित और मध्यम नाम के) जो तीन प्रकार के वाक्य (वा मेघ-ध्वनि) जल को दूहते हैं, उन्हीं वाक्यों वा ध्वनियों को कहो । पर्जन्य ही सहवासी विद्युदग्नि को उत्पन्न करते हुए और ओषधियों (वा धान्यों) का गर्भ उत्पन्न करते हुए, शीघ्र ही उत्पन्न होकर, वृषभ की तरह (वा वर्षक होकर), शब्द करते हैं।

अथ द्वितीया—

योवर्धनओषधीनांयोअपांयोविश्वस्यजगतोदेवईशे ।
सत्रिधातुशरणंशर्मयंसत्त्रिवर्तुज्योतिःस्वभिष्टय[1]स्मे ॥ २ ॥

यः । वर्धनः । ओषधीनाम् । यः । अपाम् । यः । विश्वस्य ।
जगतः । देवः । ईशे । सः । त्रिऽधातु । शरणम् । शर्म । यंसत् ।
त्रिऽवर्तु । ज्योतिः । सुऽअभिष्टि । अस्मे इति ॥ २ ॥

यः पर्जन्य ओषधीनां वर्धनो वर्धयिता यश्च अपामुदकानां वर्धकः यश्च देवोद्योतमानः पर्जन्यो विश्वस्य सर्वस्य जगतः ईशे ईष्टे लोपस्तआत्मनेपदेष्विति तलोपः अधीगर्थेति कर्मणि शेषत्वेन विवक्षिते षष्ठी अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः यद्वृत्तान्नित्यमिति निघातप्रतिषेधः सपर्जन्यः त्रिधातु त्रिभूमिकं शरणं गृहं शर्म सुखं च यंसत् यच्छतु अस्मभ्यं ददात्वित्यर्थः । यमेर्लेटचडागमः सिब्बहुलमिति सिप् इतश्चलोपइतीकारलोपः तथा त्रिवर्तु त्रिष्वृतुषु अतिशयेन वर्तमानं श्रूयतेहि—त्रीणिवा आदित्यस्य तेजांसि वसन्ताप्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णइति । एवंविधं स्वभिष्टि स्वभ्येषणं ज्योतिस्तेजश्च अस्मे अस्मभ्यं प्रयच्छतु ॥ २ ॥

२. जो ओषधियों और जल के वर्द्धक हैं, जो सारे संसार के ईश्वर हैं, वह पर्जन्यदेव तीन प्रकार की भूमियों से युक्त गृह और सुख दें। वह तीन ऋतुओं (सूर्य की ज्योति वसन्त में प्रातः, ग्रीष्म में मध्याह्न और शरद् में अपराह्ण में विशेष प्रकाशक होती है) में वर्त्तमान सुन्दर गमनवाली ज्योति हमें दो।

स्तरीरुत्वद्भवतिसूतउत्वद्यथावशंतन्वंचक्रएषः ।
पितुःपयःप्रतिगृभ्णातिमातातेनपितावर्धतेतेनपुत्रः ॥ ३ ॥

स्तरीः । ऊँ इति । त्वत् । भवति । सूते । ऊँ इति । त्वत् ।
यथाऽवशम् । तन्वम् । चक्रे । एषः । पितुः । पयः । प्रति ।
गृभ्णाति । माता । तेन । पिता । वर्धते । तेन । पुत्रः ॥ ३ ॥

त्वदिति तकारान्तोन्यशब्दपर्यायोनुदात्तः सर्वनामसुपठितः अस्य पर्जन्यस्य त्वत् अन्यद्रूपं स्तरीः निवृत्तप्रसवागौः सा यथा नदोग्ध्री तद्वद्वर्षुकं न भवति उइति पूरकः द्वितीयउशब्दश्चार्थे त्वत् अन्यच्चरूपम् सूते धेनुवत्प्रसूते उदकानि प्रवर्षति एष पर्जन्यः तन्वं स्वकीयं शरीरं यथावशं यथाकामं स्तरीत्वेन धेनुत्वेन च चक्रेकरोति अपिच पितुर्दिवःसकाशात् पयः वृष्टयु-

1 तै० सं० २. १. २. ।

दकं माता पृथिवी प्रतिगृभ्णाति प्रतिगृह्णाति हग्रहोर्भइति भत्वम् प्रतिगृहीतेन तेन हविरात्मना परिणतेन पिता द्युलोकोवर्धते तेनैवोदकेन पुत्रः पृथिव्यां भवः प्राणिसंघोपि वर्धते ॥ ३ ॥

३. पर्जन्य का एक रूप निवृत्तप्रसवा गौ की तरह है और दूसरा रूप जल-वर्षक है। ये इच्छानुसार अपने शरीर को बनाते हैं। माता (पृथिवी) पिता (द्युलोक) से पय (दूध) लेती है, जिससे द्युलोक (पिता) और प्राणिवर्ग (पुत्र), दोनों वर्द्धित होते हैं।

यस्मिन्विश्वानिभुवनानितस्थुस्तिस्रोद्यावस्त्रेधासस्रुरापः ।
त्रयःकोशासउपसेचनासोमध्वंश्चोतन्त्यभितोविरप्शम् ॥ ४ ॥

यस्मिन् । विश्वानि । भुवनानि । तस्थुः । तिस्रः । द्यावः । त्रेधा । सस्रुः । आपः । त्रयः । कोशासः । उपऽसेचनासः । मध्वः । श्चोतन्ति । अभितः । विऽरप्शम् ॥ ४ ॥

यस्मिन्पर्जन्ये विश्वानि भुवनानि सर्वाणि भूतजातानि तस्थुस्तिष्ठंति यदधीनवृत्तीनि भवन्तीत्यर्थः । यस्मिंश्च द्यावोद्युप्रभृतयोलोका अवतिष्ठन्ते यस्माच्च आपस्त्रेधा सस्रुः प्राच्यः प्रतीच्योवाच्यश्च सत्यो निर्गच्छन्ति उपसेचनासः उपसेक्तारः त्रयः पौरस्त्यः प्रतीच्यउदीच्यश्चेति त्रिप्रकाराः कोशासोमेघाः विरप्शं महान्तं पर्जन्यमभितः परितः मध्वः कर्मणिषष्ठी मधु उदकं श्चोतन्ति क्षारयन्ति वर्षन्ति ॥ ४ ॥

४. जिनमें सभी भुवन (प्राणी) अवस्थित हैं, जिनमें द्युलोक आदि तीनों लोक अवस्थित हैं, जिनसे जल तीन प्रकार (पूर्व, पश्चिम और नीचे) से निकलता है और जिन पर्जन्य के चारों ओर उपसेचन करनेवाले तीन प्रकार (पूर्व, पश्चिम और ऊपर) के मेघ जल बरसाते हैं, वे ही पर्जन्यदेव हैं।

इदंवचःपर्जन्यायस्वराजेहृदोअस्त्वन्तरंतज्जुजोषत् ।
मयोभुवोवृष्टयःसन्त्वस्मेसुपिप्पलाओषधीर्देवगोपाः ॥ ५ ॥

इदम् । वचः । पर्जन्याय । स्वऽराजे । हृदः । अस्तु । अन्तरम् । तत् । जुजोषत् । मयःऽभुवः । वृष्टयः । सन्तु । अस्मे इति । सुऽपिप्पलाः । ओषधीः । देवऽगोपाः ॥ ५ ॥

इदं वचोवचनं स्तोत्रं स्वराजे स्वायत्तदीप्तये पर्जन्याय क्रियते एतच्च हृदस्तदीयस्य हृदयस्य अन्तरं अन्तर्गतमस्तु सचतत्स्तोत्रं जुजोषत् सेवताम् जुषी प्रीतिसेवनयोः लेटयडागमः छान्दसः शपःश्लुः । मयोभुवः सुखस्य भावयित्र्यो वृष्टयः अस्मे अस्माकं तत्प्रसादात् सन्तु भवन्तु तथा देवगोपाः देवः पर्जन्यो गोपायिता रक्षिता यासां तथाविधाओषधीरोषधयश्च सुपिप्पलाः सुफलाअस्माकंभवन्तु ॥ ५ ॥

५. स्वयं प्रकाश पर्जन्य के लिए यह स्तोत्र किया जाता है। वे स्तोत्र ग्रहण करें। वह उनके लिए हृदय-ग्राही हो। हमारे लिए सुखकर वृष्टि गिरे। जिनके रक्षक पर्जन्य हैं, वे ओषधियाँ सुफलवती हों।

सरेतोधावृषभःशश्वतीनांतस्मिन्नात्माजगतस्तस्थुषश्च।
तन्मऋतंपातुशतशारदाययूयंपातस्वस्तिभिःसदानः ॥ ६ ॥ १ ॥

सः। रेतःऽधाः। वृषभः। शश्वतीनाम्। तस्मिन्। आत्मा।
जगतः। तस्थुषः। च। तत्। मा। ऋतम्। पातु। शतऽशारदाय।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ६ ॥ १ ॥

सपर्जन्यः शश्वतीनां बह्वीनामोषधीनां रेतोधाः रेतसउदकस्य बीजभूतस्य धाता विनिधाता भवति वृषभइत्युपमा यथा कश्चिद्वृषभः बह्वीनां गवां गर्भस्याधाता भवति तद्वत् अतस्तस्मिन् पर्जन्ये जगतो जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा देहो वर्तते तत्पर्जन्येन दत्तं ऋतमुदकं मा मां शतशारदाय शतसंवत्सरजीवनार्थं पातु रक्षतु माशब्दस्य ऋत्यकइति प्रकृतिभावो ह्रस्वत्वञ्च। अन्यद्गतम् ॥ ६ ॥

६. वृषभ की तरह वे पर्जन्य अनेक ओषधियों के लिए रेत (जल) के धारक हैं। स्थावर और जङ्गम की देह (आत्मा) पर्जन्य में ही रहती है। पर्जन्य का दिया हुआ जल सौ वर्ष तक जीने के लिए मेरी रक्षा करो। तुम हमें सदा स्वस्ति-द्वारा पालन करो।

॥ इति पञ्चमस्य सप्तमे प्रथमो वर्गः ॥ १ ॥

पर्जन्यायेति तृचं चतुर्दशं सूक्तं गायत्रम् पूर्ववदृषिदेवते तथाचानुक्रान्तम्—पर्जन्यायतृचं गायत्रमिति वैश्वानरपार्जन्यायामन्वारंभणीयायां पार्जन्यस्य चरोः पर्जन्यायेत्यनुवाक्या सूत्र्यतेहि—पर्जन्यायप्रगायत प्रवातावान्तिपतयन्तिविद्युतइति।

पर्जन्यायप्रगायतदिवस्पुत्रायमीळ्हुषे। सनोयवसमिच्छतु ॥ १ ॥

पर्जन्याय। प्र। गायत। दिवः। पुत्राय। मीळ्हुषे।
सः। नः। यवसम्। इच्छतु ॥ १ ॥

हे स्तोतारः पर्जन्याय देवाय प्रगायत प्रकर्षेण स्तोत्रमुच्चारयत कीदृशाय दिवोन्तरिक्षस्य पुत्राय तत्र हि पर्जन्यः प्रादुर्भवति मीळ्हुषे सेक्त्रे सतादृशः पर्जन्यो नोस्मभ्यं यवसं ओषध्यादिलक्षणमन्नं दातुमिच्छतु ॥ १ ॥

१. स्तोताओ, अन्तरिक्ष के पुत्र और सेचक पर्जन्य के लिए स्तोत्र गाओ।

अथ द्वितीया—

योगर्भमोषधीनांगवांकृणोत्यर्वताम् । पर्जन्यःपुरुषीणाम् ॥ २ ॥

यः । गर्भम् । ओषधीनाम् । गवाम् । कृणोति ।
अर्वताम् । पर्जन्यः । पुरुषीणाम् ॥ २ ॥

यः पर्जन्यः ओषधीनां व्रीह्यादीनां गवां अर्वतां अर्वतीनां वडवानां पुरुषीणां नारीणां च यः पर्जन्यः गर्भं प्रसूतिहेतुं बीजं उदकरूपं कृणोतिकरोति तस्मै पर्जन्यायेत्युत्तरत्र संबन्धः ॥२॥

२.-जो पर्जन्यदेव ओषधियों, गौओं, वड़वाओं (अश्वजातियों) और स्त्रियों के लिए गर्भ उत्पन्न करते हैं—

तस्माइदास्येहविर्जुहोतामधुमत्तमम् । इळांनःसंयतंकरत् ॥ ३ ॥ २ ॥

तस्मै । इत् । आस्ये । हविः । जुहोत । मधुमत्ऽतमम् ।
इळाम् । नः । सम्ऽयतम् । करत् ॥ ३ ॥ ॥ २ ॥

तस्माइत् तस्माएव पर्जन्याय आस्ये देवानामास्यभूते अग्नौ मधुमत्तमं रसवत्तमं हविर्जुहोत जुहुत हे ऋत्विजः । सच पर्जन्यो नोस्मभ्यं इळामन्नं संयतं सम्यक् नियतं यथाभवति तथा करत् करोतु ददात्विति यावत् ॥ ३ ॥

३. उन्हीं के लिए देवों के मुख-रूप अग्नि में अत्यन्त रसवान् हव्य का हवन करो। वे हमारे लिए नियत अन्न दें।

॥ इति पञ्चमस्य सप्तमे द्वितीयो वर्गः ॥ २ ॥

संवत्सरमिति दशर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् आद्यात्वनुष्टुप् मंडूकादेवता तथाचानुक्रान्तम्—संवत्सरं दश पर्जन्यस्तुतिसंतुष्टान्मण्डूकांस्तुष्टावाद्यानुष्टुबिति वृष्टिकामेनैतत्सूक्तं जप्यम् ।

तत्र प्रथमा—

संवत्सरंशशयानाब्राह्मणाव्रतचारिणः ।
वाचंपर्जन्यजिन्वितांप्रमण्डूकाअवादिषुः ॥ १ ॥

संवत्सरम् । शशयानाः । ब्राह्मणाः । व्रतऽचारिणः ।
वाचम् । पर्जन्यऽजिन्विताम् । प्र । मण्डूकाः । अवादिषुः ॥ १ ॥

अत्र निरुक्तम्—वसिष्ठोवर्षकामः पर्जन्यं तुष्टाव तं मण्डूका अन्वमोदन्त समण्डूकाननु-मोदमानान्दृष्ट्वा तुष्टावेति मण्डूकामज्जूकामज्जनान्मदतेर्वामोदतिकर्मणोमन्दतेर्वातृप्तिकर्मणोमण्ड-यतेरिति वैय्याकरणामण्डएषामोकइतिवा मण्डो मदेर्वा मुदेर्वातेषामेषाभवतीति । व्रतचारिणः व्रतं संवत्सरसत्रात्मकं कर्म आचरन्तोब्राह्मणाः लुप्तोपममेतत् एवं भूताब्राह्मणाइव संवत्सरं शरत्प्रभृ-ति आवर्षर्तेरिकं संवत्सरं शशयानाः शिश्यानाः वर्षणार्थं तपश्चरन्तइव बिलएव सन्तः एते म-ण्डूकाः पर्जन्यजिन्वितां पर्जन्येन प्रीतां यया वाचा पर्जन्यः प्रीतोभवति तादृशीं वाचं प्रावादि-षुः प्रवदन्ति ॥ १ ॥

१. एक वर्ष का व्रत करनेवाले स्तोता की तरह वर्ष भर तक सोये हुए रहकर मण्डूक (मेढ़क) पर्जन्य (मेघ-विशेष) के लिए प्रसन्नता-कारक वाक्य कहते हैं।

दि॒व्याआपो॑अ॒भियदे॑न॒माय॑न्दृतिं॒नशु॒ष्कं॑स॒र॒सीशया॑नम् ।
गवा॒मह॒नमा॒युर्व॒त्सिनी॑नां॒म॒ण्डूका॑नांव॒ग्नुरत्रा॒सर्मेति ॥ २ ॥

दि॒व्याः । आप॑ः । अ॒भि । यत् । ए॒न॒म् । आय॑न् । दृतिम् । न । शुष्क॑म् । स॒र॒सी इति॑ । शया॑नम् । गवा॑म् । अह॑ । न । मा॒युः । व॒त्सिनी॑नाम् । म॒ण्डूका॑नाम् । व॒ग्नुः । अत्र॑ । सम् । ए॒ति॒ ॥ २ ॥

दिवा दिविभवाआपः दृतिं न दृतिमिव शुष्कं नीरसं सरसी महत्सरः सरसी गौरादिलक्ष-णोङीप् सरस्यां सुपांसुलुगिति सप्तम्यालुक् । ईदूतौचसप्तम्यर्थइति प्रगृह्यसंज्ञा । महति सरसि निर्जले घर्मकाले शयानं निवसन्तं एनं मण्डूकगणं यद्यदा आयन् अभिगच्छन्ति तदा अत्रा-स्मिन् वर्षणे पर्जन्ये वा सति वत्सिनीनां वत्सयुक्तानां गवां न मायुः गवां शब्दइव मण्डूकानां वग्नुः शब्दः समेति सङ्गच्छते तथा वत्सैः सङ्गतासु गोषु महान्घोषो जायते तद्वद्वृष्टे पर्जन्ये महान्कलकलशब्दो जायते इत्यर्थः । अहेति पूरकः ॥ २ ॥

२. सूखे चमड़े की तरह सरोवरों में सोये हुए मण्डूकों के पास जिस समय स्वर्गीय जल आता है, उस समय बछड़ावाली धेनु की तरह मण्डूकों का कल-कल शब्द होता है।

अथ तृतीया—

यदी॑मेनाँ॑उश॒तोअ॒भ्यव॑र्षीत्तृ॒ष्याव॑तः प्रा॒वृष्याग॑तायाम् ।
अ॒क्ख॒ली॒कृत्या॑पि॒तरं॒नपु॒त्रोअ॒न्योअ॒न्यमु॒पव॑द॑न्तमेति ॥ ३ ॥

---

१ नि० ९. ६.।

यत् । ईम् । एनान् । उशतः । अभि । अवर्षीत् । तृष्याऽवंतः ।
प्रावृषि । आऽगंतायाम् । अक्खलीकृत्यं । पितरम् । न ।
पुत्रः । अन्यः । अन्यम् । उप । वदन्तम् । एति ॥ ३ ॥

उशतः कामयमानान् तृष्यावतः तृष्णावत एनान्मण्डूकान्प्रावृषि वर्षर्तौ आगतायां आगते सति यद्यदा अभ्यवर्षीत् पर्जन्योजलैरभिषिञ्चति ईमिति पूरणः तदानीं अक्खलीकृत्य अक्खलइति शब्दानुकरणम् अक्खलशब्दं कृत्वा पुत्रः पितरं न पितरमिव अन्यो मंडूकः वदन्तं शब्दयन्तमन्यं मण्डूकं उपैति प्राप्नोति ॥ ३ ॥

३. वर्षा-काल के आने पर जिस समय पर्जन्य अभिलाषी और पिपासु मेढकों को घल से सींचते हैं, उस समय जैसे पुत्र "अक्खल" शब्द करते हुए पिता के पास जाता है, वैसे ही एक मेढक दूसरे के पास जाता है।

अन्योअन्यमनुगृभ्णात्येनोरपांप्रसर्गेयदमन्दिषाताम् ।
मण्डूकोयदभिवृष्टःकनिष्कन्पृश्निःसंपृंक्तेहरितेनवाचम् ॥ ४ ॥

अन्यः । अन्यम् । अनु । गृभ्णाति । एनोः । अपाम् । प्रऽसर्गे ।
यत् । अमन्दिषाताम् । मंडूकः । यत् । अभिऽवृष्टः ।
कनिस्कन् । पृश्निः । सम्ऽपृंक्ते । हरितेन । वाचम् ॥ ४ ॥

एनोः एनयोर्द्वयोर्मण्डूकयोः अन्योमण्डूकः अन्यं मण्डूकं अनुगम्य गृभ्णाति गृह्णाति अपां उदकानां प्रसर्गे प्रसर्जने वर्षणे सति यद्यदा अमन्दिषातां हृष्टावभूताम् यद्यदा च अभिवृष्टः पर्जन्येनाभिषिक्तः कनिष्कन् स्कन्दयतेर्यङ्लुङन्तस्य रूपम् भृशं स्कन्दं उत्प्लवं कुर्वन्पृश्निः पृश्निवर्णोमण्डूकः हरितेन हरितवर्णेनान्येन मण्डूकेन वाचं संपृंक्ते संयोजयत उभावपि एकविधं शब्दं कुर्वाते तदानीमन्यः अन्यमनुगृभ्णातीत्यन्वयः ॥ ४ ॥

४. जल गिरने पर जिस समय दो जातियों के मण्डूक प्रसन्न होते हैं और जिस समय पर्जन्य-द्वारा सींचे जाकर लम्बी छलांगें भरते हुए भूरे रंग के मेढक हरित वर्ण के मेढक के साथ शब्द करते हैं, उस समय एक मण्डूक दूसरे पर अनुग्रह करता है।

अथ पञ्चमी—

यदेषामन्योअन्यस्यवाचंशाक्तस्येववदतिशिक्षमाणः ।
सर्वंतदेषांसमृधेवपर्वयत्सुवाचोवदथनाध्यप्सु ॥ ५ ॥ ३ ॥

यत् । एषाम् । अन्यः । अन्यस्य । वाचम् । शाक्तस्यऽइव ।
वदति । शिक्षमाणः । सर्वम् । तत् । एषाम् । समृधाऽइव ।
पर्व । यत् । सुऽवाचः । वदथन । अधि । अप्ऽसु ॥ ५ ॥ ३ ॥

हे मण्डूकाः यद्यदा एषां युष्माकं मध्ये अन्योमण्डूकः अन्यस्य मण्डूकस्य वाचं वदत्यनुवदति अनुकरोति शिक्षमाणः शिक्ष्यमाणः शिष्यः शाक्तस्येव शक्तिमतः शिक्षकस्य वाचं यथा अनुवदति तद्वत् । यत् यदा च सुवाचः शोभनवाचोयूयं सर्वे अप्सु वृष्टेषूदकेषु अध्युपरिप्लवन्तः वदथन वदत शब्दंकुरुत तत्तदा एषां युष्माकं सर्वं पर्व परुष्मत् शरीरं समृधेव समृद्धमेव अविकलावयवमेव भवति इव शब्दोवधारणे घर्मकाले मृद्भावमापन्नामण्डूकाः पुनर्वर्षणे सति अविकलांगाः प्रादुर्भवन्तीत्यर्थः ॥ ५ ॥

५. शिष्य-गुरु की तरह जिस समय इन मेढकों में एक दूसरे की ध्वनि का अनुकरण करता है और जिस समय हे मण्डूकगण, तुम लोग सुन्दर शब्दवाले होकर जल के ऊपर छलांगें भरते हुए शब्द करते हो, उस समय तुम्हारे शरीर के सारे जोड़ ठीक हो जाते हैं।

॥ इति पञ्चमस्य सप्तमे तृतीयो वर्गः ॥ ३ ॥

गोमायुरेकोअजमायुरेकःपृश्निरेकोहरितएकएषाम् ।
समानंनामबिभ्रतोविरूपाःपुरुत्रावाचंपिपिशुर्वदन्तः ॥ ६ ॥

गोऽमायुः । एकः । अजऽमायुः । एकः । पृश्निः । एकः ।
हरितः । एकः । एषाम् । समानम् । नाम । बिभ्रतः ।
विऽरूपाः । पुरुऽत्रा । वाचम् । पिपिशुः । वदन्तः ॥ ६ ॥

एषां मण्डूकानां मध्ये एकोमण्डूकः गोमायुः गोरिव मायुः शब्दोयस्य तादृशोभवति एकः अन्योमण्डूकः अजमायुः अजस्य मायुरिव मायुर्यस्य तादृशोभवति एकः पृश्निः पृश्निवर्णः एकोपरः हरितो हरितवर्णः एवं विरूपानानारूपाअपि समानमेकं मण्डूकाइति नाम बिभ्रतोधारयन्तः पुरुत्रा बहुषु देशेषु वाचं वदन्तः शब्दं कुर्वन्तः पिपिशुःअवयवी भवन्ति प्रादुर्भवन्ति पिशअवयवे पुरुशब्दाद्देवमनुष्येत्यादिनात्राप्रत्ययः ॥ ६ ॥

६. मेढकों में किसी की ध्वनि गौ की तरह है और किसी की बकरे की तरह। कोई धूम्रवर्ण का है कोई हरे रंग का। नाम तो सबका एक है; किन्तु रूप नाना प्रकार के हैं। ये अनेक देशों में, ध्वनि करते हुए, प्रकट होते हैं।

ब्राह्मणासोअतिरात्रेनसोमेसरोनपूर्णमभितोवदन्तः ।
संवत्सरस्यतदहःपरिष्ठयन्मण्डूकाःप्रावृषीणंबभूव ॥ ७ ॥

ब्राह्मणासः । अतिऽरात्रे । न । सोमे । सरः । न । पूर्णम् ।
अभितः । वदन्तः । संवत्सरस्य । तत् । अहः । इति । परि ।
स्थ । यत् । मंडूकाः । प्रावृषीणम् । बभूव ॥ ७ ॥

रात्रिमतीत्य वर्तते इत्यतिरात्रः अतिरात्रे न सोमे । यथा अतिरात्राख्ये सोमयागे ब्राह्मणासो ब्राह्मणाः रात्रौ स्तुतशस्त्राणि पर्यायेण शंसन्ति हे मण्डूकाः द्वितीयोनशब्दः संप्रत्यर्थे न सम्प्रति पूर्णे सरः अभितः सर्वतः तथा वदन्तः रात्रौ शब्दं कुर्वाणायूयं तदहः तद्दिनं परिष्ठ परितः सर्वतोभवथ यदहः प्रावृषीणं प्रावृषेण्यं प्रावृषिभवं बभूव तस्मिन्नहनि सर्वतोवर्तमानाभवथेत्यर्थः ॥ ७ ॥

७. मण्डूको, अतिरात्र नाम के सोम-यज्ञ में स्तोताओं की तरह इस समय भरे हुए सरोवर में चारों ओर शब्द करते हुए (जिस दिन खूब वृष्टि होती है, उस दिन) चारों ओर रहो।

ब्राह्मणासःसोमिनोवाचमक्रतब्रह्मकृण्वन्तःपरिवत्सरीणम् ।
अध्वर्यवोघर्मिणःसिष्विदानाआविर्भवन्तिगुह्यानकेचित् ॥ ८ ॥

ब्राह्मणासः । सोमिनः । वाचम् । अक्रत । ब्रह्म । कृण्वन्तः ।
परिवत्सरीणम् । अध्वर्यवः । घर्मिणः । सिस्विदानाः ।
आविः । भवन्ति । गुह्याः । न । के । चित् ॥ ८ ॥

सोमिनः सोमयुक्ताः परिवत्सरीणं सांवत्सरिकं गावामयनिकं ब्रह्मस्तुतशस्त्रात्मकं कृण्वन्तः कुर्वन्तो ब्राह्मणासः लुप्तोपममेतत् ब्राह्मणाइव वाचं शब्दं अक्रत अकुर्षत इमे मण्डूकाः अपिच घर्मिणो घर्मेण प्रवर्ग्येण चरन्तः अध्वर्यवः अध्वरस्य नेतारः ऋत्विजइव सिष्विदानाः स्विद्यद्गात्राः गुह्याः घर्मकाले बिले निगूढाः केचित् केचन मण्डूकाः न सम्प्रति वृष्टौ सत्यां आविर्भवन्ति जायन्ते ॥ ८ ॥

८. सोम से युक्त और वार्षिक स्तुति करनेवाले स्तोताओं की तरह ये मेढक शब्द करते हैं। प्रवर्गचारी ऋत्विकों की तरह घाम से आर्द्र-शरीर और बिल में छिपे हुए कुछ मण्डूक इस समय, वृष्टि में, प्रकट होते हैं।

अथ नवमी—

देवहितिंजुगुपुर्द्वादशस्यऋतुंनरोनप्रमिनन्त्येते ।
संवत्सरेप्रावृष्यागतायांतप्ताघर्माअश्नुवतेविसर्गम् ॥ ९ ॥

देवऽहितिम् । जुगुपुः । द्वादशस्य । ऋतुम् । नरः । न ।
प्र । मिनन्ति । एते । संवत्सरे । प्रावृषि । आऽगतायाम् ।
तप्ताः । घर्माः । अश्नुवते । विऽसर्गम् ॥ ९ ॥

नरोनेतारएते मण्डूकाः देवहितिं देवैः कृतं विधानं अस्यतोरयं धर्मइत्येवं रूपं जुगुपुर्गोपायन्ति काले काले रक्षन्ति अतएव द्वादशस्य द्वादशमासात्मकस्य संवत्सरस्य ऋतुं तं तं वसन्तादिकं नप्रमिनन्ति न हिंसन्ति पर्जन्यस्तुतेरनुमोदनेन तत्तत्काले वृष्टिहेतवोभवन्तीत्यर्थः। संवत्सरे संपूर्णे प्रावृषि वर्षर्तौ आगतायामागते सति घर्माः पूर्वं घर्मकाले वर्तमानास्तप्ताः तापेन पीडिताः सम्प्रति विसर्गं विसर्जनं बिलान्मोचनं अश्नुवते प्राप्नुवन्ति ॥ ९ ॥

९. नेता मण्डूक दैवी नियम की रक्षा करते हैं, वे बारह महीनों की ऋतुओं को नष्ट नहीं करते। वर्ष पूरा होने पर, वर्षा-ऋतु के आने पर, ग्रीष्म के ताप से पीड़ित मण्डूक गड्ढों में बन्धन से छूटते हैं।

गोमायुरदादजमायुरदात्पृश्निरदाद्धरितोनोवसूनि।
गवांमण्डूकाददतःशतानिसहस्रसावेप्रतिरन्तआयुः ॥ १०॥ ४ ॥

गोऽमायुः । अदात् । अजऽमायुः । अदात् । पृश्निः ।
अदात् । हरितः । नः । वसूनि । गवाम् । मंडूकाः । ददतः ।
शतानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ॥ १० ॥ ४ ॥

गोमायुः गोरिव मायुः शब्दोयस्य तादृशोमण्डूकः वसूनि धनानि नोस्मभ्यं अदात् ददातु अजमायुश्च अदात् ददातु हरितो हरितवर्णश्च अदात् ददातु पृश्निः पृश्निवर्णश्च अदात् ददातु तथा सहस्रसावे सहस्रसंख्याकाः ओषधयः सूयन्ते उत्पद्यन्तइति वर्षर्तुः सहस्रसावः तस्मिन्सति सर्वे मण्डूकाः गवां शतानि अपरिमितागाः ददतोस्मभ्यं प्रयच्छन्तः आयुर्जीवनं प्रतिरन्ते प्रवर्धयन्तु ॥ १० ॥

१०. धेनु की तरह शब्द करनेवाले मण्डूक हमें धन दें। बकरे की तरह शब्द करनेवाले मेढक हमें धन दें। भूरे रंग (धूम्रवर्ण) मण्डूक हमें धन दें। हरे रंग के मण्डूक हमें धन दें। हज़ार वनस्पतियों की उत्पादक वर्षा-ऋतु में मण्डूकगण असीम गायें देते हुए हमारी आयु बढ़ावें।

॥ इति पञ्चमस्य सप्तमे चतुर्थोवर्गः ॥ ४ ॥

इन्द्रासोमेति पञ्चविंशत्यृचं षोडशं सूक्तं वसिष्ठस्यार्षं आद्याः षड्जगत्यः सप्तमी जगती त्रिष्टुब्वा अष्टादश्येकविंशीत्रयोविंश्योजगत्यः अन्त्या प्रतिचक्ष्वेत्यनुष्टुप् शिष्टाश्चतुर्दशत्रिष्टुभः नवमीद्वादशीत्रयोदश्यः सोमदेवत्याः एकादशी देवदेवत्या अष्टमीषोडश्याविन्द्रदेवताके सप्तदशी ग्रावदेवत्या अष्टादशी मरुद्देवताका दशमीचतुर्दश्यावग्निदेवताके प्रवर्तयेत्याद्याः पञ्चर्चइन्द्रदे-

वताकाः मानोरक्षइति त्रयोविंश्याः पूर्वोर्धर्चोवसिष्ठस्य प्रार्थनापरः अतस्तद्देवताकः उत्तरोर्धर्चः पृथिव्यन्तरिक्षदेवत्यः शिष्टानां रक्षोहणाविन्द्रासोमौ देवता। तथाचानुक्रान्तम्—इन्द्रासोमापञ्चाधिकैन्द्रासोमं राक्षोघ्नं शापाभिशापप्रायं षट्सप्तवाद्याजगत्यः एकविंशीत्रयोविंश्यौचाष्टादशी मारुतीच दशमी चतुर्दश्यावाग्नेय्यौ देव्यैकादश्यन्त्यानुष्टुप् नवमी त्रयोदशी द्वादशी सौम्यः सप्तदशी ग्राव्णी अष्टमीषोडश्यावैंद्र्यौ प्रवर्तयेति पंचैन्द्र्योवा मानोरक्षइत्यृषेरात्मनआशीरुत्तरोर्धर्चः पृथिव्यन्तरिक्षदेवतइति तत्रबृहद्देवतायामनुक्रम्यते—संवत्सरंतु मण्डूकानैन्द्रासोमं परंतु यत्। ऋषिर्ददर्श रक्षोघ्नं पुत्रशोकपरिप्लुतः। हते पुत्रशतेक्रुद्धः सौदासैर्दुःखितस्तदेति ॥ अतोरक्षोनिबर्हणार्थमेतत्सूक्तं जाप्यम्।

इन्द्रा॑सोमा॒तप॑तं॒रक्ष॑उ॒ब्जतं॒न्य॑र्पयतंवृषणातमो॒वृधः॑।
परा॑शृणीतम॒चितो॒न्यो॑षतंह॒तंनु॒देथां॒निशि॑शीतम॒त्रिणः॑ ॥ १ ॥

इन्द्रा॑सोमा। तप॑तम्। रक्षः॑। उ॒ब्जत॑म्। नि। अ॒र्प॒य॒त॒म्।
वृ॒ष॒णा॒। त॒मः॒ऽवृधः॑। परा॑। शृ॒णी॒त॒म्। अ॒चित॑ः। नि।
ओ॒ष॒त॒म्। ह॒तम्। नु॒देथा॑म्। नि। शि॒शी॒त॒म्। अ॒त्रिणः॑ ॥ १ ॥

हे इन्द्रासोमौ इन्द्रश्च सोमश्च इन्द्रासोमौ देवताद्वंद्वेचेति पूर्वपदस्यानङ् आमन्त्रिताद्युदात्तत्वम् रक्षोरक्षांसि जातावेकवचनम् युवां तपतं सन्तापयतम् आमन्त्रितं पूर्वमविद्यमानवदिति अविद्यमानवत्त्वात् तपतमिति तिङन्तस्य निघाताभावः तथा उब्जतं हिंस्तं उब्जतिर्हिंसाकर्मा तिङ्परत्वान्निघाताभावः हे वृषणा वृषणौ कामानां वर्धितारौ न्यर्पयतं रक्षांसि नीचैश्च प्रापयतं। तमोवृधः तमसा आवरकेण अन्धकारेण मायारूपेण वर्धमानान् तमसि रात्रौ वर्धमानान्वा अचितः ज्ञानरहितान् मूढान् राक्षसान् पराशृणीतम् पराङ्मुखा यथाभवंति तथा हिंस्तम् तथान्योषतं नितरां दहतम् उषदाहे हतं तान्मारयतम् नुदेथाम् अस्मत्तः हतांस्तान्प्रेरयेथां अत्रिणः अदनशीलांस्तान् राक्षसान् निशिशीतं नितरां तनूकुरुतम् ॥ १ ॥

१. इन्द्र और सोम, तुम राक्षसों को दुःख दो और मारो। अभीष्ट-वर्षक-द्वय, अन्धकार में बढ़ते हुए राक्षसों को नीच कर दो। अज्ञानी राक्षसों को विमुख करके हिंसित करो, जलाओ, मार फेंको और दूर कर दो। भक्षक राक्षसों को जर्जर करके फेंक दो।

अथ द्वितीया—

इन्द्रा॑सोमा॒सम॒घशं॑सम॒भ्य१॒॑घंतपु॑र्य॑यस्तु॒च॒रुर॑ग्नि॒वाँइ॑व।
ब्र॒ह्म॒द्विषे॑क्र॒व्यादे॑घो॒रच॑क्षसे॒द्वेषो॑धत्तमनवा॒यंकि॑मी॒दिने॑ ॥ २ ॥

इन्द्रासोमा । सम् । अघऽशंसम् । अभि । अघम् । तपुः ।
ययस्तु । चरुः । अग्निवान्ऽइव । ब्रह्मऽद्विषे । क्रव्यऽअदे ।
घोरऽचक्षसे । द्वेषः । धत्तम् । अनवायम् । किमीदिने ॥ २॥

हे इन्द्रासोमौ अघशंसं अघस्यानर्थस्य शंसितारं अघमागत्य हन्तारं राक्षसं सं सहैव अभीतिश्रुतेर्योग्यक्रियाध्याहारःअभिभवतम् । सचतपुः युवयोस्तेजसातप्यमानोराक्षसः अग्निवाँइव अग्नियुक्तः अग्नौप्रक्षिप्तः चरुरिव ययस्तु यसुप्रयत्ने केवलोप्ययमाङ्पूर्वार्थोद्रष्टव्यः आयस्यतु आयासं प्राप्नोतु उपक्षीयतामित्यर्थः अपिच ब्रह्मद्विषे ब्राह्मणेभ्योस्मभ्यं द्वेष्ट्रे क्रव्यादे क्रव्यं मांसं भक्षयित्रे घोरचक्षसे घोरदर्शनाय परुषभाषिणे वा किमीदिने किमिदानीमिति चरते पिशुनाय द्वेषः द्वेष्यभावं अनवायं अव्यवायं अनवयवं नैरन्तर्येण यथाभवति तथा धत्तं दत्तम् ॥ २ ॥

२. इन्द्र और सोम, अनर्थ प्रशंसक और आक्रामक राक्षस को शीघ्र ही दबा दो। तुम्हारे तेज से तपे हुए राक्षस को, अग्नि में फेंके गये "चरु" की तरह, विलुप्त करो। ब्राह्मणों के द्वेषी, मांस-भक्षक, घोर नेत्र तथा कठोर-वक्ता राक्षस के प्रति जैसे सदा द्वेष रहे, वैसे करो।

इन्द्रासोमादुष्कृतोवव्रेअन्तरनारंभणेतमसिप्रविध्यतम् ।
यथानातःपुनरेकश्चनोदयत्तद्वामस्तुसहसेमन्युमच्छवः ॥ ३ ॥

इन्द्रासोमा । दुःऽकृतः । वव्रे । अन्तः । अनारम्भणे । तमसि ।
प्र । विध्यतम् । यथा । न । अतः । पुनः । एकः । चन ।
उत्ऽअयत् । तत् । वाम् । अस्तु । सहसे । मन्युऽमत् । शवः ॥ ३ ॥

हे इन्द्रासोमौ दुष्कृतः दुष्कर्मकारिणो राक्षसान् वव्रे वारके अन्तर्मध्ये अनारंभणे आलंबनरहिते तमस्यन्धकारे प्रविध्यतं प्रवेश्य ताडयतम् यथा येनप्रकारेण एषां मध्ये एकश्चन एकोपि राक्षसः अतः अस्मात्तमसः पुनर्नोदयत् उद्गच्छेत् तथा विध्यतमित्यर्थः। एतेर्लेटयडागमः इतश्चलोपइतीकारलोपः गुणायादेशौ । तत्प्रसिद्धम् मन्युमत् क्रोधयुक्तं वां युवयोः शवोबलं सहसे रक्षसामभिभवनाय अस्तु भवतु ॥ ३ ॥

३. इन्द्र और सोम, दुष्कर्मी राक्षसों को, वारक मध्यस्थल में निरवलम्ब अन्धकार में, फेंककर मारो, ताकि वहाँ से एक भी राक्षस फिर ऊपर न उठ सके। तुम्हारा वह प्रसिद्ध क्रोधवाला बल दबाने में समर्थ हो।

अथ चतुर्थी—

इन्द्रासोमावर्तयतंदिवोवधंसंपृथिव्याअघशंसायतर्हणम् ।
उत्तक्षतंस्वर्यंपर्वतेभ्योयेनरक्षोवावृधानंनिजूर्वथः ॥ ४ ॥

इन्द्रासोमा । वर्तयतम् । दिवः । वधम् । सम् । पृथिव्याः ।
अघऽशंसाय । तर्हणम् । उत् । तक्षतम् । स्वर्यम् ।
पर्वतेभ्यः । येन । रक्षः । ववृधानम् । निऽजूर्वथः ॥ ४ ॥

हे इन्द्रासोमौ दिवोन्तरिक्षात् द्युलोकात् वा वधं हननसाधनमायुधं संवर्तयतमुत्पादयतं पृथिव्याअस्मादपि लोकात्तर्हणं हिंसकमायुधं अघशंसाय अघशंसं अनर्थस्याशंसकं राक्षसं हन्तुमुत्पादयतम् तथा पर्वतेभ्यः पर्ववद्भ्योमेघेभ्यः सकाशात् स्वर्यं स्वृशब्दोपतापयोः उपतापकं अशनिं उत्तक्षतं उद्धतं कुरुतम् येनाशनिना वावृधानं वर्धमानं प्रवृद्धं वा रक्षोराक्षसं निजूर्वथः निहथः जुर्वी हिंसायाम् तमशनिम् उत्तक्षतमित्यर्थः ॥ ४ ॥

४. इन्द्र और सोम, अन्तरिक्ष से घातक आयुध उत्पन्न करो। अनर्थकारी के लिए इस पृथिवी से घातक आयुध उत्पन्न करो। मेघ से वह संतापक वज्र उत्पन्न करो, जिससे प्रवृद्ध राक्षस को नष्ट किया है।

इन्द्रासोमावर्तयतंदिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ।
तपुर्वधेभिरजरेभिरत्रिणोनिपर्शानेविध्यतंयन्तुनिस्वरम् ॥ ५ ॥५॥

इन्द्रासोमा । वर्तयतम् । दिवः । परि । अग्निऽतप्तेभिः । युवम् ।
अश्महन्मऽभिः । तपुःऽवधेभिः । अजरेभिः । अत्रिणः ।
नि । पर्शाने । विध्यतम् । यन्तु । निःऽस्वरम् ॥ ५ ॥ ५ ॥

हे इन्द्रासोमौ दिवोन्तरिक्षात् परितः सर्वतः वर्तयतम् आयुधानि प्रेरयतम् युवं तौ युवां अग्नितप्तेभिः अग्निनासन्तप्तैः तपुर्वधेभिस्तापकप्रहारैः अजरेभिर्जरारहितैः दृढैः अश्महन्मभिः अश्मसारभूतस्यायसोविकारैः हननसाधनैस्तैरायुधैः अत्रिणोराक्षसस्य पर्शानेपार्श्वस्थानेनिविध्यतं निहतम् ते च राक्षसाः निःस्वरं निःशब्दं यन्तु अपयन्तु निर्गच्छन्तु ॥ ५ ॥

५. इन्द्र और सोम, अन्तरिक्ष से चारों ओर आयुध भेजो। अग्नि से संतप्त, तापक प्रहारवाले, अजर और पत्थर के विकार-भूत घातक अस्त्रों से राक्षसों के पार्श्व स्थानों को फाड़ो। वे राक्षस चुपचाप भाग जायें।    ॥ इति पञ्चमस्य सप्तमे पञ्चमो वर्गः ॥ ५ ॥

अथ षष्ठी—

इन्द्रासोमापरिवांभूतुविश्वतइयंमतिःकक्ष्याश्वेववाजिना ।
यांवांहोत्रांपरिहिनोमिमेधयेमाब्रह्माणिनृपतीवजिन्वतम् ॥ ६ ॥

इन्द्रासोमा । परि । वाम् । भूतु । विश्वतः । इयम् । मतिः । कक्ष्या । अश्वाऽइव । वाजिना । याम् । वाम् । होत्राम् । परिऽहिनोमि । मेधया । इमा । ब्रह्माणि । नृपती इवेति नृपतीऽइव । जिन्वतम् ॥ ६ ॥

हे इन्द्रासोमौ इयमस्माभिः क्रियमाणा मतिर्मननीया स्तुतिः वाजिना वाजिनौ बलवन्तौ वां युवां विश्वतः सर्वतः परिभूतु परिगृह्णातु व्याप्नोतु वा । तत्र दृष्टान्तः—कक्ष्या कक्षसंबन्धिनी रज्जुः अश्वेव यथा अश्वं परिगृह्णाति तद्वद् यां होत्रां वाचं वां युवाभ्यां मेधया परिहिनोमि प्रेरयामि सेयं मतिरिति संबन्धः । अपिच इमा इमान्यस्माभिः कृतानि ब्रह्माणि स्तोत्राणि नृपतीव यथा नृपतयोधनैः पूरयन्ति तथा जिन्वतं फलैः पूरयतम् ॥ ६ ॥

६. इन्द्र और सोम, बग़ल को बांधनेवाली रस्सी जैसे घोड़े को बांधती है, वैसे ही यह मनोहर स्तुति तुम्हें प्राप्त हो। तुम बली हो। स्मरण-शक्ति के बल में इस स्तोत्र को प्रेरित करता हूँ। जैसे राजा लोग धन से पूरण करते हैं, वैसे ही तुम लोग इन स्तोत्रों को फलवाले करो।

प्रतिस्मरेथांतुजयद्भिरेवैर्हतंद्रुहोरक्षसोभङ्गुरावतः ।
इन्द्रासोमादुष्कृतेमासुगंभूद्योनःकदाचिदभिदासतिद्रुहा ॥ ७ ॥

प्रति । स्मरेथाम् । तुजयत्ऽभिः । एवैः । हतम् । द्रुहः । रक्षसः । भंगुरऽवतः । इन्द्रासोमा । दुःऽकृते । मा । सुऽगम् । भूत् । यः । नः । कदा । चित् । अभिऽदासति । द्रुहा ॥ ७ ॥

हे इन्द्रासोमौ तुजयद्भिः त्वरमाणैः एवैर्गन्तृभिरश्वैः प्रतिस्मरेथां अभिगच्छतम् उपसर्गवशेनात्र स्मरतिरर्थांतरे वर्तते यथा प्रस्मरणं प्रस्थानमिति । अभिगत्यच द्रुहोद्रोग्धॄन्भंगुरावतः भञ्जनकर्मवतः रक्षसोराक्षसान् हतं हिंस्तम् । हे इन्द्रासोमौ दुष्कृते पापकारिणे राक्षसाय सुगं सुखं माभूत् माभवतु । द्रुहा द्रोहेण युक्तोयोनोस्मान् कदाचिदपि अभिदासति अभिहन्ति तस्मै दुष्कृतइत्यन्वयः ॥ ७ ॥

७. इन्द्र और सोम, शीघ्रगामी अश्व की सहायता से अभिगमन करो। द्रोही और भञ्जक राक्षसों को मारो। पापी राक्षस को सुख न हो; क्योंकि द्रोह-युक्त होकर वह राक्षस हमें कभी न कभी मार सकता है।

अथाष्टमी—

योमापाकेनमनसाचरन्तमभिचष्टेअनृतेभिर्वचोभिः ।
आपइवकाशिनासंगृभीताअसन्नस्त्वासतइन्द्रवक्ता ॥ ८ ॥

यः । मा । पाकेन । मनसा । चरन्तम् । अभिऽचष्टे ।
अनृतेभिः । वचःऽभिः । आपःऽइव । काशिना । सम्ऽगृभीताः ।
असन् । अस्तु । असतः । इन्द्र । वक्ता ॥ ८ ॥

पाकेन पक्केन शुद्धेन मनसा चरन्तं वर्तमानं सत्यवादिनं योमां राक्षसः अनृतेभिरनृतैः असत्यैर्वचोभिर्वचनैः अभिचष्टे अभिशंसति मयि असत्यवचनमारोपयति हे इन्द्र काशिना मुष्टिना संगृभीताः सम्यक् गृहीताः आपइव यथा आपोविशीर्णाभवन्ति तथा असतःअसत्यस्य वक्ता सराक्षसः असन्नस्तु अविद्यमानोभवतु नश्यत्वित्यर्थः ॥ ८ ॥

८. विशुद्ध मन से रहनेवाले मुझे जो राक्षस झूठी बातोंवाला बनाता है, हे इन्द्र, वह असत्यवादी राक्षस, मुट्ठी में बाँधे हुए जल की तरह, अस्तित्व-शून्य हो जाय।

येपाकशंसंविहरन्तएवैर्येवाभद्रंदूषयन्तिस्वधाभिः ॥
अहयेवातान्प्रददातुसोमआवादधातुनिर्ऋतेरुपस्थे ॥ ९ ॥

ये । पाकऽशंसम् । विऽहरन्ते । एवैः । ये । वा । भद्रम् ।
दूषयन्ति । स्वधाभिः । अहये । वा । तान् । प्रऽददातु । सोमः ।
आ । वा । दधातु । निःऽऋतेः । उपऽस्थे ॥ ९ ॥

ये राक्षसाः पाकशंसं परिपक्ववचनं सत्यभाषिणं मां एवैः एतव्यैः प्राप्तव्यैः आत्मीयैः कार्मैर्हेतुभूतैः विहरन्ते विशेषेण हरन्ति उपक्षपयन्ति यथा कामं परिवदन्तीत्यर्थः येवा स्वधाभिर्बलैर्युक्ताः भद्रं कल्याणवर्तनं मां दूषयन्ति दुष्टं कुर्वन्ति तान्सर्वान्सोमः अहये वा सर्पाय वा प्रददातु । निर्ऋतेः पापदेवतायाः उपस्थे उत्सङ्गे वा आदधातु प्रक्षिपतु ॥ ९ ॥

९. सत्यवादी मुझे जो अपने स्वार्थ के लिए लाञ्छित करते हैं एवम् कल्याण-वृत्ति मुझे जो बली होकर दोषी बनाते हैं, उन्हें सोम साँप के ऊपर गिरा दें अथवा उन्हें पाप-देवता की गोद में फेंक दें।

अथ दशमी—

योनोरसंदिप्सतिपित्वोअग्नेयोअश्वानांयोगवांयस्तनूनाम् ।
रिपुःस्तेनस्तेयकृद्दभ्रमेतुनिषहीयतांतन्वाऽतनाच ॥ १० ॥ ६ ॥

यः । नः । रसम् । दिप्सति । पित्वः । अग्ने । यः । अश्वानाम् ।
यः । गवाम् । यः । तनूनाम् । रिपुः । स्तेनः । स्तेयऽकृत् । दभ्रम् ।
एतु । नि । सः । हीयताम् । तन्वा । तना । च ॥ १० ॥ ६ ॥

हे अग्ने योराक्षसः नोस्माकं पित्वोन्नस्य रसं सारं दिप्सति जिघांसति यश्च अश्वानामस्मदीयानां रसं दिप्सति यश्च गवां रसं दिप्सति यश्च तनूनामस्मदीयानां शरीराणां रसं दिप्सति रिपुर्बाधकः स्तेनश्चौरः स्तेयकृत् धनस्यापहर्ता ससर्वोजनः दभ्रं हिंसां एतु प्राप्नोतु अपिच सबाधकः तन्वा स्वकीयेन शरीरेण तना च तनयेन च निहीयतां निहीनोभवतु ॥ १०॥

१०. अग्नि, जो राक्षस हमारे अन्न का सार विनष्ट करने की इच्छा करता है और जो अश्वों, गौओं और सन्तानों का सार नष्ट करने की इच्छा करता है, वह शत्रु, चोर और धनापहारी हिंसा पावे, वह अपने शरीर और सन्तान के साथ नष्ट हो जाय।

॥ इति पञ्चमस्य सप्तमे षष्ठोवर्गः ॥ ६ ॥

परःसोअंस्तुतन्वा३तनांचतिस्रःपृथिवीरधोअंस्तुविश्वाः।
प्रतिशुष्यतुयशोंअस्यदेवायोनोदिवादिप्संतियश्चनक्तम् ॥११॥

परः। सः। अस्तु। तन्वा। तना। च। तिस्रः। पृथिवीः।
अधः। अस्तु। विश्वाः। प्रति। शुष्यतु। यशः। अस्य।
देवाः। यः। नः। दिवा। दिप्संति। यः। च। नक्तम् ॥ ११ ॥

सराक्षसः तन्वा तनाच व्यत्ययेन तृतीया तन्वाः शरीरस्य तनयस्य च परः परस्तात् अस्तु वर्तमानोभवतु उभाभ्यां वियुक्तोभवत्वित्यर्थः। विश्वा व्याप्तास्तिस्रः पृथिवीः त्रीन् लोकान् अधःअधोऽस्तु अधस्तात् भवतु लोकत्रयादपि प्रच्युतोभवत्वित्यर्थः। हे देवाः अस्य शत्रोः यशोन्नं कीर्तिर्वा प्रतिशुष्यतु योराक्षसोनोस्मान् दिवा अहनि दिप्सति जिघांसति यश्च नक्तं रात्रौ जिघांसति अस्योभयविधस्य यशः प्रतिशुष्यत्विति संबन्धः ॥ ११ ॥

११. वह राक्षस शरीर और सन्तान से रहित हो। तीनों व्यापक लोकों के नीचे वह चला जाय। जो राक्षस हमें दिन और रात मारने की इच्छा करता है, हे देवो, उसका यश सूख जाय।

अथ द्वादशी—

सुविज्ञानंचिकितुषेजनांयसच्चासंच्चवचंसीपस्पृधाते।
तयोर्यत्सत्यंयंतरदृजीयस्तदित्सोमोंवतिहन्त्यासंत् ॥ १२ ॥

सुऽविज्ञानम्। चिकितुषे। जनाय। सत्। च। असंत्। च।
वचंसी इति। पस्पृधाते इति। तयोः। यत्। सत्यम्। यतरत्।
ऋजीयः। तत्। इत्। सोमः। अवति। हन्ति। असंत् ॥ १२ ॥

प्रायेणेदमादिभिर्ऋग्भिः राक्षसेन सह ऋषिणा शपथः क्रियते अत्रकेचिदाहुः—हत्वा पुत्रशतं पूर्वं वसिष्ठस्य महात्मनः। वसिष्ठं राक्षसोसित्वं वसिष्ठं रूपमास्थितः॥ १॥ अहं वसिष्ठइत्येवं जिघांसूराक्षसोब्रवीत्। अत्रोत्तराऋचोदृष्टावसिष्ठेनेति नः श्रुतमिति॥ २॥ चिकितुषे विदुषे जनाय इदं सुविज्ञानं विज्ञातुं सुशकं भवति। किं तत् सच्च सत्यं च असच्च असत्यं च वचसी सत्यासत्यरूपे वचने पस्पृधाते मिथः स्पर्धेते तयोः सदसतोर्मध्ये यत्सत्यं यथार्थं वचनं यतरत् यच्च ऋजीयः ऋजुतमं अकुटिलं तदित् तदेव अकुटिलं सत्यभाषिणं सोमोवति रक्षति असत् उक्तलक्षणमसत्यं हन्ति हिनस्ति एवं सति आवयोर्मध्ये कतरोनृतभाषीति विद्वद्भिः सुविज्ञानमित्यर्थः॥ १२॥

१२. विद्वान् को यह विदित है कि सत्य और असत्य वचन परस्पर प्रतिस्पर्धा करते हैं। उनमें जो सत्य और सरलतम है, उसी का पालन सोम करते हैं और असत्य की हिंसा करते हैं।

नवाउसोमोवृजिनंहिनोतिनक्षत्रियंमिथुयाधारयन्तम्।
हन्तिरक्षोहन्त्यासद्वदन्तमुभाविन्द्रस्यप्रसितौशयाते॥ १३॥

न। वै। ऊँ इति। सोमः। वृजिनम्। हिनोति। न। क्षत्रियम्।
मिथुया। धारयन्तम्। हन्ति। रक्षः। हन्ति। असत्।
वदन्तम्। उभौ। इन्द्रस्य। प्रऽसितौ। शयाते इति॥ १३॥

वृजिनं पापकारिणं राक्षसं सोमोदेवः नवाउ नखलु हिनोति प्रेरयति गच्छत्वमिति न मुंचति यथा क्षत्रियं क्षत्रं बलं तद्वन्तं मिथुया मिथ्याभूतं वचनं धारयन्तं बिभ्रतं असत्यवादिनं पुरुषं नच हिनोति नविसृजति अपितु रक्षोराक्षसं हन्ति असत् असत्यं वदन्तंच हन्ति हिनस्ति उभौ राक्षसावनृतवादिनौ तौ सोमेन हतौ इन्द्रस्य सम्बन्धिनि प्रसितौ बन्धने शयाते निवसतः। यद्वा इन्द्रस्येति तृतीयार्थे षष्ठी इन्द्रेणेश्वरेण सोमेन प्रसितौ बद्धौ पित्रूबन्धने अस्मात्कर्मणिनिष्ठा गतिरनन्तरइति गतेःप्रकृतिस्वरत्वम्॥ १३॥

१३. सोमदेव पापी और बल-युक्त मिथ्यावादी को नहीं छोड़ते, मार देते हैं। वह राक्षस को मारते हैं और असत्यवादी को भी मारते हैं। वे मारे जाकर इन्द्र के बन्धन में रहते हैं।

अथ चतुर्दशी—

यदिवाहमनृतदेवआसमोघंवादेवाँअप्यूहेअग्ने।
किमस्मभ्यंजातवेदोहृणीषेद्रोघवाचस्तेनिर्ऋथंसचन्ताम्॥ १४॥

यदि । वा । अहम् । अनृतऽदेवः । आस । मोघम् । वा । देवान् ।
अपिऽऊहे । अग्ने । किम् । अस्मभ्यम् । जातऽवेदः । हृणीषे ।
द्रोघऽवाचः । ते । निःऽऋथम् । सचन्ताम् ॥ १४ ॥

यदिवा अहं अनृतदेवः अनृताअसत्यभूताः देवायस्य तादृशोयद्यहं आस अस्मि अथवा मोघंवा निष्फलं वा देवानप्यूहे उपगच्छामि अहं यदि उक्तरूपोस्मि हे अग्ने तर्हि मां बाधस्व नह्यहं तथाविधोस्मि एवंसति हे जातवेदः जातानां वेदितरग्ने अस्मभ्यं किंकारणं हृणीषे क्रुध्यसि तव क्रोधोस्मासु न जायतां इत्यर्थः । द्रोघवाचः अनृतवाचोराक्षसास्ते तव निर्ऋथं निःपूर्वोर्तिर्हिंसायां वर्तते निःशेषेण अर्तिंहिंसां सचन्तां सेवन्ताम् ॥ १४ ॥

१४. यद्यपि मैं असत्य देवोंवाला हूँ अथवा यद्यपि मैं वृथा देवों के निकट जाता हूँ, तो भी हे धनी अग्नि, क्यों मेरे प्रति क्रुद्ध होते हो। मिथ्यावादी लोग तुम्हारी हिंसा को विशेष रूप से प्राप्त करें।

अद्यामुरीययदियातुधानोअस्मियदिवायुस्ततपपूरुषस्य ।
अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याह ॥ १५ ॥ ७ ॥

अद्य । मुरीय । यदि । यातुऽधानः । अस्मि । यदि । वा ।
आयुः । ततप । पुरुषस्य । अध । सः । वीरैः । दशऽभिः । वि ।
यूयाः । यः । मा । मोघम् । यातुऽधान । इति । आह ॥ १५ ॥ ७ ॥

इयमपि शपथरूपैव यद्यहं वसिष्ठोयातुधानोराक्षसोस्मि अद्यास्मिन्नेव दिने मुरीय म्रियै अपि वा पुरुषस्य मनुष्यस्य आयुर्जीवितं यद्यहं राक्षसोभूत्वा ततप हिंसितवानस्मि तर्ह्यप्यहमद्य म्रियेइत्यन्वयः अध अथैवं स्यात् अहं वसिष्ठस्त्वं राक्षसइति तर्हि सत्वं दाशभिर्वीरैः पुत्रैः उपलक्षणमेतत् सर्वैर्बन्धुजनैर्वियूयाः वियुक्तोभवेः योराक्षसोमामां मोघं मृषैव हे यातुधान हेराक्षसेति संबोध्य आह ॥ १५ ॥

१५. यदि मैं (वसिष्ठ) राक्षस हूँ अथवा यदि मैं पुरुष की आयु नष्ट करता हूँ, तो मैं अभी मर जाऊँ अथवा मुझे जो वृथा राक्षस कहकर सम्बोधन करता है, उसके दस वीर पुत्र (सारा परिवार) नष्ट हो जायँ।

॥ इति पञ्चमस्य सप्तमे सप्तमोवर्गः ॥ ७ ॥

अथ षोडशी—

योमायातुंयातुधानेत्याहयोवारक्षाःशुचिरस्मीत्याह ।
इन्द्रस्तंहन्तुमहतावधेनविश्वस्यजन्तोरधमस्पदीष्ट ॥ १६ ॥

यः । मा । अयातुम् । यातुऽधान । इति । आह । यः । वा ।
रक्षाः । शुचिः । अस्मि । इति । आह । इन्द्रः । तम् । हन्तु ।
महता । वधेन । विश्वस्य । जंतोः । अधमः । पदीष्ट ॥ १६ ॥

योराक्षसः मामयातुं अराक्षसं सन्तं हे यातुधान हेराक्षसेत्याह ब्रूते योवा यश्च रक्षाः राक्षसः शुचिरस्मि शुद्धोभवामि न राक्षसोस्मीत्याह ब्रूते तमुभयविधं राक्षसं इन्द्रोमहता प्रौढेन वधेनायुधेन वज्रेण हन्तु हिनस्तु सच सर्वस्य विश्वस्य जन्तोर्जनस्य अधमोनिकृष्टः सन् पदीष्ट पततु ॥ १६ ॥

१६. जो राक्षस मुझ अराक्षस को "राक्षस" कहकर सम्बोधन करता है और जो राक्षस अपने को "शुद्ध" समझता है, उसे महान् आयुध-द्वारा इन्द्र विनष्ट करें। वह सारे प्राणियों में अधम होकर पतित हो।

प्रयाजिगातिखर्गलेवनक्तमपंद्रुहातन्वं१गूहमाना ।
वव्राँअनन्ताँअवसापदीष्टग्रावाणोघ्नन्तुरक्षसंउपब्दैः ॥ १७ ॥

प्र । या । जिगाति । खर्गलाऽइव । नक्तम् । अप । द्रुहा । तन्वम् ।
गूहमाना । वव्रान् । अनन्तान् । अव । सा । पदीष्ट । ग्रावाणः ।
घ्नन्तु । रक्षसः । उपब्दैः ॥ १७ ॥

या राक्षसी नक्तं रात्रौ द्रुहा द्रोहेण युक्ता खर्गलेव उलूकीव प्रजिगाति प्रगच्छति किंकुर्वती तन्वं स्वकीयं शरीरं अपगूहमाना अपवृण्वती नप्रकाशयन्ती सा राक्षसी अनन्तान् अपर्यन्तान् वव्रान्गर्तान् अवपदीष्ट अवाङ्मुखीपततु ग्रावाणः सोमाभिषवार्थाः पाषाणाश्च उपब्दैः अभिषवशब्दैः रक्षसोराक्षसान् घ्नन्तु हिंसन्तु ॥ १७ ॥

१७. जो राक्षसी रात्रि-समय द्रोहिणी होकर उल्लू की तरह अपने शरीर को छिपाकर चलती है, वह निम्नमुखी होकर अनन्त गर्त्त में पतित हो जाय। अभिषव-शब्दों से पत्थर भी राक्षसों को विनष्ट करें।

अथाष्टादशी—

वितिष्ठध्वंमरुतोविक्ष्वि१च्छतगृभायतरक्षसःसंपिनष्टन ।
वयोयेभूत्वीपतयन्तिनक्तभिर्येवारिपोदधिरेदेवेअध्वरे ॥ १८ ॥

वि । तिष्ठध्वम् । मरुतः । विक्षु । इच्छत । गृभायत । रक्षसः ।
सम् । पिनष्टन । वयः । ये । भूत्वी । पतयन्ति । नक्तऽभिः ।
ये । वा । रिपः । दधिरे । देवे । अध्वरे ॥ १८ ॥

हे मरुतोयूयं विक्षु प्रजासु वितिष्ठध्वं विविधं तिष्ठत तत्र गूढान् राक्षसान् हन्तुं इच्छत अन्विच्छत तदनन्तरं रक्षसस्तान् राक्षसान् गृभायत गृभ्णीत गृहीत्वाच संपिनष्टन चूर्णयत ये राक्षसावयः पक्षिणोभूत्वी भूत्वा नक्तभिः रात्रिभिः रात्रिषु पतयन्ति आगच्छन्ति येवा येच देवे दीप्ते अध्वरे यागे रिपोर्हिंसादधिरे विदधिरे तान् राक्षसान् संपिनष्टनेत्यन्वयः ॥ १८ ॥

१८. मरुतो, तुम लोग प्रजा में विविध रीतियों से निवास करो। जो राक्षस पक्षी होकर रात्रि में आते हैं और जो प्रदीप यज्ञ में हिंसा करते हैं, उन्हें चाहो, पकड़ो और चूर्ण करो।

**प्रवर्तयदिवोअश्मानमिन्द्रसोमशितंमघवन्त्संशिशाधि ।**
**प्राक्तादपाक्तादधरादुदक्तादभिजहिरक्षसःपर्वतेन ॥ १९ ॥**

**प्र । वर्तय । दिवः । अश्मानम् । इन्द्र । सोमऽशितम् । मघऽवन् ।**
**सम् । शिशाधि । प्राक्तात् । अपाक्तात् । अधरात् ।**
**उदक्तात् । अभि । जहि । रक्षसः । पर्वतेन ॥ १९ ॥**

हे इन्द्र दिवोन्तरिक्षात् अश्मानं अशनिं प्रवर्तय प्रेरय राक्षसान् हन्तुं तथा सोमशितं सोमेनतीक्ष्णीकृतं यजमानं हे मघवन् धनवन्निन्द्र संशिशाधि संस्कुरु । अपिच प्राक्तात् प्राच्याः अपाक्तात् प्रतीच्याः अधरात् अवाच्याः उदक्तात् उत्तरतः सर्वस्मादपि दिग्भागात् रक्षसोराक्षसान् पर्वतेन पर्ववता वज्रेण अभिजहि मारय ॥ १९ ॥

१९. इन्द्र, अन्तरिक्ष से वज्र प्रेरित करो। धनी इन्द्र, सोम-द्वारा तीक्ष्ण यजमान को संस्कृत करो। ग्रन्थि-युक्त वज्र-द्वारा पूर्व, पश्चिम, दक्षिण और उत्तर से राक्षसों को विनष्ट करो।

अथ विंशी—

**एतउत्येपतयन्तिश्वयातवइन्द्रंदिप्सन्तिदिप्सवोदाभ्यम् ।**
**शिशीतेशक्रःपिशुनेभ्योवधंनूनंसृजदशनिंयातुमद्भ्यः ॥ २० ॥८॥**

**एते । ऊँ इति । त्ये । पतयन्ति । श्वऽयातवः । इन्द्रम् ।**
**दिप्सन्ति । दिप्सवः । अदाभ्यम् । शिशीते । शक्रः । पिशुनेभ्यः ।**
**वधम् । नूनम् । सृजत् । अशनिम् । यातुमत्ऽभ्यः ॥ २० ॥ ८ ॥**

त्ये ते एते राक्षसाश्वयातवः श्वभिः परिगतभूतैः हिंसन्तः श्वभिः सह यान्तोवा पतयन्ति पतन्ति येदिप्सवोजिघांसवः सन्तः अदाभ्यं अहिंस्यमिन्द्रं दिप्सन्ति जिघांसन्ति तेभ्यः पिशुनेभ्यः पिशुनान्कपटान् हन्तुं शक्रः इन्द्रोवधमायुधं अशनिरूपं शिशीते तीक्ष्णीकरोति यातुमद्भ्योराक्षसेभ्योनूनं क्षिप्रं अशनिं सृजत् विसृजतु हननार्थम् ॥ २० ॥

॥ इति पञ्चमस्य सप्तमेष्टमोवर्गः ॥ ८ ॥

२०. ये राक्षस कुक्कुरों के साथ मारते-काटते आते हैं। जो राक्षस मारने की इच्छा से अहिंसनीय इन्द्र की हिंसा करने की इच्छा करते हैं, उन कपटियों को मारने के लिए इन्द्र वज्र को तेज कर रहे हैं। इन्द्र शीघ्र राक्षसों के लिए वज्र फेंकें।

इन्द्रो॑यातूनाम॑भवत्पराश॒रोह॑वि॒र्मथि॑नाम॒भ्या॒३॑विवा॑सताम्।
अ॒भीदु॑श॒क्रः प॑र॒शुर्यथा॒वनं॒पात्रे॑वभि॒न्दन्त्स॒तए॑तिर॒क्षसः॑ ॥२१॥

इन्द्रः॑। या॒तूनाम्। अ॒भ॒व॒त्। प॒रा॒ऽश॒रः। ह॒वि॒ःऽमथी॑नाम्।
अ॒भि। आ॒ऽविवा॑सताम्। अ॒भि। इत्। ऊँ इति॑। श॒क्रः।
प॒र॒शुः। यथा॑। वन॑म्। पात्रा॑ऽइव। भि॒न्दन्। स॒तः। ए॒ति॒। र॒क्षसः॑ ॥२१॥

यातूनां हिंसकानां रक्षसां अयमिन्द्रः पराशरः पराशातयिता हिंसिता भवत् कीदृशीनां हविर्मथीनां हवींषि मथ्नताम् अभिमुखं आविवासतां आगच्छताम् अपिचायं शक्रइन्द्रः वनं वृक्षजातं परशुर्यथा छिंदन् कुठारइव पात्रेव मृन्मयानि पात्राणि भिन्दन् मुद्गरइवच सतः मासनामैतत् तदाहयास्कः—तिरः सतइतिप्राप्तस्येति[1]। प्राप्तान् रक्षसोराक्षसान् भिन्दन् हिंसन् अभ्येभिगच्छति इदुपूरणौ ॥ २१ ॥

२१. इन्द्र हिंसकों के भी हिंसक हैं। जैसे फरसा वन को काटता है और जैसे मुद्गर बर्त्तनों को फोड़ता है, वैसे ही इन्द्र, हव्य-मन्थनकर्त्ता और अभिमुख-आगमन-कर्त्ता के लिए, राक्षसों का विनाश करते हुए आ रहे हैं।

उलू॑कयातुं॑शुशु॒लूक॑यातुं॒ज॒हि॒श्वया॑तुमु॒तकोक॑यातुम्।
सु॒प॒र्णया॑तुमु॒तगृध्र॑यातुं॒दृ॒षदे॑व॒प्रमृ॑ण॒रक्ष॑इन्द्र ॥ २२ ॥

उलू॑कऽयातुम्। शु॒शु॒लूक॑ऽयातुम्। ज॒हि। श्वऽया॑तुम्। उ॒त।
कोक॑ऽयातुम्। सु॒प॒र्णऽया॑तुम्। उ॒त। गृध्र॑ऽयातुम्।
दृ॒षदा॑ऽइव। प्र। मृ॒ण॒। रक्षः॑। इ॒न्द्र॒ ॥ २२ ॥

उलूकयातुं उलूकैः परिकरभूतैः सहयातयति हिनस्तीति याति गच्छतीतिवा उलूकयातुः यद्वा उलूकरूपी यातीत्युलूकयातुः हे इन्द्र तादृशं राक्षसं जहि विनाशय। तथाच बृहद्देवतायामुक्तम्—उलूकयातुंजत्येतान्नानारूपान्निशाचरान्। स्त्रीपुंरूपांश्चतिर्यञ्चोजिघांसूनिन्द्रमेजहीति॥ एवमुत्तरत्रापियोज्यम् शुशुलूकयातुं उलूकाद्विविधाः बृहदुलूकाः अल्पोलूकाश्चेति तत्र उलूक-

---

1 नि० ३. २०.

यातुमिति बृहदुलूकाभिप्रायेणोक्तं शिशुरल्पउलूकः शुशुलूकः तद्रूपेण वर्तमानं राक्षसं श्वयातुं श्वरूपेण वर्तमानं राक्षसं उतापिच कोकयातुं कोकश्चक्रवाकः तद्रूपेण वर्तमानं राक्षसं सुपर्ण-यातुं सुपर्णः श्येनः तदाकारं यातुधानं उतापिच गृध्रयातुं गृध्ररूपं च यातुधानं एतान्सर्वान् नानाकारान् हे इन्द्र जहि किंबहुना दृषदेव पाषाणेनेव वज्रेण रक्षः राक्षसमात्रं प्रमृण मारय॥२२॥

२२. इन्द्र, उलूकों के साथ जो राक्षस हिंसा करते हैं, उन्हें विनष्ट करो। जो क्षुद्र ऊलूक-रूप से हिंसा करते हैं, उन्हें विनष्ट करो। जो कुक्कुर, चक्रवाक, बाज (श्येन) और गृध्ररूपों से हिंसा करते हैं, उन्हें, हे इन्द्र, पाषाण के समान वज्रद्वारा मार डालो।

मानोरक्षोअभिनंड्यातुमावंतामपोच्छतुमिथुनायाकिमीदिनां ।
पृथिवीनःपार्थिवात्पात्वंहसोन्तरिक्षंदिव्यात्पात्वस्मान् ॥ २३ ॥

मा । नः । रक्षः । अभि । नट् । यातुऽमावताम् । अप । उच्छतु ।
मिथुना । या । किमीदिना । पृथिवी । नः । पार्थिवात् ।
पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥ २३ ॥

रक्षोराक्षसजातिर्नोस्मान् माभिनट् माभिव्याप्नोतु नशतर्व्याप्तिकर्मणोलुङिमन्त्रेघसेतिच्लेर्लुक् नमाङ्योगइत्यडभावः यथा यातुमावतां यातनावतां राक्षसानां मिथुना मिथुनानि स्त्रीपुं-सरूपाणि युगलानि अपोच्छतु उच्छीविवासे अपविवासयतु अपवर्जयतु या यानि मिथुनानि किमीदिना किमीदिनानि किमिदंकिमिदमिति जिघांसया वर्तमानानि भवन्ति अपिच पृथिवी प्रथितेयं भूमिश्च नोस्मान्पार्थिवात् पृथिव्याअन्तरिक्षस्य संबन्धिनःअंहसः पापात्पातु रक्षतु अन्तरिक्षंच दिव्यात् दिविभवात् पापात् अस्मान्पातु रक्षतु ॥ २३ ॥

२३. हमें राक्षस न घेरने पावें। दुःख देनेवाले राक्षसों के जोड़े दूर हों। ये राक्षस "यह क्या, यह क्या" कहते हुए घूमते हैं। पृथिवी हमें अन्तरिक्ष के पाप से रक्षा करे, अन्तरिक्ष हमें स्वर्गीय पाप से बचावे।

अथ चतुर्विंशी—

इन्द्रंजहिपुमांसंयातुधानमुतस्त्रियंमाययाशाशदानाम् ।
विग्रीवासोमूरदेवाऋदन्तुमातेदृशन्त्सूर्यमुच्चरन्तम् ॥ २४ ॥

इन्द्र । जहि । पुमांसम् । यातुऽधानम् । उत । स्त्रियम् ।
मायया । शाशदानाम् । विऽग्रीवासः । मूरऽदेवाः ।
ऋदन्तु । मा । ते । दृशन् । सूर्यम् । उत्ऽचरन्तम् ॥ २४ ॥

हे इन्द्र पुमांसं पुंरूपधारिणं यातुधानं राक्षसं जहि मारय। उतापिच मायया वञ्चनया शाशदानां हिंसन्तीं स्त्रियं राक्षसीं च जहि। अपिच मूरदेवाः मारणक्रीडाराक्षसाः विग्रीवासः विच्छिन्नग्रीवाः सन्तः ऋदन्तु नश्यन्तु ते तथाविधा राक्षसाः उच्चरन्तं उद्यन्तं सूर्यमादित्यं मा-दृशन् माद्राक्षुः॥ २४॥

२४. इन्द्र, पुरुष-राक्षस का विनाश करो और जो राक्षसी माया-द्वारा हिंसा करती है, उसे भी विनष्ट करो। मारना ही जिन राक्षसों का खेल है, वे कबन्ध (छिन्न-ग्रीव) होकर विनष्ट हों। वे उदय-शील सूर्य देखने न पावें।

उपाकरणोत्सर्जनयोः मण्डलाद्यन्तहोमेप्रतिचक्ष्वेत्येषा सूत्रितञ्च—योनःस्वोग्निनरःप्रतिच-क्ष्वेति।

सैषा पञ्चविंशी—

प्रति॑चक्ष्व॒विच॒क्ष्वेन्द्र॑श्चसोमजागृतम्।
रक्षो॑भ्योव॒धम॑स्यतम॒शनिं॑यातु॒मद्भ्यः॥ २५॥ ९॥

प्रति॑। च॒क्ष्व॒। वि। च॒क्ष्व॒। इन्द्रः॑। च॒। सो॒म॒। जा॒गृ॒त॒म्।
रक्षः॑ऽभ्यः। व॒धम्। अ॒स्य॒त॒म्। अ॒शनि॑म्। या॒तु॒मत्॒ऽभ्यः॑॥२५॥९॥

हे सोम त्वमिन्द्रश्च प्रतिचक्ष्व प्रत्येकं पश्य राक्षसान् तथा विचक्ष्व विविधं पश्य यथास्मान् न बाधेरन् तथा पश्येत्यर्थः। युवां च संहतौ जागृतं जागरूकौ रक्षोवधोद्युक्तौ भव-तम्। यातुमद्भ्योहिंसावद्भ्योरक्षोभ्योराक्षसेभ्यः अशनिं अशनिरूपं वधमायुधं अस्यतं क्षिप-तम्॥ २५॥

२५. सोम, तुम और इन्द्र प्रत्येक को देखो और विविध प्रकार से देखो। जागो और राक्षसों के लिए वज्र-रूप आयुध फेंको।

॥ इति पञ्चमस्य सप्तमे नवमोवर्गः॥ ९॥

॥ इति सप्तमे मण्डले षष्ठोनुवाकः॥ ६॥

**॥ इति वासिष्ठं सप्तमं मण्डलं समाप्तम्॥ ७॥**

## ।। अथप्रागाथमष्टमंमण्डलम् ।।

अष्टमेमण्डले दशानुवाकाः तत्र प्रथमेनुवाके पञ्चसूक्तानि तेषांमाचिदन्यदिति चतुस्त्रिं-शदृचं प्रथमं सूक्तम् अत्रानुक्रम्यते—माचिच्चतुस्त्रिंशन्मेधातिथिमेध्यातिथी ऐन्द्रं बार्हतं द्विप्रगा-थादि द्वित्रिष्टुबन्तमाद्यं द्वृचं प्रगाथोपश्यत्सघौरः सन्भ्रातुः कण्वस्य पुत्रतामगात् प्लायोगिश्चा-संगोयः स्त्रीभूत्वा पुमानभूत् समेध्यातिथये दानं दत्वा स्तुहिस्तुहीति चतसृभिरात्मानं तुष्टाव पत्नीचास्याङ्गिरसी शश्वती पुंस्त्वमुपलभ्यैनं प्रीतान्त्ययातुष्टावेति । अस्यायमर्थः—अस्यसू-क्तस्य मेधातिथिमेध्यातिथिनामानौ द्वावृषी तौच कण्वगोत्रौ ऋषिश्चानुक्तगोत्रः प्राङ्मत्स्या-त्काण्वइति परिभाषितत्वात् । आद्यस्य द्वृचस्यतु घोरस्यपुत्रः स्वकीयभ्रातुः कण्वस्य पुत्रतांप्रा-प्तत्वात् काण्वः प्रगाथाख्यऋषिः प्लायोगिनाम्नोराज्ञः पुत्रःआसङ्गाभिधानोराजा देवशापात् स्त्री-त्वमनुभूय पश्चात्तपोबलेन मेधातिथेः प्रसादात् पुमान्भूत्वा तस्मै बहुधनं दत्त्वा स्वकीयमन्तरा-त्मानं दत्तदानं स्तुहिस्तुहीत्यादिभिश्चतसृभिर्ऋग्भिः अस्तौत् अतस्तासां आसङ्गाख्योराजाऋ-षिः अस्यासङ्गस्यभार्याङ्गिरसः सुता शश्वत्याख्या भर्तुः पुंस्त्वमुपलभ्य प्रीतासती स्वभर्तारं अ-न्वस्यस्थूरमित्यनया स्तुतवती अतस्तस्याऋचः शश्वती ऋषिका । अन्त्ये द्वे त्रिष्टुभौ द्वितीयाचतु-र्थ्यौसतोबृहत्यौ शिष्टाबृहत्यः कृत्स्नस्यसूक्तस्येन्द्रोदेवता स्तुहिस्तुहीत्याद्याश्चतस्रआत्मकृतस्य दानस्य स्तूयमानत्वात्तद्देवताकाःअन्वस्येत्यस्याआसंगाख्योराजा देवता यातेनोच्यतेसादेवतेति न्यायात् । महाव्रते निष्केवल्ये बार्हततृचाशीतौ आदितएकोनत्रिंशोविनियुक्ताः तथैवपञ्चमार-ण्यकेसूत्रितम्—माचिदन्यद्विशंसतेत्येकयानात्रिंशदिति । चातुर्विंशिकेहनि माध्यन्दिनेसवनेमैत्रावरु णस्य माचिदन्यदिति वैकल्पिकः स्तोत्रियः प्रगाथः । सूत्रितञ्च—माचिदन्यद्विशंसतयच्चिद्धि-त्वाजनाइमइति स्तोत्रियानुरूपाविति । ग्रावस्तोत्रेप्याद्याविनियुक्ता सूत्रितंच—आतूनइन्द्रक्षुमन्तं माचिदन्यद्विशंसतेति । उपाकर्मोत्सर्जनयोर्मण्डलादिहोमेप्येषा सूच्यतेहि—माचिदन्यदाग्नेयाहि स्वादिष्ठयेति ।

तत्र प्रथमा—

मा॒चि॒द॒न्यद्विशं॑सत॒सखा॑यो॒मारि॑षण्यत ।
इन्द्र॒मित्स्तो॑ता॒वृष॑णं॒सचा॑सु॒तेमुहु॑रु॒क्थाच॑शंसत ॥ १ ॥

मा । चित् । अन्यत् । वि । शंसत । सखायः । मा । रिषण्यत । इन्द्रम् ।
इत् । स्तोत । वृषणम् । सचा । सुते । मुहुः । उक्था । च । शंसत ॥ १ ॥

हे सखायः समानख्यानाः स्तोतारः इन्द्रस्तोत्रादन्यत्स्तोत्रं माचिद्विशंसत मैवोच्चारयत मारिषण्यत माहिंसितारोभवत अन्यदीयस्तोत्रोच्चारणेन वृथोपक्षीणा माभवत। सुतेभिषुते सोमे वृषणं कामानां वर्षितारमिन्द्रमित् इन्द्रमेव हे प्रस्तोत्रादयः सचा सह संघीभूय स्तोत स्तुत। हे प्रशस्त्रादयः उक्थाच उक्थानि शस्त्राणि चेन्द्रविषयाणि यूयं मुहुः पुनः पुनः शंसत ॥ १ ॥

१. सखा स्तोताओ, इन्द्र के सिवा दूसरे की स्तुति नहीं करना। हिंसित मत होना। सोमाभिषव होने पर एकत्र होकर अभीष्ट-वर्षी इन्द्र की स्तुति करो। बार-बार उक्थ उच्चारण करना।

अवक्रक्षिणंवृषभंयथाजुरंगांनचर्षणीसहम् ।
विद्वेषणंसंवननोभयंकरंमंहिष्ठमुभयाविनम् ॥ २ ॥

अवऽक्रक्षिणम् । वृषभम् । यथा । अजुरम् । गाम् । न । चर्षणिऽसहम् ।
विऽद्वेषणम् । सम्ऽवनना । उभयम्ऽकरम् । मंहिष्ठम् । उभयाविनम् ॥ २ ॥

वृषभं यथा वृषभमिव अवक्रक्षिणं अवकर्षणशीलं शत्रूणां हिंसितारं अजुरं जरारहितं अहिंसितं वा गां न गामिव वृषभमिव चर्षणीसहं चर्षणीनां मनुष्याणां शत्रुभूतानामभिभवितारं विद्वेषणं विद्वेष्टारं शत्रूणां संवनना संवननं सम्यक्संभजनीयं स्तोतृभिः उभयंकरं निग्रहानुग्रहयोरुभयोः कर्तारम् मंहिष्ठं दातृतमम् उभयाविनं दिव्यपार्थिवलक्षणेन उभयविधधनेनोपेतं यद्वा स्थावरजङ्गमरूपेण द्विप्रकारेण रक्षितव्येनोपेतं अथवा उभयविधैः स्तोतृभिः यष्टृभिश्चोपेतं । एवंविधमिन्द्रमित् स्तोतेत्यन्वयः ॥ २ ॥

२. वृषभ की तरह शत्रुओं के हिंसक, अजर वृषभ की तरह मनुष्यों के विजेता, शत्रुओं के द्वेष्टा, स्तोताओं के भजनीय, दिव्य और पार्थिव धनवाले और दाताओं में श्रेष्ठ इन्द्र की स्तुति करो।

चातुर्विंशिकेहनि माध्यन्दिनसवने यच्चिद्धित्वेति प्रशास्तुर्वैकल्पिकोनुरूपःप्रगाथः सूत्रन्तूदाहृतम्।

तत्राद्या सूक्ते तृतीया—

यच्चिद्धित्वाजनाइमेनानाहवन्तऊतये ।
अस्माकंब्रह्मेदमिन्द्रभूतुतेहाविश्वाचवर्धनम् ॥ ३ ॥

यत् । चित् । हि । त्वा । जनाः । इमे । नाना । हवन्ते ।
ऊतये । अस्माकम् । ब्रह्म । इदम् । इन्द्र । भूतु । ते ।
अहा । विश्वा । च । वर्धनम् ॥ ३ ॥

इमे दृश्यमानाः सर्वेजनाः हे इन्द्र त्वां ऊतये रक्षणाय तर्पणायवा नाना पृथक्पृथक् यच्चित् यद्यपि हवन्ते स्तुवन्ति हीतिपूरणः तथापि अस्माकं इदं ब्रह्म स्तोत्रमेव हेइंद्र ते तव वर्धनं वर्धकं भूतु भवतु न केवलमिदानीमेव अपितु विश्वाहा सर्वाण्यहानि सर्वेष्वहस्सुच इदमेव स्तोत्रं त्वां वर्धयत्वित्यर्थः ॥ ३ ॥

३. इन्द्र यद्यपि रक्षा के लिए ये मनुष्य अलग-अलग तुम्हारी स्तुति करते हैं, तो भी हमारा यह स्तोत्र ही सदा तुम्हारा वर्द्धक हो।

वितर्तूर्यन्तेमघवन्विपश्चितोर्योविपोजनानाम् ।
उपक्रमस्वपुरुरूपमाभरवाजन्नेदिष्ठमूतये ॥ ४ ॥

वि । तर्तूर्यन्ते । मघऽवन् । विपःऽचितः । अर्यः । विपः ।
जनानाम् । उप । क्रमस्व । पुरुऽरूपम् । आ । भर ।
वाजम् । नेदिष्ठम् । ऊतये ॥ ४ ॥

हे मघवन् धनवन्निन्द्र विपश्चितोविद्वांसः त्वदीयाः स्तोतारः अर्यः अभिगन्तारः जनानां शत्रूणां विपोवेपयितारः सन्तः वितर्तूर्यन्ते भृशं आपदोवितरन्ति अतिक्रामन्ति तादृशस्त्वं उपक्रमस्व उपगच्छास्मान् पुरुरूपं बहुरूपं नेदिष्ठं अंतिकतमं वाजमन्नं ऊतये तर्पणाय आभरास्मभ्यम् ॥ ४ ॥

४. धनी इन्द्र, तुम्हारे विद्वान् स्तोता शत्रुओं में विकम्प उत्पन्न करते हुए सदा ही आपद से उत्तीर्ण होते हैं। हमारे निकट आओ। तृप्ति के लिए बहुरूपीवाले और निकटस्थित अन्न हमें प्रदान करो।

अथ पञ्चमी—

महेचनत्वामद्रिवःपराशुल्कायदेयाम् ।
नसहस्रायनायुतायवज्रिवोनशतायशतामघ ॥ ५ ॥ १० ॥

महे । चन । त्वाम् । अद्रिऽवः । परा । शुल्काय । देयाम् । न ।
सहस्राय । न । अयुताय । वज्रिऽवः । न । शताय । शतऽमघ ॥ ५ ॥ १० ॥

हे अद्रिवोवज्रवन्निन्द्र त्वा त्वां चनेति निपातद्वयसमुदायोविभज्ययोजनीयः महेच महतेपि शुल्काय मूल्याय न परादेयां न विक्रीणानि। हे वज्रिवोवज्रहस्तेन्द्र सहस्राय सहस्रसंख्यायच धनाय न परादेयाम्। अयुताय दशसहस्रायच शुल्काय न परादेयाम्। हे शतामघ बहुधनेन्द्र शताय बहुनामैतत् अपरिमितायच धनाय न परादेयां नविक्रीणानि उक्तसंख्याद्धनादपि त्वं ममप्रियतमोसीत्यर्थः ॥ ५॥

५. वज्री इन्द्र, तुम्हें महामूल्य में भी में नहीं बेच सकता। वज्रहस्त, हजार और दस हजार में भी तुम्हें नहीं बेंच सकता। असीम धन के लिए भी नहीं बेच सकता।

॥ इति पंचमस्य सप्तमे दशमोवर्गः ॥ १० ॥

अथ षष्ठी—

वस्याँइन्द्रासिमेपितुरुतभ्रातुरभुंञ्जतः।
माताचमेछदयथःसमावसोवसुत्वनायराधसे ॥ ६ ॥

वस्यान्। इन्द्र। असि। मे। पितुः। उत। भ्रातुः। अभुंञ्जतः।
माता। च। मे। छदयथः। समा। वसो इति।
वसुऽत्वनायं। राधसे ॥ ६ ॥

हे इन्द्र त्वं मे मदीयात्पितुर्जनकादपि वस्यान् वसीयान् वसुमत्तरोसि उतापिच अभुञ्जतः अपालयतोमम भ्रातुरपि वसीयान् त्वमधिकोसि हे वसोवासकेन्द्र मे मदीया माता च त्वञ्च समा समौ समानौ सन्तौ। पुमान्स्त्रियेति पुंसः शेषः। छदयथः अर्चतिकर्मायम् मां पूजितं कुरुथः। किमर्थं वसुत्वनाय व्यापनाय राधसे धनायच उभयोर्लाभायेत्यर्थः॥ ६ ॥

६. इन्द्र, तुम मेरे पिता से भी अधिक धनी हो। न भागनेवाले मेरे भाई से भी तुम अधिक धनी हो। निवासी इन्द्र, मेरी माता और तुम समान होकर मुझे व्यापक धन के लिए पूजित करो।

क्वेयथक्वेदसिपुरुत्राचिद्धितेमनः।
अलर्षियुध्मखजकृत्पुरन्दरप्रगायत्राअंगासिषुः ॥ ७ ॥

क्व। इयथ। क्व। इत्। असि। पुरुऽत्रा। चित्। हि। ते।
मनः। अलर्षि। युध्म। खजऽकृत्। पुरम्ऽदर। प्र। गायत्राः।
अगासिषुः ॥ ७ ॥

हे इन्द्र क कुत्रदेशे इयथ गतवानसि पुरा क्वेत् कुत्रचासि भवसि इदानीं वर्तसे पुरुत्रा-चिद्धि बहुषु हि यजमानेषु ते त्वदीयं मनः संचरति। हे युध्म युद्धकुशल खजकृत् युद्धस्य क-र्तः हे पुरन्दर आसुरीणां पुरां दारयितः हे इन्द्र अलर्षि आगच्छ गायत्राः गानकुशलाः अस्म-दीयाः स्तोतारः प्रागासिषुः प्रगायन्ति स्तुवन्ति अलर्षीत्येतत् दाधर्त्यादावियर्तेर्निपात्यते ॥ ७ ॥

७. इन्द्र तुम कहाँ गये हो? कहाँ हो? तुम्हारा मन नाना दिशाओं में रहता है। युद्ध-कुशल और युद्धकारी पुरन्दर, आओ। गाता तुम्हारी स्तुति करते हैं।

प्रास्मैगायत्रमर्चतवावातुर्यःपुरन्दरः।
याभिःकाण्वस्योपबर्हिरासदंयासद्वज्रीभिनत्पुरः ॥ ८ ॥

प्र। अस्मै। गायत्रम्। अर्चत। ववातुः। यः। पुरम्ऽदरः।
याभिः। काण्वस्य। उप। बर्हिः। आऽसदम्। यासत्।
वज्री। भिनत्। पुरः ॥ ८ ॥

अस्माइन्द्राय गायत्रं गातव्यं साम गायत्रसंज्ञं वा प्रार्चत प्रगायत पुरन्दरः पुरांदारयिता य-इन्द्रः ववातुर्वननीयः संभजनीयः यद्वा वावातुः संभक्तः स्तोतुः यइन्द्रः पुरन्दरः शत्रुपुराणां दा-रयिता याभिर्ऋग्भिः काण्वस्य कण्वपुत्रस्य मेधातिथेर्मेध्यातिथेश्च बर्हिर्यज्ञं उपासदं उपास-त्तुं उपगन्तुं यासत् गच्छेत् वज्री वज्रयुक्तः सन् याभिश्च ऋग्भिः स्तूयमानः सन् पुरः शात्रवीः भिनत् भिन्द्यात् तास्वृक्षु गायत्रं साम गायतेत्यर्थः ॥ ८ ॥

८. इन इन्द्र के लिए गाने योग्य गान करो। पुरन्दर (शत्रु-पुरी-भेदक) इन्द्र सबके लिए संभजनीय हैं। जिन ऋचाओं से कण्व-पुत्रों के यज्ञ में वज्री होकर इन्द्र गये थे और जिन ऋचाओं से शत्रुओं की पुरियों को नष्ट किया था, उन्हीं ऋचाओं से गाने योग्य गान गाओ।

अथ नवमी—

येतेसन्तिदशग्विनःशतिनोयेसहस्रिणः।
अश्वासोयेतेवृषणोरघुद्रुवस्तेभिर्नस्तूयमागहि ॥ ९ ॥

ये। ते। सन्ति। दशऽग्विनः। शतिनः। ये। सहस्रिणः।
अश्वासः। ये। ते। वृषणः। रघुऽद्रुवः।
तेभिः। नः। तूयम्। आ। गहि ॥ ९ ॥

हे इन्द्र दशग्विनः दशयोजनगामिनः ये अश्वास्ते तव सन्ति विद्यन्ते येचान्ये शतिनः शतसंख्याकाः सहस्रिणः सहस्रसंख्याकाः सन्ति ये ते त्वदीयाअश्वासःअश्वाः वृषणः सेचन-समर्थायुवानः रघुद्रुवः शीघ्रगामिनश्च तेभिस्तैः सर्वैरश्वैर्नोस्मान् तूयं क्षिप्रं आगत्यागच्छ ॥९॥

९. इन्द्र, तुम्हारे जो दस योजन चलनेवाले सौ और हजार घोड़े हैं, वे सींचनेवाले शीघ्रगामी हैं। इन्हीं अश्वों की सहायता से शीघ्र आओ।

आत्व१द्यसंबर्दुघांहुवेगायत्रवेंपसम्।
इन्द्रंधेनुंसुदुघामन्यामिषमुरुधारामरंकृतम् ॥ १० ॥११॥

आ। तु। अद्य। सबःऽदुघाम्। हुवे। गायत्रऽवेंपसम्।
इन्द्रम्। धेनुम्। सुऽदुघाम्। अन्याम्। इषम्।
उरुऽधाराम्। अरम्ऽकृतम् ॥ १० ॥ ११ ॥

अनया इन्द्रं धेनुरूपेण वृष्टिरूपेणच निरूपयन् स्तौति अद्येदानीं धेनुं धेनुरूपमिन्द्रं नु क्षिप्रं आहुवे आह्वये कीदृशीं धेनुं सबर्दुघां पयसोदोग्ध्रीं गायत्रवेपसं प्रशस्यवेगां सुदुघां सुखेन दोग्धुं शक्यां अन्यामुक्तविलक्षणां उरुधारां बहूदकधारां इषं एषणीयां वृष्टिं एतद्रूपेण वर्तमानं अरंकृतं अलंकर्तारं पर्याप्तकारिणं वेन्द्रं चाह्वये ॥ १० ॥

१०. आज दूध देनेवाली, प्रशंसनीय वेगवाली और अनायास दुही जानेवाली गाय (धेनु-स्वरूप इन्द्र) की मैं स्तुति करता हूँ। इसके अतिरिक्त बहुत धाराओंवाली वाञ्छनीया वृष्टि के स्वरूप यथेष्टकर्त्ता इन्द्र की मैं स्तुति करता हूँ।

॥ इति पञ्चमस्य सप्तमे एकादशोवर्गः ॥ ११ ॥

अथैकादशी—

यत्तुदत्सूरएतशंवंकूवातस्यपर्णिना।
वहत्कुत्समार्जुनेयंशतक्रतुःत्सरद्गन्धर्वमस्तृतम् ॥ ११॥

यत्। तुदत्। सूरः। एतशम्। वंकू इति। वातस्य।
पर्णिना। वहत्। कुत्सम्। आर्जुनेयम्। शतऽक्रतुः।
त्सरत्। गन्धर्वम्। अस्तृतम् ॥ ११ ॥

सूरः सूर्यः एतशं एतत्संज्ञं राजर्षिं यद्यदा तुदत् अव्यथयत् तदानीं एतशं रक्षितुं वंकू वक्रगामिनौ वातस्य वायोः सदृशौ पर्णिना पर्णिनौ पतनवन्तौ ईदृशावश्वौ शतक्रतुः बहुविधकर्मेन्द्रः आर्जुनेयं अर्जुन्याः पुत्रं कुत्सम्रर्षिं वहत् अवहत् आनयत् कुत्सेन सार्धं समानं रथमारुह्य एतशरक्षणायागच्छदित्यर्थः। तथाच निगमान्तरम्—मैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रइति। गन्धर्वं गवां रश्मीनां धर्तारं सूर्यं अस्तृतं केनाप्यहिंसितं त्सरत् अत्सरत् छद्मगत्या[1] अगच्छत् सूर्येण योद्धुं गतवानित्यर्थः ॥ ११ ॥

---

१ ऋ० सं० १. ४. २९.

११. जिस समय सूर्य ने "एतश" नाम के राजर्षि को कष्ट दिया था, उस समय वक्रगामी और वायु-वेग से चलनेवाले दोनों अश्वों ने अर्जुन-पुत्र कुत्स ऋषि को ढोया था। बहुविधकर्मा इन्द्र भी किरण-धारक और अहिंसित सूर्य को, छद्म-वेश से, आक्रमण करने गये थे।

यऋतेचिदभिश्रिषःपुराजत्रुभ्यआतृदः।
सन्धातासन्धिंमघवापुरूवसुरिष्कर्ताविह्रुतंपुनः ॥ १२ ॥

यः। ऋते। चित्। अभिऽश्रिषः। पुरा। जत्रुऽभ्यः।
आऽतृदः। सम्ऽधाता। सम्ऽधिम्। मघऽवा।
पुरुऽवसुः। इष्कर्ता। विऽह्रुतम्। पुनरिति ॥ १२ ॥

यइन्द्रः अभिश्रिषः अभिश्लिषः अभिश्लेषणान् सन्धानद्रव्यात् ऋतेचित् विनापि जत्रुभ्योग्रीवाभ्यः सकाशात् आतृदः आतर्दनात् आरुधिरनिःस्रवणात् पुरा पूर्वमेव सन्धिं संधातव्यं तं संधाता संयोजयिता भवति मघवान् धनवान् पुरुवसुः बहुधनः सइन्द्रः विह्रुतं विच्छिन्नं तं पुनरिष्कर्ता संस्कर्ता भवति ॥ १२ ॥

१२. जो इन्द्र (संघटन-सन्धान) द्रव्य के बिना ही, गर्दन से रुधिर निकलने के पहले ही, जोड़ों को जोड़ देते हैं, वही धनी—बहु-धनी—इन्द्र विच्छिन्न का पुनः संस्कार कर देते हैं।

माभूमनिष्ट्याइवेन्द्रत्वदरणाइव।
वनानिनप्रजहितान्यद्रिवोदुरोषासोअमन्महि ॥ १३ ॥

मा। भूम। निष्ट्याःऽइव। इन्द्र। त्वत्। अरणाःऽइव।
वनानि। न। प्रऽजहितानि। अद्रिऽवः। दुरोषासः। अमन्महि ॥ १३ ॥

हे इन्द्र त्वत् त्वत्तः त्वत्प्रसादात् निष्ट्याइव नीचैः भूताः हीना निष्ट्याः तइव वयं माभूम तथा अरणाइव अरमणाः दुःखिनइव वयं माभूम अपिच प्रजहितानि प्रक्षीणानि शाखादिभिर्वियुक्तानिन वनानि वृक्षजातानीव वयं पुत्रादिभिः वियुक्तामाभूम। हे अद्रिवोवज्रवन्निन्द्र दुरोषासः ओषितुमन्यैर्दग्धुमशक्याः दुर्येषु गृहेषु निवसन्तोवा वयं अमन्महि त्वां स्तुमः ॥ १३ ॥

१३. इन्द्र, तुम्हारी दया से हम नीच न होने पावें; दुःखी न हों। क्षीण वनों की तरह हम पुत्र-पौत्रादि से शून्य न हों। वज्रधर इन्द्र, हमें दूसरे जला न सकें। घर में रहते हुए हम तुम्हारी स्तुति करते हैं।

अमन्महीदनाशवोनुग्रासश्चवृत्रहन्।
सकृत्सुतेमहताशूरराधसानुस्तोमंमुदीमहि ॥ १४ ॥

अमन्महि । इत् । अनाशवः । अनुग्रासः । च । वृत्रऽहन् । सकृत् ।
सु । ते । महता । शूर । राधसा । अनु । स्तोमम् । मुदीमहि ॥ १४ ॥

हे वृत्रहन् वृत्रस्यासुरस्य हन्तरिन्द्र अनाशवःअशीघ्राः अत्वरमाणाः अनुग्रासः अनुग्राः अनुद्धूर्णाश्च सन्तोवयं भक्तिश्रद्धापुरःसरं शनैस्त्वां अमन्महीत स्तुमएव । हे शूर वीर्यवन्निन्द्र ते त्वदर्थं सकृत् एकवारमपि महता प्रभूतेन राधसा धनेन हविर्लक्षणेन सह शोभनं स्तोमं स्तोत्रं अनुमुदीमहि अनुमोदेमहि अनुब्रवामेत्यर्थः ॥ १४ ॥

१४. वृत्र-घातक, शीघ्रता-रहित और उग्रता-शून्य होकर हम धीरे-धीरे तुम्हारी स्तुति करेंगे।

वीर, एक बार यथेष्ट धन के साथ हम तुम्हारे लिए सुन्दर स्तोत्र करेंगे।

यदिस्तोमंममश्रवदस्माकमिन्द्रमिन्दवः ।
तिरःपवित्रंससृवांसआशवोमन्दन्तुतुग्र्यावृधः ॥ १५ ॥ १२ ॥

यदि । स्तोमम् । मम । श्रवत् । अस्माकम् । इन्द्रम् । इन्दवः । तिरः ।
पवित्रम् । ससृऽवांसः । आशवः । मन्दन्तु । तुग्र्यऽवृधः ॥ १५ ॥ १२ ॥

अयमिन्द्रोमम मदीयं स्तोत्रं यदि श्रवत् शृणुयात् तदानीं तमिन्द्रं अस्माकं अस्मदीया इन्दवः सोमाः मन्दन्तु मादयन्तु हर्षयन्तु । कीदृशाः सोमाः तिरः तिर्यगवस्थितं पवित्रं पवनसाधनं दशापवित्रं ससृवांसः प्राप्तवन्तः दशापवित्रेण पूताइत्यर्थः आशवः शीघ्रं मदजनकाः तुग्र्यावृधः तुग्र्याभिः वसतीवर्यैकधनाख्याभिरद्भिर्वर्धमानाः ॥ १५ ॥

१५. यदि इन्द्र हमारा स्तोत्र सुनें, तो, उसी समय, हमारे सोम उन्हें प्रसन्न कर सकते हैं। वह सोम वक्र भाव से स्थित "दशापवित्र" से पवित्र किये गये हैं और "एक धन" आदि जलों के द्वारा वर्द्धमान हुए हैं; इस लिए सब सोम शीघ्र मदकारी हो गये हैं।

॥ इति पञ्चमस्य सप्तमे द्वादशो वर्गः ॥ १२ ॥

अथ षोडशी—

आत्वद्यसधस्तुतिंवावातुःसख्युरागहि ।
उपस्तुतिर्मघोनांप्रत्वावत्वधातेवश्मिसुष्टुतिम् ॥ १६ ॥

आ । तु । अद्य । सधऽस्तुतिम् । ववातुः । सख्युः ।
आ । गहि । उपऽस्तुतिः । मघोनाम् । प्र । त्वा ।
अवतु । अध । ते । वश्मि । सुऽस्तुतिम् ॥ १६ ॥

हे इन्द्र वावातुः संभक्तुः त्वां सेवमानस्य सख्युः स्तोतुः सधस्तुतिं अन्यैर्ऋत्विग्भिः सह क्रियमाणां स्तुतिं अद्येदानीं तु क्षिप्रमागहि आगच्छ। मघोनां हविष्मतां अन्येषामपि यजमानानामुपस्तुतिः स्तोत्रं त्वा त्वां प्रावतु प्रगच्छतु प्रतर्पयतु वा। अध अधुना सुष्टुतिं त्वद्विषयां शोभनां स्तुतिं अहमपि वश्मि कामये ॥ १६ ॥

१६. इन्द्र, अपने सेवक स्तोता की, अन्यों के साथ की जाती स्तुति की ओर आज शीघ्र आओ। अन्य हविवालों का स्तोत्र तुम्हारे पास जाय। इस समय मैं भी तुम्हारी सुन्दर स्तुति की इच्छा करता हूँ।

सोताहिसोममद्रिभिरेमेनमप्सुधावत।
गव्यावस्त्रेववासयन्तइन्नरोनिर्धुक्षन्वक्षणाभ्यः ॥ १७ ॥

सोत। हि। सोमम्। अद्रिऽभिः। आ। ईम्। एनम्। अप्ऽसु।
धावत। गव्या। वस्त्राऽइव। वासयन्तः। इत्। नरः।
निः। धुक्षन्। वक्षणाभ्यः ॥ १७ ॥

हेअध्वर्यवः अद्रिभिर्ग्रावभिः सोमं सोत। हिरवधारणे अभिषुणुतैव एनमिमं अप्सु वसतीवरीषु आधावत अस्य सोमस्याधानं कुरुत। अदाभ्यग्रहेहिमांदासुतइत्यादिभिर्मंत्रैः। वसतीवरीष्वाधवनं सोमस्य क्रियते तत्कुरुतेत्यर्थः। गव्या गविभवानि वस्त्रेव वस्त्राणि आच्छादकानि चर्माणीव मेघान्वासयन्तइत् आच्छादयन्तएव नरोनेतारइन्द्रस्यानुचरामरुतः वक्षणाभ्योनदीभ्यः नदीनामर्थाय निर्धुक्षन् उदकानि निर्दुहन्ति क्षमयन्ति यतएवं अतः कारणात् इन्द्रयागाय सोममद्रिभिरभिषुणुतैव मोदासिषतेत्यर्थः ॥ १७ ॥

१७. अध्वर्युओ, पत्थरों से सोम का अभिषव करो और इसे जल में धोओ। गोचर्म की तरह मेघों के द्वारा शरीर ढककर मरुद्गण नदियों के लिए जल दुहते हैं।

अथाष्टादशी—

अधज्मोअधवादिवोबृहतोरोचनादधि।
अयावर्धस्वतन्वागिरामभाजातासुक्रतोपृण ॥ १८ ॥

अध। ज्मः। अध। वा। दिवः। बृहतः। रोचनात्। अधि।
अया। वर्धस्व। तन्वा। गिरा। मम। आ। जाता।
सुक्रतो इति सुऽक्रतो। पृण ॥ १८ ॥

हे इन्द्र अध अधुना ज्मः जमन्ति गच्छत्यस्यामिति ज्मा पृथिवी तस्याः सकाशात् अथवा अपिवा दिवोन्तरिक्षात् बृहतोमहतोरोचनात् नक्षत्रैर्दीप्यमानात्स्वर्गाद्वा आगत्य अधिः

पञ्चम्यर्थानुवादी अया अनया तन्वा तया विस्तृतया मम मदीयया गिरा स्तुत्या वर्धस्व वृद्धो-भव हे सुक्रतो शोभनकर्मवन्निन्द्र जाता जातान् अस्मदीयान् जनान् आपृण अभिलषितैः फलैरापूरय ॥ १८ ॥

१८. इन्द्र, पृथिवी, अन्तरिक्ष अथवा विशाल प्रकाशित प्रदेश से आकर मेरी इस विस्तृत स्तुति-द्वारा वर्द्धित होओ। सुयज्ञ इन्द्र, हमारे यहाँ उत्पन्न मनुष्यों को अभिलषित फल से पूर्ण करो।

इन्द्रा॑य॒ सु म॒दिन्त॑मं॒ सोमं॑ सोता॒ वरे॑ण्यम् ।
श॒क्र ए॑णं पीपय॒द्विश्व॑या धि॒या हि॑न्वा॒नं न वा॑ज॒युम् ॥ १९ ॥

इन्द्रा॑य । सु । म॒दिन्ऽत॑मम् । सोम॑म् । सो॒त॒ । वरे॑ण्यम् ।
श॒क्रः । ए॒न॒म् । पी॒प॒य॒त् । विश्व॑या । धि॒या । हि॒न्वा॒नम् ।
न । वा॒ज॒ऽयुम् ॥ १९ ॥

हे अध्वर्यवः इन्द्रायेन्द्रार्थं मदिन्तमं मादयितृतमं वरेण्यं वरणीयं भजनीयं सोमं सु सोत सुष्ठु अभिषुणुत । कुतइत्यत आह शक्र इन्द्रः विश्वया धिया सर्वया क्रिययाग्निष्टोमादिलक्षणया हिन्वानं प्रीणयन्तं वाजयुं अन्नमात्मनइच्छन्तं एनं यजमानं नेति सम्प्रत्यर्थीयः संप्रति पीपयत् वर्धयति अतःकारणात् तस्माइन्द्राय सोमं सुनुतेत्यर्थः ॥ १९ ॥

१९. अध्वर्युओ, इन्द्र के लिए तुम सबसे अधिक मदकर सोम प्रस्तुत करो। इन्द्र सारी क्रियाओं-द्वारा प्रसन्नता-दायक और अन्नाभिलाषी यजमान को वर्द्धित करो।

अथ विंशी—

मा त्वा॒ सोम॑स्य॒ गल्द॑या॒ सदा॒ याच॑न्न॒हं गि॒रा ।
भूर्णिं॑ मृ॒गं न सव॑नेषु चुक्रुधं॒ क ईशा॑नं॒ न या॑चिषत् ॥ २० ॥ १३ ॥

मा । त्वा॒ । सोम॑स्य । गल्द॑या । सदा॑ । याच॑न् । अ॒हम् ।
गि॒रा । भूर्णि॑म् । मृ॒गम् । न । सव॑नेषु । चु॒क्रु॒ध॒म् । कः ।
ईशा॑नम् । न । या॒चि॒ष॒त् ॥ २० ॥ १३ ॥

हे इन्द्र त्वां सवनेषु यज्ञेषु सोमस्य गल्दया गालनेन आस्रावणेन गिरा स्तुत्या च युक्तोहं सदा सर्वदा याचन् याचमानः सन् माचुक्रुधं माक्रोधयानि बहुशोयाच्यमाने त्वयि क्रोधोजायते तं सोमस्यगालनेन स्तुत्याचापनयामीत्यर्थः । कीदृशं त्वां भूर्णिं भर्तारं मृगंन सिंहमिव भीमं । स्वामिनइन्द्रस्य याचने लौकिकन्यायं दर्शयति लोके कोवापुरुषः ईशानं ईश्वरं स्वामिनं न याचिषत् न याचेत सर्वएवहि याचते अतोहमपि त्वां स्वामिनं याचइति भावः ॥ २० ॥

॥ इति पञ्चमस्य सप्तमे त्रयोदशोवर्गः ॥ १३ ॥

२०. इन्द्र, सवनों (यज्ञों) में सोम प्रस्तुत करते और स्तुति तथा सदा प्रार्थना करते हुए मैं तुम्हें क्रुद्ध न करूँ। तुम भरणकर्त्ता और सिंह की तरह भयंकर हो। संसार में ऐसा कौन है, जो तुमसे याचना नहीं करता ?

मदेनेषितंमदमुग्रमुग्रेणशवसा ।

विश्वेषांतरुतारंमदच्युतंमदेहिष्मादद्दातिनः ॥ २१ ॥

मदेन । इषितम् । मदम् । उग्रम् उग्रेण । शवसा । विश्वेषाम् ।
तरुतारम् । मदऽच्युतम् । मदे । हि । स्म । ददाति । नः ॥ २१ ॥

मदेन मादयित्रा स्तोत्रा इषितं प्रेषितं मदं मदकरं उग्रं सोमं उद्गूर्णरसं उग्रेण उद्गूर्णेनाधिकेन शवसा बलेन युक्तइन्द्रः पिबत्वितिशेषः । पीत्वाच विश्वेषां सर्वेषां शत्रूणां तरुतारं तरीतारं जेतारं मदच्युतं मदस्य शत्रूणां गर्वस्य च्यावयितारं पुत्रं मदे सोमपानेन जनिते हर्षेसति नोस्मभ्यंददातिहिष्म ददाति खलु अतः सोमं पिबत्वित्यर्थः ॥ २१ ॥

२१. उग्र बलवाले इन्द्र, मद उत्पन्न करनेवाले स्तोता-द्वारा प्रस्तुत मदकर सोम का पान करें। सोमपान से हर्ष उत्पन्न होने पर इन्द्र हमें शत्रु-जेता और गर्व-ध्वंसक पुत्र देते हैं।

शेवारेवार्यापुरुदेवोमर्तायदाशुषे ।

ससुन्वतेचस्तुवतेचरासतेविश्वगूर्तोअरिष्टुतः ॥ २२ ॥

शेवारे । वार्या । पुरु । देवः । मर्ताय । दाशुषे । सः । सुन्वते । च ।
स्तुवते । च । रासते । विश्वऽगूर्तः । अरिऽस्तुतः ॥ २२ ॥

शेवारे शेवं सुखं तस्यगमके यज्ञे दाशुषे चरुपुरोडाशादीनिदत्तवते यजमानाय पुरु पुरूणि बहूनि वार्या वरणीयानि धनानि देवोदानादिगुणयुक्तइन्द्रः रासते ददाति सएव सुन्वतेच सोमाभिषवं कुर्वते च स्तुवते च स्तोत्रं कुर्वते च धनानि रासते ददाति । कीदृशः सः विश्वगूर्तः विश्वेषु सर्वेषु कार्येषूद्यतः स्वतः प्रवृत्तः अरिष्टुतः अरिभिः प्रेरयितृभिः प्रशस्तः ॥ २२॥

२२. इन्द्रदेव सुख-जनक यज्ञ में हव्य देनेवाले यजमान के लिए बहु-वरणीय धन देते हैं। वही सोमाभिषव-कर्त्ता और स्तोता को धन देते हैं। वे सारे कार्यों में उद्यत और स्तोताओं के प्रशस्य हैं।

एन्द्रयाहिमत्स्वचित्रेणदेवराधसा ।

सरोनप्रास्युदरंसपीतिभिरासोमेभिरुरुस्फिरम् ॥ २३ ॥

आ । इन्द्र । याहि । मत्स्व । चित्रेण । देव । राधसा । सरः । न ।
प्रासि । उदरम् । सपीतिऽभिः । आ । सोमेभिः । उरु । स्फिरम् ॥ २३॥

हे इन्द्र आयाहि आगच्छ हे देव द्योतमान चित्रेण दर्शनीयेन राधसा धनेनसोमलक्षणेन मत्स्व माद्य सपीतिभिः मरुद्भिः सह पीयमानैः सोमेभिः सोमैः उरु विस्तीर्णं स्फिरं वृद्धं उदरं आत्मीयं जठरं सरोन सरइव आपासि आपूरय। मापूरणे आदादिकः ॥ २३ ॥

२३. इन्द्र, आओ। देव, तुम दर्शनीय धन-द्वारा हृष्ट होओ। एकत्र पीत सोम-द्वारा अपना विस्तीर्ण और वृद्ध उदर, सरोवर की तरह, पूर्ण करो।

चातुर्विंशिकेऽहनि माध्यन्दिने ब्रह्मशस्त्रे आत्वेति वैकल्पिकः स्तोत्रियस्तृचः सूत्र्यतेहि—आत्वासहस्रमाशतं मभत्वासूरउदितेइति ब्राह्मणाच्छंसिनइति।

तत्र प्रथमा सूक्ते चतुर्विंशी—

आत्वासहस्रमाशतंयुक्तारथेहिरण्यये।
ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये ॥ २४ ॥

आ। त्वा। सहस्रम्। आ। शतम्। युक्ताः। रथे। हिरण्यये।
ब्रह्मऽयुजः। हरयः। इन्द्र। केशिनः। वहन्तु। सोमऽपीतये ॥ २४ ॥

हे इन्द्र त्वा त्वां सहस्रं सहस्रसंख्याका हरयस्त्वदीयाअश्वाः आवहन्तु आनयंत्वस्मयज्ञं तथा शतं शतसंख्याकाश्च भवदीयाः अश्वाः त्वामावहन्तु। यद्यपि द्वावेवास्यहरी तथापि तद्विभूतयोन्येपि बहवोश्वाः सन्ति। ननु युगपदनेकैरश्वैः कथं यातुं शक्यतइत्यतआह युक्ताइति हिरण्यये हिरण्मये स्वर्णविकारे हिरण्यशब्दाद्विकारार्थे विहितस्यमयटः ऋत्व्यवास्त्वेत्यादौ मलोपोनिपात्यते तादृशे रथे युक्ताः संबद्धाः बहूनामश्वानां शीघ्रगमनाय रथेविनियुक्तत्वात् युगपदेव सर्वैरश्वैर्गन्तुं शक्यतइतिभावः। कीदृशाहरयः ब्रह्मयुजः ब्रह्मणापरिवृढेनेन्द्रेण युक्ताः यद्वा ब्रह्मणास्मदीयेनस्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः केशिनः केशाः केसराः तैर्युक्ताः। किमर्थमिन्द्रस्य वहनं तत्राह सोमपीतये सोमस्य पानाय यथास्मदीयं सोमं पिबेत् अतआवहन्त्वित्यर्थः ॥ २४ ॥

२४. इन्द्र, शत-संख्यक और सहस्र-संख्यक अश्व, सोमपान के लिए, हिरण्मय (स्वर्णमय) रथ पर इन्द्र को वहन करें। वे अश्व इन्द्र से युक्त और केशवाले हैं।

आत्वारथेहिरण्ययेहरीमयूरशेप्या।
शितिपृष्ठावहतांमध्वोअन्धसोविवक्षणस्यपीतये ॥ २५ ॥ १४ ॥

आ । त्वा । रथे । हिरण्यये । हरी इति । मयूरऽशेप्या ।
शितिऽपृष्ठा । वहताम् । मध्वः । अन्धसः ।
विवक्षणस्य । पीतये ॥ २५ ॥ १४ ॥

पूर्वं हर्योर्विभूतिरूपा अश्वाइन्द्रमावहन्त्वितिप्रार्थितम् अधुना तावेवेन्द्रमावहतामितिप्रार्थ्यते हिरण्यये हिरण्यमये रथे युक्तौ मयूरशेप्या मयूरशेपौ मयूरवर्णं शेपोययोस्तौ सुपांसुलुगिति विभक्तेडर्चादेशः शितिपृष्ठा श्वेतपृष्ठौ एवंभूतौ अश्वौ हे इन्द्र त्वामावहतां । किमर्थं मध्वोमधुररसस्य विवक्षणस्य वक्तुमिष्टस्य स्तुत्यस्य यद्वा वोढव्यस्य प्राप्तव्यस्य अन्धसोन्नस्य सोमरूपस्य पीतये पानार्थम् ॥ २५ ॥

२५. श्वेत-पृष्ठ और मयूर वर्णवाले अश्व मधुर स्तुति के योग्य सोम को पीने के लिए हिरण्मय रथ से इन्द्र को ले जायें।

॥ इति पञ्चमस्य सप्तमे चतुर्दशोवर्गः ॥ १४ ॥

अथ षड्विंशी—

पिबात्व१स्यगिर्वणःसुतस्यपूर्वपाइव ।
परिष्कृतस्यरसिनइयमासुतिश्चारुर्मदायपत्यते ॥ २६ ॥

पिब । तु । अस्य । गिर्वणः । सुतस्य ।
पूर्वपाःऽइव । परिऽकृतस्य । रसिनः । इयम् । आऽसुतिः ।
चारुः । मदाय । पत्यते ॥ २६ ॥

हे गिर्वणः गीर्भिर्वननीय स्तुतिभिः संभजनीयेन्द्र सुतस्याभिषुतस्य अस्यसोमस्य क्रियाग्रहणं कर्तव्यमिति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी इममभिषुतं सोमं तु क्षिप्रं पिब अत्र दृष्टान्तः—पूर्वपाइव पूर्वः सर्वेभ्योदेवेभ्यः प्रथमभावीसन् पिबतीति पूर्वपा वायुः सत्येन्द्रवायवे मुख्येग्रहे सर्वेभ्योदेवेभ्यः पूर्वं पिबति तद्वत्पूर्वं पिबेत्यर्थः कीदृशस्य सोमस्य परिष्कृतस्य अभिषवादिभिः संस्कृतस्य संपर्युपेभ्यइति करोतेर्भूषणेसुट् । परिनिविभ्यइतिसुटःषत्वं रसिनोरसवतः अपिच इयमासुतिः अयमासवोमदकरः चारुः शोभनः सोमरसः मदाय हर्षाय हर्षजननाय पत्यते संपद्यते । पत्लृगतौ यद्वा पत्यतिरैश्वर्यकर्मा मदाय मदस्य पत्यते ईष्टे मदोत्पादने शक्तइत्यर्थः ॥ २६ ॥

२६. स्तुति-योग्य इन्द्र, प्रथम सोम-पाता की तरह इस अभिषुत सोम का पान करो। यह परिष्कृत और रसवाला है। यह आसव (सोम) मदकारक और शोभन है। यह मत्तता के लिए ही सम्पन्न किया गया है।

अथ सप्तविंशी—

यएकोअस्तिदंसनामहाँउग्रोअभिव्रतैः।
गमत्सशिप्रीनसयोषदागमद्धवंनपरिवर्जति ॥ २७॥

यः । एकः । अस्ति । दंसना । महान् । उग्रः ।
अभि । व्रतैः । गमत् । सः । शिप्री । न । सः । योषत् ।
आ । गमत् । हवम् । न । परि । वर्जति ॥ २७ ॥

यइन्द्रएकः केवलः असहायएव व्रतैरात्मीयैः कर्मभिः अभ्यस्ति शत्रूनभिभवति यश्च दंसना कर्मणा महान् अधिकः अएव उग्र उद्गूर्णबलः शिप्री शिप्रं शिरस्त्राणं प्रशंसायामिनिः शोभनशिरस्त्राणः यद्वा शिप्रे हनूनासिकेवा तद्वान् सइन्द्रः गमत् गच्छतु प्राप्नोतु । सर्वदा सताद्दशो न योषत् नपृथग्भवतु न वियुक्तोभवतु। गमेर्यौतेश्चलेट्यडागमः इतश्चलोपइतीकारलोपः गमेर्बहुलंछन्दसीति शपोलुक् यौतेः सिब्बहुलमितिसिप्। हवमस्मदीयं स्तोत्रंच आगमत् अभिगच्छतु प्राप्नोतु नपरिवर्जति नपरिवर्जयतु नपरित्यजतु सर्वदा अस्मानस्मदीयं स्तोत्रं चेन्द्रः प्राप्नोत्वितियावत् ॥ २७ ॥

२७. जो इन्द्र अपने कर्म-द्वारा अकेले सबको परास्त करते हैं और जो कर्म से विशाल, उग्र और शिरस्त्राण (शिप्र) वाले हैं, वही इन्द्र आवें। वह पृथक् न हों। वह हमारे स्तोत्र के सामने आगमन करें। हमें छोड़ें नहीं।

अथाष्टाविंशी—

त्वंपुरंचरिष्णवंवधैःशुष्णस्यसंपिणक्।
त्वंभाअनुचरोअधद्विताय‌दिन्द्रहव्योभुवः ॥ २८ ॥

त्वम् । पुरम् । चरिष्णवम् । वधैः । शुष्णस्य ।
सम् । पिणक् । त्वम् । भाः । अनु । चरः । अध ।
द्विता । यत् । इन्द्र । हव्यः । भुवः ॥ २८ ॥

हे इन्द्र त्वं शुष्णस्य शोषकस्यासुरस्य चरिष्णवं चरणशीलं वाछन्दसीति अमिपूर्वरूपत्वस्यविकल्पितत्वाद्यणादेशः। पुरं निवासस्थानं वधैर्वज्रादिभिरायुधैः संपिणक् समचूर्णयः अभांक्षीरित्यर्थः पिनष्टेर्लङि मध्यमैकवचनेरूपमेतत्। अध अपिच भाः भासमानस्त्वं अनुचरः तं शुष्णं हन्तुं अन्वगच्छः। यद्वा अध शुष्णस्य पुरभेदनानन्तरं भाःदिप्तीस्त्वमनुचरः अन्वगच्छः प्राप्तवानित्यर्थः।हे इन्द्र त्वं यद्यदा द्विता द्विधा द्विविधैः स्तोतृभिर्यष्टृभिश्च हव्योह्वातव्यो-

भुवः भवेः तदानीं त्वं शुष्णस्य पुरं संपिणगित्यन्वयः भवतेर्लेटिसिप्यडागमः छान्दसः शपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधादुवङ् ॥ २८॥

२८. इन्द्र, तुमने शुष्ण असुर के संचरणशील निवासस्थान को वज्र से चूर्ण कर डाला था। तुम स्तोता और यज्ञ-कर्त्ता के द्वारा आह्वान के योग्य हो। दीप्तिमान् होकर तुमने शुष्ण का अनुगमन किया था।

चातुर्विंशिकेहनि माध्यन्दिनेसवने ब्रह्मशस्त्रे ममत्वेति वैकल्पिकोनुरूपस्तृचः सूत्रन्तु पूर्वमुदाहृतम्।

ममं॑त्वा॒सूर॒उदि॑ते॒ममं॑म॒ध्यन्दि॑ने॒दि॒वः।
ममं॑प्रपि॒त्वेअ॑पिशर्व॒रेव॑स॒वास्तोमा॑सोअवृत्सत ॥ २९॥

ममं॑। त्वा॒। सूरे॑। उत्ऽइ॑ते। ममं॑। म॒ध्यन्दि॑ने। दि॒वः।
ममं॑। प्र॒ऽपि॒त्वे। अ॒पि॒ऽश॒र्व॒रे। व॒सो॒ इति॑। आ।
स्तोमा॑सः। अ॒वृ॒त्स॒त॒॥ २९॥

सूरे सूर्ये उदिते उदयं प्राप्ते पूर्वाह्णसमये मम स्तोमासः स्तोत्राणि हे वसो वासकेन्द्र त्वां आवृत्सत आवर्तयन्तु अस्मदभिमुखं गमयन्तु। तथा दिवोदिवसस्य मध्यन्दिने मध्याह्नेपि मदीयाः स्तोमासः स्तोमाः त्वामावर्तयन्तु। तथा प्रपित्वे प्राप्ते दिवसस्यावसाने सायाह्नेपि मदीयाः स्तोमाः त्वामावर्तयन्तु। अपिशर्वरे शर्वरीं रात्रिमपि गतः कालोपि शर्वरः शार्वरेकालेपि मदीयाः स्तोमाः त्वामावर्तयन्तु ॥ २९ ॥

२९. सूर्योदय होने पर तुम मेरे सारे स्तोत्रों को आवर्त्तित करो। दिन के मध्य में मेरी स्तुति को आवर्त्तित करो। दिन के अन्त में मेरे स्तोत्र को आवर्त्तित करो। रात में भी मेरी स्तुति को आवर्त्तित करो।

अथ त्रिंशी—

स्तु॒हिस्तु॒ही॒दे॒तेघा॑ते॒मंहि॑ष्ठासोम॒घोना॑म्।
नि॒न्दि॒ताश्वः॑प्रप॒थीप॑रम॒ज्याम॒घस्यं॑मेध्यातिथे ॥३०॥१५॥

स्तु॒हि। स्तु॒हि। इत्। ए॒ते। घ॒। ते॒। मंहि॑ष्ठासः।
म॒घोना॑म्। नि॒न्दि॒तऽअ॑श्वः। प्र॒ऽप॒थी। प॒र॒म॒ऽज्याः।
म॒घस्यं॑। मे॒ध्य॒ऽअ॒ति॒थे॒॥ ३० ॥ १५॥

आसङ्गोराजर्षिर्मेध्यातिथये बहुधनं दत्वा तमृषिं दत्तदानस्य स्वस्य स्तुतौ प्रेरयति हे मेध्यातिथे यज्ञार्हातिथे एतत्संज्ञकर्षे स्तुहिस्तुहीत् पुनःपुनरस्मान्प्रशंसैव मोदस्व औदासीन्यं माकार्षीः एते घ एतेखलु वयं मघोनां धनवतां मध्ये ते तुभ्यं मघस्य धनस्य मंहिष्ठासोदातृत-

माः अतोस्मान्स्तुहीत्यर्थः। कासौ स्तुतिः तामाह निन्दिताश्वः यस्यवीर्येण परेषामश्वानिन्दिताः कुत्सिताभवन्ति तादृशः प्रपथीः प्रकृष्टः पन्थाः प्रपथः तद्वान् सन्मार्गवर्तीत्यर्थः परमज्याः उत्कृष्टज्यः अनेन धनुरादिकं लक्ष्यते उत्कृष्टायुधइत्यर्थः यद्वा परमानुत्कृष्टान् शत्रून् जिनाति हिनस्तीति परमज्याः ज्यावयोहानौ अस्माद्धातोमनिन्निविच् एवंभूतोहमासङ्गइति स्तुहीत्यर्थः ॥ ३० ॥

३०. मेध्यातिथि, बार-बार मेरी (राजर्षि आसङ्ग की) स्तुति करो। मेरी प्रशंसा करो। धनवानों में हम (आसङ्ग लोग) सबसे अधिक धन देनेवाले हैं। मेरी शक्ति (वीर्य) से दूसरे के अश्व बनाये गये हैं। मेरा पथ उत्कृष्ट है, मेरा आयुध उत्कृष्ट है।

॥ इति पञ्चमस्य सप्तमे पञ्चदशोवर्गः ॥ १५ ॥

अथैकत्रिंशी—

आयदश्वान्वनन्वतःश्रद्धयाहंरथेरुहम्।
उतवामस्यवसुनश्चिकेतनियोअस्तियाद्वःपशुः ॥ ३१ ॥

आ। यत्। अश्वान्। वनन्ऽवतः। श्रद्धया। अहम्। रथे। रुहम्। उत। वामस्य। वसुनः। चिकेतति। यः। अस्ति। याद्वः। पशुः ॥ ३१ ॥

वनन्वतोवननवतः संभक्तवतः अश्वांस्तुरगान् अहं प्रायोगिः श्रद्धया आदरातिशयेन युक्तःसन् यद्यदा हे मेध्यातिथे त्वदीयेरथे आरुहं आरोहयं रुहेरन्तर्भावितण्यर्थाद् लुङि कृमृदृरुहिभ्यइति च्लेरङादेशः। तदानीं मामेवं स्तुहि। उतापिच प्रकृतस्तुत्यपेक्षएषसमुच्चयः वामस्य वननीयस्य वसुनोधनस्य पूर्ववत्कर्मणिषष्ठी ईदृशं धनं चिकेतति एषआसङ्गोदातुंजानाति याद्वः यदुवंशोद्भवः यद्वा यदवोमनुष्याः तेषु प्रसिद्धः पशुः लुप्तमत्वर्थमेतत् पशुमान् यद्वा पशुः पश्यते सूक्ष्मस्य द्रष्टा यआसङ्गोस्ति विद्यते एषचिकेततीत्यन्वयः ॥ ३१ ॥

३१. आहार के अन्त में श्रद्धा-युक्त होकर मैंने तुम्हारे रथ को जोता था। मैं मनोरम दान करना जानता हूँ। मैं यदुवंशोत्पन्न और पशुवाला हूँ।

अथ द्वात्रिंशी—

यन्मऋत्रामह्यंमामहेसहत्वचाहिरण्ययां।
एषविश्वान्यभ्यस्तुसौभगासंगस्यस्वनद्रथः ॥ ३२ ॥

यः । ऋज्रा । मह्यम् । मामहे । सह । त्वचा ।
हिरण्ययां । एषः । विश्वानि । अभि । अस्तु । सौभंगा ।
आऽसंगस्यं । स्वनत्ऽरंथः ॥ ३२ ॥

एवमेवं मां स्तुहीत्यासंगोमेध्यातिथिंब्रूते यः आसङ्गस्यात्मा ऋज्रा गमनशीलानि धनानि हिरण्यया हिरण्मय्या त्वचा चर्मणा आस्तरणेन सह सहितानि मह्यं मेध्यातिथये ममहे ददौ मंहतिर्दानकर्मा एषआसङ्गस्यात्मा स्वनद्रथः शब्दायमानरथः सन् विश्वानि व्याप्तानि सौभगानि धनानि शत्रूणां स्वभूतानि अभ्यस्तु अभिभवतु ॥ ३२ ॥

३२. जिन्होंने (आसङ्ग ने), हिरणमय चर्मास्तरण के साथ, गतिशील धन मुझे (मेध्यातिथि को) प्रदान किया था, वह शब्द करनेवाले रथ से युक्त होकर शत्रुओं के सारे धन को जीत डालें।

अधप्लायोगिरतिदासदन्यानासङ्गोअग्नेदशभिःसहस्रैः ।
अधोक्षणोदशमह्यंरुशन्तोनळाइवसरसोनिरतिष्ठन् ॥३३॥

अध । प्लायोगिः । अति । दासत् । अन्यान् । आऽसङ्गः । अग्ने ।
दशऽभिः । सहस्रैः । अध । उक्षणः । दश । मह्यम् । रुशन्तः ।
नळाःऽइव । सरसः । निः । अतिष्ठन् ॥ ३३ ॥

अध अपिच प्लायोगिः प्लयोगनाम्नः पुत्रआसङ्गोनामराजा दशभिः दशगुणितैः सहस्रैः सहस्रसंख्याकैः गवादिभिः अन्यान् दातॄन् अतिदासत् अतिक्रम्य ददाति अधानन्तरं उक्षणः सेचनसमर्थाः मह्यं आसंगेनदत्ताः रुशन्तोदीप्यमानाः दश दशगुणितसहस्रसंख्याकाः ते गवादयः नळाइव नळास्तटाकोद्भवास्तृणविशेषाः ते यथा सरसः तटाकात् संघशोनिर्गच्छन्ति तथैव मह्यं दत्तागवादयः अस्मादासङ्गान्निरतिष्ठन् निर्गत्य अवास्थिषत एवमेवंप्रकारेण मां स्तुहीति मेध्यातिथिं प्रत्युक्तत्वात् एतासां चतसृणामृचां प्लायोगिरासङ्गऋषिः सएवदेवतेत्येतदुपपन्नं भवति ॥ ३३ ॥

३३. अग्नि, प्लयोग के पुत्र आसङ्ग दस हज़ार गायों का दान करने से दान में सारे दाताओं को लांघ गये। अनन्तर सेचन-समर्थ और दीप्यमान् सारे पशु, सरोवर से नल की तरह, (आसङ्ग से) निकल गये थे।

अथ चतुर्त्रिंशी—

अन्वस्यस्थूरंददृशेपुरस्तादनस्थऊरुरवरम्बमाणः ।
शश्वतीनार्यभिचक्ष्याहसुभद्रमर्यभोजनंबिभर्षि ॥ ३४ ॥ १६ ॥

अनु । अस्य । स्थूरम् । ददृशे । पुरस्तात् । अनस्थः । ऊरुः ।
अवऽरम्बमाणः । शश्वती । नारी । अभिऽचक्ष्य । आह ।
सुऽभद्रम् । अर्य । भोजनम् । बिभर्षि ॥ ३४ ॥ १६ ॥

अयमासंगोराजा कदाचिद्देवशापेन नपुंसकोबभूव तस्यपत्नी शश्वती भर्तुर्नपुंसकत्वेन खिन्नासती महत्तपस्तेपे तेन च तपसा सच पुंस्त्वं प्राप प्राप्तपुंव्यंजनंतं रात्रावुपलभ्य प्रीता शश्वती अनया तं अस्तौत् अस्यासंगस्य पुरस्तात्पुरोभागे गुह्यदेशे स्थूरं स्थूलं वृद्धं सत् पुंव्यंजनं अनु ददृशे अनुदृश्यते अनस्थः अस्थिरहितः सचावयवः उरुः उरुर्विस्तीर्णः अवरम्बमाणः अतिदीर्घत्वेन अवाङ्मुखं लंबमानः यद्वा उरुः सुपांसुलुगिति द्विवचनस्यसुः ऊरू प्रति अवलम्बमानोभवति शश्वती नामाङ्गिरसःसुता नारी तस्यासंगस्य भार्याभिचक्ष्य एवं भूतमवयवं निशि दृष्ट्वा हे अर्य स्वामिन् भर्तः सुभद्रं अतिशयेन कल्याणं भोजनं भोगसाधनं बिभर्षि धारयसीत्याह ब्रूते ॥ ३४ ॥

३४. आसङ्ग के आगे (गुह्य देश में) "स्थूल" देखा जाता है। वह अस्थि (हड्डी) से रहित, विशाल और नीचे की ओर लम्बायमान है। आसङ्ग की शश्वती नाम की स्त्री ने उसे देखकर कहा, आर्य, खूब उत्तम भोग-साधक वस्तु को तुम धारण करते हो।

॥ इति पञ्चमस्य सप्तमे षोडशोवर्गः ॥ १६ ॥

इदंवसोइति द्विचत्वारिंशदृचं द्वितीयं सूक्तं काण्वस्य मेध्यातिथेःआङ्गिरसस्यच प्रियमेधस्यार्षं शिक्षाविभिन्दइत्यादिके द्वे मेधातिथेरेव । स्वादवःसोमाइत्येषानुष्टुप् शिष्टागायत्र्यः इन्द्रोदेवता अंत्येद्वेऋचौ विभिन्दोर्दानस्तुतित्वात्तद्देवताके तथाचानुक्रान्तम्—इदंवसोद्विचत्वारिंशन्मेध्यातिथिराङ्गिरसश्च प्रियमेधः स्वादवोनुष्टुबन्त्याभ्यां मेधातिथिर्विभिन्दोर्दानं तुष्टावेति । गतःसूक्तविनियोगः । ज्योतिष्टोमे मरुत्वतीये आद्यस्तृचोनुचरः सूत्र्यतेहि—इदंवसोसुतमन्धइति मरुत्वतीयस्य प्रतिपदनुचराविति । द्वितीये रात्रिपर्याये ब्रह्मशस्त्रे अयमेवस्तोत्रियस्तृचः सूत्रितश्च—इदंवसोसुतमन्धइन्द्रेहिमत्स्यन्धसइति अयमेवचतुर्थेहन्यपि मरुत्वतीयस्यानुचरस्तृचः सूत्रितश्च—तंत्वायज्ञेभिरीमहइदंवसोसुतमन्धइति मरुत्वतीयस्यप्रतिपदनुचराविति ।

तत्र प्रथमा—

इदंवसोसुतमन्धःपिबासुपूर्णमुदरम् । अनाभयिन्नरिमाते ॥ १ ॥

इदम् । वसो इति । सुतम् । अन्धः । पिब । सुऽपूर्णम् ।
उदरम् । अनाभयिन् । ररिम । ते ॥ १ ॥

हे वसो वासयितरिन्द्र इदं पुरोवर्तमानं सुतमभिषुतं अन्धोन्नं सोमलक्षणं पिब यथा उदरं त्वदीयं जठरं सुपूर्णं अतिशयेन संपूर्णं भवति तथेत्यर्थः । हे अनाभयिन् आसमन्ताद्बिभेतीत्याभयी बिभेतेरौणादिकइनिः न आभयी अनाभयी तादृश हे इन्द्र ते तुभ्यं त्वदर्थं ररिम उक्तलक्षणं सोमं दद्मः रादाने छान्दसोलिट् ॥ १ ॥

१. वासयिता इन्द्र, इस अभिषुत सोम का पान करो। तुम्हारा उदर पूर्ण हो। अकुतोभय इन्द्र, तुम्हें हम सोम देंगे।

नृभिर्धूतःसुतोअश्नैरव्योवारैःपरिपूतः । अश्वोननिक्तोनदीषु ॥२॥

नृऽभिः । धूतः । सुतः । अश्नैः । अव्यः । वारैः ।
परिऽपूतः । अश्वः । न । निक्तः । नदीषु ॥ २ ॥

नृभिः अध्वरस्य नेतृभिः ऋत्विग्भिः धूतः आधूतः अदाभ्यग्रहे आधवनेन संस्कृतः अश्नैः अश्मभिर्ग्रावभिः करणभूतैः सुतः अध्वर्युभिरभिषुतः अव्यः अवेर्मेषस्य वारैर्वालैः परिपूतः । दशापवित्रस्य नाभिं कुरुते शुल्कं वलक्ष्याः पवित्रममोतं भवतीति । नदीषु नदनास्वप्सु अश्वोन अश्वइव निक्तः निर्णिक्तः शोधितः यथा अप्सुस्नातोश्वः अपगतमलः सन् दीप्तोभवति एवं वसतीवर्याख्याभिरद्भिः अभिषुतः सोमः दीप्तोभवतीत्यर्थः ईदृशोयः सोमः तंतेयवमित्युत्तरया संबन्धः ॥ २ ॥

२. नेताओं-द्वारा धोया गया और वस्त्र-द्वारा अभिषुत तथा मेषलोम से परिपूत सोम, नदी में नहाये हुए अश्व की तरह, शोभा पा रहा है।

तंतेयवंयथागोभिःस्वादुमकर्मश्रीणन्तः । इन्द्रत्वास्मिन्त्सधमादे ॥३॥

तम् । ते । यवम् । यथा । गोभिः । स्वादुम् । अकर्म ।
श्रीणन्तः । इन्द्र । त्वा । अस्मिन् । सधऽमादे ॥ ३ ॥

तं पूर्वोक्तगुणं सोमं हे इन्द्र ते त्वदर्थं यवं यथायवमयं सवनीयपुरोडाशमिव गोभिर्गविभवैः क्षीरादिभिः श्रयणद्रव्यैः श्रीणन्तः मिश्रीकुर्वन्तः स्वादुं रसत्वेन स्वादनीयमकर्म अकार्ष्म करोतेर्लुङि मन्त्रेघसेति च्लेर्लुक् । यस्मादेवं तस्मात् हे इन्द्र त्वा त्वां तादृशं सोमं पातुं अस्मिन्वर्तमाने सधमादे सहमदने यज्ञे आह्वयामीतिशेषः ॥ ३ ॥

३. इन्द्र हमने जौ की तरह उक्त सोम तुम्हारे लिए, क्षीर आदि में मिलाकर, स्वादिष्ठ बनाया है। इसलिए हे इन्द्र, इस यज्ञ में वैसा सोम पीने के लिए मैं तुम्हें बुलाता हूँ।

महाव्रतेनिष्केवल्ये गायत्रतृचाशीतौ इन्द्रइत्सोमपाइत्येतदादि सूक्तशेषः शंसनीयः अन्त्यास्तिस्रोवर्जयित्वा तत्रापि स्वादवइत्येतांपरित्यज्य तत्रस्थाने नत्य१न्यंबळाकरमित्येतामावपेत् तथैव पञ्चमारण्यके सूत्रितम्—इन्द्रइत्सोमपाएकइत्येतत्प्रभृतीनां तिस्रउत्तमाउद्धरति तासां स्वादवःसोमाआयाहीत्येतामुद्धृत्य नत्य१न्यंबळाकरमित्येतां प्रत्यवदधातीति । पञ्चमेहनि मरुत्वतीये इन्द्रइदित्यनुचरस्तृचः सूत्र्यतेहि—इन्द्रइत्सोमपाएकइति मरुत्वतीयस्य प्रतिपदनुचराविति ।

तत्र प्रथमा सूक्ते चतुर्थी—

इन्द्रइत्सोमपाएकइन्द्रःसुतपाविश्वायुः । अन्तर्देवान्मर्त्यांश्च ॥४॥

इन्द्रः । इत् । सोमऽपाः । एकः । इन्द्रः । सुतऽपाः ।
विश्वऽआयुः । अन्तः । देवान् । मर्त्यान् । च ॥ ४ ॥

इन्द्रइत् इन्द्रएकएव देवान्मर्त्यान्मनुष्यांश्च अन्तर्मध्ये देवेषु मनुष्येषु च मध्ये सोमपाः कृत्स्नस्य सोमस्य पाता नान्ये । तेत्वेकदेशभाजः अतएव सुतपाः सुतस्याभिषुतस्यास्मदीयस्य सोमस्य कार्त्स्न्येन पाता इन्द्रएकएव विश्वायुः सचेन्द्रः सर्वान्नोभवति धानाकरंभादिहवींषि सवनेष्विन्द्रायैव हूयन्ते तदभिप्रायेणेदमुच्यते अतएवंविधइन्द्रः अस्मदीयं हविः स्वीकरोत्वित्यर्थः ॥ ४ ॥

४. देवों और मनुष्यों के बीच इन्द्र ही समस्त सोम के पान के अधिकारी हैं। अभिषुत सोम पीनेवाले इन्द्र ही सब प्रकार के अन्नों से युक्त हैं।

अथ पञ्चमी—

नयंशुक्रोनदुराशीर्नतृप्राउरुव्यचसम् । अपस्पृण्वतेसुहार्दम् ॥५॥१७॥

न । यम् । शुक्रः । न । दुःऽआशीः । न । तृप्राः ।
उरुऽव्यचसम् । अपऽस्पृण्वते । सुऽहार्दम् ॥ ५ ॥ १७ ॥

उरुव्यचसं विस्तीर्णव्यापनं सुहार्दं सुहृदयं यमिन्द्रं शुक्रः रसाधिक्येन दीप्तः सोमः नापस्पृणुते स्पृप्रीतिबलयोः अत्रोपसर्गवशात् प्रीत्यभावे वर्तते नञाच प्रीत्यभावोनिवार्यते नप्रीणयतीति न अपितु प्रीणयत्येव । तथा दुराशीः दुःखेन निष्पाद्याआशीः आश्रयणद्रव्यं यस्य

तार्तीयसवनिकस्य सोमस्य सोपि यमिन्द्रं नापस्पृणुते प्रीणयत्येव तृप्राः तर्पकाः अन्ये चरुपुरोडाशादयश्च यमिन्द्रं नापस्पृण्वते न न प्रीणयन्ति अपितु प्रीणयन्त्येव। तमिन्द्रं स्तुमइति शेषः। यद्वा अपेत्युपसर्गोधात्वर्थानुवादकः यमिन्द्रंशुक्रादयोनापस्पृण्वते न प्रीणयन्वि उरुव्यचसमिति हेतुगर्भविशेषणं यतोयमिन्द्र उरुव्यचाः विस्तीर्णव्याप्तिकः अतः कारणात् अपर्याप्ताः सन्तः शुक्रादयः प्रीणयितुं नशक्नुवन्तीति भावः ॥ ५ ॥

५. जिन विस्तृत व्यापक इन्द्र को प्रदीप्त सोम अप्रसन्न नहीं करता, दुर्लभ आश्रयण द्रव्य (क्षीरादि) वाला सोम जिन्हें अप्रसन्न नहीं करता तथा तृप्ति करनेवाले अन्य पुरोडाशादि जिन्हें अप्रसन्न नहीं करते, उन इन्द्र की हम स्तुति करते हैं।

॥ इति पञ्चमस्य सप्तमे सप्तदशोवर्गः ॥१७॥

गोभि॒र्यदी॑म॒न्ये अ॒स्मन्मृ॒गं न व्रा मृ॒गय॑न्ते। अ॒भि॒त्सर॑न्ति धे॒नुभिः॑ ॥ ६ ॥

गोभिः॑। यत्। ई॒म्। अ॒न्ये। अ॒स्मत्। मृ॒गम्। न। व्राः। मृ॒गय॑न्ते। अ॒भि॒ऽत्सर॑न्ति। धे॒नु॒ऽभिः॑ ॥ ६ ॥

यत् ये अस्मत् अस्मत्तोन्ये ऋत्विग्यजमानाः ईमेनमिन्द्रं गोभिः गविभवैः क्षीरादिभिः संस्कृतैः सोमैः सहिताः सन्तोमृगयन्तेअन्विष्यंते तत्रदृष्टान्तः—व्राः वरीतारः जालादिभिरुपायैर्निरुन्धाना व्याधाः मृगं न यथा मृगं अन्विष्यन्ति तद्वदनधिकारिणएव बलादिन्द्रस्यान्वेषणे वर्तन्तइत्यर्थः। मृगअन्वेषणे इति धातुः येच जनाः धेनुभिः धेनुरिति वाङ्नाम वाग्भिः स्तुतिभिश्च अभित्सरन्ति अभिमुखं कुत्सितं गच्छन्ति सम्यक् स्तोतुं नशक्नुवन्तीत्यर्थः त्सर छद्मगतौ तथाविधाजनायमिन्द्रं नोपलभन्तइत्यर्थः ॥ ६ ॥

६. जाल आदि से रोके गये मृग को जैसे व्याध खोजते हैं, उसी प्रकार हमसे दूसरे जो ऋत्विक् और यजमान आदि संस्कृत सोम-द्वारा इन्द्र का अन्वेषण करते हैं और जो स्तुतियों से, कुत्सित रूप से, इन्द्र के पास जाते हैं, वे उनको नहीं पाते।

दशरात्रेतृतीयेहनि मरुत्वतीयस्य त्रयइन्द्रस्येतितृचोनुचरः सूत्र्यतेहि—तन्तमिद्राधसेमहे त्रयइन्द्रस्यसोमाइति मरुत्वतीयस्य प्रतिपदनुचराविति।

तृचे प्रथमा सूक्ते सप्तमी—

त्रय॒ इन्द्र॑स्य॒ सोमाः॑ सु॒तासः॑ सन्तु दे॒वस्य॑। स्वे क्षये॑ सु॒तपा॑व्नः ॥ ७ ॥

त्रयः॑। इन्द्र॑स्य। सोमाः॑। सु॒तासः॑। स॒न्तु। दे॒वस्य॑। स्वे। क्षये॑। सु॒त॒ऽपाव्नः॑ ॥ ७ ॥

देवस्य दानादिगुणयुक्तस्येन्द्रस्य पानार्थं त्रयः सवनत्रयरूपेण त्रिधा वर्तमानाः सोमाः स्वेक्षये स्वकीये यज्ञगृहे सुतासोभिषुताः सन्तु भवन्तु सुतपान्नः हेतुगर्भविशेषणमेतत् यस्माद-यमिन्द्रः अभिषुतस्यैव सोमस्य पाता तस्मादभिषुताः सन्त्वित्यर्थः ॥ ७॥

७. अभिषुत सोम को पीनेवाले इन्द्रदेव के लिए तीन प्रकार (सवन-त्रय) के सोम यज्ञ-गृह में बनाया जाय।

त्रयः॒कोशा॑सश्चोतन्तिति॒स्रश्च॒म्व॑१॒ःसु॒पूर्णाः᳚ । स॒मा॒नेअधि॒भार्म॑न् ॥ ८॥

त्रयः॑ । कोशा॑सः । श्चो॒त॒न्ति॒ । ति॒स्रः । च॒म्वः॑ ।
सु॒ऽपूर्णाः᳚ । स॒मा॒ने । अधि॑ । भार्म॑न् ॥ ८ ॥

त्रयः त्रिसंख्याकाः कोशासः कोशाः सोमस्याश्रयभूताः द्रोणकलशपूतभृदाधव-नीयाख्याः श्चोतन्ति क्षरन्ति इन्द्रार्थं सोमं स्रावयन्ति तिस्रः त्रिविधाः सवनत्रयेवर्तमानाः चम्वः चमसाश्च सुपूर्णाः इन्द्रयागाय सोमैः सुपूरिता आसन् एततसर्वं कुत्रेतिचेत् उच्यते समाने एकस्मिन्नेव भार्मन् भर्मणि भरे ऋत्विग्भिर्भ्रियमाणे यज्ञे अधिः सप्तम्यर्थानुवादी ॥ ८ ॥

८. ऋत्विकों का एकमात्र भरण करनेवाले यज्ञ में तीन प्रकार के कोश (सोम प्रस्तुत करने के कलश) सोम का क्षरण (श्रवण) करते हैं। तीनों चमस (सवन-त्रय के) भी सोम-पूर्ण हैं।

शुचि॑रसिपुरु॒नि॒ष्ठाःक्षी॒रैर्म॑ध्य॒तआशी॑र्तः । द॒ध्नामन्दि॑ष्ठ॒ःशूर॑स्य ॥ ९॥

शुचिः॑ । अ॒सि॒ । पु॒रु॒नि॒ःऽस्थाः । क्षी॒रैः । म॒ध्य॒तः ।
आऽशी॑र्तः । द॒ध्ना । मन्दि॑ष्ठः । शूर॑स्य ॥ ९ ॥

हे सोम त्वं शुचिरसि दशापवित्रेण शोधितोभवसि सत्वं पुरुनिष्ठाः पुरुषु बहुषु पात्रेषु ग्रहचमसादिषु निःशेषेणस्थाता मध्यतोमध्ये मैत्रावरुणग्रहादौ क्षीरैः पयःप्रभृतिभिः श्रयण-द्रव्यैः आशीर्तः मिश्रणेन संस्कृतः तृतीयसवने दध्नाच आशीर्तः एवंभूतस्त्वं शूरस्य विक्रा-न्तस्येन्द्रस्य मन्दिष्ठः मादयितृतमोभव ॥ ९ ॥

९. सोम, तुम पवित्र और अनेक पात्रों में अवस्थित हो और बीच में क्षीर तथा दधि-द्वारा मिश्रित हो। तुम वीर इन्द्र को सबसे अधिक प्रमत्त करो। अथ दशमी—

इ॒मेत॑इन्द्र॒सोमा॑स्ती॒व्राअ॒स्मेसु॒तास॑ः । शु॒क्राआ॒शिर॑ंयाचन्ते ॥१०॥१८॥

इ॒मे । ते॒ । इ॒न्द्र॒ । सोमाः॑ । ती॒व्राः । अ॒स्मे इति॑ ।
सु॒तासः॑ । शु॒क्राः । आ॒ऽशिर॑म् । या॒च॒न्ते॒ ॥ १० ॥ १८ ॥

हे इन्द्र ते त्वदीया इमे सोमाः तीव्रास्तीव्रमदाः अस्मे अस्माभिरध्वर्युभिः सुतासोभिषुताः शुक्राः शुद्धाः सन्तः आशीरं क्षीरादिकं श्रयणद्रव्यं त्वां याचन्ते तान् श्रीणीहीत्युत्तरत्रान्वयः ॥ १० ॥

१०. इन्द्र, तुम्हारे ये सोम तीव्र हैं। हमारे अभिषुत और दीप्त मिश्रण द्रव्य (क्षीरादि) तुम्हारी कामना (याचना) करते हैं।

॥ इति पञ्चमस्य सप्तमेष्टादशोवर्गः ॥ १८ ॥

ताँआशिरंपुरोळाशमिन्द्रेमंसोमंश्रीणीहि । रेवन्तंहित्वांशृणोमि ॥ ११ ॥

तान् । आऽशिरम् । पुरोळाशम् । इन्द्र । इमम् ।
सोमम् । श्रीणीहि । रेवन्तम् । हि । त्वा । शृणोमि ॥ ११ ॥

हे इन्द्र तान्पूर्वोक्तान् सोमान् आशिरं श्रयणद्रव्यञ्च क्षीरादिकं श्रीणीहि मिश्रय यागार्थं तदनन्तरं पुरोळाशं धानाकरंभादिलक्षणं सवनीयपुरोडाशं इमं अस्मदीयं सोमं च श्रीणीहि मिश्रय प्रथमं भक्षितं पुरोळाशं पश्चात्पीतेन सोमेन संयोजयेत्यर्थः तवप्रार्थने कोहेतुरिति चेत् हि यस्मात् रेवन्तं रयिमन्तं रयेर्मतौबहुलमिति सम्प्रसारणम् बहुलधनं त्वां शृणोमि त्वं बहुधनइति सर्वत्रश्रूयते अतः कारणात् त्वामेव प्रार्थयामहे ॥ ११ ॥

११. इन्द्र, उन सोमों और मिश्रण द्रव्य को मिलाओ। पुरोडाश और सोम को मिलाओ। उससे मैं तुम्हें धनवान सुनूँ।

हृत्सुपीतासोयुध्यन्तेदुर्मदासोनसुरायाम् । ऊधर्ननग्नाजरन्ते ॥ १२ ॥

हृत्ऽसु । पीतासः । युध्यन्ते । दुःऽमदासः ।
न । सुरायाम् । ऊधः । न । नग्नाः । जरन्ते ॥ १२ ॥

हे इन्द्र पीतासस्त्वयापीताः सोमाः हृत्सु हृदयेषु त्वदीयेषु युध्यन्ते परस्परं सम्प्रहारं कुर्वते तत्रदृष्टान्तः—सुरायां पीतायां जायमानाः दुर्मदासोन दुष्टमदाः यथा पातारं मादयन्ति तद्वत् त्वां मादयितुं परस्परं युध्यन्तइत्यर्थः अपिच नग्नाः छन्दांसि तानि न जहतीति नग्नाः स्तोतारः तेच ऊधर्न पयसा पूर्णं गवादेरूधइव सोमपूर्णं त्वां जरन्ते स्तुवन्ति जरतिः स्तुतिकर्मा ॥ १२ ॥

१२. जैसे सुरा के पीये जाने पर दुष्ट मत्तता सुरापायी को प्रमत्त करने के लिए उसके अन्तःकरण में युद्ध करती है, वैसे ही, हे इन्द्र, पिये हुए सोम हृदयों में युद्ध करते हैं। जैसे दूध से भरे हुए गाय के स्तन की लोग रक्षा करते हैं, इन्द्र, तुम सोम-पूर्ण हो; स्तोता लोग उसी तरह तुम्हारी रक्षा करते हैं।

षष्ठेहनि यदि रैवतसामसाध्यंपृष्ठस्तोत्रं तदा निष्केवल्ये रेवाँइदित्यनुरूपस्तृचः सूत्र्यतेहि—रेवतीर्नःसधमादेरेवाँइद्रेवतःस्तोतेति स्तोत्रियानुरूपाविति ।

तृचे प्रथमा सूक्ते त्रयोदशी–

रेवाँइद्रेवतःस्तोतास्यात्त्वावतोमघोनः । प्रेदुहरिवःसुतस्य ॥१३॥

रेवान् । इत् । रेवतः । स्तोता । स्यात् । त्वाऽवतः ।
मघोनः । प्र । इत् । ऊँ इति । हरिऽवः । श्रुतस्य ॥ १३ ॥

हे हरिवः हरिवन् मतुवसोरुरिति नकारस्य रुत्वं । हरी अश्वौ तद्वन्निन्द्र रेवतोरयिमतः बहुधनोपेतस्य अतएव स्तोता रेवान् स्यात् रयिमान् भवेत् इच्छब्दोवधारणे धनवान् भवेदेव नतु दारिद्र्यंप्राप्नोति । उक्तमेवार्थं कैमुतिकन्यायेन द्रढयति त्वावतः त्वत्सदृशस्य युष्मदस्मद्भ्यां छन्दसिसादृश्यमुपसंख्यानमितिवतुप् । मघोनोधनवतोधनाढ्यस्य श्रुतस्य सर्वत्रप्रख्यातस्य अन्यस्यापि स्तोता प्रेदु स्यादित्यनुषज्यते प्रस्यात् प्रभवेदेव नतु निहीयते किमुवक्तव्यं तवस्तोता धनवान् भवेदिति ॥ १३ ॥

१३. हर्यश्व, तुम धनी हो। तुम्हारा स्तोता धनी हो। तुम्हारी तरह धनी और प्रसिद्ध पुरुष का स्तोता प्रभु होता है।

अथ चतुर्दशी–

उक्थंचनशस्यमानमगोररिराचिकेत । नगायत्रंगीयमानम् ॥१४॥

उक्थम् । चन । शस्यमानम् । अगोः । अरिः ।
आ । चिकेत । न । गायत्रम् । गीयमानम् ॥ १४ ॥

गायतेर्गौः अगोः अस्तोतुः अरिः शत्रुरिन्द्रः शस्यमानं होत्रापठ्यमानं उक्थं चन शस्त्रमपि आचिकेत अभिजानाति । कितज्ञाने छान्दसोलिट् नेतिसम्प्रत्यर्थे न सम्प्रति प्रस्तोत्रादिभिर्गीयमानं गायत्रं गातव्यं साम यद्वा गायत्राख्यं अपिचिकेतेत्येव अतःकारणात् वयमपि तमिन्द्रं स्तुमइत्यर्थः ॥ १४ ॥

१४. इन्द्र स्तुति-रहित के शत्रु हैं। वह गाया जाता हुआ उक्थ जान सकते हैं। इस समय गाने योग्य गान गाया जाता है।

अथ पञ्चदशी–

मानइन्द्रपीयत्नवेमाशर्धतेपरादाः । शिक्षाशचीवःशचीभिः ॥१५॥१९॥

मा । नः । इन्द्र । पीयत्नवे । मा । शर्धते । परा ।
दाः । शिक्ष । शचीऽवः । शचीभिः ॥ १५ ॥ १९ ॥

हे इन्द्र त्वं पीयत्नवे पीयतिर्वधकर्मा वधशीलाय हिंसाकारिणे शत्रवे नोस्मान् मापरादाः मापरित्याक्षीः माच शर्धते अभिभवित्रे अस्मान्मापरादाः। शृधुप्रसहने इतिधातुः अपितु हे शचीवः शक्तिमन्निन्द्र शचीभिरात्मयैः कर्मभिः शिक्षास्माननुशाधि यद्वा शिक्षतिर्दानकर्मा अभीष्टं धनमस्मभ्यं देहि यद्वा शत्रून् जेतुं शिक्ष शक्तान् कर्तुमिच्छ शकेः सन्नन्तस्य सनिमीमेति इसादेशेभ्यासलोपे च कृते लोटिरूपमेतत् ॥ १५ ॥

१५. इन्द्र, तुम वधिक रिपु के हाथ में मुझे नहीं छोड़ना। अभिषव करनेवाले के हाथ में नहीं छोड़ना। शक्तिमान् इन्द्र, तुम अपने कर्मबल से हमें धन देना।

॥ इति पञ्चमस्य सप्तमे एकोनविंशोवर्गः ॥ १९ ॥

प्रथमेरात्रिपर्याये ब्रह्मशस्त्रे वयमुत्वेति स्तोत्रियस्तृचः सूत्रितश्च—वयमुत्वातदिदर्थावयमिन्द्रत्वायवोभीति।

वयमुत्वातदिदर्थाइन्द्रत्वायन्तःसखायः। कण्वाउक्थेभिर्जरन्ते ॥ १६ ॥

वयम्। ऊँ इति। त्वा। तदित्ऽअर्थाः। इन्द्र।
त्वाऽयन्तः। सखायः। कण्वाः। उक्थेभिः। जरन्ते ॥ १६ ॥

हे इन्द्र त्वायन्तः त्वामात्मनइच्छन्तः सखायः समानख्यानाः वयं तदिदर्थाःयत्तत्त्वद्विषयं स्तोत्रं तदित् तदेव अर्थः प्रयोजनं येषां तादृशाः सन्तः त्वा त्वां जरामहे स्तुमहे। उइति पूरणः कण्वाः कण्वगोत्रोत्पन्नाः अस्मदीयाः पुत्रादयश्च उक्थेभिरुक्थैः शस्त्रैर्जरन्ते त्वां स्तुवन्ति ॥ १६ ॥

१६. इन्द्र, हम तुम्हारे सखा हैं। तुम्हारी कामना करते हैं। हमारा प्रयोजन तुम्हारा स्तोत्र करना ही है। हम तुम्हारी स्तुति करते हैं। कण्वगोत्रीय उक्थ-द्वारा तुम्हारी स्तुति करते हैं।

नघेमन्यदापपनवज्रिन्नपसोनविष्टौ। तवेदुस्तोमंचिकेत ॥ १७ ॥

न। घ। ईम्। अन्यत्। आ। पपन। वज्रिन्। अपसः।
नविष्टौ। तव। इत्। ऊँ इति। स्तोमम्। चिकेत ॥ १७ ॥

हे वज्रिन् वज्रवन्निन्द्र अपसः अपस्विनः कर्मवतस्तव सम्बन्धिनि नविष्टौ अभिनवे यागे वर्तमानोहं अन्यत् त्वद्विषयादन्यत् स्तोत्रं नघेम् नैव आपपन अभिष्टौमि पनतेः स्तुतिकर्मणउत्तमे णलि लिटि रूपम्। अपितु तवेदु तवैव स्तोमं स्तोत्रं चिकेत अभिजानामि त्वामेव सर्वदा स्तौमीत्यर्थः ॥ १७ ॥

१७. वज्री इन्द्र, तुम कर्मवान् हो। तुम्हारे अभिनव यज्ञ में मैं दूसरा स्तोत्र नहीं उच्चारण करता; केवल तुम्हारे स्तोत्र को ही मैं जानता हूँ।

अथाष्टादशी—

इच्छन्तिदेवाःसुन्वन्तंनस्वप्नायस्पृहयन्ति । यन्तिप्रमादमतन्द्राः॥१८॥

इच्छन्ति । देवाः । सुन्वन्तम् । न । स्वप्नाय ।
स्पृहयन्ति । यन्ति । प्रऽमादम् । अतन्द्राः ॥ १८ ॥

सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानं देवाः इन्द्रादयः सर्वे इच्छन्ति रक्षितुं स्वप्नाय न स्पृहयन्ति स्वप्नावस्थांगतस्य सुन्वतोनेप्सन्ति सर्वदा प्रबुद्धमेव कुर्वन्तीत्यर्थः स्पृहेरीप्सित-इतिकर्मणि चतुर्थी स्पृहईप्सायां चुरादिरदन्तः यतएवं अतःकारणात् अतन्द्राः अनलसादेवाः प्रमादं प्रकर्षेण मदकरं तदीयं सोमं यन्ति प्राप्नुवन्ति ॥ १८॥

१८. सोमाभिषव करनेवाले यजमान की इच्छा देवता लोग सदा करते हैं। सोये हुए मनुष्य की वह इच्छा नहीं करते। देवता लोग आलस्य शून्य होकर मदकर सोम प्राप्त करते हैं।

ओषुप्रयाहिवाजेभिर्माहृणीथाअभ्य१स्मान् । महाँइवयुवजानिः॥१९॥

ओ इति । सु । प्र । याहि । वाजेभिः । मा । हृणीथाः ।
अभि । अस्मान् । महान्ऽइव । युवऽजानिः ॥ १९ ॥

हे इन्द्र वाजेभिर्वाजैः अस्मभ्यं दातव्यैरन्नैः सार्धं अस्मानाभिमुख्येन सु सुष्ठु प्रकर्षेण ओ आउ याहि शीघ्रमायात्येव आगच्छैव माहृणीथाः माक्रुध्यस्व हृणीयतिः क्रुध्यतिकर्मा यद्वा मा लज्जां प्राप्नुहि हृणीङ् लज्जायामिति कंड्वादौ पठ्यते । तत्रदृष्टान्तः—महाँइव युवजानिः युवतिर्जाया यस्यसतथोक्तः जायायानिङिति समासान्तोनिङादेशः । ईदृशोमहान् गुणैरधिकोपि यथा स्वभार्यां प्रति निर्लज्जःसन् शीघ्रं गच्छति तद्वत् ॥ १९ ॥

१९. इन्द्र, अन्न के साथ हमारे सामने उत्तम रीति से आओ। जैसे युवती भार्या पाने पर गुणी व्यक्ति उसके ऊपर क्रुद्ध नहीं होते, वैसे ही, इन्द्र, तुम हमारे प्रति क्रुद्ध नहीं होना।

अथ विंशी—

मोष्व१द्यदुर्हणावान्त्सायंकरदारेअस्मत् । अश्रीरइवजामाता॥२०॥२०॥

मो इति । सु । अद्य । दुःऽहनावान् । सायम् । करत् ।
आरे । अस्मत् । अश्रीरःऽइव । जामाता ॥ २० ॥ २० ॥

दुर्हणावान् परैर्दुःसहहननं दुर्हणं तद्वान् इन्द्रः अद्येदानीं अस्मदारे अस्माकं समीपे आगच्छतु सु सुष्ठु अतिशयेन सायं दिवसस्यावसानं सायंकालं मोकरव् माकार्षीद् करोतेर्माङिलुङि कृमृदृरुहिभ्यइति च्लेरङादेशः। जामाता जायत इतिजा अपत्यं तस्यानिर्माता दुहितुः पतिः अश्रीरइव नश्रीरश्रीः तदस्यास्तीत्यश्रीरः मत्वर्थीयोरः गुणैर्विहीनः कुत्सितोजामाता सयथा असकृदाहूयमानोपि आसायंकालं विलंबते तद्वत् त्वं कालविलंबं माकुथाइत्यर्थः ॥२०॥

२०. दुःसहनीय इन्द्र, आज हमारे पास आओ। बुलाये जाने पर कुत्सित जामाता के समान सन्ध्याकाल नहीं करना।

॥इति पंचमस्य सप्तमे विंशोवर्गः ॥ २०॥

अथैकविंशी—

**वि॒द्मा ह्य॑स्य वी॒रस्य॑ भूरि॒दाव॑रीं सुम॒तिम्। त्रि॒षु जा॒तस्य॒ मनां॑सि ॥ २१ ॥**

वि॒द्म। हि। अ॒स्य। वी॒रस्य॑। भू॒रि॒ऽदाव॑रीम्।
सु॒ऽम॒तिम्। त्रि॒षु। जा॒तस्य॑। मनां॑सि ॥ २१ ॥

अस्येन्द्रस्य वीरस्य विक्रान्तस्य भूरिदावरीं बहुधनस्य दात्रीं सुमतिं कल्याणीं मतिं अनुग्रहबुद्धिं विद्माहि जानीमः खलु। तथा त्रिषु भूम्यादिषु त्रिषु लोकेषु जातस्य तत्कार्यार्थं प्रादुर्भूतस्य मनांसि हृदयानि च जानीमः अतस्तस्येन्द्रस्य यथा प्रीतिर्जनिष्यते तथा स्तोत्रं कर्मइत्यर्थः ॥ २१ ॥

२१. हम इन वीर इन्द्र की बहुत धन देनेवाली कल्याणकारिणी अनुग्रह-बुद्धि को जानते हैं। तीनों लोकों में आविर्भूत इन्द्र को हम जानते हैं।

**आ तू षि॑ञ्च॒ कण्व॑मन्तं॒ न घा॑ वि॒द्म श॑वसा॒नात्। य॒शस्त॑रं श॒तमू॑तेः ॥ २२ ॥**

आ। तु। सि॒ञ्च॒। कण्व॑ऽमन्तम्। न। घ॒। वि॒द्म।
श॒व॒सा॒नात्। य॒शः॒ऽत॑रम्। श॒तम्ऽऊ॑तेः ॥ २२ ॥

हे अध्वर्यो कण्वमन्तं कणतिः शब्दकर्मा कण्वाः स्तोतारः यद्वा कण्वगोत्राऋषयः तैर्युक्तमिन्द्रमुद्दिश्य तु क्षिप्रं आसिञ्च सोमं जुहुधि। शवसानाद् शवोबलं तदिवाचरतः अतिबलाद् शतमूतेः शतं बहुनामैतत् बह्व्यऊतयोरक्षायस्मिन् सशतमूतिः तादृशादस्मादिन्द्राद् यशस्तरं यशस्वितरं पुरुषं नघ नैव विद्म जानीमः अतस्तमेवोद्दिश्य सोमं जुहुधीत्यर्थः ॥ २२ ॥

२२. अध्वर्यु, कण्वगोत्रीय स्तोता लोग इन्द्र के लिए शीघ्र सोम का हवन करें। अति बली और प्रभूत रक्षावाले इन्द्र की अपेक्षा अधिक यशस्वी को हम नहीं जानते।

अथ त्रयोविंशी—

ज्येष्ठेनसोतरिन्द्रायसोमंवीरायशक्राय । भरापिबन्नर्याय ॥ २३ ॥

ज्येष्ठेन । सोतः । इन्द्राय । सोमम् । वीराय ।
शक्राय । भर । पिबत् । नर्याय ॥ २३ ॥

हे सोतरभिषोतरध्वर्यो वीराय विक्रान्ताय शक्राय शक्तियुक्ताय नर्याय नृभ्योहितायेन्द्राय ज्येष्ठेन मुख्येन ऐन्द्रवयवग्रहेण सहि धाराग्रहाणांमध्ये ज्येष्ठः तेन सोमं भर हर आहर वीर्यं प्रापय । सचेन्द्रः पिबत् तं सोमं पिबतु ॥ २३ ॥

२३. अभिषव करनेवाले अध्वर्यु, वीर, शक्तिशाली और मानव-हितैषी इन्द्र के लिए मुख्य रूप से सोम प्रदान करो। वे सोम का पान करें।

योवेदिष्ठोअव्यथिष्वश्वावन्तंजरितृभ्यः । वाजंस्तोतृभ्योगोमन्तम् ॥ २४ ॥

यः । वेदिष्ठः । अव्यथिषु । अश्वऽवन्तम् ।
जरितृऽभ्यः । वाजम् । स्तोतृऽभ्यः । गोऽमन्तम् ॥ २४ ॥

यइन्द्रः अव्यथिषु अव्यथयितृषु सुखकरेषु स्तोतृषु वेदिष्ठःअतिशयेन वेदिता कृतस्य स्तोत्रस्य ज्ञाता सइन्द्रोजरितृभ्यः शंसितृभ्योहोत्रादिभ्यः प्रस्तोत्रादिभ्यश्च अश्वावन्तं बहुभिरश्वैरुपेतं गोमन्तं बहुभिर्गोभिरुपेतं सन्तं वाजमन्नं बलं वा ददातीतिशेषः ॥ २४ ॥

२४. जो सुखकर स्तोताओं को अच्छी तरह जानते हैं, वही इन्द्र होत्रादि को और स्तोतागण को बहुत अश्वोंवाला और गौओंवाला अन्न दें।

अहीनान्तर्गतेतिरात्रे प्रथमेपर्याये होतुःशस्त्रे पन्यंपन्यमितिस्तोत्रियस्तृचः छन्दोगैरस्य तृचस्य स्तूयमानत्वात् छन्दोगप्रत्ययं स्तोमस्तोत्रियइतिहि स्मर्यते ।

पन्यंपन्यमित्सोतारआधावतमद्याय । सोमंवीरायशूराय ॥ २५ ॥ २१ ॥

पन्यम्ऽपन्यम् । इत् । सोतारः । आ । धावत ।
मद्याय । सोमम् । वीराय । शूराय ॥ २५ ॥ २१ ॥

हे सोतारः अभिषोतारोध्वर्यवः मद्याय मादयितव्याय वीराय विक्रान्ताय शूरायशौर्यवतइन्द्राय पन्यंपन्यमित् सर्वत्र स्तुत्यमेव सोमं आधावत अभिगमयत प्रयच्छतेत्यर्थः ॥ २५ ॥

२५. अभिषवकारियो, तुम लोग मत्त करने योग्य, वीर और शूर इन्द्र के लिए स्तुति-योग्य सोम दो।

॥ इति पञ्चमस्य सप्तमे एकविंशोवर्गः ॥ २१ ॥

अथ षड्विंशी—

पाताष्वृत्रहासुतमाघागमन्नारेअस्मत् । नियंमतेशतमूंतिः ॥ २६ ॥

पाता । वृत्रऽहा । सुतम् । आ । घ । गमत् ।
न । आरे । अस्मत् । नि । यमते । शतम्ऽऊंतिः ॥ २६ ॥

सुतमभिषुतं सोमं पाता पानशीलः ताच्छीलिकस्तृन् नलोकाव्ययेति कर्मणिषष्ठ्याःप्रति-षेधः वृत्रः वृत्रस्यासुरस्यहन्ता इन्द्रः आगमत् घेत्यवधारणे आगच्छत्वेव अस्मत् अस्मत्तः आरे-दूरदेशे माभवतु आगत्यच शतमूतिः बहुविधरक्षणः इन्द्रः नियमते अस्मदीयान् शत्रून् निय-च्छतु तिरस्करोतु यद्वा धनान्यस्मभ्यं नियच्छतु ददातु ॥ २६ ॥

२६. सोमपान में परायण और वृत्रहन्ता इन्द्र आवें। हम दूर न जायें। बहु-रक्षावाले इन्द्र शत्रुओं को तिरस्कृत करें।

अथ सप्तविंशी—

एहहरींब्रह्मयुजांशग्मावंक्षतःसखांयम् । गीर्भिःश्रुतंगिर्वंणसम् ॥ २७॥

आ । इह । हरी इति । ब्रह्मऽयुजां । शग्मा । वक्षतः ।
सखांयम् । गीःऽभिः । श्रुतम् । गिर्वणसम् ॥ २७ ॥

ब्रह्मयुजा अन्नवन्तौ शग्मा सुखप्रदौ हरी एतादृशौ अश्वौ युवां इहअस्मद्यज्ञे इन्द्रं आ-वक्षतः आवहतम् । कीदृशं इन्द्रं अस्मत्सखायं गीर्भिः अस्मत्कृतैः स्तोत्रैः श्रुतं प्रख्यातं गिर्वण-सं गिरां संभक्तारम् ॥ २७ ॥

२७. स्तोत्रवाले और सुखावह दोनों अश्व इस यज्ञ में स्तुति-द्वारा विश्रुत और आश्रय-योग्य सखा इन्द्र को ले आवें।

अथाष्टाविंशी—

स्वादवःसोमाआयांहिश्रीताःसोमाआयांहि ।
शिप्रिन्नृषीवःशचीवोनायमच्छांसधमादंम् ॥ २८ ॥

स्वादवः । सोमाः । आ । याहि । श्रीताः । सोमाः ।
आ । याहि । शिप्रिन् । ऋषिऽवः । शचीऽवः । न ।
अयम् । अच्छं । सधऽमादंम् ॥ २८ ॥

हे शिप्रिन् शिप्रं शिरस्त्राणं यद्वा शिप्रेहनूनासिकेवा तद्वन् हे ऋषीवः ऋषिभिः स्तोतृभि-र्युक्त शचीवः शक्तिमन् एवंभूत हेइन्द्र अस्मदीयाः इमे सोमाः स्वादवः अभिषवादिभिः सं-

स्कृतत्वेन आस्वदनार्हा जाताः अतस्त्वमायाहि आगच्छ। तथा ते सोमाः श्रीताः पयआदिभिः श्रयणद्रव्यैः मिश्रिताः संस्कृताः अतोप्यायाह्यागच्छ नेतिसम्प्रत्यर्थे न सम्प्रत्ययं स्तोता सधमादं सहमादयितव्यं त्वां अच्छाभिमुखं स्तौतीतिशेषः अतोप्यायाहीत्यर्थः॥ २८॥

२८. शिरस्त्राण, ऋषि और शक्तिवाले इन्द्र, यह स्वादिष्ठ सोम है। तुम आओ। सारे सोम मिश्रण द्रव्य (क्षीरादि) में मिश्रित हुए हैं। आओ। तुम प्रसन्नता-प्रिय हो। स्तोता तुम्हारी स्तुति करता है।

स्तुतश्चयास्त्वावर्धन्तिमहेराधसेनृम्णाय। इन्द्रंकारिणंवृधन्तः॥२९॥

स्तुतः। च। याः। त्वा। वर्धन्ति। महे।
राधसे। नृम्णाय। इन्द्र। कारिणम्। वृधन्तः॥ २९॥

हे इन्द्र कारिणं कर्मणां कर्तारं वृधन्तोवर्धयन्तः ये स्तुतः स्तोतारः याश्च तदीयाः स्तुतयः त्वा त्वां वर्धन्ति वर्धयन्ति किमर्थं महे महते राधसे धनाय नृम्णाय बलाय च उभयोर्लाभार्थं तदुभयं लभन्तइत्यध्याहारः यद्वोत्तरत्र ते सत्रादधिरेशवांसीतिसबन्धः॥ २९॥

२९. इन्द्र, वर्द्धन-परायण स्तोता लोग और सारे स्तोत्र, महान् धन और बल की प्राप्ति के लिए, तुम्हें बढ़ाते हैं।

गिरश्चयास्तेगिर्वाहउक्थाचतुभ्यंतानि। सत्रादधिरेशवांसि॥३०॥२२॥

गिरः। च। याः। ते। गिर्वाहः। उक्था। च।
तुभ्यम्। तानि। सत्रा। दधिरे। शवांसि॥ ३०॥ २२॥

हे गिर्वाहः गीर्भिःस्तुतिभिर्वहनीयेन्द्र ते तुभ्यं क्रियमाणाः गिरश्च स्तुतिरूपाश्च वाचोयाः सन्ति उक्थाच उक्थानिच शस्त्ररूपाणिच वचांसि तुभ्यं त्वदर्थं क्रियमाणानि यानि सन्ति तानि सर्वाणि सत्रासहैव शवांसि बलानि दधिरे विदधिरे॥ ३०॥

३०. स्तुतियों-द्वारा वहनीय इन्द्र, तुम्हारे लिए जो स्तोत्र और उक्थ हैं, वे सब मिलकर तुम्हारे बल को धारण करते हैं।

॥ इति पञ्चमस्य सप्तमे द्वाविंशोवर्गः॥ २२॥

अथैकत्रिंशी—

एवेदेषतुविकूर्मिर्वाजाँएकोवज्रहस्तः। सनादमृक्तोदयते॥३१॥

एव। इत्। एषः। तुविऽकूर्मिः। वाजान्। एकः।
वज्रऽहस्तः। सनात्। अमृक्तः। दयते॥ ३१॥

एष एवेन्द्रः तुविकूर्मिः बहुकर्मा इदितिपूरकः एकः सर्वेषु देवेषु मुख्यः वज्रहस्तोवज्रबाहुः सनात् चिरकालादारभ्य अमृक्तः शत्रुभिरबाधितः एवंभूतः सइन्द्रः वाजानन्नानि बलानि वा दयते स्तोतृभ्योददाति ॥ ३१ ॥

३१. इन्द्र, बहुकर्मा, एक और वज्रपाणि हैं। वे सदा से शत्रुओं के लिए अजेय हैं। वे स्तोता को बल देते हैं।

हन्तावृत्रंदक्षिणेनेन्द्रःपुरूपुरुहूतः । महान्महीभिःशचीभिः ॥ ३२ ॥

हन्ता । वृत्रम् । दक्षिणेन । इन्द्रः । पुरु । पुरुऽहूतः ।
महान् । महीभिः । शचीभिः ॥ ३२ ॥

अयमिन्द्रोदक्षिणेन हस्तेन एकेनैव वृत्रमावरकमसुरं हन्ता साधु हतवान् हन्तेः साधुकारिणि तृन् नलोकाव्ययेति षष्ठीप्रतिषेधः। पुरु पुरुषु सुपांसुलुगिति विभक्तेर्लुक् बहुषु देशेषु पुरुहूतः बहुभिराहूतः महीभिर्महतीभिः शचीभिः क्रियाभिः शक्तिभिर्वा महान् सर्वेभ्यउत्कृष्टएवंभूतइन्द्रोस्मान् रक्षत्वित्यर्थः ॥ ३२ ॥

३२. इन्द्र ने दाहिने हाथ से वृत्र का वध किया है। वे अनेक स्थानों में बहुबार बुलाये गये हैं। वे नाना प्रकार की क्रियाओं-द्वारा महान् हैं।

यस्मिन्विश्वाश्चर्षणयउतच्यौत्नाज्रयांसिच । अनुघेन्मन्दीमघोनः ॥ ३३ ॥

यस्मिन् । विश्वाः । चर्षणयः । उत । च्यौत्ना ।
ज्रयांसि । च । अनु । घ । इत् । मन्दी । मघोनः ॥ ३३ ॥

विश्वाः सर्वाः चर्षणयः प्रजाः यस्मिन्निन्द्रे वर्तन्ते यदधीनाभवन्ति उतापिच च्यौत्ना च्यौत्नानि बलनामैतत् अच्युतसाधनानि बलानिच ज्रयांसि शत्रुविषयाण्यभिभवनानि यस्मिन्निन्द्रे वर्तन्ते जिज्रि अभिभवे इतिधातुः। सइन्द्रः मघोनः मघं हविर्लक्षणधनं तद्वतोयजमानान् अनुमन्दी अनुमोदकोभवति घेदितिपूरकौ यद्वा मन्दी स्तुत्यः सइन्द्रः तान् अनुगृह्णातीतिशेषः अथवा यस्य मघोनोधनवतइन्द्रस्य मन्दी स्तोतानुकूलोभवति एषएतानीत्युत्तरनैकवाक्यता ॥ ३३ ॥

३३. सारी प्रजा जिन इन्द्र के अधीन है और जिन इन्द्र में अच्युत बल और अभिनव हैं, वही इन्द्र यजमानों के अनुमोदक हों।

अथ चतुस्त्रिंशी—

एषएतानिचकारेन्द्रोविश्वायोतिशृण्वे । वाजदावामघोनाम् ॥ ३४ ॥

एषः । एतानि । चकार । इन्द्रः । विश्वा ।
यः । अति । शृण्वे । वाजऽदावा । मघोनाम् ॥ ३४ ॥

एषइन्द्रः विश्वा विश्वानि व्याप्तानि एतानि वृत्रवधादीनि वीर्याणि यद्वा पृथिव्यादीनि भूतजातानि चकार कृतवान् यइन्द्रोबलैरतिशयितः शृण्वे श्रूयते सर्वत्र स्तूयते अपिच सइन्द्रोमघोनां हविष्मतां यजमानानां वाजदावा वाजस्यान्नस्य दाता भवति ॥ ३४ ॥

३४. इन्द्र ने ये सारे काम किये हैं। वे सर्वत्र विश्रुत हैं, वे हविवालों के अन्नदाता हैं।

प्रभर्तारथंगव्यन्तमपाकाच्चिद्यमवति । इनोवसुसहिवोळ्हा ॥ ३५ ॥२३॥

प्रऽभर्ता । रथम् । गव्यन्तम् । अपाकात् । चित् ।
यम् । अवति । इनः । वसु । सः । हि । वोळ्हा ॥ ३५ ॥२३॥

प्रभर्ता प्रहर्ता प्रहरणशीलइन्द्रः रथं रंहणं गव्यन्तं गाइच्छन्तं यं स्तोतारं अपाकात् अविपक्वप्रज्ञात् शत्रोः चिच्छब्दोनुक्तसमुच्चयार्थः विपक्वप्रज्ञादपि अवति रक्षति सहि सखलु स्तोता इनईश्वरः सन् वसु धनं वोळ्हा साधुवाही भवति। वहेः साधुकारिणितृन् अतोनलोकाव्ययेतिकर्मणिषष्ठ्याः प्रतिषेधः ॥ ३५ ॥

३५. प्रहरणशील इन्द्र, जिस गमनशील और गवाभिलाषी स्तोता को अपक्वबुद्धि शत्रु के हाथ से बचाते हैं, वह स्तोता स्वामी होकर धन का वाहक होता है। ॥ इति पञ्चमस्य सप्तमे त्रयोविंशोवर्गः ॥ २३ ॥

सनिताविप्रोअर्वद्भिर्हन्तावृत्रंनृभिःशूरः । सत्योविताविधन्तम् ॥३६॥

सनिता । विप्रः । अर्वत्ऽभिः । हन्ता । वृत्रम् ।
नृऽभिः । शूरः । सत्यः । अविता । विधन्तम् ॥ ३६ ॥

विप्रोमेधावी सइन्द्रः अर्वद्भिरश्वैः वाहनभूतैः सनिता गन्तव्यं संभक्ता तथा शूरः शौर्योपेतः सन् नृभिर्नेतृभिर्मरुद्भिः सार्धं वृत्रमावरकमसुरं हन्ता साधुघाती अपिच विधन्तं परिचरन्तं यजमानः सत्यः साधुः अवितथस्वभावोवा सइन्द्रः अविता परिचरतोयजमानस्य रक्षिता भवति । सर्वविधीनां छन्दसिविकल्पितत्वादत्रकर्मणिषष्ठी न प्रवर्तते ॥ ३६ ॥

३६. अश्व की सहायता से धनी इन्द्र जाने योग्य स्थान पर जाते हैं। वे शूर हैं। वे नेता मरुतों की सहायता से वृत्रासुर का वध करते हैं। वे अपने सेवक यजमान के रक्षक और सत्य-स्वरूप हैं।

अथ सप्तत्रिंशी—

**यजध्वैनंप्रियमेधाइन्द्रंसत्राचामनसा। योभूत्सोमैःसत्यमद्वा ॥३७॥**

यजध्व। एनम्। प्रियऽमेधाः। इन्द्रम्। सत्राचा।
मनसा। यः। भूत्। सोमैः। सत्यऽमद्वा ॥ ३७ ॥

हे प्रियमेधाः प्रियः अनुकूलः मेधोयज्ञोयेषां ते तथोक्ताः आत्मनि पूजार्थं बहुवचनं प्रियमेधाख्यऋषिरात्मानं संबोध्य ब्रूते हे प्रियमेधाः सत्राचा सहांचता स्तोतव्येनेन्द्रेण सह वर्तमानेन मनसा चित्तेन यएनमिन्द्रं यजध्व यजध्वं बुद्धिपूर्वकं यजेत्यर्थः यजध्वैनमिति निपातनाद्वर्णलोपः यइन्द्रः सोमैः करणभूतैः सत्यमद्वा भूत सत्यमदः अवितथमदोभवति ॥ ३७ ॥

३७. प्रियमेध, ऋषि, इन्द्र के लिए, उनमें मन लगाकर, यज्ञ करो। सोम पाने पर इन्द्र प्रसन्न होते हैं। उनका हर्ष निष्फल नहीं होता।

अथाष्टत्रिंशी—

**गाथश्रवसंसत्पतिंश्रवस्कामंपुरुत्मानम्। कण्वासोगातवाजिनम् ॥३८॥**

गाथऽश्रवसम्। सत्ऽपतिम्। श्रवःऽकामम्।
पुरुऽत्मानम्। कण्वासः। गात। वाजिनम् ॥ ३८ ॥

हे कण्वासः कण्वपुत्राः मेधातिथयः पूर्ववद्बहुवचनमात्मनः संबोधनंच हे कण्वस्यपुत्राः मेधातिथयोयूयं गाथश्रवसं गातव्ययशसं सत्पतिं सतां पालयितारं श्रवस्कामं श्रवस्सु अन्नेषु हविष्षु कामोभिलाषोयस्य तादृशं पुरुत्मानं बह्वात्मानं यद्वा पुरुषु बहुषु प्रदेशेषु अतन्तं सततं गच्छन्तं वाजिनं वेगवन्तं एवं गुणकमिन्द्रं गात गायत स्तुध्वम् ॥ ३८ ॥

३८. कण्व-पुत्रो, तुम साधु के रक्षक, अन्नाभिलाषी, नाना-देशगामी, वेगवान् और गेय-यशा इन्द्र की स्तुति करो।

अथैकोनचत्वारिंशी—

**यऋतेचिद्गाःस्पदेभ्योदात्सखानृभ्यःशचीवान्।**
**येअस्मिन्काममश्रियन् ॥ ३९ ॥**

यः। ऋते। चित्। गाः। पदेभ्यः। दात्। सखा।
नृऽभ्यः। शचीऽवान्। ये। अस्मिन्। कामम्। अश्रियन् ॥ ३९ ॥

पणिभिर्देवगवीष्वपहृतासु पदेभ्योगतानां गवां मार्गे संलग्नेभ्यः अन्वेषणसाधनभूतेभ्यः ऋतेचिद् ऋतेपि विनापि सखा मित्रभूतः शचीवान् कर्मवान् प्रशस्तकर्मा यइन्द्रोनृभ्योनेतृभ्योदे-

वेभ्यः गाः पणिभिरपहृतादाव् पुनर्दत्तवान्। येदेवाः अस्मिन्निन्द्रे कामं अभिलाषं अश्रियन् असेवन्त प्राप्नुवन् तेभ्योनृभ्यइत्यन्वयः तमिन्द्रं गातेति पूर्वेणसहैकवाक्यता ॥ ३९॥

३९. पद-चिह्न न रहने पर भी सखा और सुकर्मा इन्द्र ने नेता देवों को फिर गायें दी थीं। देवों ने अभिलषित पदार्थ को इन्द्र से पाया था।

इत्थाधीवन्तमद्रिवःकाण्वंमेध्यातिथिम्।
मेषोभूतो३भियंनयः ॥ ४० ॥

इत्था। धीऽवन्तम्। अद्रिऽवः। काण्वम्।
मेध्यऽअतिथिम्। मेषः। भूतः। अभि। यन्। अयः ॥ ४० ॥

इत्था इत्थमनेनोक्तप्रकारेण धीवन्तं स्तुतिमन्तं काण्वं कण्वपुत्रं मेध्यातिथिं यज्ञार्हातिथिं एतत्संज्ञमृषिं हे अद्रिवोवज्रवन्निन्द्र मेषभूतः मेषरूपतां प्राप्तः अभियन् अभिगच्छन् यइत्यनुवर्तते तद्योगाच्च तिङोनिघाताभावः यस्त्वं अयः अगमयः तं त्वां स्तुमइत्यर्थः। मेधातिथिर्मेषेति सु-ब्रह्मण्यामन्त्रैकदेशस्य व्याख्यानरूपं ब्राह्मणं छन्दोगैरेवमाम्नायते—मेधातिथिंहिकाण्वायनिं मेषोभूत्वोदजहारेति। तदभिप्रायेणेयं स्तुतिः कृता ॥ ४० ॥

४०. वज्री इन्द्र, मेष-रूप से सामने जाते हुए तुमने इस प्रकार स्तुति करनेवाले कण्वपुत्र मेध्यातिथि को प्राप्त किया था।

अथैकचत्वारिंशी—

शिक्षाविभिन्दोअस्मैचत्वार्ययुताददत्।
अष्टापरःसहस्रा ॥ ४१ ॥

शिक्ष। विभिन्दो इति विऽभिन्दो। अस्मै।
चत्वारि। अयुता। ददत्। अष्ट। परः। सहस्रा ॥ ४१ ॥

विभिन्दुनाम्नोराज्ञः सकाशाद्बहुधनं लब्ध्वा तदीयं दानं इदमादिकेन द्व्यृचेन प्रशंसति हे-विभिन्दोराजन् ददत् दाता त्वं अस्मै मह्यमृषये चत्वारि अयुता अयुतानि दशसहस्राणि चत्वा-रिंशत्सहस्राणि शिक्ष अशिक्षः दत्तवानसि परः परस्तात् ऊर्ध्वमपि अष्टसंख्याकानि सहस्रा सहस्राणि च दत्तवानसि ॥ ४१ ॥

४१. विभिन्दु (नामक राजा), तुम दाता हो। तुमने मुझे चालीस हज़ार धन दिया है। अनन्तर आठ हज़ार दान दिया है।

अथ द्वाचत्वारिंशी—

उतसुत्येपयोवृधामाकीरणस्यनप्त्या।
जनित्वनायमामहे ॥ ४२ ॥ २४ ॥

उत । सु । त्ये इति॑ । प॒य॒ःऽवृधा॑ । मा॒की इति॑ । रण॑स्य ।
न॒प्त्या॑ । ज॒नि॒ऽत्व॒नाय॑ । म॒म॒हे॒ ॥ ४२ ॥ २४ ॥

उतापिच सु सुष्ठु त्ये ते सर्वत्र प्रसिद्धे पयोवृधा पयसउदकस्य वर्धयित्र्यौ माकी निर्मात्र्यौ भूतजातस्य रणस्य स्तोतॄनामैतत् स्तोतुर्नप्त्या नप्त्यौ न पातयित्र्यौ सर्वदा अनुग्रहशीले द्यावापृथिव्यौ जनित्वनाय पूर्वोक्तधनस्य जननाय प्रादुर्भावाय लाभाय ममहे स्तुतवानस्मि द्यावापृथिव्योः प्रसन्नयोरेवेदं दानं लभ्यते नान्यदेति दानमाहात्म्यप्रशंसाधिगंतव्या ॥ ४२॥

४२. प्रख्यात, जल-वर्द्धक और प्राणि-रचयिता स्तोता के प्रति अनुग्रह-शील द्यावा-पृथिवी की, धनोत्पत्ति के लिए, मैंने स्तुति की है।

॥ इति पञ्चमस्य सप्तमे चतुर्विंशोवर्गः ॥ २४ ॥

पिबासुतस्येति चतुर्विंशत्यृचं तृतीयं सूक्तम् काण्वस्य मेधातिथेरार्षम् अयुजो बृहत्योयुजः सतोबृहत्यः एकविंश्यनुष्टुप् द्वाविंशीत्रयोविंश्यौ गायत्र्यौ चतुर्विंशीबृहती एताश्चतस्रः कुरुयाणस्यपुत्रस्य पाकस्थामनाम्नोराज्ञोदानस्तुतिप्रतिपादिकाः अतस्तद्देवताकाः शिष्टाऐन्द्र्यः तथाचानुक्रान्तम्—पिबचतुर्विंशतिर्मेध्यातिथिः प्रागाथं त्वनुष्टुप् गायत्र्यौ बृहतीचान्त्याः कौरयाणस्यपाकस्थाम्नोदानस्तुतिरिति । महाव्रते निष्केवल्ये बार्हतत्ृचाशीतौ दानस्तुतीर्विनेदंसूक्तं सप्तम्यष्टम्ययोश्चोद्धारः तथैवपञ्चमारण्यकेसूत्रितम्—पिबासुतस्यरसिनइतिविंशतेःसप्तमींचाष्टमींचोद्धरतीति । ज्योतिष्टोमे निष्केवल्ये आद्योरथंतरसामप्रगाथः शंसनीयः सूत्र्यतेहि—पिबासुतस्यरसिनइतिसामप्रगाथइति । चातुर्विंशिकेहनि निष्केवल्येप्ययंप्रगाथः सूत्र्यतेहि—उक्तोरथन्तरस्यउभयंश्रृणवच्चनइतिबृहतइति । एवमन्यत्रापि यदि रथन्तरं पृष्ठं भवति तत्र सर्वत्रायं प्रगाथोद्रष्टव्यः पञ्चमेहनिप्रउगशस्त्रेपि पिबासुतस्येत्ययमैन्द्रःप्रगाथः सूत्रितश्च—पिबासुतस्यरसिनोदेवंदेवंवोवसइति ।

तत्र प्रथमा—

पिबा॑ सु॒तस्य॑ र॒सिनो॒ मत्स्वा॑ न इन्द्र॒ गोम॑तः ।
आ॒पिर्नो॑ बोधि सध॒माद्यो॑ वृ॒धे॒३॑स्माँ अ॑वन्तु ते॒ धिय॑ः ॥ १ ॥

पिब॑ । सु॒तस्य॑ । र॒सिन॑ः । मत्स्व॑ । न॒ः । इन्द्र॑ । गोऽम॑तः । आ॒पिः । न॒ः ।
बो॒धि॒ । स॒ध॒ऽमाद्य॑ः । वृ॒धे । अ॒स्मान् । अ॒व॒न्तु॒ । ते॒ । धिय॑ः ॥ १ ॥

हे इन्द्र रसिनोरसवतः गोमतोगोविकारैः पयः प्रभृतिभिः श्रयणद्रव्यैः युक्तस्य नोस्मदीयस्य सुतस्याभिषुतस्य क्रियाग्रहणंकर्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थेषष्ठी ईदृशं सोमं पिब पीत्वा च मत्स्व तृप्तोभव। अपिच सधमाद्यः सहमादयितव्यः सहितैरस्माभिस्तर्पयितव्यस्त्वं आपिरापयिता बन्धुः सन् नोस्माकं वृधे वर्धनाय बोधि बुध्यस्व। ते त्वदीयाधियः बुद्धयः अनुग्रहात्मिकाः अस्मान् स्तोतॄन् अवन्तु रक्षन्तु ॥ १ ॥

१. इन्द्र, हमारे रसवान् और दुग्ध-युक्त अभिषुत सोम को पीकर तृप्त होओ। तुम हमारे साथ में मत्त होने योग्य हो। बन्धु होकर हमें वर्द्धित करने के लिए तुम प्रबुद्ध होओ। तुम्हारी बुद्धि हमारी रक्षा करे।

अथ द्वितीया—

भूयामतेसुमतौवाजिनोवयंमानस्तरभिमातये।
अस्माञ्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय ॥ २ ॥

भूयाम। ते। सुऽमतौ। वाजिनः। वयम्। मा। नः। स्तः।
अभिऽमातये। अस्मान्। चित्राभिः। अवतात्। अभिष्टिऽभिः।
आ। नः। सुम्नेषु। यमय ॥ २ ॥

हे इन्द्र ते तव सुमतौ शोभनायां मतौ अनुग्रहबुद्धौ वाजिनोहविष्मन्तोवयं भूयाम वर्तमानाभवेम अभिमातये अभिमन्यतइत्यभिमातिः शत्रुः तस्मै तदर्थं नोस्मान् मा स्तः माहिंसीः स्तृङ् हिंसायाम् माङिलुङि छान्दसश्र्लेर्लुक्। अपितु अभिष्टिभिः अभ्येषणीयाभिः प्रार्थनीयाभिश्चित्राभिश्चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिरूतिभिः अस्मानवतात् अव रक्ष। तथा नोस्मान् सुम्नेषु सुखेषु आयामय आयतान् कुरु सर्वदा सुखिनएव कुरु ॥ २ ॥

२. तुम्हारी कृपा-बुद्धि में हम हविवाले हों। शत्रु के लिए हमें नहीं मारना। अनेक रक्षणों से हमें बचाओ। हमें सदा सुखी करो।

इमाउत्वापुरूवसोगिरोवर्धन्तुयाममं।
पावकवर्णाःशुचयोविपश्चितोभिस्तोमैरनूषत॥ ३ ॥

इमाः। ॐ इति। त्वा। पुरुवसो इति पुरुऽवसो। गिरः।
वर्धन्तु। याः। मम। पावकऽवर्णाः। शुचयः। विपःऽचितः।
अभि। स्तोमैः। अनूषत ॥ ३ ॥

हे पुरूवसो बहुधनेन्द्र मम मदीया याइमागिरः शस्त्ररूपावाचः त्वा त्वां वर्धन्तु वर्धयन्तु तथा पावकवर्णाः अग्निसमानतेजस्काः अतएव शुचयः शुद्धाः विपश्चितोविद्वांसः. उद्गातारश्च स्तोमैःस्तोत्रैर्बहिष्पवमानादिभिः अभ्यनूषत त्वामभिष्टुवन्ति। नू स्तुतौ कुटादिः ॥ ३ ॥

३. बहु-धनवान् इन्द्र, मेरी ये स्तुति-रूप बातें तुम्हें वर्द्धित करें। अग्निदेव के समान तेजस्वी और विशुद्ध विद्वान् तुम्हारी स्तुति करते हैं।

अयंसहस्रमृषिभिःसहस्कृतःसमुद्रइवपप्रथे।
सत्यःसोअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये ॥ ४ ॥

अयम्। सहस्रम्। ऋषिऽभिः। सहःऽकृतः। समुद्रःऽइव।
पप्रथे। सत्यः। सः। अस्य। महिमा। गृणे। शवः।
यज्ञेषु। विप्रऽराज्ये ॥ ४ ॥

अयमिन्द्रः सहस्रं सहस्रसंख्याकैः ऋषिभिरतीन्द्रियार्थदर्शिभिः स्तोतृभिः सहस्कृतः सहसा बलेनयुक्तःकृतः स्तुत्याहि देवताया बलं वर्धते। सच एवंभूतःसन् समुद्रइव उदधिरिव पप्रथे प्रथितोविस्तीर्णोबभूव अस्यचेन्द्रस्य सत्यःअवितथः सप्रसिद्धोमहिमा महत्वं शवोबलंच यज्ञेषु यागेषु विप्रराज्ये राज्ञः कर्म राज्यं विप्राणां स्तोतृणां राज्ये स्तुतशस्त्रसंघे गृणे स्तूयते ॥४॥

४. इन्द्र सहस्र ऋषियों से बल प्राप्त करके विस्तीर्ण हुए हैं। इनकी यथार्थ प्रख्यात महिमा और बल, यज्ञ में, विप्रों के राज्य में, स्तुत होते हैं।

चातुर्विंशिकेहनि निष्केवल्ये इन्द्रमिद्देवतातयइति रैवतसामप्रगाथः शंसनीयः पृष्ठ्येहनि निष्केवल्ये त्वयं प्रगाथः सूत्र्यतेहि—इन्द्रमिद्देवतातयइतीतरेषां पृष्ठ्यएकैकमन्वहमिति।

इन्द्रमिद्देवतातयइन्द्रंप्रयत्यध्वरे।
इन्द्रंसमीकेवनिनोहवामहइन्द्रंधनस्यसातये ॥ ५ ॥२५॥

इन्द्रम्। इत्। देवऽतातये। इन्द्रम्। प्रऽयति। अध्वरे। इन्द्रम्।
सम्ऽईके। वनिनः। हवामहे। इन्द्रम्। धनस्य। सातये ॥५॥२५॥

देवतातये देवैः स्तोतृभिः तायते विस्तार्यते इति देवतातिर्यज्ञः तदर्थं इन्द्रमित् देवेषु मध्ये इन्द्रमेवाह्वयामहे अध्वरे यज्ञे प्रयति प्रगच्छति उपक्रान्ते सति इन्द्रं हवामहे। तथा समीके सम्यग्गते संपूर्णे च यागे वनिनः संभजमानावयं इन्द्रमेवाह्वयामहे। यद्वा समीकमिति संग्रामनाम समीके संग्रामे इन्द्रमेवाह्वयामहे धनस्य सातये लाभाय इन्द्रमेवाह्वयामहे। अतः शीघ्रमिन्द्रआगच्छत्वित्यर्थः ॥ ५ ॥

५. यज्ञ के प्रारम्भ में हम इन्द्र को बुलाते हैं और यज्ञ की समाप्ति में भी इन्द्र को बुलाते हैं। हम मत्त होकर, धन-प्राप्ति के लिए, इन्द्र को बुलाते हैं।

॥ इति पञ्चमस्य सप्तमे पञ्चविंशोवर्गः ॥२५॥

अथ षष्ठी—

इन्द्रो॑म॒ह्नारोद॑सीपप्रथ॒च्छव॒इन्द्रः॒सूर्य॑मरोचयत् ।
इन्द्रे॑ह॒विश्वा॒भुव॑नानिये॒मिर॒इन्द्रे॑सुवा॒नास॒इन्द॑वः ॥६॥

इन्द्रः॑ । म॒ह्ना । रोद॑सी॒ इति॑ । प॒प्र॒थ॒त् । शवः॑ । इन्द्रः॑ । सूर्य॑म् ।
अ॒रो॒च॒य॒त् । इन्द्रे॑ । ह॒ । विश्वा॑ । भुव॑नानि । ये॒मि॒रे ।
इन्द्रे॑ । सु॒वा॒नासः॑ । इन्द॑वः ॥ ६ ॥

अयमिन्द्रः शवः शवसः आत्मीयस्य बलस्य मह्ना महिम्ना महत्त्वेन रोदसी द्यावापृथिव्यौ पप्रथत् अप्रथयत् विस्तारितवान् तथा स्वर्भानुना वृतं सूर्यं अयमेवेन्द्रः अरोचयददीपयत् तस्यासुरस्य वधेन प्रकाशितवान् । अपिच इन्द्रेह अस्मिन्नेवेन्द्रे विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि येमिरे उपरमन्ते इन्द्रेण नियम्यन्तइत्यर्थः । तथा सुवानासः सूयमानाः अभिषूयमाणाः इन्दवः सोमाश्च अस्मिन्नेवेन्द्रे नियम्यन्ते अन्तर्भवन्तीत्यर्थः ॥ ६ ॥

६. अपने वल की महिमा से इन्द्र ने द्यावा-पृथिवी को विस्तारित किया है। इन्द्र ने सूर्य को दीप्त किया है। सारे भुवन इन्द्र-द्वारा नियमित हैं। सोम भी इन्हीं इन्द्र में नियमित हैं।

ज्योतिष्टोमोयदिरथन्तरपृष्ठः तदा निष्केवल्ये अभित्वापूर्वपीतयइतिप्रगाथोनुरूपः सूत्र्यतेहि—अभित्वापूर्वपीतयइति प्रगाथौ स्तोत्रियानुरूपाविति । महाव्रते निष्केवल्ये दक्षिणपक्षेप्ययं प्रगाथः सूत्रितश्च—अभित्वापूर्वपीतयइतिरथन्तरस्यस्तोत्रियानुरूपौ प्रगाथाविति ।

तत्र प्रथमा सूक्ते सप्तमी—

अ॒भित्वा॑पू॒र्वपी॑तय॒इन्द्र॒स्तोमे॑भिरा॒यवः॑ ।
स॒मी॒ची॒नास॑ऋ॒भवः॒सम॑स्वरन्रु॒द्रागृ॑ण॒न्तपू॒र्व्य॑म् ॥ ७ ॥

अ॒भि । त्वा॒ । पू॒र्वऽपी॑तये । इन्द्र॑ । स्तोमे॑भिः । आ॒यवः॑ ।
स॒म्ऽई॒ची॒नासः॑ । ऋ॒भवः॑ । सम् । अ॒स्व॒र॒न् । रु॒द्राः ।
गृ॒ण॒न्त॒ । पू॒र्व्य॑म् ॥ ७ ॥

हे इन्द्र आयवोमनुष्याः स्तोतारः स्तोमेभिः स्तोत्रैः त्वां अभिष्टुवन्ति किमर्थं पूर्वपीतये सर्वेभ्योदेवेभ्यः पूर्वं प्रथमतएव सोमस्य पानाय । सवनमुखेहि चमसगणैरिन्द्रस्यैव सोमोहूयते तथा समीचीनासः सङ्गताः ऋभवः प्रथमवाचकेन शब्देन त्रयोप्युपलक्ष्यन्ते ऋभुर्विभ्वावाजइत्येतेच

समस्वरन् त्वामेव सम्यक् अस्तुवन्। स्वृशब्दोपतापयोः रुद्राः रुद्रपुत्राः मरुतश्च पूर्व्यं पुरातनं वृद्धं त्वामेवगृणन्त अभ्यस्तुवन् वृत्रवधसमये प्रहरभगवोजहिवीरयस्वेत्येवंरूपया वाचा त्वां स्तुतवन्तइत्यर्थः ॥ ७ ॥

७. इन्द्र, स्तोता लोग, सभी देवों से पहले सोम पान के लिए, स्तोत्र द्वारा तुम्हारी स्तुति करते हैं। समीचीन ऋभुगण भली भाँति तुम्हारी ही स्तुति करते हैं। इन्द्र तुम प्राचीन हो। रुद्रों ने तुम्हारी ही स्तुति की है।

अथाष्टमी—

अस्येदिन्द्रोवावृधेवृष्ण्यंशवोमदेसुतस्यविष्णवि ।
अद्यातमस्यमहिमानमायवोनुष्टुवन्तिपूर्वथा ॥ ८ ॥

अस्य । इत् । इन्द्रः । वदृधे । वृष्ण्यम् । शवः । मदे ।
सुतस्य । विष्णवि । अद्य । तम् । अस्य । महिमानम् ।
आयवः । अनु । स्तुवन्ति । पूर्वऽथा ॥ ८ ॥

अस्येत् अस्यैव यजमानस्य वृष्ण्यं वृषत्वं वीर्यं शवोबलं च इन्द्रोवावृधे वर्धयति सुतस्याभिषुतस्य सोमस्य पानेन विष्णवि कृत्स्नदेहस्यव्यापके मदे हर्षे सति तस्यैव यजमानस्य बलं वर्धयतीत्यर्थः। अद्यास्मिन्काले अस्येन्द्रस्य तं उक्तगुणं महिमानं महत्त्वं आयवोमनुष्याः अनुष्टुवन्ति आनुपूर्व्येण स्तुवन्ति। पूर्वथा पूर्वशब्दादिवार्थे प्रत्नपूर्वेत्यादिना थाल् प्रत्ययः यथा पूर्वस्मिन् काले अस्तुवन् एवमिदानीमपि तेनैवक्रमेण स्तुवन्तीत्यर्थः ॥ ८ ॥

८. अभिषुत सोम के पीने से सारे शरीर में मत्तता चढ़ने पर इन्द्र इस यजमान का ही वीर्य और बल बढ़ाते हैं। प्राचीन समय के समान ही आज मनुष्यगण इन्द्र के उन्हीं गुणों की स्तुति करते हैं।

ज्योतिष्टोमे माध्यन्दिनसवने ब्रह्मशस्त्रे तत्त्वायामीति प्रगाथोनुरूपः सूत्रितंच—तत्त्वायामिसुवीर्यमिति प्रगाथौ स्तोत्रियानुरूपाविति। चातुर्विंशिकेहनि माध्यन्दिनसवनेप्ययंप्रगाथस्तस्यैवानुरूपः सूत्रितंच—तत्त्वायामिसुवीर्यमभिप्रवःसुराधसमिति।

तत्त्वायामिसुवीर्यंतद्ब्रह्मपूर्वचित्तये ।
येनायतिभ्योभृगवेधनेहितेयेनप्रस्कण्वमाविथ ॥ ९ ॥

तत् । त्वा । यामि । सुऽवीर्यम् । तत् । ब्रह्म । पूर्वऽचित्तये ।
येन । यतिऽभ्यः । भृगवे । धने । हिते । येन ।
प्रस्कण्वम् । आविथ ॥ ९ ॥

---

१ ऐ० ब्रा० ३. १७.।

हे इन्द्र तत्सुवीर्यं शोभनवीर्यं त्वा त्वां यामि याचामि छान्दसोवर्णलोपः। तथा तद्ब्रह्मपरिवृढमन्नं पूर्वचित्तये पूर्वप्रज्ञानाय अन्येभ्यः पूर्वमेव लाभाय त्वां याचामि धने हिते अभीष्टे सति येन सुवीर्येण यतिभ्यः कर्मसूपरतेभ्यः अयष्टृभ्योजनेभ्यः सकाशाद्धनमाहृत्य भृगवे महर्षये प्रयच्छसि। यद्वा कर्मसु नियताअङ्गिरसोयतयः तेषामर्थं धनं प्रयच्छसि तादर्थ्येचतुर्थी येनच ब्रह्मणा प्रस्कण्वं कण्वप्रभवं कण्वस्य पुत्रमृषिं आविथ ररक्षिथ तदुभयं याचामीत्यन्वयः॥९॥

९. इन्द्र, तुम शोभन वीर्यवाले हो। प्रथम लाभ के लिए तुमसे मैं उत्तम अन्न की माँग करता हूँ। जिसके द्वारा कर्म-रहित लोगों से हितकर धन लेकर तुमने भृगु को दिया है और जिसके द्वारा प्रस्कण्व की तुमने रक्षा की है, उसी वीर्य और अन्न को मैं माँगता हूँ।

येनासमुद्रमसृजोमहीरपस्तदिन्द्रवृष्णितेशवः।
सद्यःसोअस्यमहिमानसंनशेयंक्षोणीरनुचक्रदे॥ १०॥ २६॥

येन। समुद्रम्। असृजः। महीः। अपः। यत्। इन्द्र। वृष्णि।
ते। शवः। सद्यः। सः। अस्य। महिमा। न। सम्ऽनशे।
यम्। क्षोणीः। अनुऽचक्रदे॥ १०॥ २६॥

हे इन्द्र येनात्मीयेनबलेन समुद्रं अब्धिं प्रति महीर्महतीः अपउदकानिअसृजः व्यसृजः महान्समुद्रोयावद्भिर्जलैः पूर्यते तावन्ति जलानि पुरा त्वं सृष्टवानित्यर्थः। ते त्वदीयं तच्छवोबलं वृष्णि वर्षकं अभीष्टफलदमित्यर्थः अस्येन्द्रस्य महिमा न संनशे न सम्यग्व्यापनीयः परैरप्रधृष्यइत्यर्थः। नशेः कृत्यार्थेकेन्प्रत्ययः। यं महिमानं क्षोणीः क्षोणी पृथिवी अनुचक्रदे अनुगच्छति क्रदिरत्रगत्यर्थः यदधीनावर्ततइत्यर्थः॥१०॥

१०. इन्द्र, जिस बल के द्वारा तुमने समुद्र को यथेष्ट जल दिया है, तुम्हारा वही बल मनोरथ-पूरक है। तुम्हारी महिमा व्यापनीय नहीं है। इस महिमा का अनुधावन पृथिवी करती है।

॥ इति पंचमस्य सप्तमे षड्विंशोवर्गः॥ २६॥

अथैकादशी—

शग्धीनइन्द्रयत्त्वारयिंयामिसुवीर्यम्।
शग्धिवाजायप्रथमंसिषासतेशग्धिस्तोमायपूर्व्य॥ ११॥

शग्धि। नः। इन्द्र। यत्। त्वा। रयिम्। यामि। सुऽवीर्यम्।
शग्धि। वाजाय। प्रथमम्। सिसासते। शग्धि।
स्तोमाय। पूर्व्य॥ ११॥

हे इन्द्र सुवीर्यं शोभनवीर्योपेतं बहुव्रीहौ वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वं यद्रयिं धनं त्वा त्वां यामि याचामि छान्दसोवर्णलोपः नोस्मभ्यं तद्धनं शग्धि देहि शकिरत्रदानार्थः तस्माल्लोटि हौ छान्दसोविकरणस्यलुक् । हुझल्भ्यइतिहेर्धित्वं । तथा सिषासते संभक्तुमिच्छते सनतेः सनि सनीवन्तर्धेति विकल्पनादिडभावे जनसनखनामित्यात्वम् । वाजाय वाजइत्यन्ननाम तेनच तद्वान् लक्ष्यते हविष्मते यजमानाय प्रथमं सर्वेभ्यः पूर्वमेव शग्धि धनं प्रयच्छ । यद्वा वाजायेति द्वितीयार्थे चतुर्थी कर्मभिस्त्वां संभक्तुमिच्छते जनाय प्रथमं वाजाय वाजमन्नं शग्धि देहि पश्चात् स्तोमाय स्तोत्रे हे पूर्व्य पूर्वस्मिन्काले भव चिरन्तनेन्द्र शग्धि देहि स्तौतेः कर्तरि अर्तिस्तुस्वित्यादिना मन्प्रत्ययः ॥ ११ ॥

११. इन्द्र, जिस शोभन वीर्यवाले धन को मैं तुमसे माँग रहा हूँ, वह धन दो। भजनाभिलाषी और हविवाले यजमान को सर्वप्रथम धन दो। प्राचीन इन्द्र, इसके अनन्तर स्तोता को देना।

शग्धीनोअस्ययद्धपौरमाविथधियंइन्द्रसिषासतः ।
शग्धियथारुशमंश्यावकंकृपमिन्द्रप्रावःस्वर्णरम् ॥ १२ ॥

शग्धि । नः । अस्य । यत् । ह । पौरम् । आविथ । धियः ।
इन्द्र । सिसासतः । शग्धि । यथा । रुशमम् । श्यावकम् ।
कृपम् । इन्द्र । प्र । आवः । स्वःऽनरम् ॥ १२ ॥

हे इन्द्र धियः कर्माणि स्तोत्राणि वा सिषासतः संभक्तवतः नोस्माकं सम्बन्धिनोस्य यजमानस्य तद्धनं शग्धि प्रदेहि । यद्ध येन खलु धनेन पौरं पुरुर्नामराजा तस्य पुत्रं आविथ ररक्षिथ। अपिच हे इन्द्र रुशमं श्यावकं कृपंच एतन्नामकांस्त्रीन्राजर्षीन् यथा येन प्रकारेण प्रावः प्ररक्षः तथा स्वर्णरं सर्वस्य हविषोनेतारं प्रापयितारं यद्वा स्वः स्वर्गं प्रति नेतव्यं इमं यजमानं शग्धि शक्तं कुरु धनादिसंपत्त्या यागानुष्ठानाय यथाशक्तोभवति तथाकुर्वित्यर्थः। इन्द्रेत्यामन्त्रितस्य पादादित्वेनाष्टमिकनिघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् ॥ १२ ॥

१२. इन्द्र, स्तोत्र-भजन-कारी जिस धन से तुमने राजा पुरु के पुत्र की रक्षा की थी, वही धन यजमान को दो। जैसे रुशम, श्यावक और कृप नामक राजर्षियों की तुमने रक्षा की है, वैसे सभी हविवाले यजमानों की रक्षा करो।

चातुर्विंशिकेहनि माध्यन्दिने सवने ब्रह्मशस्त्रे कन्नव्यइति कद्वत्प्रगाथः सूत्रितश्च-कन्नव्योअतसीनांकदून्वस्याकृतमिति कद्वन्तःप्रगाथाइति अहर्गणेषु द्वितीयादिष्वहःसु तस्मिन्शस्त्रे तस्यैवायं प्रगाथः सूत्र्यतेहि—आरंभणीयाः पर्यासान्कद्वतोहरहःशस्यानीति होत्रकाद्वितीयादिष्वेवेति।

तत्राद्या सूक्ते त्रयोदशी—

कन्नव्योअतसीनांतुरोगृणीतमर्त्यः ।
नहीन्वस्यमहिमानमिन्द्रियंस्वर्गृणन्तआनशुः ॥ १३ ॥

कत् । नव्यः । अतसीनाम् । तुरः । गृणीत । मर्त्यः । नहि । नु ।
अस्य । महिमानम् । इन्द्रियम् । स्वः । गृणन्तः । आनशुः ॥ १३ ॥

अतसीनां अतीतानां सन्ततगामिनीनां स्तुतीनां तुरः प्रेरयिता मर्त्योमरणधर्मा नव्योभिनवः इदानींतनः कत् कोनाम स्तोता गृणीत इन्द्रं स्तुयात् अल्पप्रज्ञैरिदानींतनैरिन्द्रः स्तोतुं नशक्यत-इत्यर्थः । गृशब्दे क्र्यादिकः प्वादीनांह्रस्वइतिह्रस्वत्वम् । नु पुरा पूर्वस्मिन्नपिकाले विद्यमानाः स्वः सर्वे गृणन्तः स्तोतारः यद्वा स्वः सुष्ठु अरणीयं प्राप्तव्यमिन्द्रं गृणन्तः स्तुवन्तोजनाः इन्द्रियं इन्द्र-स्यलिङ्गं इन्द्रस्यैवासाधारणं अस्येन्द्रस्य महिमानं महत्त्वं नत्यानशुः न खलु प्राप्नुवन् अश्नो-तेर्लिटि व्यत्ययेनपरस्मैपदम् अतआदेरित्यभ्यासस्यात्वम् अश्नोतेश्चेतिनुट् हिचेति निघातप्र-तिषेधः ॥ १३ ॥

१३. सन्तत गमन करनेवाली स्तुतियों का प्रेरक कौन अभिनव मनुष्य इन्द्र की स्तुति करने की शक्ति रखता है? सुखलभ्य इन्द्र की स्तुति करनेवाले लोग इन्द्र की इन्द्रिय और महिमा को नहीं प्राप्त कर सकते।

अथ चतुर्दशी—

कदुंस्तुवन्तऋतयन्तदेवतऋषिःकोविप्रओहते ।
कदाहवंमघवन्निन्द्रसुन्वतःकदुंस्तुवतआगमः ॥ १४ ॥

कत् । ऊँ इति । स्तुवन्तः । ऋतऽयन्त । देवता । ऋषिः । कः ।
विप्रः । ओहते । कदा । हवम् । मघऽवन् । इन्द्र ।
सुन्वतः । कत् । ऊँ इति । स्तुवतः । आ । गमः ॥ १४ ॥

हे इन्द्र स्तुवन्तः स्तोत्रं कुर्वन्तः कदु के खलु जनाः देवता देवात्तलिति स्वार्थिकस्तल्प्र-त्ययः व्यत्ययेन प्रथमा देवं त्वामुद्दिश्य ऋतयन्त ऋतं यज्ञमैच्छन् त्वदीययागेच्छापि दुर्लभा दूरे-त्वद्यागकथा ऋषिर्द्रष्टा विप्रोमेधावी कः स्तोता ओहते वहति त्वां स्तुतीः प्रापयति न कश्चि-दपि त्वां स्तोतुं शक्नोतीत्यर्थः । यतएवमतः कारणात् हे मघवन् धनवन्निन्द्र अनुग्रहीत्रात्वयै-वागन्तव्यं सत्वं कदा कस्मिन्काले सुन्वतः सोमाभिषवं कुर्वतोयजमानस्य हवमाह्वानं आगमः आगच्छः । कदु कदाच कस्मिंश्चकाले स्तुवतः केवलं स्तोत्रं कुर्वतो यजनमानस्यहवमाह्वानं आगमः

अभ्यगच्छः सुन्वतः स्तुवतइत्युभयत्र शतुरनुमइतिविभक्तेरुदात्तत्वम् गमेर्लुङि लृदित्वात् च्लेर-ङादेशः ॥ १४ ॥

१४. इन्द्र, तुम देवता हो। कौन स्तोता तुम्हारे लिए यज्ञ-सम्पादना-भिलाष की शक्ति रखता है? कौन मेधावी ऋषि तुम्हारी स्तुति को वहन कर सकता है? इन्द्र, स्तोता के बुलाने पर तुम कब आते हो? स्तोता के पास कब आते हो?

ज्योतिष्टोमे माध्यन्दिनसवने ब्रह्मशस्त्रे उदुत्यइतिप्रगाथोनुरूपानन्तरं शंसनीयः सूत्रितश्च—उदुत्येमधुमत्तमा इन्द्रःपूर्भिदिति । चातुर्विंशिके माध्यन्दिने सवने तस्मिन्नेवशस्त्रे अयं प्रगाथोवैकल्पिकोनुरूपः सूत्रितश्च—उदुत्येमधुमत्तमास्त्वमिन्द्रप्रतूर्तिष्विति ।

उदुत्येमधुमत्तमागिरःस्तोमासईरते ।
सत्राजितोधनसाअक्षितोतयोवाजयन्तोरथाइव ॥ १५ ॥ २७ ॥

उत् । ऊँ इति । त्ये । मधुमत्ऽतमाः । गिरः । स्तोमासः ।
ईरते । सत्राऽजितः । धनऽसाः । अक्षितऽऊतयः ।
वाजऽयन्तः । रथाःऽइव ॥ १५ ॥ २७ ॥

त्ये ते प्रसिद्धाः मधुमत्तमा अतिशयेन मधुराः गिरः अप्रगीताः शस्त्ररूपावाचः स्तोमासः प्रगीतानि बहिष्पवमानादीनि स्तोत्राणि च उदीरते हे इंद्र त्वामुद्दिश्योद्गच्छन्ति ऊर्ध्वं प्रसरन्ति ईरगतौ आदादिकः। तत्रदृष्टान्तः—सत्राजितः सहैव शत्रून् जयन्तः अतएव धनसाः धनानि संभजन्तः वनषणसंभक्तौ जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वं अक्षितोतयः अक्षिताः क्षयरहिता ऊतयो रक्षा येषां ते तथोक्ताः क्षियोभावेनिष्ठा निष्ठायामण्यदर्थे-इति पर्युदासाद्दीर्घाभावः अतएव क्षियोदिर्घादिति निष्ठानत्वाभावश्च । वाजयन्तः वाजमन्नमिच्छन्तः क्यचि न छन्दस्यपुत्रस्येति इत्वदीर्घयोः प्रतिषेधः एवंगुणविशिष्टाः रथाइव ते यथा विविधमितस्ततउत्तिष्ठन्ति तद्वदुदीरत इत्यर्थः ॥ १५ ॥

१५. प्रसिद्ध और अतीव मधुर वाक्य तथा स्तोत्र, शत्रु-विजयी, धन-भाक्, अक्षय रक्षावाले और अन्नाभिलाषी रथ की तरह, कहे जाते हैं। ॥ इति पंचमस्य सप्तमे सप्तविंशोवर्गः ॥ २७ ॥

अथ षोडशी—

कण्वाइवभृगवःसूर्याइवविश्वमिद्धीतमानशुः ।
इन्द्रंस्तोमेभिर्महयन्तआयवःप्रियमेधासोअस्वरन् ॥ १६ ॥

कण्वाःऽइव । भृगवः । सूर्याःऽइव । विश्वम् । इत् ।
धीतम् । आनशुः । इन्द्रम् । स्तोमेभिः । महयन्तः ।
आयवः । प्रियऽमेधासः । अस्वरन् ॥ १६ ॥

कण्वाइव कण्वगोत्रोत्पन्नाऋषयइव स्तुवन्तो भृगवो भृगुगोत्रोत्पन्नाऋषयः धीतमाध्यातं विश्वमित् व्याप्तं तमेवेन्द्रं आनशुः व्यापुः सूर्याइव यथा सूर्यरश्मयः सर्वं जगद्व्यामुवन्ति तद्वत्। अपिच प्रियमेधासः प्रियप्रज्ञाः एतत्संज्ञावा आयवोमनुष्याः तमेवेन्द्रं महयन्तः पूजयन्तः स्तोमेभिः स्तोत्रैरस्वरन् अस्तुवन् स्वृशब्दोपतापयोः भौवादिकः ॥ १६ ॥

१६. कण्वों की तरह भृगुओं ने सूर्य-किरणों के समान ध्यात और व्याप्त इन्द्र को व्याप्त किया था। प्रियमेध नाम के मनुष्यों ने इन्द्र की पूजा करते हुए स्तोत्र-द्वारा इन्द्र की ही पूजा की थी।

युक्ष्वाहिवृत्रहन्तमहरींइन्द्रपरावतः ।
अर्वाचीनोमघवन्त्सोमपीतयउग्रऋष्वेभिरागहि ॥ १७ ॥

युक्ष्व । हि । वृत्रहन्ऽतम । हरी इति । इन्द्र । पराऽवतः ।
अर्वाचीनः । मघऽवन् । सोमऽपीतये । उग्रः । ऋष्वेभिः । आ । गहि ॥ १७ ॥

हे वृत्रहन्तम वृत्रंहतवान् वृत्रहा अतिशयेन हतवान् वृत्रहन्तमः यथा पुनर्नोत्तिष्ठति तथा हतवानित्यर्थः।आनोनुडिति तमपोनुट्। हे तादृशेन्द्र हरी त्वदीयावश्वौ युक्ष्व हिरवधारणे आत्मीये रथे योजयैव। हे मघवन् धनवन् उग्र उद्गूर्णस्त्वं सोमपीतये सोमपानार्थं दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् अर्वाचीनोस्मदभिमुखः ऋष्वेभिः ऋष्वैर्दर्शनीयैर्मरुद्भिः सार्धं परावतः दूरनामैतत् दूरेवर्तमानात् द्युलोकात् आगहि आगच्छ।गमेः लोटः सेर्हिः छान्दसः शपोलुक् अनुदात्तोपदेशेत्यनुनासिकलोपः तस्यासिद्धवदत्राभादित्यसिद्धत्वाद्धेर्लुगभावः ॥ १७॥

१७. वृत्र का भली भाँति वध करनेवाले इन्द्र, अपने हरि-द्वय को रथ में जोतो। धनी इन्द्र, तुम उग्र हो। दर्शनीय मरुतों के साथ सोमपान के लिए दूर देश से हमारे अभिमुख आओ।

अथाष्टादशी—

इमेहितेकारवोवावशुर्धियाविप्रासोमेधसातये ।
सत्वंनोमघवन्निन्द्रगिर्वणोवेनोनशृणुधीहवम् ॥ १८ ॥

इमे । हि । ते । कारवः । वावशुः । धिया । विप्रासः ।
मेधऽसातये । सः । त्वम् । नः । मघऽवन् । इन्द्र ।
गिर्वणः । वेनः । न । शृणुधि । हवम् ॥ १८ ॥

कारवः कर्मणां कर्तारः विप्रासोमेधाविनः इमे इमे खलु यजमानाः धिया स्तुत्या हे इन्द्र-ते त्वां वावशुः पुनः पुनरस्तुवन् वाश्रृ शब्दे इत्यस्माद्यङ्लुङन्ताद्रूपमेतत् । यद्वा वावशुः पुनःपुन-रकामयन्त वशकान्तौ अस्माद्यङ्लुङन्तात् लङि सिजभ्यस्तेतिझेर्जुस् बाहुलकोऽडभावः लिटि वा तुजादित्वादभ्यासदीर्घत्वं हिचेतिनिघातप्रतिषेधः । किमर्थम् मेधसातये मेधस्य यागस्य सं-भजनार्थं सनतेः क्तिनि जनसनखनामित्यात्वम् दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । हे मघ-वन् धनवन्गिर्वणोगीर्भिर्वननीय नोस्माकं हवं स्तोत्रं सपूर्वोक्तगुणस्त्वं शृणुधि श्रृणु बुध्यस्व वे-नोन वेनतिः कान्तिकर्मा यथा कान्तः जाताभिलाषः पुरुषः कामयितव्यं एकाग्रेण श्रृणोति तद्वत् । श्रुशृणुपृकृवृभ्यइति हेर्धित्वम् अन्येषामपीतिसांहितिकोदीर्घः ॥ १८ ॥

१८. इन्द्र, कर्म-कर्त्ता और मेधावी ये यजमान यज्ञ-सेवन के लिए तुम्हारी ही स्तुति करते हैं। धनी और स्तुतिपात्र इन्द्र, कामी पुरुष के समान हमारा आह्वान सुनो।

निरिन्द्रबृहतीभ्योवृत्रंधनुंभ्योअस्फुरः ।
निरर्बुदस्यमृगयस्यमायिनोनिःपर्वतस्यगाआजः ॥ १९ ॥

निः । इन्द्र । बृहतीभ्यः । वृत्रम् । धनुऽभ्यः । अस्फुरः । निः ।
अर्बुदस्य । मृगयस्य । मायिनः । निः । पर्वतस्य । गाः । आजः ॥ १९ ॥

हे इन्द्र वृत्रमावरकमसुरं बृहतीभ्यो महद्भ्यो लिंगव्यत्ययः धनुभ्यो धनुर्भ्यः कोदंडेभ्यः छान्दसोरेफलोपः हेतौ पञ्चमी महद्भिर्धनुर्भिर्हेतुभिः निरस्फुरः स्फुरतिर्वधकर्मा निरवधीः निःशे-षेण हतवानसि । यद्वा वृत्रमावरकं मेघं धनुभ्यः धन्वन्ति गच्छन्तीति धनवआपः महतीभ्योऽद्भ्यः तादर्थ्येचतुर्थी ईदृशीनामपां लाभार्थं निरवधीः अपिच मायिनोमायाविनः अर्बुदस्य एतत्सं-ज्ञकस्यासुरस्य मृगयस्य एतत्संज्ञकस्यच उभयत्र कर्मणि षष्ठी इमावप्यसुरौ निरस्फुरः निःशे-षेणावधीः मायाशब्दस्य व्रीह्यादिषुपाठात् व्रीह्यादिभ्यश्चेति मत्वर्थीयइनिः यथा पर्वतस्य ब-लनाम्नासुरेण गवामदर्शनाय निहितस्य गिरेः संबन्धिनीर्गावलेनापहृताः निराजः निरग-मयः अजगतिक्षेपणयोः ॥ १९ ॥

१९. इन्द्र, महाधनुष् के द्वारा तुमने वृत्र का वध किया है। मायावी अर्बुद और मृगय का तुमने विनाश किया है। पर्वत से गौओं को निकाला है।

अथ विंशी—

निरग्नयोरुरुचुर्निरुसूर्योनिःसोमइन्द्रियोरसः ।
निरन्तरिक्षादधमोमहामहिंकृषेतदिन्द्रपौंस्यम् ॥ २० ॥ २८ ॥

निः । अग्नर्यः । रुरुचुः । निः । ॐ इति । सूर्यः ।
निः । सोमः । इन्द्रियः । रसः । निः । अन्तरिक्षात् । अधमः ।
महाम् । अहिम् । कृषे । तत् । इन्द्र । पौंस्यम् ॥ २० ॥ २८ ॥

हे इन्द्र महां महान्तं कृत्स्नस्य जगतो व्यापकं अहिं आहननशीलं वृत्रं यदा त्वमन्तरिक्षादाकाशात् निरधमोनिरगमयः धमतिर्गतिकर्मा तत्तदानीं पौंस्यं वृत्रहननहेतुभूतं बलं कृषे कुरुषे पुरस्कुरुषे करोतेश्छान्दसोविकरणस्य लुक् । अग्नयश्च त्रिस्थानगताः नीरुरुचुः निःशेषेण दिदीपिरे सूर्यः प्रेरकआदित्योपि निःशेषेण दिदीपे इन्द्रियः इन्द्रेण सेव्योरसः रसात्मकः अमृतमयः सोमश्च निःशेषेण दिदीपे अग्न्यादयः सर्वे पूर्वं वृत्रेणावृतत्वान्निःप्रभाः सन्तः इदानीं तस्मिन्नावरके हते सम्यक् प्राकाशिषतेत्यर्थः ॥ २० ॥

**२०. इन्द्र, जब तुमने अन्तरिक्ष से महान् और हनन-शील वृत्र को हटा दिया था, तब बल का प्रकाश किया था। उस समय सारे अग्नि, सूर्य और इन्द्र के सेवनीय सोमरस भी प्रदीप्त हुए थे।**

॥ इति पञ्चमस्य सप्तमेष्टाविंशो वर्गः ॥ २८ ॥

यंमेदुरिन्द्रोमरुतःपाकस्थामाकौरयाणः ।
विश्वेषांत्मनाशोभिष्ठमुपेवदिविधावमानम् ॥ २१ ॥

यम् । मे । दुः । इन्द्रः । मरुतः । पाकऽस्थामा । कौरयाणः ।
विश्वेषाम् । त्मना । शोभिष्ठम् । उपऽइव । दिवि । धावमानम् ॥ २१ ॥

इदमादिकेन चतुर्ऋचेन कुरुयाणपुत्रात् पाकस्थामनाम्नोराज्ञो दानं लब्ध्वा मेध्यातिथिस्तदीयं दानं स्तौति । यं यादृशं धनसंघं मे मह्यं इन्द्रो मरुतश्च दुः दत्तवन्तः तादृशमेव धनसमूहंकौरयाणः शत्रून्प्रति युद्धाभिमुख्येन कृतं यानं हस्त्यश्वादिकं येन असौ कुरयाणः तस्य पुत्रः कौरयाणः पाकस्थामा तिष्ठत्यनेनेति स्थाम बलं परिपक्वबलः एतत्संज्ञो राजा मह्यं प्रादात् ददातेर्लुङि गातिस्थेति सिचोलुक् अडभावश्छान्दसः कीदृशं धनसंघं विश्वेषां सर्वेषां धनानां मध्ये त्मना आत्मना स्वतएव शोभिष्ठं अतिशयेन शोभावन्तम् मन्त्रेष्वाङ्यादेरित्यात्मनआकारलोपः शोभावच्छब्दादातिशायनिकइष्ठन् विन्मतोर्लुक् यस्येतिलोपः अतिशयेन शोभावत्वे दृष्टान्तः—दिव्याकाशे उपेव धावमानं प्रभाभिरुपेतं शीघ्रगामिनं सूर्यमिव शोभावन्तमित्यर्थः ॥ २१ ॥

**२१. इन्द्र और मरुतों ने मुझे जो दिया था, कुरुयान के पुत्र पाकस्थामा ने भी मुझे वही दिया था। वह धन सारे धनों के बीच स्वर्ग में जाते हुए और प्रभा-युक्त सूर्य के समान शोभा पाता है।**

अथ द्वाविंशी—

रोहि॑तं मे॒ पाक॑स्थामा सु॒धुरं॑ कक्ष्य॒प्राम् । अदा॑द्रा॒यो वि॒बोध॑नम् ॥ २२ ॥

रोहि॑तम् । मे॒ । पाक॑ऽस्थामा । सु॒ऽधुर॑म् ।
क॒क्ष्य॒ऽप्राम् । अदा॑त् । रा॒यः । वि॒ऽबोध॑नम् ॥ २२ ॥

पाकस्थामा राजा रोहितं लोहितवर्णं वृषभमश्वं वा मे मह्यं अदात् दत्तवान् कीदृशं सुधुरं शोभनधुरं शोभनवहनप्रदेशं ऋक्पूरब्धूरित्यकारः समासान्तः ऋत्वादयश्चेति बहुव्रीहावुत्तरपदाद्युदात्तत्वम् । कक्ष्यप्रां कक्ष्या कक्षयोर्बाहुमूलयोर्बध्यमाना रज्जुः तां प्रातारं पूरयितारं पीवरमित्यर्थः । प्रापूरणे रायोधनस्य विबोधनं विशेषेण बोधकं बहुधनप्राप्तिहेतुमित्यर्थः । ऊडिदमित्यादिना रायोविभक्तिरुदात्ता ॥ २२ ॥

२२. पाकस्थामा ने मुझे लोहित-वर्ण, सुन्दर-वहन-प्रदेश, बन्धन-रज्जु-पूरक और नाना प्रकार के धनों का प्रापक अश्व दिया था।

यस्मा॑ अ॒न्ये दश॑ प्र॒ति धुरं॒ वह॑न्ति॒ वह्न॑यः । अस्तं॒ वयो॒ न तुग्र्य॑म् ॥ २३ ॥

यस्मै॑ । अ॒न्ये । दश॑ । प्रति॑ । धुर॑म् । वह॑न्ति ।
वह्न॑यः । अस्त॑म् । वयः॑ । न । तुग्र्य॑म् ॥ २३ ॥

पूर्वोक्तएवाश्वो विशेष्यते यस्मै षष्ठ्यर्थे चतुर्थी यस्याश्वस्य वृषभस्य वा धुरं वोढव्यं युगधुरं अन्ये प्रकृतादस्मात् विलक्षणादशसङ्ख्याकाः वह्नयोवोढारोश्वाः बलीवर्दावा प्रतिनिधयः सन्तः मां वोढुं वहन्ति। बिभ्रति बहूनामेकत्र वहने दृष्टान्तः—अस्तं अस्यते क्षिप्यते तस्मिन् पदार्थजातमित्यस्तं गृहं प्रति वयोन गन्तारोश्वाः यथा तुग्र्यं तुग्रपुत्रं भुज्युं समुद्रतीरादवहन् तद्वत् तादृशमश्वं मह्यं प्रादादिति पूर्वस्याम्रच्यन्वयः । भुज्योर्वहनंच -नासत्याभुज्युमूहथुरित्यादाववगन्तव्यम् । यद्वा यस्माइति कर्मणि चतुर्थी यं रथं अन्ये दशसंख्याकावह्नयो वोढारोश्वाः धुरं वहनप्रदेशं प्रतिगताः सन्तो वहन्ति तादृशं रथमपि मह्यं दत्तवानित्यर्थः ॥ २३ ॥

२३. उस अश्व के दस प्रतिनिधि अश्व मुझे ढोते हैं। इसी प्रकार अश्वों ने तुग्र-पुत्र भुज्यु को ढोया था।

अथ चतुर्विंशी—

आ॒त्मा पि॒तुस्त॒नूर्वास॑ ओजो॒दा अ॒भ्यञ्ज॑नम् ।
तु॒रीय॒मिद्रोहि॑तस्य॒ पाक॑स्थामानं भो॒जं दा॒तार॑मब्रवम् ॥२४॥२९॥

---

1 ऋ० सं० १. ८. ८.।

आत्मा । पितुः । तनूः । वासः । ओजःऽदाः ।
अभिऽअञ्जनम् । तुरीयम् । इत् । रोहितस्य ।
पाकऽस्थामानम् । भोजम् । दातारम् । अब्रवम् ॥ २४ ॥ २९ ॥

अयं पाकस्थामा आत्मा स्वयं पितुः जनकस्य तनूः तनयः पिता यथासन्मार्गवर्तितया प्रशस्तः एवमयमपीत्यर्थः । तथा वासः वासयिता निवासयिता वासयतेरौणादिकःअसुन् अभ्यञ्जनं अभिव्यक्तं यथा भवति तथा ओजोदाः ओजसोबलस्य दाता धारयितावा यद्वा आत्मा सततगामी पितुरित्यन्ननाम,प्राप्तमन्नं येन दत्तं तनूर्विस्तृतं वासोवस्त्रम् अभ्यंजनं अभ्यंजनसाधनं घृततैलादिकं च येन दत्तम् यश्च ओजोदाः बलस्य दाता तं पाकस्थामानं तुरीयं स्वकीयप्रपितामहापेक्षया चतुर्थं । यद्वा तुरीयं शत्रूणां तूर्वकं हिंसितारं भोजं शत्रूणां भोजयितारं रोहितस्य लोहितवर्णस्य पूर्वोक्ताश्वस्य दातारम् एवंगुणकं पाकस्थामानं अब्रवं उक्तेन प्रकारेणास्तौषम् इदिति पूरकः ॥ २४ ॥

२४. पाकस्थामा अपने पिता के उपयुक्त पुत्र हैं। वे निवासदाता तथा स्पष्ट रूप से बल देनेवाले हैं । वे शत्रुओं के हिंसक और रिपुओं के भोजयिता हैं। लोहित-वर्ण अश्व देनेवाले पाकस्थामा की मैं स्तुति करता हूँ ।

॥ इति पञ्चमस्य सप्तमे एकोनत्रिंशोवर्गः ॥ २९ ॥

यदिन्द्रेति एकविंशर्चं चतुर्थं सूक्तं काण्वगोत्रस्य देवातिथेरार्षं बृक्षाश्विन्मइत्येषा पुरउष्णिक् शिष्टासु अयुजोबृहत्यः युजः सतोबृहत्यःस्थूरंराधइत्यादिभिस्तिसृभिः कुरुङ्गदानस्य स्तूयमानत्वात् तास्तद्देवताकाःतत्पूर्वाः पञ्चदश्याद्याश्चतस्रः पूषदेवताका इन्द्रदेवताकावा शिष्टाऐन्द्र्यःतथाचानुक्रान्तम्—यदिन्द्रसैकादेवातिथिस्त्र्चोन्त्यः पुरउष्णिगन्तः कुरुङ्गस्य दानस्तुतिस्तत्पूर्वाश्चतस्रः पौष्ण्योवेति । महाव्रते निष्केवल्ये बार्हततृचाशीतौ आद्याश्चतुर्दशर्चः शंसनीयाः तथैव पञ्चमारण्यके—यदिन्द्रप्रागपागुदगिति । चतुर्दशेति चातुर्विंशिकेहनि माध्यन्दिनसवनेच्छावाकशस्त्रे आद्यः प्रगाथोवैकल्पिकःस्तोत्रियः सूत्र्यतेहि—यदिन्द्रप्रागपागुदग्यथागौरोअपाकृतमिति ।

तत्र प्रथमा—

यदिन्द्रप्रागपागुदङ्न्यग्वाहूयसेनृभिः ।
सिमापुरूनृषूतोअस्यानवेसिप्रशर्धतुर्वशे ॥ १ ॥

यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा ।
हूयसे । नृऽभिः । सिम । पुरु । नृऽसूतः । असि । आनवे ।
असि । प्रऽशर्ध । तुर्वशे ॥ १ ॥

हे इन्द्र यत् यदि प्राक् प्राच्यांदिशि वर्तमानैः सप्तम्यन्तादिक्शब्दाद्विहितस्यास्तातेरञ्चेर्लुगिति लुक् । अपाक् प्रतीच्यां दिशि वर्तमानैः यदिवा उदक् उदीच्यां दिशि वर्तमानैः यद्वा न्यक् नीच्यां दिशि अधस्ताद्वर्तमानैः न्यधीचेति नेःप्रकृतिस्वरत्वम् उदात्तस्वरितयोर्यणइति परस्यानुदात्तस्य स्वरितत्वम् एवंभूतैर्नृभिः स्तोतृभिः त्वं हूयसे स्वस्वकार्याय आहूयसे हे सिम श्रेष्ठेन्द्र । सिमइति वैश्रेष्ठमाचक्षतइति वाजसनेयकम् । यद्यप्येवं बहुभिराहूयसे तथापि आनवे आनुर्नामराजा तस्यपुत्रे राजर्षौ पुरु बहुलं नृषूतः नृभिस्तदीयैःस्तोतृभिः प्रेरितोसि भवसि राज्ञोहितकरणे त्वां स्तोतारः प्रेरयन्तीत्यर्थः षूप्रेरणे अस्मात्कर्मणि निष्ठा । तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरत्वम् । अपिच हे प्रशर्ध प्रकर्षेण शर्धयितरभिभवितरिन्द्र तुर्वशेएतत्संज्ञे च राजनि नृषूतोसि नृभिः प्रेरितोभवसि ॥ १ ॥

१. इन्द्र, यद्यपि तुम पूर्व, पश्चिम, उत्तर और दक्षिण देशों के रहनेवाले स्तोताओं-द्वारा बुलाये जाते हो; तथापि आनुक राजा के पुत्र के लिए स्तोताओं-द्वारा तुम प्रेरित हो जाते हो। तुर्वश के लिए भी स्तोताओं-द्वारा प्रेरित हो जाते हो।

यद्वारुमेरुशमेश्यावकेकृपइन्द्रमादयसेसचा ।
कण्वासस्त्वाब्रह्मभिःस्तोमवाहसइन्द्रायच्छन्त्यागहि ॥ २ ॥

यत् । वा । रुमे । रुशमे । श्यावके । कृपे । इन्द्र । मादयसे ।
सचा । कण्वासः । त्वा । ब्रह्मऽभिः । स्तोमऽवाहसः ।
इन्द्र । आ । यच्छन्ति । आ । गहि ॥ २ ॥

यद्वा यद्यपि रुमादिषु चतुर्षु राजसु हे इन्द्र त्वं सचा सह मादयसे माद्यसि तथापि स्तोमवाहसः स्तोमानां स्तोत्राणां वोढारः कण्वासः कण्वगोत्राऋषयः ब्रह्मभिः परिवृढैर्मन्त्रैर्हविर्भिर्वा हे इन्द्र त्वां आयच्छन्ति आगमयन्ति । यद्वा द्वितीयार्थे तृतीया । ब्रह्मभिः ब्रह्माणि हवींषि आभिमुख्येन प्रयच्छन्ति ददति दाणूदाने पाघ्रेत्यादिना यच्छादेशः अतस्त्वं आगहि शीघ्रमागच्छ गमेर्लोटिछान्दसः शपोलुक् ॥ २ ॥

२. इन्द्र, यद्यपि तुम रुम, रुशम, श्यावक और कृप नामक राजाओं के साथ प्रमत्त हुआ करते हो; तथापि स्तोत्र-वाहक कण्व लोग तुम्हें स्तोत्र प्रदान करते हैं; आओ।

चातुर्विंशिकेऽहनि माध्यन्दिनसवनेच्छावाकशस्त्रे यथेति प्रगाथोनुरूपः सूत्रितश्च—यथा-गौरोअपाकृतमित्यच्छावाकस्येति ।

तत्र प्रथमा सूक्ते तृतीया—

यथा॑गौ॒रोअ॒पाकृ॒तंतृष्य॒न्नेत्यवेरि॑णम् ।
आ॒पि॒त्वेनः॑प्रपि॒त्वेतूय॒मागहि॒कण्वे॑षु॒सुसचा॒पिब॑ ॥ ३ ॥

यथा॑ । गौ॒रः । अ॒पा । कृ॒तम् । तृष्य॑न् । एति॑ । अव॑ ।
इरि॑णम् । आ॒ऽपि॒त्वे । न॒ः । प्र॒ऽपि॒त्वे । तूय॑म् । आ ।
ग॒हि॒ । कण्वे॑षु । सु । सचा॑ । पिब॑ ॥ ३ ॥

गौरोगौरमृगः तृष्यन् पिपासन् अपा अद्भिरुदकैः व्यत्ययेनैकवचनं ऊडिदमित्यादिना विभक्तेरुदात्तत्वम् कृतं संपूर्णत्वंकृतम् इरिणं निस्तृणं तटाकदेशं यथा येनप्रकारेण अवैति अ-वगच्छति अवशब्दःअभिशब्दस्यार्थे अभिमुखः सन् शीघ्रं गच्छति तथा आपित्वे बन्धुत्वे प्र-पित्वे प्राप्ते सति हे इन्द्र त्वं नोस्मान् तूयं क्षिप्रनामैतत् शीघ्रमागह्यागच्छ आगत्यच कण्वेषु कण्वपुत्रेष्वस्मासु सचा सह एकयत्नेनैव विद्यमानं सर्वं सोमं सु सुष्ठु पिब ॥ ३ ॥

३. जैसे गौर मृग तृष्णार्त्त होकर जल-पूर्ण और तृण-शून्य स्थान को जान जाता है, वैसे ही, हे इन्द्र, सखित्व प्राप्त हो जाने पर तुम हमारे सम्मुख शीघ्र आओ। हम कण्व-पुत्र हैं। हमारे साथ एकत्र सोम पान करो।

अथ चतुर्थी—

मन्द॑न्तुत्वामघवन्नि॒न्द्रेन्द॑वोराधो॒देया॑यसुन्व॒ते ।
आ॒मुष्या॒सोम॑मपिबश्च॒मूसुतंज्येष्ठं॒तद्द॑धिषे॒सह॑ः ॥ ४ ॥

मन्द॑न्तु । त्वा॒ । म॒घ॒ऽव॒न् । इ॒न्द्र॒ । इन्द॑वः । रा॒ध॒ःऽदेया॑य ।
सु॒न्व॒ते । आ॒ऽमुष्य॑ । सोम॑म् अ॒पि॒बः । च॒मू इति॑ । सु॒तम् ।
ज्येष्ठ॑म् । तत् । द॒धि॒षे॒ । सह॑ः ॥ ४ ॥

हे मघवन् धनवन्निन्द्र इन्दवः क्लेदनाः सोमाः त्वां मन्दन्तु मादयन्तु हर्षयन्तु मन्देर्व्यत्ययेन परस्मैपदम् । किमर्थं सुन्वते सोमाभिषवं कुर्वते यजमानाय राधोदेयाय राधोधनस्य च दाना-र्थम् ददातेरचोयदिति भावेयत् ईद्यतीतीकारः यतोनावइत्याद्युदात्तत्वात्कृदुत्तरपदप्रकृतिस्वरत्व-

म् शतुरनुमइति सुन्वच्छब्दात्पराविभक्तिरुदात्ता। अपिच त्वं सोमं आमुष्य आमोषणं कृत्वा अदत्तमपि बलादपहृत्य अपिबः पीतवानसि। सयज्ञवेशसं कृत्वा प्रासहासोममपिबदितिश्रुतेः। कीदृशं सोमं चमू चम्वोः अधिषवणफलकयोः सुतमभिषुतम्। यद्वा चमूभ्यां चमसाभ्यां होतुर्मैत्रावरुणस्य च संबन्धिभ्यां संस्कृताभिः वसतीवरीभिः सुतमभिषुतं यस्मादेवं तस्मात्कारणात् ज्येष्ठं प्रशस्यतमं वृद्धतमं वा सहोबलं दधिषे हेइन्द्र त्वं धारयसि अतोमदीयाअपि सोमास्त्वां मादयन्त्विति प्रार्थ्यते ॥ ४ ॥

४. धनवान् इन्द्र, सोम अभिषव-कर्त्ता को धन देने के लिए तुम्हें प्रमत्त करे। तुमने सोमपान किया है। यह सोम अभिषवण-फलक (चमस) द्वारा अभिषुत किया गया है; इसलिए यह अतीव प्रशस्य है। इसी के लिए तुमने महान् बल को धारण कर रक्खा है।

प्रचक्रेसहसासहोबभंजमन्युमोजसा।
विश्वेतइन्द्रपृतनायवोयहोनिवृक्षाइवयेमिरे ॥ ५ ॥ ३०॥

प्र। चक्रे। सहसा। सहः। बभञ्ज। मन्युम्। ओजसा। विश्वे। ते। इन्द्र। पृतनाऽयवः। यह्वो। इति। नि। वृक्षाःऽइव। येमिरे ॥५॥३०॥

सइन्द्रः सहसा आत्मीयेनाभिभवेन वीर्यकर्मणा सहः शत्रूणामभिभवनं प्रचक्रे प्रकर्षेण कृतवान् तथा ओजसा बलेन मन्युं परकीयं क्रोधं बभञ्ज भग्नवान् उत्तरोर्धर्चः प्रत्यक्षकृतः हे यह्वो महन्नामैतत् हे महन्निन्द्र विश्वे सर्वे पृतनायवः युद्धकामाः शत्रवः ते त्वया वृक्षाइव महीरुहाइव नियेमिरे नियताआसन् यथा वृक्षानिश्चलास्तिष्ठन्ति तद्वन्निर्व्यापारा अभूवन्नित्यर्थः ॥ ५ ॥

५. अपने वीर-कर्म के द्वारा इन्द्र ने शत्रुओं को दबाया है। उन्होंने बल के द्वारा परकीय क्रोध को नष्ट किया है। महान् इन्द्र, सारे युद्धेच्छु शत्रुओं को तुमने वृक्ष की तरह निश्चल किया है।

॥ इति पञ्चमस्य सप्तमे त्रिंशोवर्गः ॥ ३० ॥

अथ षष्ठी—

सहस्रेणेवसचतेयवीयुधायस्तआनळुपस्तुतिम्।
पुत्रंप्रावर्गंकृणुतेसुवीर्येदाश्नोतिनमउक्तिभिः ॥ ६ ॥

सहस्रेणऽइव। सचते। यविऽयुधा। यः। ते। आनट्। उपऽस्तुतिम्। पुत्रम्। प्रावर्गम्। कृणुते। सुऽवीर्ये। दाश्नोति। नमउक्तिऽभिः ॥ ६ ॥

---

१ तै० सं० २. ४.१२.।

हे इन्द्र ते तव उपस्तुतिं स्तोत्रं यः पुरुष आनट् प्राप्नोति त्वां प्रापयति अश्नोतेर्लङि व्यत्ययेन परस्मैपदम् । सचते समवैति षच समवाये सहस्रेणेव यथा सहस्रसंख्येन बलेन तथेत्यर्थः यश्च यजमानो नमउक्तिभिः नमस्कारवचनैः स्तोत्रैः सार्धं दाश्नोति हवींषि तुभ्यं ददाति दाश्दाने सयजमानः सुवीर्ये शोभनवीर्ययुक्ते सङ्ग्रामे प्रावर्गं प्रकर्षेण शत्रूणां वर्जयितारं पुत्रं कृणुते करोत्युत्पादयति त्वत्प्रसादाल्लभतइत्यर्थः प्रपूर्वाद्वृजेः कृत्यल्युटोबहुलमिति कर्तरि घञ् उपसर्गस्य घञ्यमनुष्यइति दीर्घः थाथादिनोत्तरपदान्तोदात्तत्वम् । यद्वा सुवीर्येइत्येतत्पुत्रस्य विशेषणं द्वितीयार्थे सप्तमी शोभनवीर्यं पुत्रम् बहुव्रीहौ वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् ॥ ६॥

६. इन्द्र, जो तुम्हारा स्तोत्र करता है, वह सहस्र-संख्यक वज्रायुध (वीर) प्राप्त करता है और जो नमस्कार द्वारा हव्य प्रदान करता है, वह शोभन वीर्यवाला और शत्रुघातक पुत्र प्राप्त करता है।

मा॒भे॑म॒ मा श्र॑मिष्मो॒ग्रस्य॑ स॒ख्ये तव॑ ।
म॒हत्ते॒ वृष्णो॑ अभि॒चक्ष्यं॑ कृ॒तं पश्ये॑म तु॒र्वशं॒ यदु॑म् ॥ ७ ॥

मा । भे॒म॒ । मा । श्र॒मि॒ष्म॒ । उ॒ग्रस्य॑ । स॒ख्ये । तव॑ ।
म॒हत् । ते॒ । वृष्णः॑ । अ॒भि॒ऽचक्ष्य॑म् । कृ॒तम् । पश्ये॑म ।
तु॒र्वश॑म् । यदु॑म् ॥ ७ ॥

हे इन्द्र उग्रस्योद्गूर्णबलस्य तव सख्ये सखित्वे सति वयं माभेम माभैष्म कुतश्चिदपि शत्रोर्भीता माभूम ।माश्रमिष्म श्रान्ताः पीडिताश्च माभूम वृष्णः कामानां वर्षितुस्ते तव संबन्धि महत् प्रभूतं कृतं वृत्रवधादिलक्षणं कर्म अभिचक्ष्यं अभितः ख्यापनीयं स्तोतव्यं अतोमहानुभावस्य तव सख्यं प्राप्तानां भीतिश्रमौ न जायेते इत्यर्थः। तत्कथमवगम्यतइतिचेत् उच्यते तुर्वशं एतत्संज्ञं राजर्षिं यदुं एतत्संज्ञं च त्वत्प्रसादात्सुखेन जीवन्तौ पश्येम दृष्टवन्तः खलु वयं अतःकारणात् त्वत्सख्यं प्राप्तस्य भयादिकं न जायतइत्येतदुपपन्नमित्यर्थः ॥ ७॥

७. इन्द्र, तुम उग्र हो। तुम्हारी मित्रता प्राप्त करके हम नहीं डरेंगे, थकेंगे भी नहीं। तुम अभीष्ट-वर्षक हो। तुम्हारे सारे महान् कर्मों को प्रकाशित करना ठीक है। हमने तुर्वश और यदु को देखा है।

अथाष्टमी—

स॒व्याम॑नु॒ स्फिग्यं॑ वावसे॒ वृषा॒ न दा॒नो अ॑स्य रोषति ।
मध्वा॒ संपृ॑क्ताः सार॒घेण॑ धे॒नव॒स्तूय॒मेहि॒ द्रवा॒ पिब॑ ॥ ८ ॥

सव्याम् । अनु । स्फिग्यम् । ववसे । वृषा । न । दानः । अस्य ।
रोषति । मध्वा । सम्ऽपृक्ताः । सारघेण । धेनवः । तूयम् ।
आ । इहि । द्रव । पिब ॥ ८ ॥

वृषा कामानांवर्षितेन्द्रः सव्यां दक्षिणेतरां स्फिग्यं कटिप्रदेशमनु तृतीयार्थे अनोः कर्मप्रवचनीयत्वम् सव्ययास्फिग्या शरीरैकदेशेनैव ववसे वस्ते सर्वभूतजातमाच्छादयति स्वयं कृत्स्नं जगदतीत्यवर्ततइत्यर्थः। निगमान्तरश्च भवति—यदन्ययास्फिग्याक्षामवस्थाइति। अपिच दानः अवखण्डयिता दानअवखण्डने पचाद्यच् सच अस्य इममिन्द्रं नरोषति न हिनस्ति रुष-रिषहिंसायाम्। इन्द्रं हिंसितुं शक्तः कश्चिदपि नास्तीत्यर्थः। यद्वा दानो हविषां दाता यजमानस्य अस्येन्द्रस्य न रोषति रोषं नजनयति सर्वदा हविर्भिः परिचरतीत्यर्थः। उत्तरोर्धर्चः प्रत्यक्षकृतः सारघेण सरघा मधुमक्षिका तत्संबन्धिना मध्वा मधुना लुप्तोपममेतत् मधुनेव रसवता क्षीरादिना श्रयणद्रव्येण संपृक्ताः संसृष्टाः संस्कृताः धेनवः धेनुवत् प्रीतिजनकाअस्मदीयाः सोमाः यद्वा धिवेः प्रीणनार्थाद्धेनवः प्रीणयितारइत्यर्थः अथवा धेट्पाने धेटइच्चेत्यौणादिको-नुप्रत्ययः तत्संनियोगेन इकारान्तादेशश्च पातव्याः सोमाइत्यर्थः। यतएवमतःकारणात् हे इन्द्र तूयं क्षिप्रं एहि अस्मत्समीपं आगच्छ आगत्यच द्रव सोमाः यस्मिन्नुत्तरवेदिलक्षणे स्थाने वर्तन्ते तं देशं शीघ्रं गच्छ द्रुगताविति धातुः द्व्यचोतस्तिङइति सांहितिकोदीर्घः। तदनन्तरं अध्वर्युणा दत्तं सोमं पिब तेन सोमेन सम्यक्स्वोदरं पूरयेत्यर्थः॥ ८ ॥

८. काम-वर्षक इन्द्र ने अपनी बाईं कमर से सारे प्राणियों को आच्छादित किया है। हविर्दाता इन्द्र का क्रोध नहीं उत्पन्न करता। मधु-मक्षिका से उत्पन्न मधुद्वारा संस्पृष्ट और प्रसन्नता-दाता सोम के सम्मुख शीघ्र आओ। उस सोम के पास जाओ और उसे पियो।

अथ नवमी—

अश्वीरथीसुरूपइद्गोमाँइदिन्द्रतेसखा।
श्वात्रभाजावयसासचतेसदाचन्द्रोयातिसभामुप ॥ ९ ॥

अश्वी । रथी । सुऽरूपः । इत् । गोऽमान् । इत् । इन्द्र । ते ।
सखा । श्वात्रऽभाजा । वयसा । सचते । सदा । चन्द्रः ।
याति । सभाम् । उप ॥ ९ ॥

---

१ ऋ० सं० ३. २. ११।

हे इन्द्र ते तव सखा मित्रभूतः पुरुषः अश्व्यादिगुणविशिष्टएव भवति इच्छब्दः मत्येकमभिसंबध्यते अश्वीइव् बहुभिरश्वैरुपेतएव भवति नकदाचिदश्वैर्वियुज्यते रथी रथवानेव सभवति सुरूपइव् शोभनरूपः शोभनावयवएव सभवति गोमाँइव् बह्वीभिर्गोभिर्युक्तएव सभवति नकदाचिदेतैर्वियुज्यतइत्यर्थः । अपिच श्वात्राभाजा श्वात्रमिति धननाम आशु अतनीयं शीघ्रं प्राप्तव्यं शोभनं धनं संभजता ईदृग्धनसंयुक्तेन वयसा अन्ननामैतव् अन्नेन ससर्वदा सचते समवैति सङ्गच्छते षचसमवाये अतएव चन्द्रः सर्वेषामाह्लादकः सन् सभां जनसंसदं उपयात्युपगच्छति ॥ ९ ॥

९. इन्द्र, तुम्हारा सखा ही अश्ववाला, रथवाला, गोवाला और रूपवाला है। वह सदा शीघ्र धन प्राप्त करता है और सबके लिए आह्लाद-जनक होकर सभा में जाता है।

ऋश्योनतृष्यन्नवपानमागहिपिबासोमंवशाँअनु ।
निमेघमानोमघवन्दिवेदिवओजिष्ठंदधिषेसहः ॥ १० ॥ ३१ ॥

ऋश्यः । न । तृष्यन् । अवऽपानम् । आ । गहि । पिब ।
सोमम् । वशान् । अनु । निऽमेघमानः । मघऽवन् । दिवेऽदिवे ।
ओजिष्ठम् । दधिषे । सहः ॥ १० ॥ ३१ ॥

हे इन्द्र ऋश्योन ऋश्याख्योमृगइव तृष्यन् पिपासंस्त्वं अवपानं अवनीतं ग्रहचमसादिषु पात्रेषु आनीतं पातव्यं सोमं आगहि अभिगच्छ गत्वाच तमस्मदीयं सोमं वशां अनुकामं यथाकामं पिब यावता पीतेन पर्याप्तिर्जायते तावता सोमेन स्वोदरं पूरयेत्यर्थः । अतएव सोमपानात्प्राप्तबलस्त्वं दिवेदिवे प्रतिदिवसं निमेघमानः न्यंचिअवाङ्मुखानि वृष्ट्युदकानि सिञ्चन् हे मघवन्निन्द्र ओजिष्ठं ओजस्वितमं उद्गूर्णतमं सहोबलं दधिषे धारयसि ओजस्विशब्दादिष्ठनिं विन्मतोर्लुगितिविनोलुक् टेरिति टिलोपः ॥ १० ॥

१०. ऋश्य नामक मृग की तरह तुम पात्र में लाये गये सोम के सम्मुख आओ और इच्छानुसार पान करो। धनवान् इन्द्र, तुम प्रतिदिन निम्नमुख वृष्टि को गिराते हुए अतीव तेजस्वी बल को धारण करो।

॥ इति पञ्चमस्य सप्तमे एकत्रिंशोवर्गः ॥ ३१ ॥

अथैकादशी—

अध्वर्योद्रावयात्वंसोममिन्द्रःपिपासति ।
उपनूनंयुयुजेवृषणाहरीआचजगामवृत्रहा ॥ ११ ॥

अध्वर्यो इति । द्रवय । त्वम् । सोमम् । इन्द्रः । पिपासति ।
उप । नूनम् । युयुजे । वृषणा । हरी इति । आ । च ।
जगाम । वृत्रऽहा ॥ ११ ॥

हे अध्वर्यो अध्वरस्य नेतः त्वं सोमं द्रावय उत्तरवेदिलक्षणं स्थानं प्रापय यद्वा रसात्मना द्रवणशीलं कुरु अभिषुणिवत्यर्थः । किंकारणमितिचेत् इन्द्रः पिपासति इमं सोमं पातुमिच्छति त्वयैतत्कथमवगतमिति चेत् तत्राह वृषणा वर्षितारौ युवानौ वा हरी अश्वौ नूनमद्य उपयुयुजे उपगम्यसारथिर्योजितवान्रथे वृत्रहा वृत्रस्य हन्ता इन्द्रश्च आजगाम आगतवान् ॥ ११ ॥

११. अध्वर्यु, इन्द्र सोम पीने की इच्छा करते हैं। तुम सोम का अभिषव करो। दोनों तरुण अश्व आज जोते गये हैं। वृत्रघ्न आये हैं।

स्वयंचित्समन्यतेदाशुरिर्जनोयत्रासोमस्यतृम्पसि ।
इदंतेअन्नंयुज्यंसमुक्षितंतस्येहिप्रद्रवापिब ॥ १२ ॥

स्वयम् । चित् । सः । मन्यते । दाशुरिः । जनः । यत्र ।
सोमस्य । तृम्पसि । इदम् । ते । अन्नम् । युज्यम् ।
समऽउक्षितम् । तस्य । आ । इहि । प्र । द्रव । पिब ॥ १२ ॥

दाशुरिर्दाश्वान् दाशतेरौणादिकउरिन् हविषां दाता सयजमानलक्षणोजनः स्वयंचित्स्वयमेव आत्मनैव मन्यते सर्वं जानाति परायत्तप्रज्ञोनभवतीत्यर्थः यत्र यस्मिन् जने सोमस्य पानेन हे इन्द्र त्वं तृम्पसि तृप्तोभवसि। तृपतृंपतृप्तौ तौदादिकः शेतृंफादीनामिति नुम्। ते त्वदीयं युज्यं योग्यं इदमस्मदीयं सोमलक्षणमन्नं समुक्षितं सम्यक् पात्रेष्वासिक्तम् उक्षसेचने कर्मणि गतिरनन्तरइति गतेः प्रकृतिस्वरत्वम् अतस्त्वं तादृशं सोमं एत्यभिगच्छ प्रद्रव शीघ्रं प्राप्नुहि तदनन्तरं पिब पानं कुरु ॥ १२ ॥

१२. इन्द्र, जिसके सोम से तुम सन्तुष्ट होते हो, वह हव्यदाता स्वयं ही उस बात को जान सकता है। तुम्हारे योग्य सोमपात्र में सींचा गया है। आओ, उसके पास जाओ और उसे पियो।

अथ त्रयोदशी—

रथेष्ठायाध्वर्यवःसोममिन्द्रायसोतन ।
अधिब्रध्नस्याद्रयोविचक्षतेसुन्वन्तोदाश्वध्वरम् ॥ १३ ॥

रथे॒ऽस्थाय॑ । अ॒ध्व॒र्य॒वः॒ । सोम॑म् । इन्द्रा॑य । सो॒त॒न॒ । अधि॑ ।
ब्र॒ध्नस्य॑ । अद्र॑यः । वि । च॒क्ष॒ते॒ । सु॒न्वन्तः॑ । दा॒शु॒ऽअ॑ध्वरम् ॥ १३ ॥

रथेष्ठाय रथेतिष्ठतीतिरथेष्ठः सुपिस्थइतिकप्रत्ययः तत्पुरुषेकृतिबहुलमिति सप्तम्याऽलुक् एवं लक्षणाय इन्द्राय हे अध्वर्यवः सोमं सोतन अभिषुणुत। षुञ्अभिषवे तप्तनप्तनथनाश्चेति तबादेशः। ब्रध्नस्य मूलस्य अभिषवार्थं चर्मणि स्थापितस्य उपराख्यस्य विस्तृतस्याश्मनः अध्युपरि अद्रयः अन्ये ग्रावाणः चतसृषु दिक्षु वर्तमानाः दाश्वध्वरं दाशोदातुर्यजमानस्य अध्वरो यागः येन निष्पद्यते तादृशं सोमं सुन्वन्तः ऋत्विङ्निरपेक्षं स्वयमेवाभिषुण्वन्तो विचक्षते विशेषेण प्रकाशन्ते सोमाभिषवे अतिशयेनानुकूलावर्तन्तइत्यर्थः। अथवा उक्तलक्षणा येऽद्रयस्तैरद्रिभिः हे अध्वर्यवः सोममभिषुण्वतेति योज्यम् ॥ १३ ॥

१३. अध्वर्युओ, इन्द्र रथ पर हैं। उनके लिए सोम प्रस्तुत करो। अभिषव के लिए चर्म पर स्थापित मूल पत्थर के ऊपर पत्थर यजमान के लिए यज्ञ-निष्पादक सोम का अभिषव करते हुए चारों ओर शोभा पा रहे हैं।

उप॑ब्र॒ध्नंवा॒वाता॒वृष॑णा॒हरी॒इन्द्र॑म॒प॒स्सुव॑क्षतः ।
अ॒र्वाञ्चं॑त्वा॒सप्त॑योऽध्वर॒श्रियो॒वह॑न्तु॒सव॒नेदुप॑ ॥ १४ ॥

उप॑ । ब्र॒ध्नम् । वा॒वाता॑ । वृष॑णा । हरी॒ इति॑ । इन्द्र॑म् ।
अ॒पःऽसु । व॒क्ष॒तः॒ । अ॒र्वाञ्च॑म् । त्वा॒ । सप्त॑यः ।
अ॒ध्व॒र॒ऽश्रियः॑ । वह॑न्तु । सव॑ना । इत् । उप॑ ॥ १४ ॥

ब्रध्नमन्तरिक्षं वावाता संभक्तवन्तौ वनतेर्निष्ठायां छान्दसं द्विर्वचनं इडभावः आत्वं धातुस्वरश्च अन्येषामपिदृश्यतइति सांहितिकोभ्यासदीर्घः। यद्वा वावाता पुनःपुनर्गच्छन्तौ वा गतिगन्धनयोः अस्माद्यङ्लुगन्तात्कर्तरिनिष्ठा। वृषणा वृषणौ सेक्तारौ हरी हरणशीलावश्वौ उक्तगुणौ सन्तौ अपसु अस्मदीयेषु कर्मसु अपसशब्दः सकारान्तः कर्मवचनः पीवोपवसनानां छन्दसि लोपोवक्तव्यइतीहसकारोलुप्यते। तत्रेममिन्द्रं उपवक्षतः उपवहतां उपानयताम्. वहतेर्लेटचडागमः सिब्बहुलमिति सिप्। अपिच अध्वरश्रियोध्वरं सेवमानाः सप्तयः सर्पणशीलाः अन्येपि त्वदीयाअश्वाः सवना सवनानि प्रातःसवनादीन्यस्मद्यागसम्बन्धीनि प्रति हे इन्द्र त्वां अर्वाञ्चं अभिमुखं उपवहन्तु उपगमयन्तु इदिति पूरकः ॥ १४॥

१४. हमारे कर्म में अन्तरिक्ष में विचरण करनेवाले और सींचने में समर्थ हरि नाम के दोनों अश्व इन्द्र को ले आवें। इन्द्र, यज्ञ-सेवी और गतिशील दोनों अश्व तुम्हें सवनों के समीप ले जायें।

अथ पंचदशी—

प्रपूषणंवृणीमहेयुज्यायपुरूवसुम् ।
सशक्रशिक्षपुरुहूतनोधियातुजेरायेविमोचन ॥१५॥३२॥

प्र । पूषणम् । वृणीमहे । युज्याय । पुरुऽवसुम् ।
सः । शक्र । शिक्ष । पुरुऽहूत । नः । धिया ।
तुजे । राये । विऽमोचन ॥ १५ ॥ ३२ ॥

इदमाद्यासु चतसृषु पूषणइन्द्रस्य च लिङ्गसद्भावात् एताउभयथा व्याख्यायन्ते पुरुवसुं बहुधनं पूषणं पोषकमिन्द्रं यद्वैतत्संज्ञं देवं प्रवृणीमहे प्रकर्षेण संभजामहे। किमर्थं युज्याय युङ्इति युङ् सखा तस्य भावाय सखित्वायेत्यर्थः हे शक्र शक्त पुरुहूत बहुभिराहूत हे विमोचन पापाद्विमोचयितरिन्द्र पूषन्वा सत्वं नोस्मान् धिया आत्मीयया बुध्या शिक्ष शक्तान्कर्तुमिच्छ। किमर्थं राये धनाय धनप्राप्त्यर्थं तुजे शत्रून् तोजयितुं हिंसितुम् तुज हिंसायाम् अस्मात्कृत्यार्थे केन्प्रत्ययः। यद्वा रायइति क्रियाग्रहणं कर्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थी जातावेक-वचनम् रायोधनानि धिया स्तुत्या प्रीतःसन् नोस्मभ्यं शिक्ष देहि शिक्षतिर्दानकर्मा ऊडि-दमिति रायोविभक्तिरुदात्ता ॥ १५॥

१५. मैत्री की प्राप्ति के लिए हम बहु धनवाले पूषा का वरण करते हैं। शक्र, अनेकों द्वारा आहूत और पाप-विमोचक पूषन्; अपनी बुद्धि के द्वारा धन की प्राप्ति और शत्रु-विनाश के लिए हमें समर्थ करने की इच्छा करो।

॥ इति पञ्चमस्य सप्तमे द्वात्रिंशो वर्गः ॥ ३२ ॥

अथ षोडशी—

सन्नःशिशीहिभुरिजोरिवक्षुरंरास्वरायोविमोचन ।
त्वेतन्नःसुवेदमुस्रियंवसुयंत्वंहिनोषिमर्त्यम् ॥ १६ ॥

सम् । नः । शिशीहि । भुरिजोःऽइव । क्षुरम् । रास्व । रायः ।
विऽमोचन । त्वे इति । तत् । नः । सुऽवेदम् । उस्रियम् ।
वसु । यम् । त्वम् । हिनोषि । मर्त्यम् ॥ १६ ॥

हे इन्द्र पूषन्वा नोस्मान् संशिशीहि सम्यक् निश्य तीक्ष्णबुद्धीन्कुरु। भुरिजोरिव बाहुनामैतद् नापितस्य बाह्वोरवस्थितं क्षुरमिव अपिच हे विमोचन पापाद्विमोचयितः रायो धनानि रास्व अस्मभ्यं देहि रादाने। तत्कस्य हेतोः त्वे त्वयि खलु उस्रियं उस्रागावः तत्संबद्धं तद्वसु निवासकं धनं नोस्माकं सुवेदं सुलभं नान्येषु देवेषु यं धनसमूहं मर्त्यं मनुष्यं स्तोतारं प्रति त्वं हिनोषि प्रेरयसि तद्वसु त्वयीत्यन्वयः। यतएवं तस्माद्रास्वेति योज्यम् ॥ १६ ॥

१६. (नाई की) बाँह में रहनेवाले छुरे की तरह हमें तीक्ष्ण-बुद्धि करो। हे पाप-विमोचक, हमें धन दो। तुम्हारा गोधन हमारे लिए सुलभ हो। तुम मनुष्य के लिए यह धन भेजा करते हो।

वेमित्वापूषन्नृञ्जसेवेमिस्तोतवआघृणे।
नतस्यंवेम्यरणंहितद्वसोस्तुषेपज्रायसाम्ने ॥ १७ ॥

वेमि। त्वा। पूषन्। ऋञ्जसे। वेमि। स्तोतवे। आघृणे। न। तस्य। वेमि। अरणम्। हि। तत्। वसो इति। स्तुषे। पज्राय। साम्ने॥१७॥

हे पूषन् पोषकेन्द्र एतत्संज्ञ वा देव त्वा त्वां ऋञ्जसे प्रसाधयितुं वेमि कामये आघृणे आगतदीप्ते स्तोतवे त्वां स्तोतुं वेमि कामये यत् त्वद्व्यतिरिक्तं देवतान्तरं तस्य स्तोत्रं न वेमि न कामये। तत्कुतइतिचेत् हि यस्मात् अरणं अरमणं असुखकरं तत्। अतस्त्वामेव स्तोतुं कामये इत्यर्थः हे वसो वासक स्तुषे स्तुवते पज्राय प्रार्जकाय स्तोत्राणां साम्ने साम स्तोत्रं सामर्थ्यादत्र तद्वान् लक्ष्यते तद्वते यद्वा पज्रइति कक्षीवतआख्या आम्नातं हि यद्वांपज्रासोअश्विना हवन्तइति। तस्मै कक्षीवते इव मह्यं सामर्थ्यादुपमार्थोलभ्यते अपेक्षितं धनं देहीति शेषः॥१७॥

१७. पूषन्, मैं तुम्हें प्रसाधित करने की इच्छा करता हूँ। दीप्तिमान् पूषन्, तुम्हारी स्तुति करने की इच्छा करता हूँ। अन्य देवों की स्तुति करने की मैं इच्छा नहीं करता; क्योंकि वे असुखकर हैं। निवास-प्रद, स्तोता और साम-मन्त्र-युक्त पज्र (कक्षीवान्) को अभिलषित धन दो।

अथाष्टादशी—

परागावोयवंसंकच्चिदाघृणेनित्यंरेक्णोअमर्त्य।
अस्माकंपूषन्नविताशिवोभवमंहिष्ठोवाजसातये ॥ १८॥

परा। गावः। यवसम्। कत्। चित्। आघृणे। नित्यम्। रेक्णः। अमर्त्य। अस्माकम्। पूषन्। अविता। शिवः। भव। मंहिष्ठः। वाजऽसातये ॥ १८ ॥

---

१ ऋ० सं० १. ८. १५.।

हे आघृणे आगतदीप्ते पूषन्निन्द्र वा कच्चित् कस्मिंश्चित्काले अस्मदीयागावः यवसं तृणं भक्षितुं परागच्छन्ति हे अमर्त्य अमरण देव तदानीं रेक्णस्तद्गोरूपं धनं नित्यं अस्माकं ध्रुवमस्तु चोरव्याघ्रादिभिः हिंसितं माभूत्। अपिच हे पूषन् पोषयितः अस्माकं अविता रक्षिता भूत्वा शिवः सुखकरोभव तथा वाजसातये वाजस्यान्नस्य बलस्य वा संभजनार्थं मंहिष्ठोदातृतमो भव ॥ १८ ॥

१८. दीप्तिवाले और अमर पूषन्, किसी समय हमारी गायें चरने के लिए लौटती हैं। हमारा गो-रूप धन नित्य हो। तुम हमारे रक्षक और मङ्गलकर होओ। अन्न-दान के लिए महान् होओ।

स्थूरंराधःशताश्वंकुरुङ्गस्यदिविष्टिषु।
राज्ञस्त्वेषस्यसुभगस्यरातिषुतुर्वशेष्वमन्महि ॥ १९ ॥

स्थूरम्। राधः। शतऽअश्वम्। कुरुङ्गस्य। दिविष्टिषु। राज्ञः। त्वेषस्य। सुऽभगस्य। रातिषु। तुर्वशेषु। अमन्महि ॥ १९ ॥

इदमादिकेन तृचेन देवातिथिः कुरुंगनाम्नोराज्ञो दानं स्तौति कुरुङ्गस्य कुरून् जेतुं गच्छति कुलं गच्छतीति वा कुरुङ्गः डोन्यत्रापि दृश्यते इति गमेर्डः पृषोदरादिः एतत्संज्ञस्य त्वेषस्य दीप्तस्य सुभगस्य शोभनधनस्य एवंभूतस्य राज्ञः संबन्धिनीषु दिविष्टिषु दिवः स्वर्गस्य एषणेषु प्राप्तिहेतुभूतासु यागक्रियासु रातिषु दानेषु दक्षिणारूपेषु सत्सु तुर्वशेषु मनुष्यनामैतत् निर्धारणे सप्तमी मनुष्येषु मध्ये वयं स्थूरं स्थूलं प्रभूतं शताश्वं अश्वानां शतेन युक्तं राधो-धनं अमन्महि अज्ञासिष्म अलभामहीत्यर्थः ॥ १९ ॥

१९. कुरुङ्ग नाम के दीप्त और सौभाग्यवान् राजा की स्वर्ग-प्राप्ति के लिए यज्ञ और दान में मनुष्यों के बीच हमने प्रचुर और सौ अश्वों से युक्त धन को प्राप्त किया था।

अथ विंशी—

धीभिःसातानिकाण्वस्यवाजिनःप्रियमेधैरभिद्युभिः।
षष्टिंसहस्रानुनिर्मजामजेनिर्यूथानिगवामृषिः ॥ २० ॥

धीभिः। सातानि। काण्वस्य। वाजिनः। प्रियऽमेधैः। अभिद्युऽभिः। षष्टिम्। सहस्रा। अनु। निःऽमजाम्। अजे। निः। यूथानि। गवाम्। ऋषिः ॥ २० ॥

काण्वस्य कण्वपुत्रस्य वाजिनो हविष्मतो मेधातिथेः संबन्धिभिः धीभिः ध्यातृभिः स्तोतृभिः सातानि संभक्तानि अभिद्युभिरभिगतदीप्तिभिः प्रियमेधैः एतत्संज्ञैश्च ऋषिभिः सेवितानि निर्मजां निःशेषेण शुद्धानां गवां षष्टिं सहस्रा षष्टिसंख्याकानि सहस्राणि यूथानि ऋषिर्देवातिथिरहं अनु पश्चात् निरजे निःशेषेणागच्छं साकल्येन प्राप्तवानस्मि अज गतिक्षेपणयोः यथा प्रियमेधानां कण्वानां च गवां यूथानि राज्ञा दत्तानि तैः प्रतिगृहीतानि एवं तेन दत्तानि मया प्रतिगृह्यन्तइत्यर्थः ॥ २० ॥

२०. कण्व-पुत्र और हविवाले मेधातिथि तथा उनके स्तोताओं-द्वारा भजन के योग्य तथा दीप्ति पाये हुए प्रियमेध नाम के ऋषियों-द्वारा सेवित एवम् अतीव पवित्र साठ हज़ार गौओं को मैं (देवातिथि) ने सबके अन्त में प्राप्त किया।

वृक्षाश्चिन्मेअभिपित्वेअरारणुः ।
गांभजन्तमेहनाश्वंभजन्तमेहना ॥ २१ ॥ ३३ ॥

वृक्षाः । चित् । मे । अभिऽपित्वे । अरारणुः । गाम् ।
भजन्त । मेहना । अश्वम् । भजन्त । मेहना ॥ २१ ॥ ३३ ॥

मे मया अभिपित्वे पूर्वोक्ते धनेभिप्राप्ते सति वृक्षाश्चित् वृक्षाअपि अरारणुः अशब्दयन् कथमिति तदाह इमे ऋषयः मेहना मंहनीयां प्रशस्यां गां भजन्त असेवन्त अलभन्त मेहना मंहनीयं अश्वं च भजन्त अलभन्तेति गामश्वमिति जात्यभिप्रायमेकवचनम्। यद्वा मेहनइति मे इह नेति पदत्रयात्मकमेकं पदं यदाह यास्कः—यदिन्द्रचित्रंचायनीयंमंहनीयंधनमस्तियन्मइहनास्तीतिवा त्रीणि मध्यमानि पदानि। तदैवं व्याख्येयं इमे ऋषयो गामश्वंचालभन्त इहास्मिन्नाजनि प्रशस्तधनस्य तद्दानं ममनासीन्मम नासीदिति वृक्षप्रमुखाः सर्वेपि जनाः प्रोचुरित्यर्थः ॥ २१ ॥

२१. मेरे धन पाने पर वृक्षों ने भी हर्ष-ध्वनि की थी कि इन्होंने प्रशंसनीय गोधन और अश्वधन प्राप्त किया है।

॥ इति पंचमस्य सप्तमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

वेदार्थस्य प्रकाशेन तमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टके सप्तमोध्यायः समाप्तः ॥७॥

॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदा योवेदेभ्योखिलंजगत्। निर्ममे तमहं वन्देविद्यातीर्थमहेश्वरम् ॥ १॥

अथाष्टमोव्याख्यातुमारभ्यते। अष्टमेमण्डले प्रथमेनुवाके चत्वारिसूक्तानि व्याकृतानि। दूरादित्येकोनचत्वारिंशदृचं पञ्चमं सूक्तं कण्वगोत्रस्य ब्रह्मातिथेरार्षं। आदितः षट्त्रिंशद्गायत्र्यः। ततोद्वे बृहत्यौ। अन्तिमानुष्टुप्। अन्त्येषु पञ्चस्वर्धर्चेषु चेदिपुत्रस्य कशुनाम्नोराज्ञोदानं स्तूयते। अतस्तद्देवताकाः। शिष्टाआश्विन्यः तथाचानुक्रान्तम्—दूरादेकान्नचत्वारिंशद्ब्रह्मातिथिराश्विनं द्विबृहत्यनुष्टुबन्तं अन्त्याः पञ्चार्धर्चाश्चैद्यस्य कशोर्दानस्तुतिरिति। प्रातरनुवाकाश्विनशस्त्रयोराश्विने क्रतौ गायत्रे छन्दसि अन्त्यतृचवर्जमिदं सूक्तम्। सूत्र्यतेहि—दूरादिहेवेतितिस्रउद्धरेदिति।

तत्र प्रथमा—

ओम् दूरादिहेवयत्सत्यरुणप्सुरशिश्वितत्। विभानुंविश्वधातनत्॥१॥

दूरात्। इहऽइव। यत्। सती। अरुणऽप्सुः। अशिश्वितत्।
वि। भानुम्। विश्वधा। अतनत्॥ १॥

दूरात् दूरतएव विप्रकृष्टएव नभसः प्राक्प्रदेशे वर्तमाना इहेवसती इहसमीपे विद्यमानेव अस्तेः शतरि श्नसोरल्लोपे उगितश्चेतिङीप् शतुरनुमइतिनद्याउदात्तत्वम्। अरुणप्सुः आरोचमानरूपा ईदृशीउषाः यद्यदा अशिश्वितत् अश्वेतयत् श्विताववर्णे अस्मात् ण्यन्तात् लुङिचङिरूपम् यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः। तदा भानुं दीप्तिं विश्वधा बहुविधां व्यतनत् विस्तारितवती तनोतेर्व्यत्ययेन शप् ईदृशीमुषसम् हे अश्विनौ सचेथे इति उत्तरयैकवाक्यता। यद्वा प्रातरनुवाके उषस्येन काण्डेन उषाः स्तुता सती प्रादुर्बभूव हे अश्विनौ संशिष्यमाणमाश्विनं क्रतुं श्रोतुं युवामपि प्रादुर्भवतमिति अध्याहारेण वाक्यं पूरणीयम्॥ १॥

१. दूर से ही निकट में विद्यमान दिखाई देनेवाली और दीप्त रूपवाली उषा जिस समय सारे पदार्थों को श्वेत-वर्ण कर देती हैं, उस समय दीप्ति को अनेक प्रकार से विस्तारित करती हैं। (अश्विद्वय, मन्त्रों को सुनने के लिए तुम भी प्रादुर्भूत होओ।)

अथ द्वितीया—

नृवद्दस्रामनोयुजारथेनपृथुपाजसा। सचेथेअश्विनोषसम्॥ २॥

नृऽवत् । दुस्रा । मनःऽयुजा । रथेन पृथुऽपाजसा ।
सचेथे इति । अश्विना । उषसम् ॥ २ ॥

हे दस्रा दर्शनीयौ शत्रूणामुपक्षपयितारौ वा सुपांसुलुगित्याकारः । ईदृशौ हे अश्विना अश्विनौ नृवत् नृभिर्नेतृभिस्तुल्यं वर्तमानौ युवां तेनतुल्यमिति प्रथमार्थेवतिः यद्वा नेतृमतीं नृशब्दान्मतुपश्छान्दसंत्ववम् रश्रुतिसामान्याद् वा छन्दसीरइतिवत्वम् ङीपश्छान्दसोलुक् ह्रस्वनुड्भ्यांमतुबिति मतुपउदात्तत्वम् ईदृशीमुषसं रथेनात्मीयेन वाहनेन सचेथे सम्यग्गच्छथः । षचसमवाये यद्वा सचतिः सेवनार्थः सचेथे सेवेथे तदाहयास्कः—सचस्वानःस्वस्तये सेवस्व नः स्वस्तयइति । कीदृशेन रथेन मनोयुजा मनसैव व्यापारान्तरनिरपेक्षेण स्मरणमात्रेणाश्वैर्युज्यमानेन पृथुपाजसा विस्तीर्णबलेन बह्वन्नेनवा उषसोनन्तरमश्विनोः स्तूयमानत्वात् तामश्विनौ गच्छतइत्युच्यते ॥ २ ॥

२. दर्शनीय अश्विद्वय, तुम लोग नेताओं के समान हो। इच्छा-मात्र से ही अश्वों में जोते हुए और प्रचुर अन्न से युक्त रथ से तुम लोग उषा के साथ मिलो।

युवाभ्यां वाजिनीवसू प्रति स्तोमा अदृक्षत । वाचं दूतो यथोहिषे ॥ ३ ॥

युवाभ्याम् । वाजिनीवसू इति वाजिनीऽवसू । प्रति ।
स्तोमाः । अदृक्षत । वाचम् । दूतः । यथा । ओहिषे ॥ ३ ॥

हे वाजिनीवसू वाजं हविर्लक्षणमन्नं तद्युक्तयागक्रिया वाजिनी तस्यां वसु धनं ययोरस्ति तौ तथोक्तौ यद्वा अन्नयुक्तं स्तोतृभ्योदेयं वसु धनं ययोरस्ति तादृशौ हे अश्विनौ युवाभ्यां स्तोमाः अस्माभिः कृतानि स्तोत्राणि प्रत्यदृक्षत प्रतिदृश्यन्ताम् दृशेश्छान्दसः कर्मणिलुङ् लिङ्सिचावात्मनेपदेष्विति किच्त्वात्सृजिदृशोरित्यमभावः षत्वकत्वषत्वानि अहं च यथा येनप्रकारेण दूतः प्रेष्योवाचं स्वामिनोवाक्यं याचते तथा युवयोः प्रीतिपूर्विकां वाचं ओहिषे पुरुषव्यत्ययः याचे ऊहिरर्दने याचने इत्यर्थः व्यत्ययेनात्मनेपदम् । यद्वा दूतो यथास्वामिनोक्तां वाचं विदेशस्थमन्यं प्रापयति एवमहमपि स्तुतिरूपां वाचं ओहिषे वहे युवां प्रापयामि वहेर्व्यत्ययेनमध्यमः छान्दसं सम्प्रसारणम् छन्दस्युभयथेत्यार्धधातुकत्वादिडागमः शबभावोलघूपधगुणश्च एङिपररूपमिति पररूपत्वम् ॥ ३ ॥

३. अन्न-युक्त और धन-सम्पन्न अश्विद्वय, अपने लिए बनाये गये स्तोत्रों को देखो। जैसे दूत स्वामी के वचन के लिए प्रार्थना करता है, वैसे ही हम तुम्हारे वाक्य के लिए प्रार्थना करते हैं।

---

१ नि० ३. २१.।

अथ चतुर्थी—

पुरुप्रियाणऊतयेपुरुमन्द्रापुरूवसू। स्तुषेकण्वासोअश्विना ॥ ४॥

पुरुऽप्रिया। नः। ऊतये। पुरुऽमन्द्रा। पुरुवसू इति। पुरुऽवसू।
स्तुषे। कण्वासः। अश्विना ॥ ४ ॥

पुरुप्रिया बहूनां प्रियौ पुरुमन्द्रा बहुमदौ बहूनां मादयितारौ वा यद्वा पुरु बहुलं माद्यन्तौ पुरुवसू बहुधनौ ईदृशौ अश्विना अश्विनौ नोस्माकमूतये रक्षणाय कण्वासः कण्वगोत्रावयं स्तुषे स्तुमहे पुरुषवचयनोर्व्यत्ययः। यद्वा कण्वासइति पूजार्थं बहुवचनम् ऋषिरात्मानं संबोध्य ब्रूते हे अन्तरात्मन् कण्वासः कण्वगोत्रस्त्वं स्तुषे अश्विनौ स्तुहि ॥ ४ ॥

४. तुम बहुतों के प्रिय, अनेकों के आनन्द-दाता और बहु धनवाले हो। हम कण्वगोत्रज हैं। हम अपनी रक्षा के लिए अश्विद्वय की प्रार्थना करते हैं।

मंहिष्ठावाजसातमेषयन्ताशुभस्पती। गन्तारादाशुषोगृहम् ॥५॥१॥

मंहिष्ठा। वाजऽसातमा। इषयन्ता। शुभः।
पती इति। गन्तारा। दाशुषः। गृहम् ॥ ५ ॥ १ ॥

मंहिष्ठा मंहिष्ठौ मंहनीयौ पूजनीयौ यद्वा दातृतमौ वाजसातमा वाजोन्नं बलं वा तस्यातिशयेन दातारौ यद्वा वाजोन्नं हविर्लक्षणमन्नं तस्य संभक्तृतमौ सनोतेः सनतेर्वा जनसनेतिविट् विड्वनोरनुनासिकस्यात्वम्। इषयन्ता स्तोतृभ्यइषमन्नं कुर्वन्तौ इट्शब्दात्तत्करोतीतिणिच् णेरिष्ठवद्भावेनटिलोपे प्राप्ते प्रकृत्येकाजितिप्रकृतिभावः। यद्वा एषयन्ता इषयन्तौ श्रेयांसि प्रापयन्तौ इषगतौ अस्माद्धेतुमतिचेति णिच् संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणाभावः शुभः शोभनस्य धनस्य उदकस्य वा पती स्वामिनौ षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वम् दाशुषः चरुपुरोडाशादीनि दत्तवतोयजमानस्य गृहं गन्तारा गमनशीलौ गमेस्ताच्छीलिकस्तृन् अतोनलोकाव्ययेति कर्मणि षष्ठ्याः प्रतिषेधः। ईदृशावश्विनौ स्तुमइति शेषः ॥ ५॥

५. तुम लोग पूज्य हो। सबसे अधिक अन्न देनेवाले हो। शोभन धन के स्वामी हो। तुम लोग मङ्गल-प्रद और हव्यदाता के गृह में जाया करते हो।

॥ इति पञ्चमस्याष्टमे प्रथमो वर्गः ॥ १ ॥

अथ षष्ठी—

तासुदेवायदाशुषेसुमेधामवितारिणीम्। घृतैर्गव्यूतिमुक्षतम् ॥ ६ ॥

ता । सुऽदेवाय । दाशुषे । सुऽमेधाम् । अविऽतारिणीम् ।
घृतैः । गव्यूतिम् । उक्षतम् ॥ ६ ॥

हे अश्विनौ ता तौ तादृशौ युवाम् सुदेवाय शोभनादेवा येनयष्टव्याः सतथोक्तः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् तस्मै दाशुषे हविर्दत्तवते यजमानाय तादर्थ्येचतुर्थी ईदृग्यजमानार्थं सुमेधां शोभनयज्ञां अवितारिणीं वितरणं विगमनम् अपायः अनपायिनीम् नञ्समासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् ईदृशीं गव्यूतिं गावोयूयन्ते संयुज्यन्तेत्रेति गव्यूतिर्गोसञ्चारभूमिः गोर्यूतौछन्दसीत्यवादेशः तां घृतैः क्षरणशीलैः उदकैः उक्षतम् सिञ्चतम् । उक्षसेचने ॥ ६ ॥

६. जो हव्यदाता सुन्दर देवतावाला है, उसके लिए तुम लोग उत्तम यज्ञ से युक्त और अविनाशी गोचर-भूमि को जल के द्वारा सिक्त करो।

आनःस्तोममुपंद्रवत्तूयंश्येनेभिराशुभिः । यातमश्वेभिरश्विना ॥७॥

आ । नः । स्तोमम् । उप । द्रवत् । तूयम् । श्येनेभिः ।
आशुऽभिः । यातम् । अश्वेभिः । अश्विना ॥ ७ ॥

हे अश्विना अश्विनौ नोस्माकं स्तोमं स्तोत्रं अश्वेभिरश्वैःद्रवत तूयमिति उभे क्षिप्रनामनी एकः पूरकः तूयम् क्षिप्रं उपायातं उपागच्छतं । यद्वा द्रवदिति स्तोमविशेषणं द्रवत शीघ्रं प्रवर्तमानं स्तोममित्यर्थः कीदृशैरश्वैः श्येनेभिः शंसनीयगतिभिः प्रशस्यगमनैः आशुभिः शीघ्रगैः ॥ ७ ॥

७. अश्विद्वय, अश्वों पर चढ़कर अत्यन्त शीघ्र हमारे स्तोत्र की ओर आओ। इन अश्वों की गति प्रशंसनीय है।

अथाष्टमी—

येभिस्तिस्रःपरावतोदिवोविश्वानिरोचना । त्रीँरक्तून्परिदीयथः ॥८॥

येभिः । तिस्रः । पराऽवतः । दिवः । विश्वानि ।
रोचना । त्रीन् । अक्तून् । परिऽदीयथः ॥ ८ ॥

हे अश्विनौ तिस्रोदिवः त्रीन् दिवसान् त्रीन् अक्तून् तिस्रोरात्रीश्च अत्यन्तसंयोगे द्विती-या एतावन्तंकालं विश्वानि सर्वाणि व्याप्तानि वा रोचमानानि नक्षत्ररूपाणि देवगृहाणि परावतो दूरदेशात् येभिर्यैरश्वैः परिदीयथः परिगच्छथः दीयतिर्गतिकर्मा तैरस्माकं स्तोत्रमुपायातमि-ति पूर्वत्रान्वयः ॥ ८ ॥

८. अश्विद्वय, तीन दिन और तीन रात सारे दीप्ति-युक्त स्थानों पर अश्व-साहाय्य से दूर से गमन करो।

उतनोगोमतीरिषंउतसातीरहर्विदा । विपथःसातयेसितम् ॥ ९॥

उत । नः । गोऽमतीः । इषः । उत । सातीः ।
अहःऽविदा । वि । पथः । सातये । सितम् ॥ ९ ॥

उतापिच हे अहर्विदा अह्नोलम्भयितारौ यद्वा अह्नि प्रभातसमये वेदितव्यौ स्तोतव्यौ नोस्मभ्यं गोमतीर्बहुभिर्गोभिर्युक्ता इषोन्नानि दत्तमितिशेषः उतापिच सातीः सम्भजनीयाः दातव्यावा रायश्च अस्मभ्यं दत्तम् सनतेः सनोतेर्वा कर्मणि क्तिन् जनसनखनामित्यात्वम् ऊतियूतीत्यादिना क्तिनउदात्तत्वं निपात्यते अपिचास्माकं सातये उक्तानां गवादीनां लाभाय सम्भजनाय वा पथः तदुपायरूपान्मार्गान्विसितं विशेषेण बध्नीतं यथा अन्ये न प्रविशन्ति तथा कुरुतमित्यर्थः। षिञ्बन्धने छान्दसोविकरणस्यलुक् यद्वा उपसर्गवशादयंधातुः स्वार्थविपरीत-बन्धनाभावेवर्तते प्रस्मरणं प्रस्थानमिति यथा पथोमार्गान् विसितं विमुञ्चतं प्रदर्शयतमित्यर्थः। पथिन्शब्दोन्तोदात्तः तस्य शसि टिलोपे उदात्तनिवृत्तिस्वरेणशसउदात्तत्वम् ॥ ९ ॥

९. तुम लोग प्रभात-समय में स्तुति के योग्य हो। हमारे लिए गौ से युक्त अन्न और सम्भोग के योग्य धन दो। इन सबके भोग के लिए मार्ग दो।

अथ दशमी—

आनोगोमन्तमश्विनासुवीरंसुरथंरयिम् । वोह्ळमश्वावतीरिषः॥१०॥२॥

आ । नः । गोऽमन्तम् । अश्विना । सुऽवीरम् । सुऽरथम् ।
रयिम् । वोह्ळम् । अश्वऽवतीः । इषः ॥ १० ॥ २ ॥

हे अश्विना अश्विनौ नोस्मभ्यं रयिं धनं आवोह्ळं आवहतम् आहरतम् वहेर्लोटि छान्दसःशपोलुक् ढत्वधत्वष्टुत्वढलोपेषु कृतेषु सहिवहोरोदवर्णस्येत्योत्वम् कीदृशं रयिम् गोमन्तं बहुभिर्गोभिर्युक्तम् सुवीरं वीर्याज्जायन्तइति वीराः पुत्राः शोभनैस्तैरुपेतम् विविधमीरयन्ति

शत्रूनितिवीराः शूराः तैरुपेतम् सुरथम् शोभनरथेनयुक्तम् अपिच अश्वावतीः अश्वयुक्ताः मन्त्रे-सोमाश्वेतिमतौदीर्घः इषः इष्यमाणान्यन्नानिच अस्मभ्यं आवहतम् ॥ १० ॥

१०. अश्वि-द्वय, हमारे लिए गौ, पुत्र, सुन्दर रथ और अश्व से युक्त धन ले आओ।

॥ इति पञ्चमस्याष्टमे द्वितीयोवर्गः ॥ २ ॥

द्विदेवत्यस्याश्विनग्रहस्य वावृधानेत्येषा याज्या सूत्र्यतेहि—होतायक्षदश्विनानासत्यावा-वृधानाशुभस्पती इतीति ।

वावृधानाशुभस्पतीदस्राहिरण्यवर्तनी । पिबतंसोम्यंमधु ॥ ११ ॥

ववृधाना । शुभः । पती इति । दस्रा ।
हिरण्यवर्तनी इति हिरण्यऽवर्तनी । पिबतम् । सोम्यम् । मधु ॥ ११ ॥

हे शुभस्पती शुभः शोभनस्यालङ्कारस्योदकस्य वा पती स्वामिनौ हेअश्विनौ सुबाम-न्त्रितइतिषष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्योष्टमिकंसर्वानुदात्तत्वम् । दस्रा द-र्शनीयौ शत्रूणामुपक्षपयितारौ वा हिरण्यवर्तनी हिरण्मयमार्गौ यद्वा वर्ततेस्मिन्निति वर्तनीरथः हिरण्मयोरथोययोस्तौ यद्वा वर्तनिर्वर्तनमाचरणं हितरमणीयाचरणौ ववृधाना प्रवृद्धौ वृधेः लिटः कानच् ईदृशौ युवां सोम्यं सोममयं मधु माधुर्योपेतं मदकरं वा रसं पिबतम् ॥ ११ ॥

११. शोभन पदार्थों के स्वामी, दर्शनीय, हिरण्मय और मार्ग से युक्त अश्विद्वय, प्रवृद्ध होकर सोममय मधु का पान करो।

अथ द्वादशी—

अस्मभ्यंवाजिनीवसूमघवद्भ्यश्चसप्रथः । छर्दिर्यन्तमदाभ्यम् ॥ १२ ॥

अस्मभ्यम् । वाजिनीवसू इति वाजिनीऽवसू । मघवत्ऽभ्यः ।
च । सऽप्रथः । छर्दिः । यन्तम् । अदाभ्यम् ॥ १२ ॥

हे वाजिनीवसू वाजिनी हविर्युक्ता यागक्रियातस्यां वसु धनं हविर्भागलक्षणं ययोस्तथा विधौ हे अश्विनौ अस्मभ्यं स्तोतृभ्यः मघवद्भ्यः मघं धनं हविर्लक्षणं तद्वद्भ्योयजमानेभ्यश्च सप्रथः सर्वतः पृथुविस्तीर्णं अदाभ्यं केनाप्यहिंस्यं छर्दिः गृहनामैतत् गृहं यन्तं नियच्छतं दत्तमितियावत् यमेश्छान्दसःशपोलुक् छन्दस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावात् अनुना-सिकलोपाभावः ॥ १२ ॥

१२. अन्न और धन से युक्त अश्विद्वय, हम धनी हैं। हमें चारों ओर विस्तृत और अहिंसनीय गृह प्रदान करो।

अथ त्रयोदशी—

निषुब्रह्मजनानांयाविष्टंतूयमागतम् । मोष्वं१न्याँउपारतम् ॥१३॥

नि । सु । ब्रह्म । जनानाम् । या । अविष्टम् । तूयम् ।
आ । गतम् । मो इति । सु । अन्यान् । उप । अरतम् ॥१३॥

हे अश्विनौ या यौ युवां जनानां प्राणिनां मध्ये ब्रह्म ब्राह्मणजातिं सु सुष्ठु नि नितरां अविष्टं अरक्षिष्टम् यद्वा जनानां यजमानानां ब्रह्म परिवृढं स्तोत्रं हविर्लक्षणमन्नं वा यौ युवाम् न्यविष्टं न्यगच्छतम् अवतिर्गत्यर्थः तौ युवां तूयं क्षिप्रं आगतं अस्मानभ्यागच्छतम् अन्यान् अस्मद्व्यतिरिक्तान्यजमानान् मो मैव सूपारतम् उपगच्छतं कदाचिदपि मैव प्राप्नुतमित्यर्थः अर्तेर्माङि लुङि सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः ॥ १३ ॥

१३. तुम लोग मनुष्य के स्तोत्र की रक्षा करो। शीघ्र आओ। दूसरे के पास नहीं जाना।

आपराह्णिकेप्रवर्ग्ये घर्मस्यहविषोस्यपिबतमिति द्वितीया याज्या सूत्रितश्च—अस्यपिबतमश्विनेतिचाप्रेषितोहोतेति ।

अस्यपिबतमश्विनायुवंमदस्यचारुणः । मध्वोरातस्यधिष्ण्या ॥१४॥

अस्य । पिबतम् । अश्विना । युवम् । मदस्य ।
चारुणः । मध्वः । रातस्य । धिष्ण्या ॥ १४ ॥

हे अश्विना अश्विनौ हे धिष्ण्या धिषणा स्तुतिः तदर्हौ युवं युवां मदस्य मदकरस्य चारुणः शोभनस्य रातस्यास्माभिर्दत्तस्य अस्य मध्वोमधुरस्य सोमस्य स्वांशलक्षणं भागं पिबतम् । यद्वा द्वितीयार्थेषष्ठी इमं सोमं पिबतम् ॥ १४ ॥

१४. स्तुति-योग्य अश्विद्वय, तुम हमारा दिया हुआ मदकर, मनोहर और मधुर सोम-भाग का पान करो।

अथ पञ्चदशी—

अस्मेआवहतंरयिंशतवन्तंसहस्रिणम् । पुरुक्षुंविश्वधायसम् ॥१५॥३॥

अस्मे इति । आ । वहतम् । रयिम् । शतऽवन्तम् ।
सहस्रिणम् । पुरुऽक्षुम् । विश्वऽधायसम् ॥ १५ ॥ ३ ॥

हे अश्विनौ अस्मे अस्मभ्यं रयिं धनं आवहतम् आनयतम् कथंभूतं शतवन्तं शतसंख्योपेतं सहस्रिणं सहस्रसंख्योपेतंच पुरुक्षुम् बहुनिवासं यद्वा पुरुभिर्बहुभिः स्तुत्यं विश्वधायसं विश्वेषां सर्वेषामस्मदीयानां धारकं वहिहाधाञ्भ्यश्छन्दसीति दधातेरसुन् णिदित्यनुवृत्तेर्णिद्वद्भावेनयुगागमः ॥ १५ ॥

१५. हमारे लिए सौ और हजार प्रकार के एवम् अनेक निवासों से युक्त तथा सबका धारण करने में समर्थ धन ले आओ।

॥ इति पञ्चमस्याष्टमे तृतीयोवर्गः ॥ ३ ॥

अथ षोडशी—

पुरुत्राचिद्धिवांनराविह्वयन्तेमनीषिणः । वाघद्भिरश्विनागतम् ॥ १६॥

पुरुऽत्रा । चित् । हि । वाम् । नरा । विऽह्वयन्ते ।
मनीषिणः । वाघत्ऽभिः । अश्विना । आ । गतम् ॥ १६ ॥

हे नरा नरौ स्तोतॄणां धनस्य नेतारौ अश्विनौ मनीषिणोमनसईशितारः स्तोतारः वां युवां पुरुत्राचिद्धि बहुषु देशेषु विह्वयन्ते विविधमाह्वयन्ति तथासति हे अश्विनौ वाघद्भिः वाहकैरश्वैः आगत अस्मानेवागच्छतम् ॥ १६ ॥

१६. नेतृ-द्वय, मनीषी लोग अनेक देशों में तुम्हें बुलाते हैं। अश्विद्वय, वाहक अश्व की सहायता से आओ।

जनासोवृक्तबर्हिषोहविष्मन्तोअरंकृतः । युवांहवन्तेअश्विना ॥ १७॥

जनासः । वृक्तऽबर्हिषः । हविष्मन्तः । अरम्ऽकृतः ।
युवाम् । हवन्ते । अश्विना ॥ १७ ॥

वृक्तबर्हिषः वृक्तं छिन्नं बर्हिर्यैस्ते तथोक्ताः हविष्मन्तो हविर्भिर्युक्ताः अरंकृतः पर्याप्तकारिणः यद्वा हविरादीनामलंकर्तारोजनासः ऋत्विग्लक्षणाजनाः हे अश्विना अश्विनौ युवां हवन्ते आह्वयन्ति अतआगच्छतमितिशेषः ॥ १७ ॥

१७. हव्य-सम्पन्न और पर्याप्त कार्य करनेवाले मनुष्य कुश तोड़ते हुए तुम्हें बुलाते हैं।

अस्माकमद्यवामयंस्तोमोवाहिष्ठोअन्तमः । युवाभ्यांभूत्वश्विना ॥१८॥

अस्माकम् । अद्य । वाम् । अयम् । स्तोमः । वाहिष्ठः ।
अन्तमः । युवाभ्याम् । भूतु । अश्विना ॥ १८ ॥

अथेदानीं अस्माकं अयं स्तोमः अस्मदीयं स्तोत्रं हे अश्विनौ वां युवयोः वाहिष्ठः वाहयितृतमः प्रापयितृतमः सन् युवाभ्यां अन्तमः अन्तिकतमः अतिशयेन समीपवर्ती भूतु भवतु तमेतादेश्चेति अन्तिकशब्दस्य तादिर्लुप्यते भवतेश्छान्दसः शपोलुक् ॥ १८ ॥

१८. अश्विद्वय, हमारा यह स्तोत्र (मन्त्र) सर्वापेक्षा अधिक तुम लोगों का वाहक होकर तुम्हारा समीपवर्त्ती हो।

योहवांमधुनोदृतिराहितोरथचर्षणे । ततःपिबतमश्विना ॥ १९ ॥

यः । ह । वाम् । मधुनः । दृतिः । आऽहितः । रथऽचर्षणे ।
ततः । पिबतम् । अश्विना ॥ १९ ॥

हे अश्विना अश्विनौ रथचर्षणे रथस्य चर्षणे द्रष्टव्ये मध्यदेशे योदृतिः मधुनः मधुरस्यास्माभिर्दत्तस्य सोमस्य संबन्धी तेन मधुना पूर्णः आहितः स्थापितोवर्तते ततोदृतेः सकाशात् सोमं पिबतं ॥ १९ ॥

१९. अश्विद्वय, जो मधु-पूर्ण चर्म-पात्र मध्यस्थान में रक्खा हुआ है, उससे मधु पान करो।

अथ विंशी—

तेननोवाजिनीवसूपश्वेतोकायशंगवे । वहतंपीवरीरिषः॥२०॥४॥

तेन । नः । वाजिनीवसू इति वाजिनीऽवसू । पश्वे ।
तोकाय । शम् । गवे । वहतम् । पीवरीः । इषः ॥ २० ॥ ४ ॥

हे वाजिनीवसू वाजोन्नं बलं वा तद्युक्तधनौ नोस्माकं पश्वे पशवे अश्वादिलक्षणाय जसादिषु छन्दसिवावचनमिति घेर्ङितीति गुणस्य विकल्पितत्वाद्यण् तोकाय पुत्राय गवेच जात्यभिप्रायं सर्वत्रैकवचनं पशुप्रभृतिभ्यः शं सुखं यथाभवति तथा पीवरीः प्रवृद्धानि इषोन्नानि तेन भवदीयेन रथेन वहतं आवहतं प्रापयतं दत्तमित्यर्थः ॥ २० ॥

२०. अन्न से युक्त और धनवान् अश्विद्वय, हमारे पशु, पुत्र और गौओं के लिए उस रथ से प्रवृद्ध अन्न अनायास ले आओ।

॥ इति पञ्चमस्याष्टमे चतुर्थोवर्गः ॥ ४ ॥

अथैकविंशी—

उ॒तनो॑दि॒व्याइष॑उ॒तसिन्धूँ॑रहर्विदा । अप॒द्वारे॑ववर्ष॑थः ॥ २१ ॥

उ॒त । नः॒ । दि॒व्याः । इषः॑ । उ॒त । सिन्धू॑न् । अ॒हः॒ऽवि॒दा॒ ।
अप॑ । द्वारा॑ऽइव । व॒र्ष॑थः॒ ॥ २१ ॥

उतापिच हे अहर्विदा अह्नोलंभयितारौ यद्वा अह्नि प्रभातसमये वेदितव्यौ स्तोतव्या-वश्विनौ दिव्याः दिविभवाः इषः इष्यमाणाअपः नोस्मदर्थं द्वारेव द्वारेणेव छिद्रेणेव अपव-र्षथः मेघादपकृष्य युवां सिञ्चथः उतापिच सिन्धून् स्यन्दनशीलानदीः सुवृष्टैस्तैरुदकैरस्माकं स्नानपानादिकार्याय कृतवन्तावित्यर्थः ॥ २१ ॥

२१. प्रभात-काल में जानन योग्य अश्विद्वय, स्वर्गीय और वाञ्छनीय जल, हमारे लिए, द्वार से ही सिञ्चित करो।

क॒दावां॑तौ॒ग्र्योवि॑धत्समु॒द्रेज॑हि॒तोन॑रा । यद्वां॒रथो॒विभि॒ष्पता॑त् ॥ २२ ॥

क॒दा । वा॒म् । तौ॒ग्र्यः । वि॒ध॒त् । स॒मु॒द्रे । ज॒हि॒तः । न॒रा॒ ।
यत् । वा॒म् । रथः॑ । विऽभिः॑ । पता॑त् ॥ २२ ॥

हे नरा नरौ नेतारावश्विनौ तौग्र्यः तुग्रपुत्रोभुज्युः समुद्रे जलधौ जहितः असुरैः प्रक्षिप्तः सन् कदा कस्मिन्काले वां युवां विधत् अविधत् स्तुतिभिः पर्यचरत् यत् यदा वां युवयोर्विभिः गन्तृभिः अश्वैरुपेतोरथः पतात् तंभुज्युं आनेतुं पतेत् गच्छेत् तदानीं भुज्युर-स्तौदिति पूर्वेणार्धेन पृष्टस्य प्रतिवचनम् ॥ २२ ॥

२२. नेता अश्विद्वय, समुद्र में फेंके जाने पर तुग्र-पुत्र भुज्यु ने स्तुति-द्वारा कब तुम लोगों की सेवा की थी कि तुम्हारा रथ अश्वों के साथ गया था।

अथ त्रयोविंशी—

यु॒वंकण्वा॑यनासत्यापि॑रिप्ताय ह॒र्म्ये॑ । शश्व॑दू॒तीर्द॑शस्यथः ॥ २३ ॥

यु॒वम् । कण्वा॑य । ना॒स॒त्या॒ । अपि॑ऽरिप्ताय । ह॒र्म्ये॑ ।
शश्व॑त् । ऊ॒तीः । द॒श॒स्य॒थः॒ ॥ २३ ॥

हे नासत्या सत्सु साधुषु सत्यौ नसत्यावसत्यौ न असत्यौ नासत्यौ नभ्राणनपादिति नञः प्रकृतिभावः यद्वा सत्यस्य नेतारौ नासिकाप्रभवौ वा उक्तंच भगवतायास्केन—सत्यावेवनास-

त्यावित्यौर्णवाभः सत्यस्यप्रणेताराविस्याग्रायणोनासिकाप्रभवौवेति । तौ युवं कण्वाय एतत्संज्ञाय ऋषये हर्म्ये हर्म्यतले अपिरिप्ताय असुरैर्बाधिताय शश्वत् शश्वतीर्बह्वीः ऊतीः रक्षाः दशस्यथः दत्तवंतौ । युवंकण्वायापिरिप्तायचक्षुःप्रत्यधत्तमित्यत्रेतिहासउक्तःसोत्रद्रष्टव्यः ॥२३॥

२३. नासत्यद्वय, प्रासाद (हर्म्य) के नीचे असुरों-द्वारा बांधे गये कण्व को तुम लोगों ने नाना प्रकार की रक्षा प्रदान की थी।

ताभिरायातमूतिभिर्नव्यसीभिःसुशस्तिभिः । यद्वांवृषण्वसूहुवे ॥२४॥

ताभिः । आ । यातम् । ऊतिऽभिः । नव्यसीभिः । सुशस्तिऽभिः ।
यत् । वाम् । वृषण्वसू इति वृषण्ऽवसू । हुवे ॥ २४ ॥

हे वृषण्वसू वर्षणधनौ वृषण्वस्वश्वयोरुपसंख्यानमिति वृषण्भावोनिपात्यते तदानीं ताभिः पूर्वोक्ताभिर्नव्यसीभिर्नवतराभिः सुशस्तिभिः सुप्रशस्याभिः ऊतिभीरक्षाभिः सार्धं आयातं आगच्छतम् यद्यदा वां हुवे स्तुतिभिराह्वयामि ॥ २४ ॥

२४. वर्षण-परायण और धन से युक्त अश्विद्वय, जिस समय तुम लोगों को बुलाता हूँ, उस समय उसी अभिनव और प्रशस्य रक्षण के साथ आओ।

अथ पञ्चविंशी—

यथाचित्कण्वमावतंप्रियमेधमुपस्तुतम् ।
अत्रिंशिंजारमश्विना ॥ २५ ॥ ५ ॥

यथा । चित् । कण्वम् । आवतम् । प्रियऽमेधम् ।
उपऽस्तुतम् । अत्रिम् । शिंजारम् । अश्विना ॥ २५ ॥ ५ ॥

हे अश्विना अश्विनौ यथाचित् येन खलु प्रकारेण कण्वं एतत्संज्ञमृषिं आवतम् अरक्षतम् प्रियमेधं प्रिययज्ञं एतत्संज्ञंच उपस्तुतं एतदाख्यंच शिंजारं शब्दयन्तं स्तुवन्तं अत्रिं एतानृषींश्च येनप्रकारेणारक्षतं तथास्मानपि रक्षतमिति शेषः यद्वा एतावद्वांवृषण्वसू इत्यनयैकवाक्यता ॥ २५॥

२५. अश्विद्वय, तुम लोगों ने जैसे कण्व, प्रियमेध, उपस्तुत और स्तोता अत्रि की रक्षा की थी, वैसे ही हमारी रक्षा करो।

॥ इति पञ्चमस्याष्टमेपञ्चमोवर्गः ॥ ५ ॥

यथोतकृत्व्येधनेंशुंगोष्वगस्त्यम् ।
यथावाजेषुसोभरिम् ॥ २६ ॥

---

१ नि० ६, १३। २ ऋ० सं० १, ८, १९।

यथा॑ । उ॒त । कृत्व्ये॑ । धने॑ । अं॒शुम् । गोषु॑ । अ॒गस्त्य॑म् ।
यथा॑ । वाजे॑षु । सोभ॑रिम् ॥ २६ ॥

उतापिच यथा येनप्रकारेण धने कृत्व्ये कर्तव्ये प्राप्तव्ये सति अंशुं एतत्संज्ञं स्तोतारं आवतं अरक्षतं । गोषु च लब्धव्यासु यथा अगस्त्यमृषिं अरक्षतम् वाजेष्वन्नेषु लब्धव्येषु यथा येन प्रकारेण सोभरिं एतत्संज्ञमृषिंचारक्षतम् अत्रापि पूर्ववद्वाक्यशेषः उत्तरयैकवाक्यता वा ॥२६॥

२६. धन के लिए अंश, गौओं के लिए अगस्त्य और अन्न के लिए सौभार की जैसे तुमने रक्षा की थी, वैसे ही हमारी रक्षा करो।

ए॒तावद्वां॑वृषण्वसूअतो॑वा॒भूयो॑अश्विना ।
गृ॒णन्त॑ःसु॒म्नमी॑महे ॥ २७ ॥

ए॒तावत् । वा॒म् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । अतः॑ । वा॒ ।
भूयः॑ । अ॒श्वि॒ना॒ । गृ॒णन्तः॑ । सु॒म्नम् । ई॒म॒हे॒ ॥ २७ ॥

हे वृषण्वसू वर्षणधनौ अश्विना अश्विनौ गृणन्तः स्तुवन्तोवयं एतावत् यथाचित्कण्वमित्यादिना यावदनुक्रान्तम् एतत्परिमाणं सुम्नं सुखं अतोवा अस्माद्वा भूयोबहुतरमधिकं सुम्नं वां युवां ईमहे याचामहे ॥ २७॥

२७. वर्षणशील और धन-सम्पन्न अश्विद्वय, स्तुति करते हुए हम "इतना" अथवा इससे भी अधिक धन की याचना करते हैं।

अथाष्टाविंशी—

रथं॒हिर॑ण्यवन्धुरं॒हिर॑ण्याभीशुमश्विना ।
आहि॒स्थाथो॑दिवि॒स्पृश॑म् ॥ २८ ॥

रथ॑म् । हिर॑ण्यऽवन्धुरम् । हिर॑ण्यऽअभीशुम् ।
अ॒श्वि॒ना॒ । आ । हि । स्थाथः॑ । दि॒वि॒ऽस्पृश॑म् ॥ २८ ॥

हे अश्विना अश्विनौ हिरण्यवन्धुरं सारथिस्थानं वन्धुरं हिरणमयसारथिस्थानं हिरण्याभीशुं हिरणमयप्रग्रहं दिविस्पृशं अत्युन्नतत्वाद्दिवं स्पृशन्तम् स्पृशेः क्विन् दिव्शब्दाव

द्वितीयार्थेसप्तमी ह्ययुष्म्यांङेरुपसंख्यानमितिलुक् ईदृशं रथं आहिस्थाथः युवामातिष्ठथ एव हिरवधारणे अस्मदीयां स्तुतिं श्रोतुं शीघ्रं रथमास्थायागतमितिभावः। ष्ठागतिनिवृत्तौ लटि छान्दसः शपोलुक् ॥ २८ ॥

२८. अश्विद्वय, सुवर्ण-निर्मित सारथि-स्थानवाले और सुवर्णमय प्रग्रह (लगाम)वाले रथ पर अवस्थान करो।

हिरण्ययीवाँरश्मिरीषाअक्षोहिरण्ययः।
उभाचक्राहिरण्यया ॥ २९ ॥

हिरण्ययी। वाम्। रश्मिः। ईषा। अक्षः।
हिरण्ययः। उभा। चक्रा। हिरण्यया ॥ २९ ॥

हे अश्विनौ वां युवयोः रश्मिः आरंभणीया आलंभनभूता रथस्य ईषा हिरण्ययी हिरण्मयी हिरण्यविकारा अक्षश्च हिरण्ययः हिरणमयः हिरण्यनिर्मितः ईषा अक्षादिषु छन्दसीति प्रकृतिभावः। अपिच उभा उभे द्वे अपि चक्रा चक्रे रथचरणे हिरण्यया हिरणमये सुवर्णनिर्मिते सुपांसुलुगिति द्विवचनस्याकारः ऋत्व्यवास्त्व्यवास्त्वेत्यादिना हिरण्यशब्दान्मयटोमलोपोनिपात्यते ॥ २९ ॥

२९. अश्विद्वय, तुम्हारे प्रापणीय रथ की ईषा (लाङ्गल-दण्ड) सोने की है, अक्ष (चक्र-नण्डल) सोने के हैं और दोनों चक्र सोने के हैं।

तेननोवाजिनीवसूपरावतश्चिदागतम्।
उपेमांसुष्टुतिंमम ॥ ३० ॥ ६ ॥

तेन। नः। वाजिनीवसू इति वाजिनीऽवसू। पराऽवतः। चित्।
आ। गतम्। उप। इमाम्। सुऽस्तुतिम्। मम ॥ ३० ॥ ६ ॥

हे वाजिनीवसू अन्नवद्धनावश्विनौ यउक्तो हिरणमयसर्वावयवोरथः तेन रथेन नोस्मान् परावतश्चित् दूरदेशादपि आगतमागच्छतम् गमेश्छान्दसः शपोलुक् अनुदात्तोपदेशेत्यनुनासिकलोपः इदानीमृषिरेकवदाह मम मदीयां इमां इदानीं क्रियमाणां सुष्टुतिं शोभनां स्तुतिं चोपगच्छतम् ॥ ३० ॥

३०. अन्न और धनवाले अश्विद्वय, इस रथ पर दूर देश से भी आओ। हमारी इस शोभन स्तुति के पास गमन करो।

॥ इति पञ्चमस्याष्टमे षष्ठोवर्गः ॥ ६ ॥

अथैकत्रिंशी—

आवंहेथेपराकात्पूर्वीरश्नन्तांवश्विना ।
इषोदासीरमर्त्या ॥ ३१ ॥

आ । वहेथे इति । पराकात् । पूर्वीः । अश्नन्तौ ।
अश्विना । इषः । दासीः । अमर्त्या ॥ ३१॥

हे अमर्त्या अमरणौ अश्विना अश्विनौ दासीः दासाउपक्षपयितारोसुराः तत्संबन्धिनीः पूर्वीः पुरीः अश्नन्तौ भक्षयन्तौ भंजन्तौ युवाम् इषोन्नानि पराकात् परागताद्दूरदेशात् आवहेथे अस्मान् प्रापयथः । यद्वा अश्नन्तौ व्यामुवन्तौ अशू व्याप्तौ अस्माद्व्यत्ययेनश्ना परस्मैपदंच पूर्वीर्बह्वीः दासीः दासस्योपक्षपयितुः शत्रोः सम्बन्धिनीः इषोन्नानि शत्रुभ्योपहृत्यास्मान्प्रापयथः ॥ ३१ ॥

३१. अमर अश्विद्वय, दासों की अनेक नगरियों को भग्न करते हुए तुम लोग दूर देश से अन्न ले आओ।

आनोंद्युम्नैराश्रवोंभिरारायायातमश्विना ।
पुरुंश्चन्द्रानासत्या ॥ ३२ ॥

आ । नः । द्युम्नैः । आ । श्रवःऽभिः । आ ।
राया । यातम् । अश्विना । पुरुऽचन्द्रा । नासत्या ॥ ३२ ॥

हे पुरुश्चन्द्रा बहुहिरण्यौ यद्वा पुरूणां बहूनामाह्लादकौ ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रे इतिसुट् पादादित्वात्षाष्ठिकमामंत्रिताद्युदात्तत्वं हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिका प्रभवौ वा । आमन्त्रितं पूर्वमविद्यमानवदिति पूर्वस्यामन्त्रितस्याविद्यमानवद्भावात् इदमप्यामन्त्रितमाद्युदात्तम् न च नामन्त्रिते समानाधिकरणइत्यविद्यमानवत्वनिषेधः पुरुश्चन्द्रेत्यस्यविशेषवचनत्वात् ईदृशौ हे अश्विना अश्विनौ द्युम्नै र्द्योतमानैः अन्नैर्दातव्यैः सार्धं नोस्मानायातमागच्छतम् तथा श्रवोभिः श्रवणीयैर्यशोभिश्चास्मानागच्छतम् तथा राया धनने च अस्मानागच्छतम् ॥ ३२ ॥

३२. अनेकों के मित्र और सत्य-स्वभाव अश्विद्वय, हमारे पास अन्न के साथ आगमन करो। यश के साथ आगमन करो और धन के साथ आगमन करो।

अथ त्रयस्त्रिंशी—

एहवांप्रुषितप्स॑वो॒वयो॑वहन्तुप॒र्णिनः॑ ।
अच्छा॑स्वध्व॒रंजन॑म् ॥ ३३ ॥

आ । इ॒ह । वा॒म् । प्रु॒षि॒त॒ऽप्स॑वः । वयः॑ । व॒ह॒न्तु॒ ।
प॒र्णिनः॑ । अच्छ॑ । सु॒ऽअ॒ध्व॒रम् । जन॑म् ॥ ३३ ॥

हे अश्विनौ इहास्मिन्यागे वां युवां प्रुषितप्सवः प्रुषि स्नेहनकर्मा स्निग्धरूपाः पर्णिनः पक्षोपेताः यद्वा लुप्तोपममेतत् पक्षिणइव शीघ्रगामिनोवयो गन्तारोश्वाः स्वध्वरं शोभनयज्ञं जनं यजमानलक्षणं अच्छाभिमुखं आवहन्तु आनयन्तु ॥ ३३ ॥

३३. अश्विद्वय, स्निग्ध रूपवाले और पक्षियों की तरह शीघ्रगामी अश्व तुम्हें सुन्दर यज्ञवाले मनुष्य के पास ले जायें।

रथं॑वा॒मनु॑गायसं॒यइ॒षावर्त॑तेस॒ह । नच॒क्रम॒भिबाध॑ते॥ ३४॥

रथ॑म् । वा॒म् । अनु॑ऽगायसम् । यः । इ॒षा । वर्त॑ते ।
स॒ह । न । च॒क्रम् । अ॒भि । बा॒ध॒ते॒ ॥ ३४ ॥

हे अश्विनौ योरथः अस्मभ्यं देयेनान्नेन सहवर्तते वां युवयोःस्वभूतं अनुगायसं स्तोतृभिरनुगातव्यं तं रथं चक्रं परसैन्यं नाभिबाधते नाभिहन्ति । यद्वा चक्रं वीर्यकर्मसाधनं घञर्थेकविधानमितिकः कृञादीनांकइतिद्विर्वचनम् अस्मिन्पक्षे अन्यः शत्रुरिति कर्तृपदमध्याहर्तव्यम् ॥ ३४ ॥

३४. जो रथ अश्व के साथ वर्त्तमान है और स्तोताओं के द्वारा प्रशंसित है, तुम्हारा वह रथ सैन्य-समूह को बाधा नहीं देता।

अथ पञ्चत्रिंशी—

हि॒र॒ण्यये॑न॒रथे॑नद्र॒वत्पा॑णिभि॒रश्वैः॑ ।
धीज॑वना॒नास॑त्या ॥ ३५ ॥ ७ ॥

हि॒र॒ण्यये॑न । रथे॑न । द्र॒वत्पा॑णिऽभिः । अश्वैः॑ ।
धीऽज॑वना । नास॑त्या ॥ ३५ ॥ ७ ॥

हे धीजवना मनोवद्वेगवन्तौ आमन्त्रिताद्युदात्तत्वम् हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा आमन्त्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानवत्त्वेन पदादपरत्वात् आष्टमिकनिघाताभावः न च नामन्त्रितइत्यविद्यमानवत्वनिषेधः धीजवनेत्यस्यविशेषणत्वेन सामान्यवचनत्वाभावात् व्यावर्तकंहि विशेषणम् ईदृशौ युवां द्रवत्पाणिभिः शीघ्रगमनपादैरश्वैर्युक्तेन हिरण्ययेन हिरण्मयेन स्वर्णमयेन रथेनागच्छतमितिशेषः। यद्वा धीजवना नासत्येत्येतत् द्वयमपि प्रथमांतमेव नामन्त्रितम् धियोजवइव जवोययोस्तौ बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। इदृशेन रथेन शीघ्रगमनौ अश्विनौ आगच्छतमिति शेषः॥ ३५॥

३५. मन के समान वेगवान् अश्विद्वय, क्षिप्त पदवाले और अश्वों से युक्त हिरण्मय रथ पर चढ़कर आओ।

॥ इति पञ्चमस्याष्टमे सप्तमोवर्गः ॥ ७ ॥

अथ षट्त्रिंशी—

युवंमृगंजागृवांसंस्वदथोवावृषण्वसू।
तानःपृंक्तमिषारयिम् ॥ ३६ ॥

युवम्। मृगम्। जागृऽवांसम्। स्वदथः। वा। वृषण्वसू इति।
वृषण्ऽवसू। ता। नः। पृङ्क्तम्। इषा। रयिम् ॥ ३६ ॥

वाशब्दः समुच्चये अपिच हे वृषण्वसू वर्षणधनावश्विनौ युवं युवां जागृवांसं जागरणशीलं स्वकार्ये मदजननेऽव्यग्रं मृगं मृग्यमन्वेषणीयं सोमं स्वदथः आस्वादयथः। यद्वा जागृवांसं जाग्रतं मृगं मृगनामानमसुरं स्वदथः स्वादयथः हिंस्थइत्यर्थः। ता तौ युवां नोस्मदर्थं इषा अन्नेन रयिं धनं पृङ्क्तं संपृक्तं कुरुतं ईदृशं धनं अस्मभ्यं प्रयच्छतमित्यर्थः॥ ३६॥

३६. वर्षण करनेवाले धन से युक्त अश्विद्वय, तुम लोग सदा जागरूक और अन्वेषणनीय सोम पीनेवाले हो। वही तुम लोग हमें अन्न दो।

तामेअश्विनासनीनांविद्यातंनवानाम्।
यथांचिच्चैद्यःकशुःशतमुष्ट्रानांददत्सहस्रादशगोनाम् ॥ ३७॥

ता। मे। अश्विना। सनीनाम्। विद्यातम्। नवानाम्। यथा।
चित्। चैद्यः। कशुः। शतम्। उष्ट्रानाम्।
ददत्। सहस्रा। दश। गोनाम्॥ ३७॥

हे अश्विना अश्विनौ ता तादृशौ युवां नवानां अभिनवानां श्रेष्ठानां सनीनां संभजनीयानां धनानां कर्मणि षष्ठी ईदृशानि धनानि मे मत्यं दापयितुं विद्यातं जानीतं यथाचित् येन खलु प्रकारेण चैद्यः चेदिपुत्रः कशुः एतत्संज्ञोराजा उष्ट्रानां शतं तथा गोनां गवां दशसहस्रा दशसंख्यानि सहस्राणि ददत् दद्यात् तथा विद्यातमिति पूर्वेणान्वयः ॥ ३७ ॥

३७. अश्विद्वय, तुम लोग अभिनव और सम्भजनीय धन को जानो। चेदि-वंशीय कशु नाम के राजा ने जैसे सौ ऊँट और दस हजार गायें दी थीं; सो सब जानो।

योमेहिरण्यसन्दृशोदशराज्ञोअमंहत ।
अधस्पदाइच्चैद्यस्यंकृष्टयंश्चर्मम्नाअभितोजनाः ॥ ३८ ॥

यः । मे । हिरण्यऽसंदृशः । दश । राज्ञः । अमंहत । अधःऽपदाः ।
इत् । चैद्यस्य । कृष्टयः । चर्मऽम्नाः । अभितः । जनाः ॥ ३८ ॥

यः कशुसंज्ञोराजा मे मत्यं हिरण्यसन्दृशः हिरण्यसंदर्शनान् हिरण्यसमानतेजस्कान् दशराज्ञः अमंहत परिचरणार्थं दत्तवान् दशसंख्याकान् राज्ञोयुद्धे पराजितान् गृहीत्वा दासत्वेन अस्मै दत्तवानित्यर्थः। ननु ईदृशानां बहुविधानां राज्ञां दाने एकः कथं शक्नुयादिति तत्राह कृष्टयः सर्वाः प्रजाः तस्य चैद्यस्य चेदिपुत्रस्य कशोः अधस्पदा इत् पादयोरधस्तादेव वर्तन्ते नकश्चिदपि तत्समानस्तदधिकोवा विद्यते । अभितः सर्वतोवर्तमानाजनाः चर्मम्नाः चर्ममयस्यकवचादेर्धारणे कृताभ्यासाः। यद्वा चर्माणि चरणसाधनान् पश्वादीनि वाहनानि तेषु मनन्त्यभ्यस्यन्तीति चर्मम्नाः म्नाअभ्यासे आतोमनिन्क्निविच् सर्वेमनुष्यास्तस्य भटाइत्यर्थः ॥ ३८ ॥

३८. जिन कशु राजा ने मेरी सेवा के लिए सोने के समान चमकनेवाले दस राजाओं को दिया था, उन कशु के पैरों के नीचे सारी प्रजा रहती है।

अथैकोनचत्वारिंशी—

माकिरेनापथागाद्येनेमेयन्तिचेदयः ।
अन्योनेत्सूरिरोहतेभूरिदावत्तरोजनः ॥ ३९ ॥ ८ ॥

माकिः । एना । पथा । गात् । येन । इमे । यन्ति । चेदयः । अन्यः ।
न । इत् । सूरिः । ओहते । भूरिदावत्ऽतरः । जनः ॥ ३९ ॥ ८ ॥

येन मार्गेण इमे चेदयः अस्य राज्ञः पितृपितामहादयोयन्ति गच्छन्ति एना अनेन पथा मार्गेण माकिर्गात् अन्योनगन्तुं शक्नोति अपिचास्माद्राज्ञः अन्यः भूरिदावत्तरः बहुदातृतमः सूरिर्विद्वान् सन् जनः नेव् नैव ओहते वहति स्तोतृभ्योधनं प्रापयति । यद्वा बहुदातृतमोयो-जनः कशुर्नाम अस्मादन्यः व्यत्ययेन प्रथमा अन्यं सूरिः स्तोता नैवोहते नैव याचते ओहि-र्याञ्चाकर्मा यथान्यं न याचते तथा बहुधनं प्रयच्छतीत्यर्थः ॥ ३९ ॥

३९. जिस मार्ग से ये चेदि-वंशीय जाते हैं, उससे दूसरा कोई नहीं जा सकता। कशु की अपेक्षा अधिकतर दान-परायण और विद्वान् व्यक्ति स्तोता के लिए दान नहीं करता।

इति अष्टमे मण्डले प्रथमोनुवाकः ॥ १ ॥

द्वितीयानुवाके सप्त सूक्तानि । तत्र महांइन्द्रइति अष्टाचत्वारिंशदृचं प्रथमं सूक्तं का-ण्वस्य वत्सस्यार्षं गायत्रं अन्त्यतृचवर्जमैन्द्रं तस्मिन्परशुनाम्नोराज्ञः पुत्रस्य तिरिन्दिरस्य दानं स्तूयते अतःसतृचस्तद्देवताकः । तथाचानुक्रान्तम्—महाँइन्द्रोष्टाचत्वारिंशद्वत्सस्तृचोन्त्य-स्तिरिन्दिरस्य पारशव्यस्य दानस्तुतिरिति । महाव्रते गायत्रतृचाशीतौ अन्त्यतृचवर्जमिदं सूक्तम् तथैवपञ्चमारण्यकेसूत्र्यते--महाँइन्द्रोयओजसेति तिस्रउत्तमाउद्धरतीति । प्रातःसवने सोमाति-रेके महानित्यादिकाः स्तोमातिशंसनार्थाः सूत्रितश्च—महाँइन्द्रोयओजसा अतोदेवाअवन्तुनइत्यै-न्द्रीभिर्वैष्णवीभिश्च स्तोममतिशस्येति । तृतीयेपर्याये होतुःशस्त्रे महाँइन्द्रइति तृचोनुरूपः सूत्रि-तं च महाँइन्द्रोयओजसासमस्यमन्यवेविशइतीति । अप्तोर्यामे ब्रह्मणोतिरिक्तोक्थे अयमेव तृ-चोनुरूपः सूत्र्यतेहि—महाँइन्द्रोयओजसानूनमश्विनोरिति । दर्शयागे महेन्द्रयाजिनः सान्नाय्य-स्य महानित्येषानुवाक्या सूत्र्यतेहि—महाँइन्द्रोयओजसाभुवस्त्वमिन्द्रब्रह्मणामहानिति ।

सैषा प्रथमा—

म॒हाँइन्द्रो॒यओज॑सापर्ज॒न्यो॑वृष्टि॒माँइ॑व ।
स्तोमै॑र्व॒त्सस्य॑वावृधे ॥ १ ॥

म॒हान् । इन्द्रः॑ । यः । ओज॑सा । प॒र्जन्यः॑ । वृ॒ष्टि॒मान्ऽइ॑व ।
स्तोमैः॑ । व॒त्सस्य॑ । वा॒वृ॒धे ॥ १ ॥

यइन्द्रः ओजसा बलेन महान् सर्वेभ्योधिकः कइव वृष्टिमानिव यथा वृष्ट्यायुक्तः पर्ज-न्यः रसानां प्रार्जयिता देवोमहान् सइवेत्यर्थः सइन्द्रः वत्सस्य पुत्रस्थानीयस्य स्तोतुः वत्स-नाम्नएवऋषेः स्तोमैः स्तोत्रैः ववृधे प्रवर्धते ॥ १ ॥

१. जो इन्द्र पर्जन्य के समान बल में महान् हैं, वह पुत्रतुल्य स्तोता के स्तोत्र-द्वारा वर्द्धित होते हैं।

अथ द्वितीया—

प्रजामृतस्य पिप्रतः प्रयद्भरन्त वह्नयः ।
विप्रा ऋतस्य वाहसा ॥ २ ॥

प्रऽजाम् । ऋतस्य । पिप्रतः । प्र । यत् । भरन्त ।
वह्नयः । विप्राः । ऋतस्य । धारया ॥ २ ॥

ऋतस्य यज्ञस्य सत्यस्य प्रजां प्रकर्षेण जातमिन्द्रं पिप्रतः नभसः प्रदेशान् पूरयन्तो वह्नयो वाहकाअश्वाः यद्यदा प्रभरन्त प्रकर्षेण भरन्ति वहन्ति तदा विप्रामेधाविनः ऋतस्य यज्ञस्य वाहसा प्रापकेण स्तोत्रेण तमिन्द्रं स्तुवन्तीति शेषः ॥ २ ॥

२. जिस समय आकाश को पूर्ण करनेवाले अश्व यज्ञ की प्रजा इन्द्र को वहन करते हैं, उस समय विद्वान् लोग यज्ञ के प्रापक स्तोत्र-द्वारा स्तुति करते हैं।

कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् ।
जामि ब्रुवत आयुधम् ॥ ३ ॥

कण्वाः । इन्द्रम् । यत् । अक्रत । स्तोमैः । यज्ञस्य ।
साधनम् । जामि । ब्रुवते । आयुधम् ॥ ३ ॥

कण्वाः स्तोतृनामैतत् स्तोतारः कण्वगोत्रावा इन्द्रं स्तोमैः स्तोत्रैः यज्ञस्य यागस्य साधनं साधयितारं निष्पादकं यद्यदा अक्रत अकृषत करोतेर्लुङि मन्त्रेघसेति च्लेर्लुक् तदानीं आयुधं शत्रूणां हिंसकं बाणादिकं जामि अतिरेकनामैतत् अतिरिक्तं अहितं प्रयोजनरहितं ब्रुवते कथयन्ति आयुधसाध्यस्य सर्वकार्यस्येन्द्रेण कृतत्वात् आयुधं निष्प्रयोजनमित्यर्थः । यद्वा आयुधमायोधनशीलमिन्द्रं जामि जामिं भ्रातरं ब्रुवते वदन्ति सर्वकार्येषु भ्रातृवद्वर्ततइत्यर्थः ॥३॥

३. कण्वों ने स्तोत्र-द्वारा इन्द्र को यज्ञ-साधक बनाया है; इसी लिए लोग इन्द्र को भ्राता कहते हैं।

तृतीये पर्याये होतुः शस्त्रे समस्यमन्यवइत्याद्याद्विचत्वारिंशदृचः सूत्र्यतेहि—समस्यमन्यवेविशइति द्विचत्वारिंशद्विश्वजितइति ।

तत्र प्रथमा सूक्ते चतुर्थी—

समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।
समुद्रायेव सिन्धवः ॥ ४ ॥

सम् । अ॒स्य॒ । म॒न्यवे॑ । विशः॑ । विश्वाः॑ । न॒म॒न्त॒ ।
कृ॒ष्टयः॑ । स॒मु॒द्राय॑ऽइव । सिन्ध॑वः ॥ ४ ॥

विशोविशन्त्यः विश्वाः सर्वाः कृष्टयः प्रजाः अस्येन्द्रस्य मन्यवे क्रोधाय यद्वा मन्युर्मननसाधनं स्तोत्रं तदर्थं सन्नमन्त सम्यक्स्वतएव नमन्ति नमतेः कर्मकर्तरि छान्दसोलङ् नदुहस्नुनमामितियकूचिणोः प्रतिषेधः प्रह्वीभवन्ति । तत्रदृष्टान्तः—समुद्रायेव यथा समुद्रं अब्धिं प्रति सिन्धवः स्यन्दनशीलानद्यः स्वयमेव नमन्ते तद्वत् ॥ ४ ॥

४. जैसे नदियाँ समुद्र को प्रणाम करती हैं, वैसे ही समस्त मानव-प्रजा इन्द्र के क्रोध के भय से इन्द्र को स्वयं प्रणाम करती है।

ओज॒स्तद॑स्यतित्विषउ॒भेयत्स॒मव॑र्तयत् ।
इन्द्र॒श्चर्मे॑वरोद॑सी ॥ ५ ॥ ९ ॥

ओजः॑ । तत् । अ॒स्य॒ । ति॒त्वि॒षे॒ । उ॒भे इति॑ । यत् ।
स॒म्ऽअव॑र्तयत् । इन्द्रः॑ । चर्म॑ऽइव । रोद॑सी॒ इति॑ ॥ ५ ॥ ९ ॥

अस्येन्द्रस्य तदोजोबलं तित्विषे दिदीपे त्विष दीप्तौ यत् येनौजसा अयमिन्द्रः उभे रोदसी द्यावापृथिव्यौ चर्मेव समवर्तयत् सम्यग्वर्तयति यथा कश्चित्किश्चिच्चर्म कदाचिद्विस्तारयति कदाचित्संकोचयति एवं तदधीने अभूतामित्यर्थः ॥ ५ ॥

५. जिस बल के द्वारा इन्द्र द्यावा-पृथिवी को चमड़े की तरह भली भाँति रखते हैं, वह बल दीप्त हुआ था।

॥ इति पञ्चमस्याष्टमे नवमोवर्गः ॥ ९ ॥

अथ षष्ठी—

विचि॒द्वृत्रस्य॒दोध॑तो॒वज्रे॑णश॒तप॑र्वणा ।
शिरो॑बिभेदवृ॒ष्णिना॑ ॥ ६ ॥

वि । चि॒त् । वृ॒त्रस्य॑ । दोध॑तः । वज्रे॑ण । श॒तऽप॑र्वणा ।
शिरः॑ । बि॒भे॒द॒ । वृ॒ष्णिना॑ ॥ ६ ॥

चिच्छब्दोप्यर्थे सच भिन्नक्रमः वृत्रस्यचित् आवरकस्यापि दोधतः अत्यर्थं जगत्कम्पयतोऽसुरस्य शिरः मूर्धानं शतपर्वणा शतसंख्यानि पर्वाणि धारायस्य तादृशेन वृष्णिना वीर्यवता वज्रेण इन्द्रोविबिभेद विचिच्छेद ॥ ६ ॥

६. इन्द्र ने काँपते हुए वृत्र के मस्तक को सौ धारोंवाले और पराक्रमशाली वज्र के द्वारा छेद डाला।

आभिप्लविकेषूक्थेषु तृतीयसवने प्रशास्तुः शस्त्रे इमाअभीतितृचो वैकल्पिकोनुरूपः सूत्रितश्च—इमाअभिप्रणोनुमइत्यथब्राह्मणाच्छंसिनइति।

तत्र प्रथमा सूक्ते सप्तमी—

इमाअभिप्रणोनुमोविपामग्रेषुधीतयः।
अग्नेःशोचिर्नदिद्युतः॥ ७॥

इमाः। अभि। प्र। नोनुमः। विपाम्। अग्रेषु।
धीतयः। अग्नेः। शोचिः। न। दिद्युतः॥ ७॥

विपां स्तोतॄणामग्रेषु पुरस्तात् इमा अस्मदीयाः धीतयोधियः स्तोत्राणि अभिप्रणोनुमः आभिमुख्येन पुनःपुनः प्रवदामः। णुशब्दे। कीदृशीः स्तुतीः अग्नेः शोचिर्न दीप्तिरिव दिद्युतोदीप्यमाना वेदरूपाः॥ ७॥

७. स्तोताओं के आगे हम लोग, अग्नि की दीप्ति की तरह, दीप्यमान इन स्तोत्रों को बार-बार कहेंगे।

गुहासतीरुपत्मनाप्रयच्छोचन्तधीतयः।
कण्वाऋतस्यधारया॥ ८॥

गुहा। सतीः। उप। त्मना। प्र। यत्। शोचन्त।
धीतयः। कण्वाः। ऋतस्य। धारया॥ ८॥

गुहा गुहायां सतीः सत्योभवंत्यः यत् याः धीतयः स्तुतयः कर्माणि वा त्मना आत्मना स्वेनेन्द्रेणोपगम्यमानाः प्रशोचन्त प्रादीप्यन्त यद्वा आत्मना स्वतएवेन्द्रमुपगच्छन्त्यः प्रदीप्यन्ते ताः स्तुतीः कण्वाः कण्वगोत्राऋषयः ऋतस्योदकस्य सोमात्मकस्य धारया सहिताः कुर्वन्तीति शेषः॥ ८॥

८. गुहा में वर्तमान जो स्तुतियाँ स्वयमेव इन्द्र के पास जाकर दीप्त होती हैं, उन्हें कण्व लोग सोम की धारा से युक्त करें।

अथ नवमी—

प्रतमिन्द्रनशीमहिरयिंगोमन्तमश्विनम्।
प्रब्रह्मपूर्वचित्तये॥ ९॥

प्र । तम् । इन्द्र । नशीमहि । रयिम् । गोऽमन्तम् ।
अश्विनम् । प्र । ब्रह्म । पूर्वऽचित्तये ॥ ९ ॥

हे इन्द्र गोमन्तं गोभिर्युक्तं अश्विनं अश्वैरुपेतं तं प्रसिद्धं रयिं त्वदीयं धनं प्रनशीमहि प्राप्नुयाम तथा ब्रह्म परिवृढमन्नं च पूर्वचित्तयेऽन्येभ्यः पूर्वमेव ज्ञानाय प्राप्नुयाम ॥ ९ ॥

९. इन्द्र, हम गौ और अश्व से युक्त धन प्राप्त करें और दूसरों के पहले ही, ज्ञान के लिए, अन्न प्राप्त करें।

अहमिद्धिपितुष्परिमेधामृतस्यंजग्रभं ।
अहंसूर्यइवाजनि ॥ १० ॥ १० ॥

अहम् । इत् । हि । पितुः । परि । मेधाम् । ऋतस्य ।
जग्रभ । अहम् । सूर्यःऽइव । अजनि ॥ १० ॥ १० ॥

पितुः पालकस्य ऋतस्य सत्यस्यावितथस्येंद्रस्य मेधामनुग्रहात्मिकां बुद्धिं अहमित् अहमेव परिजग्रभ परिगृहीतवानस्मि नान्यः । हि यस्मादेवं तस्मादहं सूर्यइवाजनि सूर्योयथा प्रकाशमानः सन् प्रादुर्भवति तथा अजनिषं प्रादुरभूवम् ॥ १० ॥

१०. मैंने ही पिता और सत्य रूप इन्द्र की कृपा प्राप्त की है। मैं सूर्य के समान प्रकाशित हुआ हूँ।

॥ इति पञ्चमस्याष्टमे दशमोवर्गः ॥ १० ॥

अथैकादशी—

अहंप्रत्नेनमन्मनागिरःशुंभामिकण्ववत् ।
येनेन्द्रःशुष्ममिद्दधे ॥ ११ ॥

अहम् । प्रत्नेन । मन्मना । गिरः । शुंभामि ।
कण्वऽवत् । येन । इन्द्रः । शुष्मम् । इत् । दधे ॥ ११ ॥

कण्ववत् मम जनकः कण्वइवाहं प्रत्नेन नित्येन वेदरूपेण मन्मना मननसाधनेनेन्द्रविषयस्तोत्रेण गिरोवाचः शुंभामि अलंकरोमि यदाहि इन्द्रविषये प्रयुज्यंते तदानीं यथार्थत्वात् वाचोऽलंकृताभवन्ति येन खलु स्तोत्रेण इन्द्रः शुष्मं शत्रूणां शोषकं बलं दधेइत् धत्तएव धारयत्येव यत्स्तोत्रमिन्द्रे ईदृशं बलमवश्यं जनयति तेन मन्मनेत्यर्थः ॥ ११ ॥

११. कण्व की तरह मैं नित्य स्तोत्र-द्वारा वाक्यों को अलंकृत करता हूँ। उस स्तोत्र-द्वारा इन्द्र बल प्राप्त करते हैं।

अथ द्वादशी–

येत्वामिन्द्रनतुष्टुवुर्ऋषयोयेचतुष्टुवुः ।
ममेद्वर्धस्वसुष्टुतः ॥ १२ ॥

ये । त्वाम् । इन्द्र । न । तुस्तुवुः । ऋषयः । ये । च ।
तुस्तुवुः । मम । इत् । वर्धस्व । सुऽस्तुतः ॥ १२ ॥

हे इन्द्र ये जनाः त्वां न तुष्टुवुः न स्तुवन्ति ये च ऋषयोमन्त्राणां द्रष्टारोजनाः तुष्टुवुः त्वां स्तुवन्ति उभयेषां मध्ये ममेद ममैव स्तोत्रेण सुष्टुतः शोभनं स्तुतः सन् वर्धस्व वर्धयस्व वृद्धोभव ॥ १२ ॥

१२. इन्द्र, जोतुम्हारी स्तुति नहीं करते और जो ऋषि (मन्त्र-द्रष्टा) तुम्हारी स्तुति करते हैं, इन दोनों के बीच मेरी स्तुति भली भाँति स्तुत होकर वृद्धि प्राप्त करे।

यदस्यमन्युरध्वनीद्विवृत्रंपर्वशोरुजन् ।
अपःसमुद्रमैरयत् ॥ १३ ॥

यत् । अस्य । मन्युः । अध्वनीत् । वि । वृत्रम् ।
पर्वऽशः । रुजन् । अपः । समुद्रम् । ऐरयत् ॥ १३ ॥

अस्येन्द्रस्य मन्युः क्रोधः वृत्रं आवृत्य तिष्ठन्तमसुरं मेघं वा पर्वशः पर्वणि पर्वणि परुषि परुषि विरुजन् विभञ्जन् यद्यदा अध्वनीत् स्तनयित्नुलक्षणं शब्दमकरोत् तदानीं समुद्रं समुन्दनीयं उदधिं प्रति अपोवृष्ट्युदकानि ऐरयत् सइन्द्रः प्रेरितवान् ॥ १३ ॥

१३. जिस समय इन्द्र के क्रोध ने वृत्र को टुकड़े-टुकड़े करते हुए शब्द किया था, उस समय इन्द्र ने समुद्र के प्रति वृष्टिजल भेजा था।

अथ चतुर्दशी–

निशुष्णइन्द्रधर्णसिंवज्रंजघन्थदस्यवि ।
वृषात्युग्रशृण्विषे ॥ १४ ॥

नि । शुष्णे । इन्द्र । धर्णसिम् । वज्रम् । जघन्थ ।
दस्यवि । वृषा । हि । उग्र । शृण्विषे ॥ १४ ॥

हे इन्द्र शुष्णे शोषके एतत्संज्ञे दस्यवि उपक्षपयितर्यसुरे धर्णसिं धारयितव्यं वज्रं कुलिशं त्वं निजघन्थ निहतवानसि वज्रेण तमसुरं न्यवधीरित्यर्थः। हे उग्रोद्गूर्णबलेन्द्र वृषा कामानां वर्षितेति हि श्रृण्विषे श्रूयसे अतोस्मदपेक्षितं धनं देहीति शेषः ॥ १४ ॥

१४. इन्द्र, तुमने दस्यु शुष्ण के प्रति धारण करने योग्य वज्र का आघात किया था। उग्र इन्द्र, तुम अभीष्टवर्षी हो।

नद्यावइन्द्रमोजसानान्तरिक्षाणिवज्रिणम्।
नविव्यचन्तभूमयः ॥ १५ ॥ ११ ॥

न। द्यावः। इन्द्रम्। ओजसा। न। अन्तरिक्षाणि।
वज्रिणम्। न। विव्यचन्त। भूमयः ॥ १५ ॥ ११ ॥

द्यावोद्युलोकाः इममिन्द्रं ओजसा बलेन न विव्यचन्त न व्याप्नुवन्ति द्युलोकेभ्योप्यस्य बलमधिकमित्यर्थः। तथा अन्तरिक्षाणि अन्तराक्षान्तानि द्यावापृथिव्योर्मध्ये वर्तमानाः लोकाः वज्रिणं वज्रवन्तमिन्द्रं न व्याप्नुवन्ति तथा भूमयो भूलोकाश्च तमिन्द्रं न व्याप्नुवन्ति त्रयोवाइमे-त्रिवृतोलोकाइति ब्राह्मणादेकैकस्यलोकस्य त्रित्वम्। तिस्रोभूमीरित्यादि निगमाच्च ॥ १५ ॥

१५. द्युलोक इन्द्र को बल-द्वारा व्याप्त नहीं कर सकते, अन्तरिक्ष वज्रधर इन्द्र को नहीं व्याप्त कर सकते और भूलोक भी इन्द्र को नहीं व्याप्त कर सकते। इति पञ्चमस्याष्टमे एकादशोवर्गः ॥ ११ ॥

अथ षोडशी–

यस्तइन्द्रमहीरपस्तभूयमानआशयत्।
नितंपद्यासुशिश्नथः ॥ १६ ॥

यः। ते। इन्द्र। महीः। अपः। स्तभुःऽयमानः।
आ। अशयत्। नि। तम्। पद्यासु। शिश्नथः ॥ १६ ॥

हे इन्द्र ते तव संबन्धिनीः महीर्महतीः अपः आन्तरिक्ष्याण्युदकानि योवृत्रः स्तभूयमानः स्तम्भयन् यथा अधोनपतन्ति तथाकुर्वन् आशयत् आवृत्याशेत तमसुरं पद्यासु गमनशीलास्वप्सु मध्ये निशिश्नथः न्यहिंसीः श्नथिर्हिंसार्थः वज्रेण तमसुरं हत्वा नदीषु पातितवानित्यर्थः ॥ १६ ॥

१६. इन्द्र, जिस वृत्र ने तुम्हारे महान् जल को अन्तरिक्ष में रोककर व्याप्त कर रक्खा था, उस वृत्र को तुमने गति-परायण जल के बीच मारा था।

---

१ ऐ० ब्रा० २. १७। २ ऋ० सं० २. ७. ७।

अथ सप्तदशी—

यइमेरोदसीमहीसंमीचीसमजंग्रभीत्।
तमोभिरिन्द्रतंगुहः॥ १७॥

यः। इमे इति। रोदसी इति। मही इति। समीची इति सम्ऽईची।
सम्ऽअजंग्रभीत्। तमःऽभिः। इन्द्र। तम्। गुहः॥ १७॥

योवृत्रः मही महत्यौ विस्तीर्णे समीची सङ्गते इमे प्रत्यक्षतउपलभ्यमाने रोदसी द्यावापृथिव्यौ समजग्रभीत सम्यगग्रहीत् आवृणोदित्यर्थः तमसुरं हे इन्द्र त्वं तमोभिरन्धकारैः गुहः संवृतमकरोः अनाद्यनन्तं मरणलक्षणं तमः प्रावेशयइत्यर्थः॥ १७॥

१७. जिस वृत्र ने महती और सङ्गता द्यावापृथिवी को ढक रक्खा था, इन्द्र, उसे तुमने अनादि और अनन्त मरण-लक्षण अन्धकार में घुसा दिया।

अथाष्टादशी—

यइन्द्रयतंयस्त्वाभृगंवोयेचंतुष्टुवुः।
ममेदुंग्रश्रुधीहवंम्॥ १८॥

ये। इन्द्र। यतंयः। त्वा। भृगंवः। ये। च।
तुस्तुवुः। मम। इत्। उग्र। श्रुधि। हवंम्॥ १८॥

हे इन्द्र ये यतयः नियताः अंगिरसः त्वा त्वां तुष्टुवुः ये च भृगवोभृगुगोत्रास्त्वां तुष्टुवुः स्तुवन्ति तेषु मध्ये ममेत् ममैव हवं स्तोत्रं हे उग्र ओजस्विन्निन्द्र श्रुधि शृणु॥ १८॥

१८. ओजस्वी इन्द्र, जो यति अङ्गिरोगण तुम्हारी स्तुति करते हैं और जो भृगु लोग तुम्हारी स्तुति करते हैं, उन सबमें मेरा स्तोत्र सुनो।

अथैकोनविंशी—

इमास्तंइन्द्रपृश्नयोघृतंदुंहतआशिरंम्।
एनामृतस्यंपिप्युषीः॥ १९॥

इमाः। ते। इन्द्र। पृश्नयः। घृतम्। दुहते। आऽशिरंम्।
एनाम्। ऋतस्यं। पिप्युषीः॥ १९॥

हे इन्द्र ते त्वदीयाइमाः पृश्नयः माष्टवर्णागावः घृतं क्षरणशीलं एनां एनं आशिरं आश्रयणं पयः दुहते दुहन्ति क्षारयन्ति । कीदृश्यः पृश्नयः ऋतस्य सत्यस्य अवितथस्येन्द्रस्य यज्ञस्य वा पिप्युषीः वर्धयित्र्यः ॥ १९ ॥

१९. इन्द्र ये यज्ञ-वर्द्धिका गायें घी और दूध देती हैं।

याइन्द्रप्रस्वंस्त्वासागर्भमचंक्रिरन् ।
परिधर्मेवसूर्यम् ॥ २० ॥ १२ ॥

याः । इन्द्र । प्रऽस्वः । त्वा । आसा । गर्भम् ।
अचंक्रिरन् । परि । धर्मऽइव । सूर्यम् ॥ २० ॥ १२ ॥

हे इन्द्र प्रस्वः प्रसुवते गर्भं विमुञ्चन्तीति प्रस्वः सूतेः सत्सूद्विषेतिक्विप् ईदृश्योयागावः आसा आस्येन त्वा त्वदीयं वीर्यं वृत्रवधानन्तरं ओषध्यादिरूपेण परिणतं भक्षयित्वा गर्भमचक्रिरन् अकुर्वन् त्वदीयं वीर्यमन्तरधारयन् तत्र दृष्टान्तः—सूर्यं परितः सूर्यमण्डलस्योपरि धर्मेव धारकं पोषकमुदकं यथा रश्मयः गर्भरूपेण बिभ्रति तद्वत् । यद्वा परिधर्मेव परितोधारयितारं सूर्यमिव यथा सूर्यः परितं सर्वं जगद्धत्ते तद्वत् कृत्स्नस्य जगतोधारकमिन्द्रस्य वीर्यमित्यर्थः । ओषध्यादिरूपेण परिणतस्येन्द्रवीर्यस्य गोभिरात्मनि धारणं । इन्द्रस्य वृत्रं जघ्नुषइत्यारभ्य तैत्तिरीयके विस्पष्टमाम्नातम्—तत्पशवओषधीभ्योध्यात्मन् समनयन् तत्प्रत्यदुहन्निति । पयोरूपेण परिणतम् तद्वीर्यं इमागावः आशिरार्थं दुहतइति पूर्वस्याम्नृच्यन्वयः ॥ २० ॥

२०. इन्द्र, इन प्रसव करनेवाली गायों ने मुख से तुम्हारे द्वारा प्रदत्त अन्न का भक्षण करके सूर्य के चारों ओर जल की तरह गर्भ धारण किया था।		॥ इति पञ्चमस्याष्टमे द्वादशोवर्गः ॥ १२ ॥

वाजपेयेतिरिक्तोक्थे त्वामिच्छवसस्पतइत्येषा सूत्रितञ्च—त्वामिच्छवसस्पतेतंप्रत्नथेति ।

सैषैकविंशी—

त्वामिच्छंवसस्पतेकण्वाउक्थेनवावृधुः ।
त्वांसुतासइन्दंवः ॥ २१ ॥

---

१ तै० सं० २. ५. ३. ।

त्वाम् । इत् । शवसः । पते । कण्वाः । उक्थेन ।
ववृधुः । त्वाम् । सुतासः । इन्दवः ॥ २१ ॥

हे शवसस्पते बलस्य स्वामिन्निन्द्र त्वामित् त्वामेव कण्वाःस्तोतारः कण्वगोत्रावा ऋषयः उक्थेन शस्त्रेण ववृधुः वर्धयन्ति सुतासोध्वर्युभिरभिषुताः इन्दवः सोमाश्च त्वामेव वर्धयन्ति ॥ २१ ॥

२१. बलाधीश इन्द्र, उक्थ-द्वारा कण्व लोग तुम्हें वर्द्धित करते हैं। अभिषुत सोमों ने तुम्हें वर्द्धित किया था।

तवेदिन्द्रप्रणीतिषूतप्रशस्तिरद्रिवः ।
यज्ञोवितन्तसाय्यः ॥ २२ ॥

तव । इत् । इन्द्र । प्रऽनीतिषु । उत ।
प्रऽशस्तिः । अद्रिऽवः । यज्ञः । वितन्तसाय्यः ॥ २२ ॥

उतापि च हे अद्रिवः आदृणात्यनेनेत्यद्रिर्वज्रः तद्वन्निन्द्र तवेत् तवैव प्रणीतिषु प्रकृष्टेषु नयनेषु धनप्रदानेषु सत्सु प्रशस्तिः प्रकृष्टा स्तुतिः क्रियते। तथा वितन्तसाय्यः विस्तृततमः तनोतेश्छान्दसमेतद्रूपम् यद्वा तंतसिः कंड्वादिर्वृध्यर्थः तस्मादौणादिकआय्यप्रत्ययः प्रवृद्धोयज्ञश्चतवैव क्रियते ॥ २२ ॥

२२. वज्रवान् इन्द्र, तुम्हारे पथ-प्रदर्शक बनने पर उत्तम स्तुति और प्रवृद्ध यज्ञ किया जाता है।

अथ त्रयोविंशी—

आनइन्द्रमहीमिषंपुरंनदर्षिगोमतीम् ।
उतप्रजांसुवीर्यम् ॥ २३ ॥

आ । नः । इन्द्र । महीम् । इषम् । पुरम् । न ।
दर्षि । गोऽमतीम् । उत । प्रऽजाम् । सुऽवीर्यम् ॥ २३ ॥

हे इन्द्र नोस्मभ्यं अस्मदर्थं महीं महतीं गोमतीं गोभिर्युक्तां इषमन्नं आदर्षि आद्रियस्व दातुं कामयस्व नशब्दश्चार्थे पुरं न पालनं पूःपालनं रक्षणं चास्मभ्यं कर्तुमाद्रियस्व। उतापिच सुवीर्यं शोभनवीर्योपेतां प्रजां संततिं दातुं कामयस्व ॥ २३ ॥

२३. इन्द्र, हमारे लिए महान् और गो-युक्त अन्न की रक्षा करने और वीर्यवान् पुत्र आदि दान करने की इच्छा करो।

अथ चतुर्विंशी–

उतत्यदाश्वश्व्यंयदिन्द्रनाहुषीष्वा ।
अग्रेविक्षुप्रदीदयत् ॥ २४ ॥

उत । त्यत् । आशुऽअश्व्यम् । यत् । इन्द्र ।
नाहुषीषु । आ । अग्रे । विक्षु । प्रऽदीदयत् ॥ २४ ॥

हे इन्द्र नाहुषीषु नहुषाइति मनुष्यनाम तत्सम्बन्धिनीषु यद्वा नाहुषोनाम कश्चिद्राजा तदीयासु विक्षु प्रजासु अग्रे पुरस्तात् यत् आश्वश्व्यं शीघ्रगाम्यश्वसंघातमकं बलं प्रदीदयत् प्रादीप्यत उतापिच त्यत् तदपि अस्मभ्यं देहीतिशेषः । आकारः पूरकः ॥ २४ ॥

२४. इन्द्र, नहुष राजा की प्रजाओं के सामने शीघ्रगामी और अश्व से युक्त जो बल तुमने प्रदान किया है, हमें उसे दो।

अभिव्रजंनतत्निषेसूरउपाकचक्षसम् ।
यदिन्द्रमृळयासिनः ॥ २५ ॥ १३ ॥

अभि । व्रजम् । न । तत्निषे । सूरः । उपाकऽचक्षसम् ।
यत् । इन्द्र । मृळयासि । नः ॥ २५ ॥ १३ ॥

न सम्प्रत्यर्थे सम्प्रति इदानीं हे सूरः प्राज्ञस्त्वं व्रजं गोष्ठं उपाकचक्षसं उपाकइत्यन्तिकनाम अन्तिके द्रष्टव्यं अभितत्निषे अभितनोषि अभिविस्तारयसि गोभिः पूर्णं करोषीत्यर्थः । तनोतेश्छान्दसे लिटि तनिपत्योश्छन्दसीत्युपधालोपः यद्यदा हे इन्द्र त्वं नोस्मान् मृळयासि मृळयसि सुखयसि ॥ २५ ॥

२५. इन्द्र, तुम प्राज्ञ हो। इस समय निकट से दर्शनीय गोशाला को पूर्ण करो और हमें सुखी करो।

॥ इति पञ्चमस्याष्टमे त्रयोदशोवर्गः ॥ १३ ॥

अथ षड्विंशी–

यदङ्गतविषीयसइन्द्रप्रराजसिक्षितीः । महाँअपारओजसा ॥ २६ ॥

यत् । अङ्ग । तविषीऽयसे । इन्द्र । प्रऽराजसि । क्षितीः ।
महान् । अपारः । ओजसा ॥ २६ ॥

अङ्गेत्यभिमुखीकरणे हे इन्द्र यत् यस्त्वं तविषीयसे तविषीति बलनाम बलमिवाचरसि हस्त्यश्वरथादिकं बलं यथा सर्वं शत्रुजातं भनक्ति तद्वत् त्वमसहायएव सन् सर्वमेव शत्रुजातं मारयसीत्यर्थः यश्च त्वं क्षितीः मनुष्यनामैतत् मनुष्यान् प्रराजसि प्रकर्षेणेशिषे राजतिरैश्वर्यकर्मा अस्यापि यद्वृत्तयोगान्ननिघातः सइन्द्रः ओजसा बलेन महान् सर्वेभ्योधिकः अतएव अपारः पाररहितः केनाप्यवसानं प्रापयितुमशक्यइत्यर्थः ॥ २६ ॥

२६. इन्द्र, बल के समान आचरण करो। मनुष्यों के राजा बनो। बल-द्वारा तुम महान् और अपराजेय हो।

तंत्वाहविष्मतीर्विशउपब्रुवतऊतये।
उरुज्रयंसमिन्दुभिः ॥ २७ ॥

तम्। त्वा। हविष्मतीः। विशः। उप। ब्रुवते। ऊतये।
उरुऽज्रयसम्। इन्दुऽभिः ॥ २७ ॥

हे इन्द्र तं पूर्वोक्तगुणं उरुज्रयसं विस्तीर्णं व्यापिनं त्वा त्वां हविष्मतीर्हविर्भिश्चरुपुरोडाशादिभिर्युक्ताः विशः प्रजाः उपब्रुवते उपेत्यस्तुवन्ति किमर्थं इन्दुभिः सोमैः ऊतये तर्पणाय। यद्वा इन्दुभिः सोमैरुरुज्रयसं विस्तीर्णजवं ऊतये रक्षणाय स्तुवन्ति ॥ २७ ॥

२७. इन्द्र, तुम बहुत व्यापक हो। हविवाले लोग, सोम-द्वारा तुम्हें तृप्त करने के लिए, तुम्हारे पास आकर, स्तुति करते हैं।

अथाष्टाविंशी—

उपह्वरेगिरीणांसङ्गथेचनदीनाम्।
धियाविप्रोअजायत ॥ २८ ॥

उपऽह्वरे। गिरीणाम्। सम्ऽगथे। च। नदीनाम्। धिया।
विप्रः। अजायत ॥ २८ ॥

गिरीणां पर्वतानां उपह्वरे उपह्वर्तव्ये नदीनां सरितां संगथे संगमने च ईदृग्विधे देशे क्रियमाणया धिया यागक्रियया स्तुत्या वा विप्रोमेधावी इन्द्रः अजायत प्रादुर्भवति अतोवयमपि तादृशेदेशे यजामः स्तुमोवेतिभावः। गिरीणामित्यत्र नामन्यतरस्यामिति नामउदात्तत्वम् ॥ २८ ॥

२८. पर्वतों के प्रान्त में, नदियों के सङ्गम-स्थल पर, यज्ञ-क्रिया करने पर मेधावी इन्द्र जन्म ग्रहण करते हैं।

अथैकोनत्रिंशी—

अतःसमुद्रमुद्वतश्चिकित्वाँअवपश्यति।
यतोविपानएजति ॥ २९ ॥

अतः । सुमुद्रम् । उत्ऽवतः । चिकित्वान् । अव । पश्यति ।
यतः । विपानः । एजति ॥ २९ ॥

यतोयस्मिन् द्युलोके विपानोव्याप्नुवन् विशिष्टपानयुक्तोवा इन्द्रएजति चेष्टते उद्वतः उद्वतान् उपसर्गाच्छन्दसिधात्वर्थइतिवतिः अतोस्माद् द्युलोकाद् चिकित्वान् जानन् सइन्द्रः समुद्रं समुन्दनशीलं यजमानैर्दीयमानं सोमं अवपश्यति अवाङ्मुखःसन् ईक्षते । यद्वा सूर्यात्मनेन्द्रः स्तूयते यस्मिन्नभसि विपानोव्याप्नुवन् सूर्यात्मा इन्द्रः एजति वर्तते चिकित्वान् जानन् विद्वान्वा सः इन्द्रः उद्वतः उद्वतात् अतोस्मादन्तरिक्षात्समुद्रम् उपलक्षणमेतद् समुद्रोपलक्षितं सर्वं जगदवपश्यति अवाङ्मुखं प्रसृतैः किरणैः प्रकाशयति ॥ २९ ॥

२९. सर्वव्यापक इन्द्र, जो संसार में विहार करते हैं, वही विद्वान् इन्द्र ऊद्ध्वं-लोक से निम्न मुख से समुद्र को देखते हैं।

आदित्प्रत्नस्यरेतसोज्योतिष्पश्यन्तिवासरम् ।
परोयदिध्यतेदिवा ॥ ३० ॥ १४ ॥

आत् । इत् । प्रत्नस्य । रेतसः । ज्योतिः । पश्यन्ति । वासरम् ।
परः । यत् । इध्यते । दिवा ॥ ३० ॥ १४ ॥

परोदिवा दिवःपरस्ताद् द्युलोकस्योपरि यद्यदा अयमिन्द्रः सूर्यात्मना इध्यते दीप्यते आदिद् अनन्तरमेव प्रत्नस्य चिरन्तनस्य रेतसः गन्तुः री गतिरेषणयोः अस्माद् स्रुरीभ्यांतुट्चेत्यसुन् तुडागमश्च । यद्वा रेतइत्युदकनाम रेतस्विनः उदकवतः सामर्थ्यान्मत्वर्थोलक्ष्यते ईदृशस्येन्द्रस्य सूर्यात्मनः वासरं निवासकं वासरस्य निवासस्य हेतुभूतं वा ज्योतिर्द्योतमानं तेजः पश्यन्ति सर्वेजनाः । यद्वा वासरमित्यत्यन्तसंयोगे द्वितीया कृत्स्नमहः उदयप्रभृत्यस्तमयनं यावद् ज्योतिष्पश्यन्तीत्यर्थः इसुसोःसामर्थ्यइति विसर्जनीयस्यषत्वम् ॥ ३० ॥

३०. द्युलोक के ऊपर जिस समय इन्द्र दीप्ति प्राप्त करते हैं, उसी समय प्राचीन जल-दाता इन्द्र की निवासप्रद ज्योति का लोग दर्शन करते हैं।

॥ इति पञ्चमस्याष्टमे चतुर्दशोवर्गः ॥ १४ ॥

अथैकत्रिंशी—

कण्वासइन्द्रतेमतिंविश्वेवर्धन्तिपौंस्यम् ।
उतोशविष्ठवृष्ण्यम् ॥ ३१ ॥

कण्वांसः । इन्द्र । ते । मतिम् । विश्वे । वर्धन्ति । पौंस्यम् ।
उतो इति । शविष्ठ । वृष्ण्यम् ॥ ३१ ॥

हे इन्द्र ते त्वदीयां मतिं बुद्धिं पौंस्यं बलनामैतत् बलं च विश्वे सर्वे कण्वासः कण्वाः स्तोतारः कण्वगोत्रावा ऋषयः वर्धन्ति वर्धयन्ति छन्दस्युभयथेति शप् आर्धधातुकत्वात् णेरनिटीति णिलोपः । उतो अपिच हे शविष्ठ शवस्वितम बलवत्तम विन्मतोर्लुक् टेरिति टिलोपः ईदृशेन्द्र वृष्ण्यं त्वदीयं वीर्यं बलकर्म च कण्वासोवर्धयन्तीत्येव ॥ ३१ ॥

३१. इन्द्र, समस्त कण्वगण तुम्हारी वुद्धि और बल को बढ़ाते हैं। हे श्रेष्ठ बली, वे तुम्हारे वीर-कर्म का भी वर्द्धन करते हैं।

इमांमइन्द्रसुष्टुतिंजुषस्वप्रसुमामव ।
उतप्रवर्धयामतिम् ॥ ३२ ॥

इमाम् । मे । इन्द्र । सुऽस्तुतिम् । जुषस्व । प्र । सु । माम् ।
अव । उत । प्र । वर्धय । मतिम् ॥ ३२ ॥

हेइन्द्र इमां पुरोवर्तिनीं मे मदीयां सुष्टुतिं शोभनां स्तुतिं जुषस्व सेवस्व । सेवित्वा च स्तोतारं मां सुशोभनं प्राव प्रकर्षेण रक्ष । उतापिच मतिं अस्मदीयां बुद्धिं प्रवर्धय प्रवृद्धां कुरु । यथा बह्वर्थदर्शिनी भवति तथा कुर्वित्यर्थः ॥ ३२ ॥

३२. इन्द्र, तुम हमारी इस सुन्दर स्तुति की सेवा करो। हमें भली भाँति बचाओ। हमारी वुद्धि को प्रवर्द्धित करो।

उतब्रह्मण्यावयंतुभ्यंप्रवृद्धवज्रिवः ।
विप्राअतक्ष्मजीवसे ॥ ३३ ॥

उत । ब्रह्मण्या । वयम् । तुभ्यम् । प्रऽवृद्ध । वज्रिऽवः ।
विप्राः । अतक्ष्म । जीवसे ॥ ३३ ॥

उतापिच हे प्रवृद्ध स्तुतिभिः प्रकृष्टां वृद्धिं प्राप्त हे वज्रिवः वज्रवन्निन्द्र एकोमत्वर्थीयोनुवादः यद्वा वज्रोस्यास्तीति वज्रहस्तः तद्वन् छन्दसीरइति मतुपोवत्वम् मतुवसोरुरिति नकारस्यरुत्वम् ईदृशेन्द्र तुभ्यं त्वदर्थं विप्रामेधाविनोवयं ब्रह्मण्या ब्रह्माणि स्तोत्राणि हविर्लक्षणान्यन्नानिवा सुपांसुलुगिति सुपोयाजादेशः जीवसे जीवनार्थं अतक्ष्म अकार्ष्म तक्षू त्वक्षू तनूकरणे लङि छान्दसःशपोलुक् ॥ ३३ ॥

३३. प्रवृद्ध और वज्रधर इन्द्र, हम मेधावी हैं। जीवन के निमित्त तुम्हारे लिए हमने स्तोत्र किया था।

अथ चतुस्त्रिंशी—

अभिकण्वाअनूषतापोनप्रवतायतीः ।
इन्द्रंवनन्वतीमतिः ॥ ३४ ॥

अभि । कण्वाः । अनूषत । आपः । न । प्रऽवता ।
यतीः । इन्द्रम् । वनन्ऽवती । मतिः ॥ ३४ ॥

कण्वाः कण्वगोत्राऋषयः अभ्यनूषत इन्द्रम् अभिष्टुवन्ति नू स्तुतौ कुटादिः प्रवता प्रवणेन मार्गेण यतीर्गच्छन्त्यः आपोन आपइव मतिः मननीया कण्वैः क्रियमाणा स्तुतिः स्तुत्यमिन्द्रं वनन्वती स्वयमेव सम्भजनवती भवति ॥ ३४ ॥

३४. कण्व लोग स्तुति करते हैं। निम्नाभिमुख गमनशील जलों की तरह रमणी स्तुति स्वयं इन्द्र की सेवा के उपयुक्त हो जाती है।

इन्द्रमुक्थानिवावृधुःसमुद्रमिवसिन्धवः ।
अनुत्तमन्युमजरम् ॥ ३५ ॥ १५ ॥

इन्द्रम् । उक्थानि । वावृधुः । समुद्रम्ऽइव ।
सिन्धवः । अनुत्तऽमन्युम् । अजरम् ॥ ३५ ॥ १५ ॥

उक्थानि शस्त्राण्यस्माभिः शस्यमानानि इन्द्रं ववृधुर्वर्धयन्ति । सिन्धवः स्यन्दनशीला-नद्यः समुद्रमिव समुद्रं जलधिं यथा वर्धयन्ति तद्वत् कीदृशमिन्द्रं अनुत्तमन्युम् अनुत्तः अप्रेरितः परैरनभिभूतोमन्युः क्रोधोयस्य तादृशम् नुदविदोन्दत्रेत्यादिना विकल्पितत्वान्निष्ठा-नत्वाभावः । अजरं जरारहितं बहुव्रीहौ नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् ॥ ३५ ॥

३५. जैसे नदियाँ समुद्र को बढ़ाती हैं, वैसे ही मन्त्र इन्द्र को बढ़ाते हैं। इन्द्र अजर हैं। उनके कोप का निवारण कोई नहीं कर सकता।

॥ इति पञ्चमस्याष्टमे पञ्चदशोवर्गः ॥ १५ ॥

अथ षट्त्रिंशी—

आनोयाहिपरावतोहरिभ्यांहर्यताभ्याम् ।
इममिन्द्रसुतंपिब ॥ ३६ ॥

आ । नः । याहि । पराऽवतः । हरिऽभ्याम् ।
हर्यताभ्याम् । इमम् । इन्द्र । सुतम् । पिब ॥ ३६ ॥

हे इन्द्र परावतः परागतात् दूरेवर्तमानात् द्युलोकात् हर्यताभ्यां कान्ताभ्यां हरिभ्यां अश्वाभ्यां नोस्मानायाहि आगच्छ आगत्यच इममस्मदीयं सुतमभिषुतं सोमं पिब ॥ ३६ ॥

३६. इन्द्र, सुन्दर रथ पर चढ़कर दूर देश से हमारे पास आओ। अभिषुत सोम का पान करो।

त्वामिद्वृत्रहन्तमजनासोवृक्तबर्हिषः ।
हवन्तेवाजसातये ॥ ३७ ॥

त्वाम् । इत् । वृत्रहन्ऽतम । जनासः । वृक्तऽबर्हिषः ।
हवन्ते । वाजऽसातये ॥ ३७ ॥

हे वृत्रहन्तम अतिशयेन वृत्राणां आवृण्वतां शत्रूणां हन्तः त्वामित् त्वामेव वृक्तबर्हिषः वृक्तं यागार्थं छिन्नं बर्हिर्येषां तथाविधोक्ताः प्रवृत्तयज्ञाः जनासोजनाः ऋत्विग्लक्षणाः हवन्ते आह्वयन्ति ह्वेञः शपि बहुलंछन्दसीति सम्प्रसारणम् किमर्थं वाजसातये वाजस्यान्नस्य बलस्यवा सातये लाभाय यद्वा संग्रामनामैतत् वाजस्य सातिर्यस्मिन्संग्रामे तत्र साहाय्याय त्वामाह्वयन्तीत्यर्थः ॥ ३७ ॥

३७. सबकी अपेक्षा अधिक शत्रु-संहारक इन्द्र, जो लोग कुश काटते हैं, वे अन्न-प्राप्ति के लिए तुम्हें बुलाते हैं।

अनुत्वारोदसीउभेचक्रंनवर्त्येतशम् ।
अनुसुवानासइन्दवः ॥ ३८ ॥

अनु । त्वा । रोदसी इति । उभे इति । चक्रम् । न ।
वर्ति । एतशम् । अनु । सुवानासः । इन्दवः ॥ ३८ ॥

हे इन्द्र त्वा त्वां उभे रोदसी द्यावापृथिव्यौ अनुवर्तेते त्वदधीने भवतइत्यर्थः तत्र दृष्टान्तः—चक्रं न यथा रथचक्रं एतशं अश्वनामैतत् पुरोगच्छन्तमश्वं अनुवर्ति अनुवर्तते तद्वत्। अपिच सुवानासः ऋत्विग्भिरभिषूयमाणाइन्दवः सोमाश्च त्वामनुवर्तन्ते ॥ ३८ ॥

३८. इन्द्र, जैसे रथ-चक्र अश्व का अनुगमन करते हैं, वैसे ही द्यावा-पृथिवी तुम्हारा अनुगमन करती है। अभिषुत सोम भी तुम्हारा अनुवर्त्तन करते हैं। अथैकोनचत्वारिंशी—

मन्दस्वासुस्वर्णरउतेन्द्रशर्यणावति ।
मत्स्वाविवस्वतोमती ॥ ३९ ॥

मन्दस्व । सु । स्वःऽनरे । उत । इन्द्र । शर्यणाऽवति ।
मत्स्व । विवस्वतः । मती ॥ ३९ ॥

उतापिच हे इन्द्र शर्यणावति शर्यणानाम कुरुक्षेत्रवर्तिनोदेशाः तेषामदूरभवं सरःशर्यणावत् मध्वादिभ्यश्चेति स्वार्थिकोमतुप् मतौबह्वचइतिदीर्घः संज्ञायामितिवत्वम् । तस्मिन् सरसि विद्यमाने स्वर्णरे सर्वैर्ऋत्विग्भिर्नेतव्ये यज्ञे सु सुष्ठु मन्दस्व माद्य तृप्तोभव अपिच विवस्वतः परिचरणवतोयजमानस्य मती मत्याच मत्स्व मदं प्राप्नुहि मतिशब्दात्तृतीयायाः सुपांसुलुगिति पूर्वसवर्णदीर्घः ॥ ३९॥

३९. इन्द्र, शर्यणादेश (कुरुक्षेत्र के समीप) के तड़ाग के पास समस्त ऋत्विकों के द्वारा आरब्ध यज्ञ में तृप्त होओ। सेवक की स्तुति से आनन्द लो।

वावृधानउपद्यविवृषावज्र्यरोरवीत् ।
वृत्रहासोमपातमः ॥ ४० ॥ १६ ॥

वावृधानः । उप । द्यवि । वृषा । वज्री ।
अरोरवीत् । वृत्रऽहा । सोमऽपातमः ॥ ४० ॥ १६ ॥

वावृधानोवृद्धः वज्री वज्रवान् अतएव वृत्रहा वृत्रस्य मेघस्यासुरस्य वा हन्ता सोमपातमः अतिशयेन सोमस्य पातेन्द्रः वृषा उदकानां वर्षिता द्यवि द्युलोके अन्तरिक्षे उपसमीपे यथास्माभिः श्रूयते तथा अरोरवीत् भृशं स्तनयित्नुलक्षणं शब्दमकरोत् मेघेन वज्रहतेन ईदृशं शब्दमचीकरदित्यर्थः ॥ ४० ॥

४०. प्रवृद्ध, काम-वर्षक, वज्रवान्, अतीव सोम-पाता और वृत्रघ्न इन्द्र द्युलोक के पास बोलते हैं।

॥ इति पञ्चमस्याष्टमे षोडशोवर्गः ॥ १६ ॥

अथैकचत्वारिंशी—

ऋषिर्हिपूर्वजाअस्येकईशानओजसा ।
इन्द्रचोष्कूयसेवसु ॥ ४१ ॥

ऋषिः । हि । पूर्वऽजाः । असि । एकः । ईशानः ।
ओजसा । इन्द्र । चोष्कूयसे । वसु ॥ ४१ ॥

हे इन्द्र पूर्वजाः सर्वेभ्योदेवेभ्यः पूर्वं जातउत्पन्नः यद्वा यज्ञेषु प्रथममेव प्रादुर्भूतः त्वं ऋषिर्हि द्रष्टा सर्वज्ञः खल्वसि भवसि। अपिच सर्वेषु देवेषु मध्ये एकोमुख्यः ओजसा बलेन ईशानईश्वरोभवसि। यद्वा एकः असहायएव सन् ओजसा आत्मीयेनैव बलेन ईशानः सर्वस्य जगतईश्वरोभवसि। सत्वं वसु धनं चोष्कूयसे पुनःपुनः स्तोतृभ्योददासि। स्कुञ्आप्रवणे इह दानार्थः। तथाचोक्तम्—चोष्कूयमाणमिन्द्रभूरिवामं ददिन्द्रबहुवननीयमिति ॥ ४१ ॥

४१. इन्द्र, तुम पूर्वोत्पन्न ऋषि हो। अद्वितीय बल-द्वारा तुम सारे देवों के स्वामी हुए हो। तुम बार-बार धन दो।

अस्माकंत्वासुताँउपवीतपृष्ठाअभिप्रयः।
शतंवहन्तुहरयः ॥ ४२ ॥

अस्माकम्। त्वा। सुतान्। उप। वीतऽपृष्ठाः। अभि।
प्रयः। शतम्। वहन्तु। हरयः ॥ ४२ ॥

हे इन्द्र अस्माकमस्मदीयान् सुतान्सोमानुपलक्ष्य प्रयः अन्ननामैतत् धानाकरम्भादिहविर्लक्षणमन्नं चाभिलक्ष्य वीतपृष्ठाः प्रशस्तोपरिभागाः शतं शतसंख्याकाहरयोश्वाः त्वा त्वां वहन्तु प्रापयन्तु ॥ ४२ ॥

४२. प्रशस्त पृष्ठवाले सौ अश्व, हमारे अभिषुत सोम और अन्न के लिए, तुम्हें ले आवें। अथ त्रिचत्वारिंशी—

इमांसुपूर्व्यांधियंमधोर्घृतस्यपिप्युषीम्।
कण्वाउक्थेनवावृधुः ॥ ४३ ॥

इमाम्। सु। पूर्व्याम्। धियम्। मधोः। घृतस्य।
पिप्युषीम्। कण्वाः। उक्थेन। वावृधुः ॥ ४३ ॥

इमामिदानीं क्रियमाणां सु सुष्ठु पूर्व्यां पूर्वैःपित्रादिभिः कृतां मधोर्मधुरस्य घृतस्य क्षरणशीलस्योदकस्य पिप्युषीं वर्धयित्रीं यद्वा मधुरेण घृतेनाज्येन प्रवृद्धां धियं यागक्रियां कण्वाः कण्वगोत्राऋषयः उक्थेन शस्त्रेण वावृधुरिन्द्रार्थं वर्धयन्ति उक्थैर्हि यागोवर्धते अत्यग्निष्टोमादिषूत्तरासु संस्थासु शस्त्रवृद्धेर्दृष्टत्वात् यद्वा पूर्व्यां चिरन्तनीं इमामिन्द्रस्य धियं अनुग्रहबुद्धिं क्षरणशीलेन मधुरेण स्तोमेन पिप्युषीं वर्धनीयां उक्थेन स्तोत्रेण वावृधुः वर्धयन्ति ॥ ४३ ॥

४३. उक्थ (मन्त्र) द्वारा कण्व लोग पूर्वजों द्वारा कृत और मधुर जल की वर्द्धयित्री याग-क्रिया को बढ़ावें।

---

१ नि० ६. २२.

अथ चतुश्चत्वारिंशी—

इन्द्रमिद्विमहीनांमेधेवृणीतमर्त्यः ।
इन्द्रंसनिष्युरूतये ॥ ४४ ॥

इन्द्रम् । इत् । विऽमहीनाम् । मेधे । वृणीत । मर्त्यः ।
इन्द्रम् । सनिष्युः । ऊतये ॥ ४४ ॥

विमहीनां विशेषेण महतां देवानां मध्ये इन्द्रमित् इन्द्रमेव मेधे यज्ञे मर्त्योमनुष्योहोता वृणीत स्तुतिभिः संभजते । तथा सनिष्युः धनकामश्च स्तोता ऊतये रक्षणाय इन्द्रमेव वृणीते स्तुत्या संभजते ॥ ४४ ॥

४४. देवगण विशेष रूप से महान् हैं। उनके बीच इन्द्र को ही, मनुष्य लोग, धनेच्छु होकर, रक्षण के लिए, वरण करते हैं।

अर्वाञ्चन्त्वापुरुष्टुतप्रियमेधस्तुताहरी ।
सोमपेयायवक्षतः ॥ ४५ ॥

अर्वाञ्चम् । त्वा । पुरुऽस्तुत । प्रियमेधऽस्तुता ।
हरी इति । सोमऽपेयाय । वक्षतः ॥ ४५ ॥

हे पुरुष्टुत बहुभिः स्तुतेन्द्र प्रियमेधस्तुता प्रियमेधैः प्रिययज्ञैः ऋषिभिः स्तुतौ तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वम् सुपां सुलुगित्याकारः ईदृशौ हरी अश्वौ सोमपेयाय सोमपानार्थं त्वा त्वां अर्वाञ्चं अस्मदभिमुखं वक्षतः वहताम् ॥ ४५ ॥

४५. अनेकों द्वारा स्तुत इन्द्र, यज्ञ-प्रिय ऋषियों-द्वारा स्तुत दो अश्व, सोम पान के लिए, तुम्हें हमारे सामने ले आवें।

अथ षट्चत्वारिंशी—

शतमहंतिरिन्दिरेसहस्रंपर्शावाददे ।
राधांसियाद्वानाम् ॥ ४६ ॥

शतम् । अहम् । तिरिन्दिरे । सहस्रम् । पर्शौ ।
आ । ददे । राधांसि । याद्वानाम् ॥ ४६ ॥

इदमादिकेन तृचेन तिरिन्दिरस्य राज्ञोदानं स्तूयते पर्शौ परशुनाम्नः पुत्रे उपचाराज्जन्ये जनकशब्दः तिरिन्दिरे एतत्संज्ञे राजनि याद्वानां यदुरिति मनुष्यनाम यदवएव याद्वाः स्वार्थिकस्तद्धितः तेषां मध्ये अहं शतं शतसंख्याकानि सहस्रं सहस्रसंख्याकानिच राधांसि धनानि आददे स्वीकरोमि। यद्वा याद्वानां यदुकुलजातानामन्येषां राज्ञां स्वभूतानि राधांसि बलादपहृतानि तिरिन्दिरे वर्तमानान्यहं प्राप्नोमि॥ ४६॥

४६. यदुओं में परशु के पुत्र तिरिन्दिर के निकट सौ और सहस्र धन मैंने ग्रहण किये हैं।

त्रीणिशतान्यर्वतांसहस्रादशगोनाम्।
ददुष्पज्रायसाम्ने॥ ४७॥

त्रीणि। शतानि। अर्वताम्। सहस्रा। दश। गोनाम्।
ददुः। पज्राय। साम्ने॥ ४७॥

पूर्वस्यामृचि स्वसम्प्रदानकं दानमुक्तं अधुना अन्येभ्योप्यृषिभ्यस्तिरिन्दिरोबहुधनं दत्तवानित्याह अर्वतां गन्तॄणामश्वानां त्रीणि शतानि गोनां दश शतगुणितानि सहस्रा सहस्राणि च पज्राय स्तुतीनां मार्जकाय साम्ने एतत्संज्ञाय ऋषये यद्वा साम्ने सामस्तोत्रं तद्वते पज्राय पज्रकुलजाताय कक्षीवते ददुः तिरिन्दिराख्याराजानोदत्तवन्तः॥ ४७॥

४७. तिरिन्दिर राजाओं नें पज्र और साम को तीन सौ अश्व और दस सौ गायें दी थीं।

उदानट्ककुहोदिवमुष्ट्रांन्चतुर्युजोददत्।
श्रवसायाद्वंजनम्॥ ४८॥ १७॥

उत्। आनट्। ककुहः। दिवम्। उष्ट्रान्। चतुःऽयुजः।
ददत्। श्रवसा। याद्वम्। जनम्॥ ४८॥ १७॥

अयं राजा ककुहः उच्छ्रितः सन् श्रवसा कीर्त्या दिवं स्वर्गं उदानट् उत्कृष्टतरं व्यामोत् किंकुर्वन् चतुर्युजः चतुर्भिः स्वर्णभारैः युक्तान् उष्ट्रान् ददत् प्रयच्छत् तथा याद्वं जनं च दासत्वेन प्रयच्छन्॥ ४८॥

४८. तिरिन्दिर राजा ने, उन्नत होकर, चार स्वर्ण-भारों से युक्त ऊँटों को देते हुए यदुओं को दास रूप से देते हुए कीर्त्ति के द्वारा स्वर्ग को व्याप्त किया था।

॥ इति पञ्चमस्याष्टमे सप्तदशोवर्गः॥ १७॥

प्रयद्वइति षट्त्रिंशदृचं द्वितीयं सूक्तं कण्वगोत्रस्य पुनर्वत्सस्यार्षं मारुतं गायत्रं। तथा चानुक्रांतम्—प्रयद्वःषट्त्रिंशत्पुनर्वत्सोमारुतमिति। व्यूळ्हे दशरात्रे प्रथमेछन्दोमे आग्निमारुतशस्त्रे इदंसूक्तं मारुतनिविद्धानं सूत्रितश्च—प्रयद्वस्त्रिष्टुभं दूतंवइत्याग्निमारुतमिति।

तत्र प्रथमा—

प्रयद्वंस्त्रिष्टुभमिषंमरुंतोविप्रोअक्षंरत्।
विपर्वतेषुराजथ ॥ १ ॥

प्र। यत्। वः। त्रिऽस्तुभंम्। इषंम्। मरुंतः।
विप्रंः। अक्षंरत्। वि। पर्वंतेषु। राजथ ॥ १ ॥

हे मरुतः मरुतो मितराविणोवा मितरोचिनोवा महद्द्रवन्तीतिवा एतत्संज्ञामाध्यमिकादेवगणाः पादादित्वात् अपादादाविति पर्युदासात् आष्टमिकनिघाताभावः षाष्ठिकमामन्त्रिताद्युदात्तत्वम् वोयुष्मभ्यं विप्रोमेधावी स्तोता त्रिष्टुभं त्रिषु सवनेषु प्रशस्यां त्रिभिर्देवैः स्तुतां वा यद्वा त्रिष्टुप्छन्दसा संवद्धां माध्यन्दिनसवनिकीं इषं सोमलक्षणमन्नं यद्यदा प्राक्षरत् प्रासिञ्चत् अग्नौ प्राक्षिपत्। यद्वा त्रिष्टुभं त्रिष्टुप्छन्दस्कं स्तोत्रं इषं सोमं चेति योज्यं तदानीं यूयं पर्वतेषु पर्ववत्सु शिलोच्चयेषु विराजथ तेन सोमेन लब्धबलाः सन्तोविशेषेण दीप्ताभवथ ॥ १ ॥

१. मरुतो, जिस समय विद्वान् व्यक्ति तीनों सवनों में (सोम-रूप) प्रशस्त अन्न (अग्नि में) फेंकते हैं, उस समय तुम लोग पर्वतों में दीप्ति पाते हो।

अथ द्वितीया—

यदुङ्गतविषीयवोयामंशुभ्राअचिंध्वम्।
निपर्वताअहासत ॥ २ ॥

यत्। अङ्ग। तविषीऽयवः। यामंम्। शुभ्राः। अचिंध्वम्।
नि। पर्वताः। अहासत ॥ २ ॥

हे तविषीयवः तविषीति बलनाम तां कामयमानाः यद्वा बलयुक्ताः हेशुभ्राः शोभमानाः अंग हे मरुतः यामं याति गच्छतीति यामोरथः तं यद्यदा अचिध्वं समचिनुध्वं अश्वादिभिः साधनैः सञ्चितं संश्लिष्टं कुरुथ गमनार्थं तदानीं पर्वता गिरयोपि न्यहासत नितरांगच्छन्ति युष्मद्रथवेगाद्भीताःसन्तः स्वस्थानात् प्रचलन्ति। ओहाङ् गतौ छान्दसोलुङ् ॥२॥

२. बलाभिलाषी और शोभन मरुतो, जिस समय तुम लोग रथ को अश्व-द्वारा जोतते हो, उस समय पर्वत भी चलने (कांपने) लगते हैं।

अथ तृतीया—

उदीरयन्तवायुभिर्वाश्रासःपृश्निमातरः ।
धुक्षन्तंपिप्युषीमिषंम् ॥ ३ ॥

उत् । ईरयन्त । वायुऽभिः । वाश्रासः । पृश्निऽमातरः ।
धुक्षन्तं । पिप्युषीम् । इषंम् ॥ ३ ॥

वाश्रासोवाशनशीलाः शब्दकारिणः पृश्निमातरः पृश्निर्माध्यमिका वाक् सा माता जननी येषांते तथोक्ताः ऋतश्छन्दसीति कपःप्रतिषेधः ईदृशा मरुतः वायुभिः वान्ति गच्छन्तीति वायवः पृषत्यः पृषतीभिर्वाहनभूताभिः स्वावयवभूतैर्वायुभिरेव वा उदीरयन्त उद्गमयन्ति मेघादिकं तथा पिप्युषीं वर्धयित्रीं इषमन्नं च स्तोतृभ्योधुक्षंत दुहन्ति ॥ ३॥

३. शब्दकर्त्ता और पृश्नि के पुत्र मरुद्गण (वायु के चालक देवता) वायुओं के द्वारा मेघादि को ऊपर उठाते और वृद्धिकर अन्न दान करते हैं ।

अथ चतुर्थी—

वपन्तिमरुतोमिहंप्रवेपयन्तिपर्वतान् ।
यद्यामंयान्तिवायुभिः ॥ ४ ॥

वपन्ति । मरुतः । मिहंम् । प्र । वेपयन्ति । पर्वतान् । यत् ।
यामंम् । यान्ति । वायुऽभिः ॥ ४ ॥

मरुतः एतत्संज्ञादेवाः मिहं वृष्टिं वपन्ति विकिरन्ति विक्षिपन्ति तथा पर्वतान् गिरीन् प्रवेपयन्ति प्रकंपयन्ति अयमर्थः कदेतिचेत् यद्यदा वायुभिः सार्धं यामं रथं गमनं वा यांति प्राप्नुवन्ति तदानीमित्यर्थः ॥ ४॥

४. जिस समय मरुद्गण, वायुओं के साथ, जाते हैं, उस समय वे वर्षा गिराते और पर्वतों को कंपाते हैं ।

अथ पंचमी—

नियद्यामायवोगिरिर्निसिन्धवोविधर्मणे ।
महेशुष्माययेमिरे ॥ ५ ॥ १८ ॥

नि । यत् । यामाय । वः । गिरिः । नि । सिन्धवः । विऽधर्मणे ।
महे । शुष्माय । येमिरे ॥ ५ ॥ १८ ॥

हे मरुतोवोयुष्माकं यामाय रथाय गमनायवा गिरिः सुपांसुलुगिति जसःसुः गिरयः पर्वताः यद्यदा नियेमिरे स्वयमेव नियम्यन्ते तथा सिन्धवः स्यन्दनशीलाः समुद्राः नद्योवा विधर्मणे विधरणाय महे महते शुष्माय शोषकाय युष्मदीयाय बलाय नियेमिरे स्वयमेव नियम्यन्ते गिरयोनद्यश्च युष्मद्यामाद्बलाच्च भीत्या एकत्रैव स्थाने नियता वर्तन्तइत्यर्थः तदानीं वपन्ति मरुतोमिहमितिशेषः । यमेः कर्मकर्तरि लिट् यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः ॥ ५ ॥

५. तुम्हारे रथ के लिए पर्वतों की गति नियत है। नदियाँ रक्षा और महान् बल के लिए, तुम्हारे गमन के अर्थ, नियत हैं।

॥ इति पञ्चमस्याष्टमेष्टादशोवर्गः ॥ १८ ॥

अथ षष्ठी—

युष्माँउनक्तमूतयेयुष्मान्दिवाहवामहे ।
युष्मान्प्रयत्यध्वरे ॥ ६ ॥

युष्मान् । ऊँ इति । नक्तम् । ऊतये । युष्मान् । दिवा । हवामहे ।
युष्मान् । प्रऽयति । अध्वरे ॥ ६ ॥

हे मरुतो युष्मां उ युष्मानेव नक्तं रात्रौ ऊतये रक्षणार्थं हवामहे दिवा अह्निच युष्मानेवाह्वयामहे अध्वरे ध्वरोनास्त्यस्मिन्नित्यध्वरोयागः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। यागे प्रयति प्रगच्छति प्रवर्तमाने सति रक्षणार्थं युष्मानेवाह्वयामहे ॥ ६॥

६. हम तुम्हें, रात्रि को रक्षा के लिए बुलाते हैं, दिन में भी तुम्हें बुलाते हैं और यज्ञ आरम्भ होने पर तुम्हें बुलाते हैं।

उदुत्येअरुणप्सवश्चित्रायामेभिरीरते ।
वाश्राअधिष्णुनादिवः ॥ ७ ॥

उत् । ऊँ इति । त्ये । अरुणऽप्सवः । चित्राः । यामेभिः । ईरते ।
वाश्राः । अधि । स्नुना । दिवः ॥ ७ ॥

त्ये ते पूर्वोक्तगुणाः अरुणप्सवः अरुणवर्णरूपाः चित्राश्चायनीयाः आश्चर्यभूतावा वाश्राः शब्दकारिणः एवंभूतामरुतः यामेभिर्यामैर्यानैः दिवोधि द्युलोकस्योपरि स्नुना सानुना समुच्छ्रितप्रदेशेन उदीरते उद्गच्छन्ति उइति पूरणः पदादिषु मांस्पृत्स्नूनामुपसंख्यानमिति सानुशब्दस्य स्नुभावः ॥ ७ ॥

७. वे ही अरुण वर्णवाले, आश्चर्य-भूत (विचित्र) और शब्दकर्त्ता मरुद्गण रथ के द्वारा द्युलोक के ऊपर, अग्र भाग से, जाते हैं।

कारीयाँ सौर्यस्य हविषः सृजन्तिरश्मिमित्येषानुवाक्या सूत्र्यतेहि—सृजन्तिरश्मिमोजसावहिष्ठेभिर्विहरन्यासितन्तुमिति ।

सैषाष्टमी—

सृजन्तिरश्मिमोजसापन्थांसूर्याययातवे ।
तेभानुभिर्वितस्थिरे ॥ ८ ॥

सृजन्ति । रश्मिम् । ओजसा । पन्थाम् । सूर्याय । यातवे । ते ।
भानुऽभिः । वि । तस्थिरे ॥ ८ ॥

तच्छब्दश्रुतेर्यच्छब्दाध्याहारः ये मरुतः सूर्याय सूर्यस्य षष्ठयर्थेचतुर्थीवक्तव्येति चतुर्थी । यातवे गन्तवे गन्तुं रश्मिं व्याप्तं अशेरशचेति अश्नोतेरौणादिकोमिप्रत्ययः रशादेशश्च । यद्वा रश्मिभिस्तेजोभिर्युक्तं पन्थां पन्थानं ओजसा बलेन सृजन्ति उत्पादयन्ति वृत्रादिभिरावृतं सूर्यपथं आवरकस्य वृत्रादेरपनयनेन जनयन्तीत्यर्थः । ते मरुतः भानुभिस्तेजोभिः वितस्थिरे कृत्स्नं जगद्व्याप्यावतिष्ठंते ॥ ८ ॥

८. जो मरुद्गण सूर्य के गमन के लिए किरणयुक्त मार्ग का सृजन करते हैं, वे तेज के द्वारा अवस्थिति करते हैं।

इमांमेमरुतोगिरमिमंस्तोमंमृभुक्षणः ।
इमंमेवनताहवम् ॥ ९ ॥

इमाम् । मे । मरुतः । गिरम् । इमम् । स्तोमम् । ऋभुक्षणः । इमम् ।
मे । वनत । हवम् ॥ ९ ॥

हे मरुतः इमां पुरोवर्तिनीं मे मम गिरं शस्त्ररूपां वाचं वनत संभजत ऋभुक्षणः महन्नामैतत् महान्तः जसि इतोत्सर्वनामइत्यकारः वाषपूर्वस्यनिगमइतिदीर्घाभावः । ते यूयं इमं स्तोमं स्तोत्रं प्रगीतमन्त्रसाध्यं मे मम इमं पुरोवर्तिनं हवमाह्वानरूपं च याजुषं मन्त्रं वनत संभजत सेवध्वम् ॥ ९ ॥

९. मरुतो, मेरे इस वाक्य का आश्रयण करो। हे महान् मरुतो, इस स्तोत्र का आश्रय करो। मेरे इस आह्वान की सेवा करो।

त्रीणिसरांसिपृश्नयोदुदुह्रेवज्रिणेमधु ।
उत्संकबन्धमुद्रिणम् ॥ १० ॥ १९ ॥

त्रीणि । सरांसि । पृश्नयः । दुदुह्रे । वज्रिणे । मधु । उत्सम् ।
कवन्धम् । उद्रिणम् ॥ १० ॥ १९ ॥

पृश्नयोमरुन्मातृभूतागावः वज्रिणे वज्रवतइन्द्राय तादर्थ्येचतुर्थी इन्द्रार्थं मधु मधुरं क्षीरादिकमाश्रयणद्रव्यं त्रीणि सरांसि सरइव सोमैः पूरितानि त्रीणि सवनानि त्रिष्वपि सवनेषु श्रयणार्थं दुदुह्रे दुदुहिरे । यद्वा मधु मधुरं सोमं वज्रिणे वज्रयुक्ताय मरुद्गणाय त्रीणि सरांसि द्रोणकलशाधवनीयपूतभृल्लक्षणानि प्रति पृश्नयोमाध्यमिकावाचः दुदुह्रे वृष्टिद्वारा दुहन्ति । यद्वा पृश्नयइति मातृवाचिना शब्देन पुत्राउच्यन्ते पृश्निमातरोमरुतः इन्द्रार्थं त्रीणि सरांसि द्रोणकलशादीनि मधु मधुना सोमेन पूरयितुं उत्सं उत्स्रवणशीलं कवन्धमुदकं उद्रिणं उदकवन्तं मेघं दुदुह्रे दुहते । दुहेश्छान्दसोलिट् इरयोरेइति रेभावः पादादित्वादनिघातः ॥ १० ॥

१०. पृश्नियों ने (मरुतों की माताओं ने) वज्री इन्द्र के लिए मधुर सोमरस को उत्स (निर्झर), कबन्ध (जल) और अद्रि (मेघ)—इन तीन सरोवरों से दूहा था।

॥ इति पञ्चमस्याष्टमे एकोनविंशोवर्गः ॥ १९ ॥

अथैकादशी—

मरुतोयद्धवोदिवःसुम्नायन्तोहवामहे ।
आतूनउपगन्तन ॥ ११ ॥

मरुतः । यत् । ह । वः । दिवः । सुम्नऽयन्तः । हवामहे । आ ।
तु । नः । उप । गन्तन ॥ ११ ॥

हे मरुतः यद्ध यदा खलु वो युष्मान् सुम्नायन्तः सुम्नं सुखं आत्मनइच्छन्तोवयं दिवः द्युलोकात् हवामहे स्तुतिभिराह्वयामहे । आतु अनन्तरमेव शीघ्रं नोस्मान् उपगन्तन उपगच्छत गमेर्लोटि तप्तनप्तनथनाश्चेतितनबादेशः ॥ ११ ॥

११. मरुतो, जिस समय अपने सुखाभिलाष के लिए हम स्वर्ग से तुम्हें बुलाते हैं, उस समय शीघ्र ही हमारे पास आओ।

अथ द्वादशी—

यूयंहिष्ठासुदानवोरुद्राऋभुक्षणोदमे ।
उतप्रचेतसोमदे ॥ १२ ॥

यूयम् । हि । स्थ । सुऽदानवः । रुद्राः । ऋभुक्षणः । दमे । उत ।
प्रऽचेतसः । मदे ॥ १२ ॥

उतापिच हे सुदानवः शोभनदाना हे रुद्राः रुद्रपुत्राः पादादित्वादामंत्रितनिघाताभावः हे ऋभुक्षणः महान्तः उरुतेजस्कावा ईदृशा हे मरुतः यूयं हि खलु दमे यज्ञगृहे मदे मदकरे सोमे पीतेसति प्रचेतसः स्थ प्रकृष्टज्ञानाभवथ ॥ १२ ॥

१२. सुन्दर दान में परायण और महातेजस्वी रुद्र-पुत्रो, तुम लोग यज्ञ-गृह में मदकर सोम पीते पर उत्तम ज्ञान से युक्त हो जाते हो।

आनोर॒यिंम॑द॒च्युतं॑पुरु॒क्षुंवि॒श्वधा॑यसम् ।
इयर्ता॑मरुतोदि॒वः ॥ १३ ॥

आ । नः॒ । र॒यिम् । म॒द॒ऽच्युत॑म् । पु॒रु॒ऽक्षुम् । वि॒श्वऽधा॑यसम् ।
इयर्त॑ । म॒रु॒तः॒ । दि॒वः ॥ १३ ॥

हे मरुतः नोस्माकं रयिं धनं दिवोद्युलोकात् आइयर्त आगमयत ऋगतावित्यस्मादन्तर्भावितण्यर्थाज्जौहोत्यादिकाल्लोटि तस्य तप्तनप्तनथनेति तबादेशः अनुदात्तेचेत्यभ्यस्ताद्युदात्तत्वम् कीदृशं रयिं मदच्युतं मदंस्रवन्तं यद्वा शात्रवस्य मदस्य च्यावयितारं पुरुक्षुं बहुनिवासं बहुभिः स्तूयमानंवा विश्वधायसं विश्वेषां सर्वेषामस्मदीयानां धारणाय पोषणाय पर्याप्तम् ॥ १३॥

१३. मरुतो, स्वर्ग से हमारे लिए मद-स्रावी, बहु-निवासदाता और सबका भरण करने में समर्थ धन ले आओ।

अथ चतुर्दशी—

अधी॑वयद्गि॒रीणां॒यामं॑शुभ्रा॒अचि॑ध्वम् ।
सु॒वा॒नैर्म॑न्दध्व॒इन्दु॑भिः ॥ १४ ॥

अधि॑ऽइव । यत् । गि॒री॒णाम् । याम॑म् । शु॒भ्राः॒ । अचि॑ध्वम् । सु॒वा॒नैः ।
म॒न्द॒ध्वे॒ । इन्दु॑ऽभिः ॥ १४ ॥

हे शुभ्राः शोभमानामरुतः गिरीणां पर्वतानां अधीव उपरीव यद्यदा यामं युष्मदीयं रथं अचिध्वं गमनसाधनैरश्वादिभिरुपचितं कुरुथ तदानीं सुवानैरभिषूयमाणैरिन्दुभिः सोमैर्मन्दध्वे मादयध्वे ॥ १४॥

१४. शुभ्र मरुतो, जिस समय तुम लोग पर्वत के ऊपर अपना यान ले जाते हो, उस समय अभिषुत सोम के बल से प्रमत्त होते हो।

अथ पञ्चदशी—

ए॒ताव॑तश्चिदेषां॒सु॒म्नंभि॑क्षेत॒मर्त्यः॑ ।
अदा॑भ्यस्य॒मन्म॑भिः ॥ १५ ॥ २० ॥

एतावतः । चित् । एषाम् । सुम्नम् । भिक्षेत । मर्त्यः । अदाभ्यस्य । मन्मऽभिः ॥ १५ ॥ २० ॥

मर्त्योमनुष्यः स्तोता मन्मभिः स्तोत्रैः सुम्नं सुखं धनं वा एषां मरुतां स्वभूतं भिक्षेत याचेत । इदानीं गणाभिप्रायेणैकवदाह एतावतश्चित् यत्परिमाणस्यच अदाभ्यस्य केनापि हिंसितुमशक्यस्य मरुद्गणस्य सुम्नं भिक्षेत एतच्छब्दात् यत्तदेतेभ्यइति परिमाणेर्थेवतुप् आसर्वनाम्नइत्यात्वम् ॥ १५ ॥

१५. स्तोता स्तोत्रों-के द्वारा अहिंसनीय मरुतों के पास अपने सुख के लिए भिक्षा माँगता है।

॥ इति पञ्चमस्याष्टमे विंशो वर्गः ॥ २० ॥

अथ षोडशी–

येद्रप्साइवरोदसीधमन्त्यनुवृष्टिभिः ।
उत्संदुहन्तोअक्षितम् ॥ १६ ॥

ये । द्रप्साःऽइव । रोदसी इति । धमन्ति । अनु । वृष्टिऽभिः ।
उत्सम् । दुहन्तः । अक्षितम् ॥ १६ ॥

ये मरुतः द्रप्साइव उदबिन्दवइव रोदसी द्यावापृथिव्यौ वृष्टिभिर्वर्षणैः अनुधमन्ति अनुगच्छन्ति साकल्येन व्याप्नुवन्ति । यद्वा अनुध्माते उच्छ्वसितावयवे कुर्वन्ति । किंकुर्वन्तः अक्षितं अक्षीणमुदकं उत्सं मेघं दुहन्तः पूरयन्तः मेघादवाङ्मुखं पातयन्तः दुहेर्लक्षणहेत्वोरिति हेतौ शतृप्रत्ययः यतएवं दुहन्ति ततोरोदसी अनुधमन्तीत्यर्थः ॥ १६॥

१६. मरुत् लोग अक्षीण मेघ का दोहन करते हुए, जल-बिन्दु की तरह, वृष्टि-द्वारा द्यावा-पृथिवी को भली भाँति व्याप्त करते हैं।

अथ सप्तदशी–

उदुस्वानेभिरीरतउद्रथैरुदुवायुभिः ।
उत्स्तोमैःपृश्निमातरः ॥ १७ ॥

उत् । ऊँ इति । स्वानेभिः । ईरते । उत् । रथैः । उत् । ऊँ इति ।
वायुऽभिः । उत् । स्तोमैः । पृश्निऽमातरः ॥ १७ ॥

स्वानेभिः स्वानैः शब्दैः मरुतउदीरते उद्गच्छन्ति । स्वनशब्दे स्वनहसोर्वेति अपोविकल्पितत्वात् पक्षेघञ् कर्षात्वतइत्यन्तोदात्तत्वम् बहुलंछन्दसीतिभिसऐसभावः उइतिपूरणः । तथा रथैः रथप्रमुखैर्वायुभिर्वाहनैश्च उदीरते पृश्निमातरः मरुतः यथा स्तोमैः स्तोत्रैः उदीरते ॥ १७॥

१७. पृश्नि के पुत्र मरुत् लोग शब्द करते हुए ऊपर जाते हैं। रथ-द्वारा ऊपर जाते हैं । वायु-द्वारा ऊपर जाते हैं। मन्त्र-द्वारा ऊपर जाते हैं। अथाष्टादशी—

येनावतुर्वशंयदुंयेनकण्वंधनस्पृतम् ।
रायेसुतस्यधीमहि ॥ १८ ॥

येन । आव । तुर्वशम । यदुम् । येन । कण्वम् । धनऽस्पृतम् ।
राये । सु । तस्य । धीमहि ॥ १८ ॥

येनात्मीयेन रक्षणेन तुर्वशं एतत्संज्ञं यदुं एतत्संज्ञश्च राजर्षिं आव यूयं रक्षितवन्तः स्थ अवतेर्लेटि मध्यमबहुवचनेरूपमेतत् । येनच धनस्पृतं धनकामं कण्वमृषिं रक्षितवन्तः स्थ । तस्य युष्मदीयं रक्षणं राये धनार्थं सुधीमहि शोभनं ध्यायेम ॥ १८ ॥

१८. जिस रक्षण के द्वारा यदु और तुर्वश की तुम लोगों ने रक्षा की थी और जिसके द्वारा धनाभिलाषी कण्व की रक्षा की है, धन के लिए हम उसका ही ध्यान करते हैं। अथैकोनविंशी—

इमाउवःसुदानवोघृतंनपिप्युषीरिषः ।
वर्धान्काण्वस्यमन्मभिः ॥ १९ ॥

इमाः । ऊँ इति । वः । सुऽदानवः । घृतम् । न । पिप्युषीः ।
इषः । वर्धान् । काण्वस्य । मन्मऽभिः ॥ १९ ॥

हे सुदानवः शोभनदानामरुतः घृतं न घृतमिव पिप्युषीः वर्धयित्र्यः शरीरतुष्टिहेतुभूताः इमा इमानि प्रदीयमानानि इषोन्नानि सोमलक्षणानि काण्वस्य कण्वगोत्रस्य मम संबन्धिभिः मन्मभिः स्तोत्रैः सार्धं वोयुष्मान्वर्धान् वर्धयन्तु वृधेर्ण्यन्तात् लेटिरूपमेतत् उइतिपूरणः ॥ १९ ॥

१९. उत्तम दान देनेवाले मरुतो, घृत के समान शरीर को पुष्ट करनेवाले इस अन्न को, कण्व गोत्रोत्पन्नस्तोत्र के समान, वर्धित करो। अथ विंशी—

क्वनूनंसुदानवोमदथावृक्तबर्हिषः ।
ब्रह्माकोवःसपर्यति ॥ २० ॥ २१ ॥

क्वं । नूनम् । सुऽदानवः । मदथ । वृक्तऽबर्हिषः । ब्रह्मा । कः । वः । सपर्यति ॥ २० ॥ २१ ॥

मरुदागमनस्य विलंबमसहमान ऋषिरनया वितर्कयति सुदानवः शोभनदानाः हे वृक्तबर्हिषः वृक्तं वृक्णं छिन्नं बर्हिर्येषां यागाय यद्वा वर्हिरिति यज्ञनाम वृक्तः प्रवृक्तोयज्ञोयेषां ते तथोक्ताः ईदृशामरुतः क्व कुत्र देशे नूनमिदानीं मदथ माद्यथ मदीहर्षे व्यत्ययेन शप्। कश्च ब्रह्मा ब्राह्मणः स्तोता वोयुष्मान् सपर्यति परिचरति किंकारणं बहुशः स्तुतैरपि भवद्भिरिदानीं नागम्यत इति न जानीमः ॥ २० ॥

२०. मरुतो, तुम दान-परायण हो। तुम्हारे लिए कुश काटे गये हैं। इस समय तुम लोग कहाँ मत्त हो रहे हो? कौन स्तोता तुम्हारी सेवा करता है? ॥ इति पञ्चमस्याष्टमे एकविंशोवर्गः ॥ २१ ॥

अथैकविंशी—

नहिष्मयद्धवःपुरास्तोमेभिर्वृक्तबर्हिषः ।
शर्धाँऋतस्यजिन्वथ ॥ २१ ॥

नहि । स्म । यत् । ह । वः । पुरा । स्तोमेभिः ।
वृक्तऽबर्हिषः । शर्धान् । ऋतस्य । जिन्वथ ॥ २१ ॥

पूर्वया वितर्क्येदानीं निश्चिनोति हे वृक्तबर्हिषः प्रवृत्तयज्ञकामरुतः नहिष्म तन्न खलु संभवति वोयूयं पुरा असमत्तः पूर्वमेव कृतैः स्तोमेभिः अन्यदीयैः स्तोत्रैः ऋतस्योदकस्य सत्यस्य यज्ञस्यवा संवन्धिनः शर्धान् आत्मीयानि बलानि जिन्वथ प्रीणयथेति यद्ध यत खलु तन्न संभवत्येव अतः शीघ्रमागच्छतेत्यर्थः। यद्वा वृक्तबर्हिषइति ऋत्विङ्नाम हे ऋत्विजः वोयुष्माकं संबन्धिभिः स्तोमेभिः स्तोत्रैः ऋतस्य यज्ञस्य संबन्धिनोयागार्हान् शर्धान् मारुतानि बलानि पुरा अन्येभ्यः स्तोतृभ्यः पूर्वं यद्यस्मात्कारणात् जिन्वथ यूयं प्रीणयथ जिविः प्रीणनार्थः तस्मादन्यदीयैः स्तोत्रैः नहिष्म न खलु ते मरुतोवशीभवन्तीत्यर्थः ॥ २१ ॥

२१. हे प्रवृत्त-यज्ञ मरुतो, तुम लोग जो पूर्व ही दूसरों के द्वारा किये गये स्तोत्रों से यज्ञ-सम्बन्धी अपने बलों को प्रसन्न करते हो, वह ठीक नहीं है।

प्रवर्ग्ये महावीरे पयसोरासिक्तयोः सतोः समुत्येमहतीरपइत्येषानुवक्तव्या सूत्र्यतेहि—आसिक्तयोः समुत्येमहतीरपइति महावीरमादायोत्तिष्ठत्स्वति ।

सैषा द्वाविंशी—

समुत्येमहतीरपःसंक्षोणीसमुसूर्यम्।
संवज्रंपर्वशोदधुः॥ २२॥

सम्। ऊँ इति। त्ये। महतीः। अपः। सम्। क्षोणी इति।
सम्। ऊँ इति। सूर्यम्। सम्। वज्रम्। पर्वऽशः। दधुः॥ २२॥

त्ये ते पूर्वोक्तगुणामरुतः महतीर्वह्वीः अपोवृष्ट्युदकानि समुदधुः सन्दधति ओषध्यादिभिः संयोजयन्ति यद्वा घर्मकाले सूर्यरश्मिभिराहृताउपरि सम्यक् धारयन्ति बृहन्महतोरुपसंख्यानमिति महतः परस्य ङीपउदात्तत्वम् ऊडिदमित्यादिना अप्शब्दात् परःशसुदात्तः तथा क्षोणी क्षोण्यौ द्यावापृथिव्यौ च ते मरुतः सन्दधुः यथा स्वे स्वे स्थाने अवतिष्ठेते तथा धारयन्ति सूत्रात्मना वायुना सर्वं जगद्धार्यते। तथाचश्रूयते—वायुर्वै गोतमतत्सूत्रं वायुनावै गोतमसूत्रेणायं च लोकः परश्चलोकः सर्वाणि भूतानि संदृब्धानि भवन्तीति। तथा सूर्यं सर्वस्य प्रेरकमादित्यं चांतरिक्षे संदधुः सम्यग्धारयन्ति उशब्दः समुच्चये ईदृशास्ते मरुतः वज्रमात्मीयमायुधं पर्वशः पर्वणि पर्वणि वृत्रस्य सर्वेष्ववयवसन्धिषु हननार्थं सन्दधुः समयूयुजन्॥ २२॥

२२. उन मरुतों ने ओषधियों के साथ जल को मिलाया था, द्यावा-पृथिवी को उनके स्थानों पर अवस्थित किया था और सूर्य को स्थापित किया था। उन्होंने वृत्र के प्रत्येक अङ्ग को काटने के लिए वज्र धारण किया था।

अथ त्रयोविंशी—

विवृत्रंपर्वशोययुर्विपर्वताँअराजिनः।
चक्राणावृष्णिपौंस्यम्॥ २३॥

वि। वृत्रम्। पर्वऽशः। ययुः। वि। पर्वतान्।
अराजिनः। चक्राणाः। वृष्णि। पौंस्यम्॥ २३॥

अराजिनः राज्ञा केनचित् स्वामिना अनधिष्ठिताः यद्वा राजा स्वामी अस्य नविद्यते इत्यराजा इन्द्रः तद्युक्ता वृष्णि वीर्यवत् पौंस्यं बलं चक्राणाः कुर्वाणामरुतः वृत्रं आवरकमसुरं मेघं वा पर्वशः पर्वणि पर्वणि भेदेन विययुः विशिष्टं वधमगमयन् तथा पर्वतान् गिरींश्च विशिष्टं वधं प्रापयन्॥ २३॥

२३. अराजक और वीर्य के समान बल बढ़ानेवाले मरुद्गण ने पर्वत की तरह वृत्र को टुकड़े-टुकड़े कर दिया था।

अथ चतुर्विंशी—

अनुं त्रितस्यं युध्यंतः शुष्मंमावन्नुत क्रतुंम् ।
अन्विन्द्रं वृत्रतूर्ये ॥ २४ ॥

अनुं । त्रितस्यं । युध्यंतः । शुष्मंम् । आवन् । उत ।
क्रतुंम् । अनुं । इन्द्रंम् । वृत्रऽतूर्ये ॥ २४ ॥

त्रितस्याप्यस्य एतत्संज्ञस्य युध्यतः शत्रून्संप्रहरतोराजर्षेः शुष्मं परेषां शोषकं बलं मरुतः अन्वावन् साहाय्यार्थमन्वगच्छन् यद्वा अनुगुणमरक्षन् उतापिच क्रतुं तदीयं कर्म चारक्षन् अपिच वृत्रतूर्ये वृत्रवधार्थे सङ्ग्रामे इन्द्रं च अन्वावन् अरक्षन् ॥ २४ ॥

२४. मरुद्गण ने योद्धा त्रित के बल की रक्षा की थी, त्रित के कर्म की रक्षा की थी और वृत्र-वध के लिए इन्द्र की रक्षा की थी।

अथ पञ्चविंशी—

विद्युद्धस्ता अभिद्यवः शिप्राः शीर्षन्हिरण्ययीः ।
शुभ्रा व्यंञ्जत श्रिये ॥ २५ ॥ २२ ॥

विद्युत्ऽहस्ताः । अभिऽद्यवः । शिप्राः ।
शीर्षन् । हिरण्ययीः । शुभ्राः । वि । अञ्जत । श्रिये ॥ २५ ॥ २२ ॥

विद्युद्धस्ताः विद्योतमानायुधबाहवः अभियवः अभिगतदीप्तयः शुभ्राः शोभमानामरुतः शीर्षन् शीर्ष्णि शिरसि आत्मीयेषु शिरःसु हिरण्ययीः हिरणमयीः स्वर्णमयानि शिप्राः शिरस्त्राणानि श्रिये शोभनार्थं व्यंजत व्यंजयन्ति व्यक्तीकुर्वन्ति धारयन्तीत्यर्थः ॥ २५ ॥

२५. आयुध-हस्त, दीप्तिमान् और शोभन मरुत् लोग, शोभा के लिए मस्तक पर सोने का शिरस्त्राण (शिप्र) धारण किया था।

॥ इति पंचमस्याष्टमे द्वाविंशोवर्गः ॥ २२ ॥

अथ षड्विंशी—

उशना यत्परावत उक्ष्णो रंध्रमयातन ।
द्यौर्न चक्रदद्भिया ॥ २६ ॥

उशना । यत् । पराऽवतः । उक्ष्णः । रंध्रम् ।
अयातन । द्यौः । न । चक्रदत् । भिया ॥ २६ ॥

हे मरुतः उशनाः व्यत्ययेन प्रथमा उशनसा काव्येन ऋषिणा स्तूयमाना यूयम् यद्वा उशनसूशब्दाद् सुपांसुलुगिति जसःसुः उशनसः स्तोतॄन् कामयमाना यूयं उक्षणः सेक्तुः कामानां वर्षितुः आत्मीयस्यरथस्य वृष्टिहेतोरन्तरिक्षस्यवा रन्ध्रं मध्यं परावतोदूरदेशात् यद्यदा अयातनागच्छत यातेर्लङि मध्यमबहुवचनस्य तप्तनप्तनथनाश्चेति तनबादेशः तदानीं द्यौर्न अत्र द्युशब्देन तत्रत्योजनसंघोलक्ष्यते द्युलोके वर्तमानोजनसङ्घइव पार्थिवमपि सर्वं भूतजातं भिया युष्मद्वेगजनितया भीत्या चक्रदत् अशब्दयत् अकम्पत वा ॥ २६ ॥

२६. मरुतो, स्तोताओं की इच्छा करके अभीष्टवर्षी रथ के बीच दूर देश से तुम लोग आये थे। उस समय द्युलोकवर्त्ती जनता के समान पथिवी के प्राणी भी वेग से काँप गये थे।

आनोमखस्यदावनेश्वैर्हिरण्यपाणिभिः।
देवासउपगन्तन॥ २७॥

आ। नः। मखस्य। दावने। अश्वैः। हिरण्यपाणिऽभिः।
देवासः। उप। गन्तन॥ २७॥

हे देवासः दानादिगुणयुक्तामरुतः नोस्माकं मखस्य यज्ञस्य दावने दानाय ददातेरौणादिकोभाववनिः हिरण्यपाणिभिः स्वर्णमयपादैः स्वर्णालंकृतैः हितरमणीयपादैर्वा अश्वैः आ उपगन्तन उपागच्छत प्रामुत गमेर्लोटि छान्दसःशपोलुक् तप्तनप्तनथनाश्चेतितनबादेशः अतएव ङित्वाभावादनुनासिकलोपोनक्रियते ॥ २७ ॥

२७. देवता लोग (मरुत् लोग) यज्ञ के दान के लिए सोने के पैरोंवाले अश्वों पर चढ़कर आवें।

अथाष्टाविंशी—

यदेषांपृषतीरथेप्रष्टिर्वहतिरोहितः।
यान्तिशुभ्राऽरिणन्नपः २८॥

यत्। एषाम्। पृषतीः। रथे। प्रष्टिः। वहति।
रोहितः। यान्ति। शुभ्राः। रिणन्। अपः॥ २८॥

एषां मरुतां रथे पृषतीः पृषद्भिः श्वेतबिन्दुभिर्युक्तामृग्योयद्यदा वहन्ति यदाच प्रष्टिः प्राशुः शीघ्रगामी यद्वा प्रमुखे युज्यमानः सन् रोहितः पृषतः पृषद्भिर्युक्तोमृगः वहति तदानीं शुभ्राःशोभमानामरुतो यान्ति गच्छन्ति तेषां गमनेच सति अपउदकानि वृष्टिलक्षणानि रिणन्

अरिणन् अगच्छन् सर्वत्र प्रवहन्ति रीगतिरेषणयोः क्र्यादिकः प्वादीनांह्रस्वश्छान्दसोऽभावः समानवाक्ये निघातयुष्मदस्मदादेशावक्तव्याइति वचनादत्रपूर्वपदस्य वाक्यान्तरगतत्वात्तिङ्ङतिङइति निघाताभावः ॥ २८ ॥

२८. इन मरुतों के रथ पर जिस समय श्वेत बिन्दुओंवाली मृगी और शीघ्रगामी रोहित मृग प्राप्त होते हैं, उस समय शोभन मरुद्‌गण जाते और जल प्रवाहित होता है।

सुषोमेशर्यणावत्यार्जीकेपस्त्यावति ।
ययुर्निचक्रयानरः ॥ २९ ॥

सुऽसोमे । शर्यणाऽवति । आर्जीके । पस्त्यऽवति ।
ययुः । निऽचक्रया । नरः ॥ २९ ॥

सुषोमे शोभनसोमयुक्ते आर्जीके ऋजीकानामदेशाः तत्संबन्धि शर्यणावति कुरुक्षेत्रस्य जघनार्धे शर्यणावत्संज्ञे सरसि पस्त्यावति पस्त्यमिति गृहनाम यज्ञगृहोपेते सोमपानाय नरोनेतारो मरुतः निचक्रया नीचीनचक्रया अवाङ्मुखं प्रवर्तमानया रथकटचया ययुर्यान्ति गच्छन्ति यातेश्छांदसोलिट् यद्वा नरोनेतारऋत्विजः उक्तगुणविशिष्टे शर्यणावति मरुद्यागाय सोममाहर्तुं निचक्रया नीचीनचक्रया शकट्या ययुर्गच्छन्ति ॥ २९ ॥

२९. नेता मरुद्‌गण शोभन सोमवाले और यज्ञ-गृह से संयुक्त हैं। वे ऋजीका देश के शर्यणा नामक सरोवर (कुरुक्षेत्र के निकटस्थ) में रथचक्र को निम्नमुख करके जाते हैं।

कदागच्छाथमरुतइत्थाविप्रंहवमानम् ।
मार्डीकेभिर्नाधमानम् ॥ ३० ॥ २३ ॥

कदा । गच्छाथ । मरुतः । इत्था । विप्रम् ।
हवमानम् । मार्डीकेभिः । नाधमानम् ॥ ३० ॥ २३ ॥

हे मरुतः इत्था इत्थमनेन प्रकारेण हवमानं आह्वयन्तं स्तुवन्तं नाधमानं याचमानं विप्रं मेधाविनं स्तोतारं मां कदा कस्मिन्काले मार्डीकेभिः सुखहेतुभिर्धनैः सार्धं गच्छाथ गच्छथ विलम्बं माकुरुत शीघ्रमागच्छतेति भावः ॥ ३० ॥

३०. मरुतो, कब तुम लोग इस प्रकार से आह्वान करनेवाले और याचक मेधावी (विप्र) स्तोता के पास सुख-हेतु धन के साथ आओगे ?

॥ इति पञ्चमस्याष्टमे त्रयोविंशोवर्गः ॥ २३ ॥

अथैकत्रिंशी—

कद्धंनूनंकंधप्रियोयदिन्द्रमजंहातन।
कोवंःसखित्वओंहते ॥ ३१ ॥

कत् । ह । नूनम् । कधऽप्रियः । यत् । इन्द्रंम् ।
अजंहातन । कः । वः । सखिऽत्वे । ओहते ॥ ३१ ॥

हे कधप्रियः कथया स्तुत्या प्रीयमाणाः कथवाक्यप्रबन्धने अस्माद्भावे चिन्तिपूजीत्यादिना अङ् ततष्टाप् उत्तरपदे ङ्यापोःसंज्ञाछन्दसोरितिह्रस्वत्वम् धत्वंछान्दसं ईदृशा हे मरुतः वृत्रेणसह युध्यमानं इन्द्रं नूनं सत्यं अजहातन पर्यत्यजतेति यदेतत् तत् कद्ध कदाखलु कस्मिन्काले जातं नकदाचिदपीत्यर्थः । तथाच ब्राह्मणम्—मरुतोहैनंनाजहुरिति[1] । वृत्रस्यत्वाश्वसथादीषमाणाइत्यादिनिगमान्तरम् । यतएवमतःकारणात् वोयुष्माकं सखित्वे व्यत्ययेन सप्तमी सखिभावं कःस्तोता ओहते याचते यद्वा वहते प्राप्नोति ईदृशमनपायं युष्मत्सखित्वं दुर्लभमित्यर्थः ॥ ३१ ॥

३१. तुम लोग स्तुति से प्रसन्न होते हो। तुम लोगों ने इन्द्र का कब परित्याग किया था? तुम्हारी मित्रता के लिए किसने प्रार्थना की थी?

अथ द्वात्रिंशी—

सहोषुणोवज्रंहस्तैःकण्वांसोअग्निंमरुद्भिंः ।
स्तुषेहिरंण्यवाशीभिः ॥ ३२ ॥

सहो इतिं । सु । नः । वज्रंऽहस्तैः । कण्वांसः ।
अग्निम् । मरुत्ऽभिंः । स्तुषे । हिरंण्यऽवाशीभिः ॥ ३२ ॥

वज्रहस्तैर्वज्रबाहुभिः हिरण्यवाशीभिः हिरणमयी वाशी तक्षणसाधनमायुधं येषामस्ति तादृशैर्मरुद्भिः सहो सहैव वर्तमानमग्निं नोस्मदीयाः हे कण्वासः कण्वाः स्तोतारः कण्वगोत्रावा ऋषयः यूयं स्तुषे स्तुध्वम् यद्वा नइति प्रथमार्थेद्वितीया नोवयं कण्वगोत्राः अस्मदोद्वयोश्चेत्येकस्मिन्बहुवचनम् सविशेषणस्यप्रतिषेधइतितु व्यत्ययेन प्रवर्तते स्तुषे स्तुवे स्तौतेरुत्तमैकवचने सिब्बहुलमितिसिप् ॥ ३२ ॥

३२. कण्वगण, वज्रहस्त और सोने के तक्षण करनेवाले आयुध (काष्ठादि को चिकना करनेवाले यन्त्र) से युक्त मरुतों के साथ अग्नि की स्तुति करो।

---

[1] ऐ० ब्रा० ३. २०. । [2] ऋ० सं० ६. ६. ३३. ।

अथ त्रयस्त्रिंशी—

ओषुवृष्णःप्रयंज्यूनानव्यंसेसुवितायं ।
वृवृत्यांचित्रवांजान् ॥ ३३ ॥

ओ इति । सु । वृष्णंः । प्रऽयंज्यून् । आ ।
नव्यंसे । सुवितायं । ववृत्याम् । चित्रऽवांजान् ॥ ३३ ॥

वृष्णोवर्षितॄन् अभीष्टफलदान्प्रयज्यून् प्रकर्षेण यष्टव्यान् चित्रवाजान् विचित्रगमनान् विचित्रबलान्विचित्रधनान्वा एवंभूतान् मरुतः सु सुष्ठु ओ आ उ ववृत्यां आवर्तयामि अस्मदभिमुखं यथागच्छन्ति तथाकरोमि । अपिच नव्यसे नवीयसे नवतराय अत्यन्तं प्रशस्ताय सुविताय सुष्ठुप्राप्तव्याय धनायच तानाववृत्यां आवर्तयामि ॥ ३३ ॥

३३. मैं वर्षक, यजनीय और विचित्र बलवाले मरुतों को, सुख-लभ्य धन के लिए, आवर्त्तित (घूर्णित वा द्रवीभूत) करता हूं।

गिरयंश्चिन्निजिंहतेपर्शांनासोमन्यंमानाः ।
पर्वताश्चिन्नियेमिरे ॥ ३४ ॥

गिरयंः । चित् । नि । जिहते । पर्शांनासः ।
मन्यंमानाः । पर्वताः । चित् । नि । येमिरे ॥ ३४ ॥

मरुत्स्वागच्छत्सु गिरयश्चिद् गिरयोपि शिलोच्चयाअपि पर्शानासः पीडचमानाः यद्वा मरुद्भिः स्पृश्यमानाः अतएव मन्यमानाः अभिमन्यमानाः वा बध्यमाना सन्तः निजिहते नितरां गच्छन्ति मरुद्वेगेन स्थानात्प्रच्यवन्ते । तथा पर्वताश्चिद् पर्ववन्तोमेघाअपि तदीयेन गमनेन नियेमिरे नियम्यन्ते यद्वा गिरयः क्षुद्राः शिलोच्चयाः । महान्तः पर्वताः ॥ ३४ ॥

३४. सारे गिरि पीड़ित वा आघात-प्राप्त और बाधा-प्राप्त होने पर भी अपने स्थान से भ्रष्ट नहीं होते। पर्वत (मेघ) भी नियत ही रहते हैं।

अथ पञ्चत्रिंशी—

आक्ष्णयावांनोवहन्त्यन्तरिक्षेणपततः ।
धातारःस्तुवतेवयः ॥ ३५ ॥

आ । अक्षणऽयावानः । वहन्ति । अन्तरिक्षेण ।
पततः । धातारः । स्तुवते । वयः ॥ ३५ ॥

अक्षणयावानः अक्षणं व्याप्तं गच्छन्तः यद्वा अक्षणः चक्षुषोपि शीघ्रं यान्तीत्यक्षणयावानः यातेरातोमनिन्विति वनिप् ईदृशाअश्वाः अन्तरिक्षेण आकाशमार्गेण पततः गच्छतोमरुतः आवहन्ति आनयन्ति यद्वा पततइत्यश्वानां विशेषणम् अन्तरिक्षे नभसि पततोगच्छन्तः छान्दसोनुमभावः किंकुर्वन्तः स्तुवते स्तोत्रं कुर्वते जनाय वयोन्नं धातारोविधातारः कुर्वाणाः ॥ ३५॥

३५. बहुदूर-व्यापक गमन करनेवाले अश्व आकाश-मार्ग से जाते हुए मरुतों को ले आते हैं। वे स्तोता को अन्न देते हैं।

अथ षट्त्रिंशी—

अग्निर्हिजानिपूर्व्यश्छन्दोनसूरोअर्चिषा ।
तेभानुभिर्वितस्थिरे ॥ ३६ ॥ २४ ॥
अग्निः । हि । जनि । पूर्व्यः । छन्दः । न । सूरः ।
अर्चिषा । ते । भानुऽभिः । वि । तस्थिरे ॥ ३६ ॥ २४ ॥

अग्निर्हि अग्निःखलु आर्चिषा तेजसा पूर्व्यः सर्वेषु देवेषु मुख्योजनि अजायत दीपजनेत्यादिना कर्तरिलुङि चेश्चिणादेशः । तत्रदृष्टान्तः—छन्दः उपच्छन्दनीयः सूरोन सूर्यइव तदनंतरं ते पूर्वोक्तगुणामरुतः भानुभिर्दीप्तिभिर्वितस्थिरे विविधमवतिष्ठन्ते आग्निमारुतेहि अग्निः पूर्वं स्तूयते पश्चान्मरुतः तदपेक्षया च पूर्वोत्तरयोरर्धर्चयोः क्रमेण अग्निर्मरुतश्च स्तूयन्ते ॥ ३६ ॥

३६. तेजोबल से अग्निदेव ने, स्तवनीय सूर्य की तरह, सबके मुख्य होकर जन्म ग्रहण किया है। मरुद्गण दीप्ति-बल से नाना स्थानों में रहते हैं।

॥ इति पञ्चमस्याष्टमे चतुर्विंशोवर्गः ॥ २४ ॥

आनोविश्वाभिरिति त्रयोविंशत्यृचं तृतीयं सूक्तं सध्वंसाख्यस्य काण्वस्यार्षं आनुष्टुभं एतदादीनि त्रीणि सूक्तानि अश्विदेवत्यानि तथाचानुक्रान्तम्—आनस्त्र्यधिका सध्वंसआश्विनंत्वानुष्टुभमिति । प्रातरनुवाके आश्विने क्रतौ आनुष्टुभेछन्दसि आश्विनशस्त्रे चैतत्सूक्तम् सूत्र्यतेहि—आनोविश्वाभिस्त्यश्चिदत्रिमित्यानुष्टुभमिति । अप्तोर्यामेप्रशास्तुरतिरिक्तोक्थेप्येतत् सूत्रितश्च—आनोविश्वाभिः प्रातर्यावाणेति । चतुर्थेहनि प्रउगशस्त्रे आनोविश्वाभिरित्याश्विनस्तृचः सूत्रितंच—आनोविश्वाभिरूतिभिस्त्यमुवोअप्रहणमिति ।

तत्र प्रथमा—

आनोविश्वाभिरूतिभिरश्विनागच्छतंयुवम् ।
दस्राहिरण्यवर्तनीपिबतंसोम्यंमधु ॥ १ ॥

आ । नः । विश्वाभिः । ऊतिऽभिः । अश्विना । गच्छंतम् ।
युवम् । दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी ।
पिबतम् । सोम्यम् । मधु ॥ १ ॥

हे अश्विनाऽश्विनौ अश्नुवानौ सर्वंजगद्व्यामुवन्तौ यद्वा अश्वैर्युक्तौ युवं युवां विश्वाभिः सर्वाभिर्व्याप्ताभिर्वा ऊतिभीरक्षाभिर्दातव्याभिः सार्धं नोस्मान् आगच्छतम् आगत्य च हे दस्रा दस्रौ दर्शनीयौ शत्रूणामुपक्षपयितारौ वा हे हिरण्यवर्तनी हिरण्मयरथौ हितरमणीयाचरणौ वा ईदृशौ हे अश्विनौ सोम्यं सोममयं मधु पिबतम् ॥ १ ॥

१. अश्विद्वय, तुम लोग दर्शनीय हो। तुम्हारा रथ सोने का है। सारे रक्षणों के साथ आगमन करो। सोममय मधु का पान करो।

अथ द्वितीया—

आनूनंयातमश्विनारथेनसूर्यत्वचा ।
भुजीहिरण्यपेशसाकवीगंभीरचेतसा ॥ २ ॥

आ । नूनम् । यातम् । अश्विना । रथेन । सूर्यऽत्वचा ।
भुजी इति । हिरण्यऽपेशसा । कवी इति । गंभीरऽचेतसा ॥ २ ॥

हे भुजी हविषां भोक्तारौ यद्वा स्तोतृभिरन्नानां भोजयितारौ सर्वस्य जगतः पालकौ वा हे हिरण्यपेशसा हिरण्मयालङ्कारौ हिरण्मयावयवौ वा हे कवी क्रान्तदर्शिनौ स्तोतव्यौ वा हे गंभीरचेतसा प्रशस्तज्ञानौ ईदृशौ अश्विना अश्विनौ सूर्यत्वचा सूर्यवद्भासमानेन रथेन नूनमवश्यमस्मानायातमागच्छतम् ॥ २॥

२. अश्विद्वय, तुम लोग भोक्ता हो, हिरण्मय शरीरवाले हो, क्रान्तकर्मा (कवि) हो और प्रशस्त ज्ञानवाले हो। सूर्य के समान भासमान रथ पर चढ़कर अवश्य हमारे पास आओ।

अथ तृतीया—

आयातंनहुषस्पर्यान्तरिक्षात्सुवृक्तिभिः ।
पिबाथोअश्विनामधुकण्वानांसवनेसुतम् ॥ ३ ॥

आ । यातम् । नहुषः । परि । आ । अन्तरिक्षात् । सुवृक्तिऽभिः ।
पिबाथः । अश्विना । मधु । कण्वानाम् । सवने । सुतम् ॥ ३ ॥

हे अश्विनौ नहुषस्परि नहुषइति मनुष्यनाम सामर्थ्याच्चात्र तत्संबद्धोलोकोलक्ष्यते मानुषात्तस्माल्लोकात् परिः पञ्चम्यर्थानुवादी सुवृक्तिभिः सुष्ठु दोषवर्जिताभिः सुप्रवृत्ताभिर्वा सु-

तिभिः हेतुभूताभिः आयातमागच्छतम्। तथा अन्तरिक्षात् अन्तराक्षान्तात् मध्यमाल्लोकात् अप्यागच्छतम् आगत्यच कण्वानां कण्वगोत्राणामस्माकं सवने यज्ञे प्रातःसवनादौ सुतमभिषुतं मधु मधुरं सोमं हे अश्विनौ पिबाथः पिबतम्॥ ३॥

३. अश्विद्वय, निर्दोष स्तुति-द्वारा अन्तरिक्ष से मनुष्य-लोक की ओर आओ और कण्ववंशीयों के यज्ञ में अभिषुत सोम का पान करो।

आनोयातंदिवस्पर्यान्तरिक्षादधप्रिया।
पुत्रःकण्वस्यवामिहसुषावसोम्यंमधु॥ ४॥

आ। नः। यातम्। दिवः। परि। आ। अन्तरिक्षात्। अधऽप्रिया।
पुत्रः। कण्वस्य। वाम्। इह। सुसाव। सोम्यम्। मधु॥ ४॥

हे अश्विनौ दिवस्परि दिवोधि द्युलोकात् नोस्मानायातमागच्छतम् पञ्चम्याः परावध्यर्थंइति विसर्जनीयस्य सत्वम्। हे अधप्रिया अधः अधस्तात् अस्मिन्लोके विद्यमानेन सोमेन प्रीयमाणौ यद्वा कधप्रिया छान्दसोवर्णलोपः कधया स्तुत्या प्रीयमाणौ। हे ईदृशावश्विनौ अन्तरिक्षात् अप्यागच्छतम् इहास्मिन्यज्ञे कण्वस्य ऋषेः पुत्रः सोम्यं सोममयं मधु वां युवाभ्यां युवयोरर्थं सुषाव अभिषुणोति अतआयातमित्यन्वयः॥ ४॥

४. कण्व ऋषि के पुत्र इस यज्ञ में तुम्हारे लिए सोममय मधु का अभिषव करते हैं; इसलिए हे अश्विद्वय, इस लोक के प्रति प्रसन्न होकर तुम लोग द्युलोक और अन्तरिक्ष से आओ।

अथ पञ्चमी—

आनोयातमुपश्रुत्यश्विनासोमपीतये।
स्वाहास्तोमस्यवर्धनाप्रकवीधीतिभिर्नरा॥ ५॥ २५॥

आ। नः। यातम्। उपऽश्रुति। अश्विना। सोमऽपीतये।
स्वाहा। स्तोमस्य। वर्धना। प्र। कवी इति।
धीतिऽभिः। नरा॥ ५॥ २५॥

हे अश्विना अश्विनौ नोस्माकं उपश्रुति श्रूयतइति श्रुत् स्तुतिः उपगताश्रुद्यस्मिन् तस्मिन् यज्ञे सोमपीतये सोमपानाय आयातमागच्छतम्। हे वर्धना वर्धनौ कवी क्रान्तदर्शिनावश्विनौ स्वाहा स्वाहाकृतौ स्वाहाकारेण सम्यगिष्टौ सन्तौ यद्वा स्वाहेति वाङ्नाम स्तुतिरूपया वाचा स्तुतौ वाचा स्तोमस्य स्तोतुः प्रवर्धकौ भवतम्। तथा हे नरा नेतारावश्विनौ धीतिभिः

कर्मभिः यष्टुश्च प्रवर्धकौ भवतम्। यद्वा स्वाहेत्यादीन्यामन्त्रितानि हे स्वाहा स्वाहाकृतौ स्तोमस्य स्तोत्रस्य स्तोतुर्वा हे प्रवर्धना प्रवर्धयितारौ हे कवी क्रान्तदर्शिनौ धीतिभिः बुद्धिभिराप्तैरीयैःकर्मभिर्वा हे नरा सर्वेषां नेतारावश्विनौ सोमपानायायातमित्येकमेववाक्यम्। अस्मिन्पक्षे धीतिभिरित्यपरांगवत्वाभावः छान्दसः। यद्वा धीतिभिर्ध्यातव्याभिर्युष्मदीयाभिरूतिभिः सार्धमायातमिति क्रियया संबन्धः ॥ ५ ॥

५. अश्विद्वय, सोमपान के लिए हमारे स्तुतिवाले इस यज्ञ में आओ। वर्द्धक, कवि और नेता अश्विद्वय, अपनी बुद्धि और कर्म से स्तोता को वृद्धि दो।

॥ इति पञ्चमस्याष्टमे पञ्चविंशोवर्गः ॥ २५ ॥

अथ षष्ठी—

यच्चिद्धिवांपुरऋषयोजुहूरेवसेनरा।
आयातमश्विनागतमुपेमांसुष्टुतिंमम ॥ ६ ॥

यत्। चित्। हि। वाम्। पुरा। ऋषयः। जुहूरे। अवसे। नरा। आ। यातम्। अश्विना। आ। गतम्। उप। इमाम्। सुऽस्तुतिम्। मम ॥६॥

हे नरा नेतारावश्विनौ यच्चिद्धि यदा खलु वां युवां पुरा पूर्वस्मिन्काले ऋषयः अतीन्द्रियार्थदर्शिनः स्तोतारः अवसे रक्षणाय जुहूरे जुहुविरे स्तुतिभिराह्वयन्। ह्वयतेर्लिटि अभ्यस्तस्यचेति सम्प्रसारणं हलइतिदीर्घः इरयोरे इति रेभावः तदानीं हे अश्विनौ आयातमागच्छतम् आगतवन्तौ स्थः अतोमम मदीयां इमां सुष्टुतिं शोभनां स्तुतिमपि उपागतमुपागच्छतम् ॥ ६ ॥

६. नेता अश्विद्वय, प्राचीन समय में ऋषियों ने जब तुम्हें, रक्षा के लिए, बुलाया, तब तुम आये थे। इसलिए मेरी इस सुन्दर स्तुति के पास आओ।

अथ सप्तमी—

दिवश्चिद्रोचनादध्यानोगन्तंस्वर्विदा।
धीभिर्वत्सप्रचेतसास्तोमेभिर्हवनश्रुता ॥ ७ ॥

दिवः। चित्। रोचनात्। अधि। आ। नः। गन्तम्। स्वःऽविदा। धीभिः। वत्सऽप्रचेतसा। स्तोमेभिः। हवनऽश्रुता ॥ ७ ॥

हे स्वर्विदा स्वः सूर्यस्य द्युलोकस्य वा लंभयितारावश्विनौ दिवश्चित् द्युलोकाच्च रोचनादधि रोचमानादन्तरिक्षाच्च नोस्मानागन्तमागच्छतम् पूर्ववदधिः पञ्चम्यर्थानुवादकः। हे वत्सप्रचेतसा वत्सेस्तोतरि प्रकृष्टज्ञानौ यद्वा वत्सं निवासकं वेदितव्यं वा प्रकृष्टं चेतो-

ज्ञानं ययोस्तौ तथोक्तौ तौ युवां धीतिभिरात्मीयाभिर्बुद्धिभिः सहागच्छतं हे हवनश्रुता हवनस्यास्मदीयस्याह्वानस्य स्तोत्रस्य श्रोतारौ स्तोमेभिः स्तोत्रैरस्मत्कृतैर्युज्यमानौ-सन्तौ आगच्छतम् ॥ ७ ॥

७. सूर्य के ज्ञाता अश्विद्वय, तुम लोग द्युलोक और अन्तरिक्ष से हमारे पास आओ। स्तोता के प्रति प्रकृष्ट ज्ञानवाले अश्विद्वय, बुद्धि के साथ तुम आओ। आह्वान सुननेवाले, अश्विद्वय, स्तोत्र के साथ तुम आओ।

किमन्येपर्यासतेस्मत्स्तोमेभिरश्विना ।
पुत्रःकण्वस्यवामृषिर्गीर्भिर्वत्सोअवीवृधत् ॥ ८ ॥

किम् । अन्ये । परि । आसते । अस्मत् । स्तोमेभिः । अश्विना ।
पुत्रः । कण्वस्य । वाम् । ऋषिः । गीःऽभिः । वत्सः । अवीवृधत् ॥ ८ ॥

अस्मदस्मत्तोन्येव्यतिरिक्ताः स्तोतारः स्तोमेभिः स्तोत्रैः अश्विना अश्विनौ देवौ किं पर्यासते अस्मद्व्यतिरिक्ताः केप्यश्विनौ स्तोतुं नशक्नुवन्तीत्यर्थः। कण्वस्य ऋषेः पुत्र ऋषिः मन्त्रद्रष्टा वत्सः गीर्भिः स्तुतिभिः हे अश्विनौ वां युवां अवीवृधत् अवर्धयत् ॥ ८ ॥

८. मुझसे अतिरिक्त दूसरा कौन स्तोत्र-द्वारा अश्विद्वय की उपासना कर सकता है? कण्व के पुत्र वत्स ऋषि स्तुति-द्वारा तुम्हें वर्द्धित करते हैं।

आवांविप्रइहावसेह्वत्स्तोमेभिरश्विना ।
अरिप्रावृत्रहन्तमातानोभूतंमयोभुवा ॥ ९ ॥

आ । वाम् । विप्रः । इह । अवसे । अह्वत् । स्तोमेभिः । अश्विना ।
अरिप्रा । वृत्रहन्ऽतमा । ता । नः । भूतम् । मयःऽभुवा ॥ ९ ॥

हे अश्विना अश्विनौ विप्रोमेधावी स्तोता इहास्मिन् यागे अवसे रक्षणार्थं स्तोमेभिः स्तोत्रैः वां युवां आह्वत् आहूतवान् ह्वयतेर्लुङि लिपिसिचिह्वश्चेति च्लेरङादेशः। हे अरिप्रा रिप्रमितिपापनाम अपापौ हे वृत्रहन्तमा वृत्राणां शत्रूणां हन्तृतमौ ता तौ तादृशौ युवां नोस्माकं मयोभुवा सुखस्य भावयितारौ भूतं भवतम् ॥ ९ ॥

९. अश्विद्वय, इस यज्ञ में स्तोता (विप्र) ने रक्षण के लिए स्तुति-द्वारा तुम्हें बुलाया है। हे निष्पाप और शत्रु-घातकों में श्रेष्ठ अश्विद्वय, तुम हमारे लिए सुखदाता होओ।

अथ दशमी—

आयद्वांयोषणारथमतिष्ठद्वाजिनीवसू ।
विश्वान्यश्विनायुवंप्रधीतान्यगच्छतम् ॥ १० ॥ २६ ॥

आ । यत् । वाम् । योषणा । रथम् । अतिष्ठत् । वाजिनीवसू इति वाजिनीऽवसू । विश्वानि । अश्विना । युवम् । प्र । धीतानि । अगच्छतम् ॥ १० ॥ २६ ॥

हे वाजिनीवसू वाजिनी हविष्मती यागक्रिया तस्यां विद्यमानस्वांशलक्षणधनावश्विनौ योषणा योषित्सूर्या आजिधावनेन ध्रियमाणासती वां युवयोरथं यद्यदा आतिष्ठत् आस्थितवती आरूढवती तदा हे अश्विना अश्विनौ युवं युवां धीतानि ध्यातान्यभिलषितानि विश्वानि सर्वाणि प्रकर्षेणागच्छतम् प्रापतम् ॥ १० ॥

१०. धन और अन्न से युक्त अश्विद्वय, योषित् (सूर्या) तुम्हारे रथ पर चढ़ी थी। अश्विद्वय, तुम लोग समस्त अभिलषित पदार्थ प्राप्त करो।

॥ इति पंचमस्याष्टमे षड्विंशो वर्गः ॥ २६ ॥

अथैकादशी—

अतःसहस्रनिर्णिजारथेनायातमश्विना ।
वत्सोवांमधुमद्वचोशंसीत्काव्यःकविः ॥ ११ ॥

अतः । सहस्रऽनिर्निजा । रथेन । आ । यातम् । अश्विना । वत्सः । वाम् । मधुऽमत् । वचः । अशंसीत् । काव्यः । कविः ॥ ११ ॥

हे अश्विना अश्विनौ येषु लोकेषु यत्र वर्तेथे अतोस्माद् स्थानाद् सहस्रनिर्णिजा निर्णिगिति रूपनाम स्वर्णमयतया बहुविधरूपयुक्तेन रथेन आयातमागच्छतम् काव्यः कवेः पुत्रः कविर्मेधावी वत्सऋषिः वां युवाभ्यां युवयोरर्थं मधुमद् माधुर्योपेतं वचोवचनमुक्थं अशंसीद् शंसितवान् यतएवमतआगच्छतमित्यर्थः ॥ ११ ॥

११. अश्विद्वय, तुम लोग जिन लोकों में हो, वहाँ से अनेक रूपोंवाले रथ पर चढ़कर आओ। काव्य (कवि के पुत्र) और कवि (मेधावी) वत्स ऋषि ने मधुमय वाक्य का उच्चारण किया है।

अथ द्वादशी—

पुरुमन्द्रापुरूवसूमनोतरारयीणाम् ।
स्तोमंमेअश्विनाविममभिवह्नीअनूषाताम् ॥ १२ ॥

पुरुऽमन्द्रा । पुरुवसू इति पुरुऽवसू । मनोतरा । रयीणाम् । स्तोमम् । मे । अश्विनौ । इमम् । अभि । वह्नी इति । अनूषाताम् ॥ १२ ॥

पुरुमन्द्रा बहुमदौ बहुभिः सोमैर्मादयितव्यौ वा पुरुवसू बहुधनौ बहूनां निवासकौवा रयीणां धनानां मनोतरा मन्तारौ दातारौ मन्यतेस्तृचि पृषोदरादित्वाद्रूपसिद्धिः नामन्यतरस्यामिति रैशब्दात् नामउदात्तत्वम् । वह्नी कृत्स्नस्य जगतोवोढारौ ईदृशावश्विनौ मे मम इमं स्तोत्रं अभ्यनूषातां सम्यक्स्तुतमिति प्राशंसिषातां । णुस्तुतौ यद्वा नुवतिरत्र श्रवणार्थे वर्तते अभिप्राप्तावश्रौष्टाम् ॥ १२ ॥

१२. बहु-मद-युक्त, धन-दाता और जगद्वाहक अश्विद्वय, मेरे इस स्तोत्र की प्रशंसा करो।

आनोविश्वान्यश्विनाधत्तंराधांस्यह्रया ।
कृतंनऋत्वियावतोमानोरीरधतंनिदे ॥ १३ ॥

आ । नः । विश्वानि । अश्विना । धत्तम् । राधांसि । अह्रया ।
कृतम् । नः । ऋत्वियऽवतः । मा । नः । रीरधतम् । निदे ॥ १३ ॥

हे अश्विना अश्विनौ अह्रया अह्रयाणि अह्रीतिकरणानि अलज्जाहेतूनि प्रशस्तानि विश्वानि सर्वाणि राधांसि धनानि नोस्मभ्यं आधत्तं प्रयच्छतम् । अपिच नोस्मान् ऋत्वियावतः ऋतौ कालेभवं प्रजोत्पादनरूपं कर्म ऋत्वियं तद्वतः कृतम् कुरुतम् । तथा निंदे निंदायै निन्दकाय वा नोस्मान् मारीरधतं मावशं नैष्टम् ॥ १३ ॥

१३. अश्विद्वय, हमारे लिए अलज्जाकारक सारा धन दो। हमें प्रजोत्पादन-रूप कर्मवाले करो। हमें निन्दकों के वशीभूत नहीं करना।

यन्नासत्यापरावतियद्वास्थोअध्यम्बरे ।
अतःसहस्रनिर्णिजारथेनायातमश्विना ॥ १४ ॥

यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । अम्बरे ।
अतः । सहस्रऽनिर्निजा । रथेन । आ । यातम् । अश्विना ॥ १४ ॥

हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा अश्विनौ यद्यदि परावति दूरदेशे स्थः यद्वा यदिच अंबरे अन्तिकनामैतत् समीपे स्थोभवथः । अधिः सप्तम्यर्थानुवादी अतोस्मात्सर्वस्मात्स्थानात् सहस्रनिर्णिजा बहुविधरूपेण रथेन हे अश्विनावागच्छतम ॥ १४ ॥

१४. सत्य स्वभाव अश्विनीकुमारो, तुम चाहे दूर रहो अथवा पास में रहो, चाहे जिस स्थान में रहो, सहस्र रूपोंवाले रथ से आगमन करो।

अथ पञ्चदशी—

योवांनासत्याद्वृषिर्गीर्भिर्वत्सोअवीवृधत् ।
तस्मैसहस्रनिर्णिजमिषंधत्तंघृतश्चुतम् ॥ १५ ॥ २७ ॥

यः । वाम् । नासत्यौ । ऋषिः । गीःऽभिः । वत्सः । अवीवृधत् ।
तस्मै । सहस्रऽनिर्निजम् । इषम् । धत्तम् । घृतऽश्चुतम् ॥ १५ ॥२७॥

हे नासत्यौ योवत्साख्यऋषिः वां युवां गीर्भिः स्तुतिभिः अवीवृधत् अवर्धयत् तस्मै ऋषये सहस्रनिर्णिजं बहुविधरूपं घृतश्चुतं घृतं क्षरन्तीं इषमन्नं धत्तं प्रयच्छतम् ॥ १५ ॥

१५. नासत्य-द्वय, जिन वत्स ऋषि ने स्तुति-द्वारा तुम्हें वर्द्धित किया है, उनके लिए सहस्र रूपोंवाला और घी चुलानेवाला अन्न दो।

॥ इति पञ्चमस्याष्टमे सप्तविंशोवर्गः ॥ २७ ॥

अथ षोडशी—

प्रास्माऊर्जंघृतश्चुतमश्विनायच्छतंयुवम् ।
योवांसुम्नायंतुष्टवद्वसूयाद्दानुनस्पती ॥ १६ ॥

प्र । अस्मै । ऊर्जम् । घृतऽश्चुतम् । अश्विना । यच्छतम् । युवम् ।
यः । वाम् । सुम्नायं । तुस्तवत् । वसुऽयात् । दानुनः । पती इति ॥१६ ॥

हे अश्विना अश्विनौ अस्मै स्तोत्रे घृतश्चुतं घृतधारया युक्तं ऊर्जं बलकरमन्नरसं युवं युवां प्रयच्छतं दत्तं हे दानुनस्पती दानस्याधिपती वां युवां सुम्नाय सुखार्थं यस्तुष्टवत्स्तूयात् यश्च वसूयात् वसुधनमात्मनइच्छेत् अस्माइत्यन्वयः ॥ १६ ॥

१६. अश्विद्वय, उन स्तोता के लिए तुम घृत-धारा से युक्त और बलिष्ठ अन्न प्रदान करो। दानाधिपतियो, इन्होंने तुम लोगों के सुख के लिए स्तुति की थी। यह अपने लिए धन की इच्छा करते हैं।

अथ सप्तदशी—

आनोगन्तंरिशादसेमंस्तोमंपुरुभुजा ।
कृतंनःसुश्रियोनरेमादातमभिष्टये ॥ १७ ॥

आ । नः । गन्तम् । रिशादसा । इमम् । स्तोमम् । पुरुऽभुजा ।
कृतम् । नः । सुऽश्रियः । नरा । इमा । दातम् । अभिष्टये ॥ १७ ॥

हे रिशादसा रिशतां हिंसतां निरसितारौ यद्वा रिशानां हिंसकानां अत्तारौ भक्षयितारौ हे पुरुभुजा बहुलस्य हविषोभोक्तारौ बहूनां पालकौ वा हे अश्विनौ नोस्माकमिमं स्तोमं स्तोत्रं आगन्तमभिगच्छतम् आगत्यच हे नरा नेतारौ नोस्मान् सुश्रियः सुश्रीकान् शोभनया सम्पदा युक्तान् कृतं कुरुतम्। तदर्थं इमा इमानि पुरोवर्तमानानि पार्थिवानि अभिष्टये अभिप्राप्तये दातं ददतम् ददातेर्लोटि छान्दसः शपोलुक् ॥ १७ ॥

१७. रिपु-भक्षक और बहुत हवि के खानेवाले नेता अश्विद्वय, तुम लोग हमारी स्तुति की ओर आओ और हमें शोभन सम्पदा से युक्त करो तथा पार्थिव पदार्थ प्रदान करो।

आवांविश्वाभिरूतिभिःप्रियमेधाअहूषत ।
शर्जन्तावध्वराणामश्विनायामहूतिषु ॥ १८ ॥

आ । वाम् । विश्वाभिः । ऊतिऽभिः । प्रियऽमेधाः । अहूषत ।
राजन्तौ । अध्वराणाम् । अश्विना । यामऽहूतिषु ॥ १८ ॥

हे अश्विना अश्विनौ यामहूतिषु यामानां यातॄणां देवानां हूतिराह्वानं येषु यागेषु तेषु प्रियमेधाः प्रिययज्ञाः एतत्संज्ञाऋषयः अध्वराणां यज्ञानां राजन्तौ ईश्वरौ राजतिरैश्वर्यकर्मा अश्विनौ हि देवानामध्वर्यूआस्तामितिहि ब्राह्मणम् । ईदृशौ विश्वाभिः सर्वाभिरूतिभीरक्षाभिः सहितौ वां युवां आहूषत आह्वयन् अस्तुवन्नित्यर्थः ॥ १८ ॥

१८. प्रियमेध नामक ऋषियों ने देवों के आह्वान के समय तुम्हें, सारे संरक्षणों के साथ, बुलाया था। तुम लोग यज्ञ में शोभा पाओ।

आनोगन्तंमयोभुवाश्विनाशम्भुवायुवम् ।
योवांविपन्यूधीतिभिर्गीर्भिर्वत्सोअवीवृधत् ॥ १९ ॥

आ । नः । गन्तम् । मयःऽभुवा । अश्विना । शम्ऽभुवा । युवम् ।
यः । वाम् । विपन्यू इति । धीतिऽभिः । गीःऽभिः । वत्सः । अवीवृधत् ॥ १९ ॥

हे अश्विना अश्विनौ मयोभुवा मयसः सुखस्य भावयितारौ शंभुवा रोगाणां शमस्य भावयितारौ युवं युवां नोस्मानागन्तमागच्छतम् । हे विपन्यू स्तुत्यावश्विनौ योवत्सः स्तोता वां युवां धीतिभिः कर्मभिः परिचरणैः गीर्भिः स्तुतिभिश्च अवीवृधत् अवर्धयत् तानस्मानि- ति पूर्वत्रान्वयः ॥ १९ ॥

१९. सुखदाता, आरोग्यप्रद और स्तुति-योग्य अश्विद्वय, जिन वत्स ऋषि ने स्तुति-द्वारा तुम्हें वर्द्धित किया है, उनके सामने आओ।

---

१ तै० ब्रा० ३. २. २.।

अथ विंशी—

याभिः कण्वं मेधातिथिं याभिर्वशं दशव्रजम् ।
याभिर्गोशर्यमावतं ताभिर्नोऽवतं नरा ॥ २० ॥ २८ ॥

याभिः । कण्वम् । मेधऽअतिथिम् । याभिः । वशम् । दशऽव्रजम् ।
याभिः । गोऽशर्यम् । आवतम् । ताभिः । नः । अवतम् । नरा ॥ २० ॥ २८ ॥

हे अश्विनौ याभिरूतिभिः कण्वमृषिं मेधातिथिं च आवतं अरक्षतम् याभिश्च वशं एतत्संज्ञं दशव्रजं च आवतम् याभिश्च गोशर्यं शीर्णागौर्यस्य सगोशर्यः शयुः तथाचाम्नातम्—शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गामिति[1] । ईदृशं गोशर्यं शयुं आवतं अरक्षतम् हे नरा नेतारौ ताभिरूतिभिर्नोऽस्मानवतं रक्षतम् ॥ २० ॥

२०. जिन संरक्षणों से तुमने कण्व, मेधातिथि, वश, दशव्रज और गोशर्य की तुमने रक्षा की थी, नेता अश्विद्वय, उनके द्वारा हमारी रक्षा करो। ॥ इति पञ्चमस्याष्टमेऽष्टाविंशोवर्गः ॥ २८ ॥

अथैकविंशी—

याभिर्नरा त्रसदस्युमावतं कृत्व्ये धने ।
ताभिः ष्व१स्माँ अश्विना प्रावतं वाजसातये ॥ २१ ॥

याभिः । नरा । त्रसदस्युम् । आवतम् । कृत्व्ये । धने । ताभिः ।
सु । अस्मान् । अश्विना । प्र । अवतम् ॥ वाजऽसातये ॥ २१ ॥

हे नरा नेतारावश्विनौ धने कृत्व्ये कर्तव्ये प्राप्तव्ये सति त्रसदस्युं एतत्संज्ञं पुरुकुत्सपुत्रमृषिं याभिरूतिभिरावतमरक्षतम् हे अश्विनौ ताभिरूतिभिः सु सुष्ठु अस्मान्प्रावतं प्ररक्षतं किमर्थं वाजसातये वाजस्यान्नस्य बलस्य वा संभजनार्थम् ॥ २१ ॥

२१. नेता अश्विद्वय, जिन रक्षणों से प्राप्तव्य धन के लिए, तुमने त्रसदस्यु की रक्षा की थी, उन्हीं के द्वारा हमें, अन्न-लाभ के लिए, भली भाँति बचाओ।

अथ द्वाविंशी—

प्र वां स्तोमाः सुवृक्तयो गिरो वर्धन्त्वश्विना ।
पुरुत्रा वृत्रहन्तमा ता नो भूतं पुरुस्पृहा ॥ २२ ॥

---

1 ऋ० सं० १.८, १२.।

प्र । वाम् । स्तोमाः । सुऽवृक्तयः । गिरः । वर्धन्तु । अश्विना ।
पुरुऽत्रा । वृत्रहन्ऽतमा । ता । नः । भूतम् । पुरुऽस्पृहा ॥ २२ ॥

हे अश्विनौ स्तोमाः प्रगीतमन्त्ररूपाःस्तुतयः सुवृक्तयः सुप्रवृत्ताः सुष्ठु दोषवर्जितावा गिरः शस्त्ररूपावाचश्च वां युवां प्रवर्धन्तु प्रवर्धयन्तु । अपिच हे पुरुत्रा बहूनां त्रातारौ हे वृत्रहन्तमा वृत्राणां शत्रूणां हन्तृतमौ ईदृशौ हे अश्विनौ ता तौ युवां नोस्माकं पुरुस्पृहा पुरु बहुलं स्पृहणीयावीप्सितव्यौ भूतं भवतम् ॥ २२ ॥

२२. बहु-रक्षक और शत्रु-नाशकों में श्रेष्ठ अश्विद्वय, दोष-शून्य स्तोत्र और वाक्य तुम्हें वर्द्धित करें। हमारे लिए तुम लोग बहु-विध अभिलषणीय होओ।

त्रीणिपदान्यश्विनोराविःसान्तिगुहापरः ।
कवीऋतस्यपत्मभिरर्वाग्जीवेभ्यस्परि ॥ २३ ॥ २९ ॥

त्रीणि । पदानि । अश्विनोः । आविः । सन्ति । गुहा । परः ।
कवी इति । ऋतस्य । पत्मऽभिः । अर्वाक् । जीवेभ्यः । परि ॥ २३॥२९॥

त्रीणि त्रिसंख्याकानि अनयोरश्विनोर्देवयोरथस्य संबन्धीनि पदानि चक्राणि गुहा गुहायां वर्तमानानि एतावन्तं कालमदृश्यमानानि परः गुहायाः परस्तात् दृष्टिगोचरेदेशे आविः सांति आविर्भवन्ति सांहितिकश्छान्दसोदीर्घः व्यत्ययेननिघाताभावः । यद्वा सन्तीत्येतदस्तेः शतरि जसि रूपम् आविर्भूतानि दृश्यन्ते अश्विनोरथस्य चक्रत्रयोपेतत्वंच—रथस्त्रिचक्रःपरिवर्ततेइत्यादिंनिगमान्तरेप्रसिद्धम् । कवी क्रान्तदर्शिनौ अश्विनौ ऋतस्य सत्यस्योदकस्य यज्ञस्य वा हेतुभूतैः पत्मभिः यैः पदैः जीवेभ्यस्परि परिरुपर्यर्थः पञ्चम्याः परावध्यर्थइति सत्वम् जीवानामुपरि जीवेष्वस्मासु अर्वागभिमुखं आगच्छतमिति शेषः तानि पदानीदानीं उपलक्ष्यन्त इत्यन्वयः ॥ २३ ॥

२३. अश्विद्वय का तीन चक्रोंवाला रथ अदृश्य (गुहा में) रहकर पीछे प्रकट होता है। क्रान्तदर्शी अश्विद्वय, यज्ञ के कारण-भूत रथ के द्वारा हमारे सामने आओ।

॥ इति पञ्चमस्याष्टमे एकोनत्रिंशोवर्गः ॥ २९ ॥

आनूनमित्येकविंशत्यृचं चतुर्थं सूक्तं शशकर्णस्यार्षं अश्विदेवत्यं विंश्येकविंश्यौ द्वितीयातृतीयेचेति चतस्रोगायत्र्यः प्रथमा चतुर्थी षष्ठी चतुर्दशी पञ्चदशीचेति पञ्चबृहत्यः पञ्चमी ककुप् मध्यमश्चेत्ककुप् इत्युक्तलक्षणसद्भावात् दशमीत्रिष्टुप् एकादशी विराट् द्वादशी जगती

१ ऋ० सं० ३.७.७।

शिष्टाअनुष्टुभः। तथाचानुक्रान्तम्—आनूनंसैका शशकर्णोत्येगायत्र्यावुपाद्येचाद्याचतुर्थीषष्ठी-चतुर्दश्याद्येचबृहत्यः पञ्चमीककुब्दशम्याद्यास्त्रिष्टुब्विराट्जगत्यइति। अप्तोर्यामे ब्राह्मणाच्छंसि-नोतिरिक्तोक्थे इदं सूक्तं सूत्र्येतहि—आनूनमश्विनातंवांरथमिति।

तत्र प्रथमा—

आनूनमश्विनायुवंवत्सस्यंगन्तमवसे।
प्रास्मैयच्छतमवृकंपृथुच्छर्दिर्युयुतंयाअरातयः ॥१॥

आ। नूनम्। अश्विना। युवम्। वत्सस्य। गन्तम्।
अवसे। प्र। अस्मै। यच्छतम्। अवृकम्। पृथु।
छर्दिः। युयुतम्। याः। अरातयः ॥ १ ॥

हे अश्विना अश्विनौ युवं युवां वत्सस्य स्तोतुर्मम अवसे रक्षणार्थं नूनमवश्यं आगन्त-मागच्छतम् आगत्यचास्माकमस्मै अवृकं बाधकरहितं पृथुविस्तीर्णं छर्दिर्गृहं प्रयच्छतं प्रदत्तम्। तथा याः अरातयः अदानशीलाः शत्रुभूताः प्रजास्तायुयुतं स्तोतृभ्यः पृथक्कुरुतम् ॥ १ ॥

१. अश्विद्वय, वत्स ऋषि की रक्षा के लिए तुम लोग अवश्य ही गये थे। इन ऋषि को बाधा-शून्य और विस्तीर्ण गृह प्रदान करो। उनके शत्रुओं को दूर कर दो।

अथ द्वितीया—

यदन्तरिक्षेयद्दिवियत्पञ्चमानुषाँअनु।
नृम्णंतद्धत्तमश्विना ॥ २ ॥

यत्। अन्तरिक्षे। यत्। दिवि। यत्। पञ्च। मानुषान्।
अनु। नृम्णम्। तत्। धत्तम्। अश्विना ॥ २ ॥

अन्तरिक्षे गन्धर्वादिभिः सेविते मध्यमे लोके यन्नृम्णं धनमस्ति दिवि द्युलोकेच यद-स्ति पञ्च पञ्चसंख्याकान्मानुषान् मनुष्यान् अनु। लक्षणे अनोःकर्मप्रवचनीयत्वम् कर्मप्रवच-नीययुक्तइतिद्वितीया पञ्चविधामनुष्याः निषादपञ्चमाश्चत्वारोवर्णायत्रवर्तंते तत्रचेहलोके यन्नृ-म्णं धनमस्ति हे अश्विना अश्विनौ तत्रिविधं नृम्णं धनं धत्तं अस्मभ्यं प्रयच्छतम् ॥ २ ॥

२. अश्विद्वय, जो धन अन्तरिक्ष और स्वर्ग में वर्त्तमान है और जो पञ्चश्रेणी (चार वर्ण और निषाद) में है, वही धन प्रदान करो।

अथ तृतीया—

येवांदंसांस्यश्विनाविप्रासःपरिमामृशुः।
एवेत्काण्वस्यबोधतम् ॥ ३ ॥

ये । वाम् । दंसांसि । अश्विना । विप्रासः । परिऽमामृशुः ।
एव । इत् । काण्वस्य॑ । बोधतम् ॥ ३ ॥

हे अश्विनौ वां युवयोः संबन्धीनि दंसांसि कर्माणि परिचरणात्मकानि ये विप्रासो-विप्रामेधाविनोयजमानाः परिमामृशुः परिमृशन्ति पुनःपुनः स्पृशन्ति अनुतिष्ठन्तीत्यर्थः यथा तदीयानि परिचरणानि युवां जानीथः एवेत् एवमेव काणवस्य कण्वपुत्रस्य मम परिचरणं बोधतमवगच्छतम् ॥ ३ ॥

३. अश्विद्वय, जिन विप्र (मेघावी स्तोता) ने तुम लोगों के कर्मों (सेवाओं) का बार-बार अनुष्ठान किया है, उन्हें जानो। फलतः कण्व-पुत्रों के कामों को समझो।

अयंवांघर्मोअश्विनास्तोमेनपरिषिच्यते ।
अयंसोमोमधुमान्वाजिनीवसूयेनवृत्रंचिकेतथः ॥ ४ ॥

अयम् । वाम् । घर्मः । अश्विना । स्तोमेन । परि । सिच्यते ।
अयम् । सोमः । मधुऽमान् । वाजिनीवसू इति वाजिनीऽवसू ।
येन । वृत्रम् । चिकेतथः ॥ ४ ॥

हे अश्विनौ वां युवयोः संबन्धी अयं घर्मः प्रवर्ग्यं स्तोमेन स्तोत्रेण ऋक्सामरूपेण परिषिच्यते आर्द्रीक्रियते यथा युवयोस्तृप्तिकरोभवति तथा क्रियतइत्यर्थः यद्वा घर्मस्य हविषआधारभूतोमहावीरोघर्मः सः स्तोमेन स्तोतव्येन पयसा परिषिच्यते आसिच्यते वां युवयोरर्थं। अपिच हे वाजिनीवसू अन्नवद्धनौ अयं सोमस्तार्तीयसवनिकोमधुमान् माधुर्यवान् युवाभ्यां दीयते येन युवां वृत्रमावरकं शत्रुं चिकेतथः हन्तव्यतया जानीथः अयं घर्मः सोमश्चेत्युभयत्रान्वयः ॥ ४ ॥

४. अश्विद्वय, तुम्हारा घर्म (हवि का याज्ञिक कड़ाहा) स्तोत्र-द्वारा आर्द्र किया जाता है। अन्न और धनवाले अश्विद्वय, जिस सोम के द्वारा तुमने वृत्र को जाना था, वह मधुमान् सोम यही है।

अथ पञ्चमी—

यदप्सुयद्वनस्पतौयदोषधीषुपुरुदंससाकृतम् ।
तेनमाविष्टमश्विना ॥ ५ ॥ ३० ॥

यत् । अप्ऽसु । यत् । वनस्पतौ । यत् । ओषधीषु ।
पुरुऽदंससा । कृतम् । तेन । मा । अविष्टम् । अश्विना ॥ ५ ॥ ३० ॥

हे पुरुदंससा बहुकर्माणावश्विनौ अप्सूदकेषु यद्भेषजं कृतं युवामकार्ष्टम् करोतेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् तथा वनस्पतौ वनानां पतिर्वनस्पतिः पारस्करादित्वात्सुट् उभेवनस्पत्यादिष्विति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् जाताविदमेकवचनम् वनस्पतिषु वृक्षेषु यच्च भेषजं युवामकुरुतम् ओषधीषु ओषः पाकः आसु धीयतइति ओषधयोव्रीह्यादयः कर्मण्यधिकरणेचेति दधातेरधिकरणेकिप्रत्ययः दासीभारादिषु पठितत्वात्पूर्वपदप्रकृतिस्वरत्वम् ओषधेश्च विभक्तावप्रथमायामितिदीर्घः व्रीह्यादिष्वोषधीषुच यद्भेषजं कृतं युवामकार्ष्टम्। हे अश्विना अश्विनौ तेन सर्वेण भेषजेन मा मां अविष्टं रक्षतम् अवतेर्लोटि सिब्बहुलमिति बहुलग्रहणात् सिप् ततइट्॥ ५॥

५. विविध-कर्मा अश्विद्वय, जल, वनस्पति और ओषधियों (लतादि) में जो तुमने भेषज किया है, उसके द्वारा हमारी रक्षा करो।

॥ इति पञ्चमस्याष्टमे त्रिंशोवर्गः ॥ ३० ॥

अथ षष्ठी—

यन्नासत्याभुरण्यथोयद्वादेवभिषज्यथः ।
अयंवांवत्सोमतिभिर्नविन्धतेहविष्मन्तंहिगच्छथः ॥ ६ ॥

यत्। नासत्या। भुरण्यथः। यत्। वा। देवा। भिषज्यथः।
अयम्। वाम्। वत्सः। मतिऽभिः। न। विन्धते। हविष्मन्तम्।
हि। गच्छथः॥ ६॥

हे नासत्या सत्यस्वभावावश्विनौ यत् यौ युवां भुरण्यथः सर्वं जगत्पोषयथः। भुरणधारणपोषणयोः कंड्वादिः हे देवा दानादिगुणयुक्तौ अश्विनौ छान्दसः सांहितिकोह्रस्वः यद्वा यौ च युवां भिषज्यथः सर्वस्य प्राणिजातस्य भैषज्यं रोगोपशमनं कुरुथः भिषज चिकित्सायाम् अयमपि कंड्वादिः तौ वां युवां अयं वत्सः स्तोता मतिभिर्मननीयैः केवलैः स्तोत्रैर्न विंधते नविन्दते नलभते वर्णविकारश्छान्दसः। कुतइतिचेदुच्यते हविष्मन्तं हविर्युक्तं स्तोतारं हि युवां गच्छथः तस्माद्युवां हविर्भिर्युक्तैः स्तोत्रैः प्रसीदथ इतिभावः॥ ६॥

६. सत्य-स्वभाव देवो, तुम लोगों ने जगत् का परिपोषण किया है और सबको नीरोग बनाया है। स्तुति से वत्स ऋषि तुम्हें नहीं प्राप्त करते। तुम लोग हविवालों के पास जाते हो।

प्रवर्ग्येमहावीरे गोपयस्यासिच्यमाने आनूनमित्येषानुवक्तव्या सूत्र्यतेहि—आनूनमश्विनोर्ऋषिरितिगव्य आसुतेसिञ्चतश्रियमित्याज्यइति।

सैषा सप्तमी—

आनूनमश्विनोर्ऋषिःस्तोमंचिकेतवामया ।
आसोमंमधुमत्तमंघर्मंसिञ्चादथर्वणि ॥ ७ ॥

आ । नूनम् । अश्विनोः । ऋषिः । स्तोमम् । चिकेत । वामया ।
आ । सोमम् । मधुमत्ऽतमम् । घर्मम् । सिञ्चात् । अथर्वणि ॥ ७ ॥

हे अश्विनौ यदा युवामागच्छेयाथां यथा तदानीं युवयोरश्विनोः स्तोमं स्तोत्रं ऋषिर्मंत्रद्रष्टा वामया वननीयया उत्कृष्टया बुद्ध्या नूनमवश्यं आचिकेत अभिजानीयात् कितज्ञाने छान्दसोलिट् । तथा मधुमत्तमं अतिशयेन मधुरं सोमं घर्मं प्रवर्ग्यसंबन्धिघर्माख्यं हविश्च अथर्वणि अहिंसकेऽग्नौ यद्वा अथर्वाऋषिः तेननिर्मथितोग्निरुपचारादथर्वेत्युच्यते अथर्वणानिर्मंथनञ्च—त्वामग्नेपुष्करादधीत्यादिनिगमान्तरेवगम्यते । तस्मिन्नग्नौ आसिञ्चात् आसिञ्चेत् प्रक्षिपेत् अतः शीघ्रमागच्छतमित्यर्थः ॥ ७ ॥

७. वत्स ऋषि (इस सूक्त के वक्ता) ने उत्तम बुद्धि के द्वारा अश्विद्वय के स्तोत्र को जाना था। वत्स (मैं) ने अतीव मधुर सोम और घर्म (हविर्विशेष) को, अथर्वा द्वारा मथित अग्नि में फेंका था।

अथाष्टमी—

आनूनंरघुवर्तनिंरथंतिष्ठाथोअश्विना ।
आवांस्तोमाइमेममनभोनचुच्यवीरत ॥ ८ ॥

आ । नूनम् । रघुऽवर्तनिम् । रथम् । तिष्ठाथः । अश्विना ।
आ । वाम् । स्तोमाः । इमे । मम । नभः । न । चुच्यवीरत ॥ ८ ॥

हे अश्विनौ लघुवर्तनिं रघुवर्तनं शीघ्रगमनं रथं नूनमवश्यमिदानीमेव आतिष्ठाथः आतिष्ठतं अधिरोहतम् वालमूललघ्वलमितिलघोर्लकारस्यरेफः । मम मदीयाइमे स्तोमाः स्तोत्राणि नभोन सूर्यमिव तेजस्विनौ वां युवां आचुच्यवीरत आच्यवन्ते अभिगच्छन्ति यद्वा च्यवतिरन्तर्भावितण्यर्थः आच्यवयन्ति युवामभिप्रापयन्ति ॥ ८ ॥

८. अश्विद्वय, तुम लोग शीघ्रगामी रथ पर चढ़ो। मेरे ये स्तोत्र सूर्य की तरह तेजस्वी तुम्हारे सामने जाते हैं।

अथ नवमी—

यदद्यवांनासत्योक्थैराचुच्युवीमहि ।
यद्वावाणीभिरश्विनेवेत्काण्वस्यबोधतम् ॥ ९ ॥

---

१ ऋ० सं० ४. ५. ३३.।

यत् । अद्य । वाम् । नासत्या । उक्थैः । आऽचुच्युवीमहि ।
यत् । वा । वाणीभिः । अश्विना । एव । इत् । काण्वस्य ।
बोधतम् ॥ ९ ॥

हे नासत्यौ अद्येदानीं उक्थैः शस्त्रैः यद्यथा येन प्रकारेण वां आचुच्युवीमहि आगमयेम। हे अश्विनौ यद्वा यथा वाणीभिः उक्थव्यतिरिक्ताभिरपि वाग्भिः स्तुतिभिः युवामागमयेम एवेत् एवमेव तथैव काण्वस्य मम तदुक्थादिकं बोधतमवगच्छतम्॥ ९॥

९. सत्यस्वभाव अश्विद्वय, आज मन्त्रों-द्वारा तुम्हें हम जैसे ले आते हैं और जैसे वाणी (स्तोत्र) के द्वारा तुम्हें हम ले आते हैं, वैसे ही कण्वपुत्र के (मेरे) स्तोत्रों को जानो ।

यद्वांकक्षीवाँउतयद्व्यंश्वऋषिर्यद्वांदीर्घतमाजुहाव ।
पृथीयद्वांवैन्यःसादनेष्वेवेदतोअश्विनाचेतयेथाम् ॥ १०॥ ३१ ॥

यत् । वाम् । कक्षीवान् । उत । यत् । विऽअंश्वः । ऋषिः । यत् । वाम्।
दीर्घऽतमाः । जुहाव । पृथी । यत् । वाम् । वैन्यः । सदनेषु । एव ।
इत् । अतः । अश्विना । चेतयेथाम् ॥ १० ॥ ३१ ॥

हे अश्विनौ वां युवां कक्षीवानृषिः यद्यदा जुहाव तुष्टाव उतापिच व्यश्वः एतत्संज्ञकऋषिश्च यद्यदा जुहाव यद्यदाच वां युवां दीर्घतमाऋषिः जुहाव सदनेषु यज्ञगृहेषु वैन्योवेनस्य पुत्रः पृथी एतत्संज्ञोराजर्षिः वां युवां यद्यथा जुहाव तुष्टाव एवेत् एवमेव स्तुवतोमम अतः इदं स्तोत्रं इदम्शब्दाद् द्वितीयार्थेतसिः हे अश्विनौ चेतयेथां जानीतम्॥ १०॥

१०. अश्विद्वय, कक्षीवान् ऋषि ने जैसे तुम्हें बुलाया था और जैसे व्यश्व तथा दीर्घतमा ऋषियों ने एवम् वेन राजा के पुत्र पृथी ने जैसे यज्ञ-गृह में तुम्हें बुलाया था, वैसे ही मैं स्तुति करता हूँ मेरे इस स्तोत्र को जानो।

॥ इति पञ्चमस्याष्टमे एकत्रिंशोवर्गः ॥ ३१ ॥

अथैकादशी–

यातंछर्दिष्पाउतनःपरस्पाभूतंजगत्पाउतनस्तनूपा ।
वर्तिस्तोकायतनयाययातम् ॥ ११ ॥

यातम् । छर्दिःऽपौ । उत । नः । परःऽपा । भूतम् । जगत्ऽपौ ।
उत । नः । तनूऽपा । वर्तिः । तोकाय । तनयाय । यातम् ॥ ११ ॥

हे अश्विनौ छर्दिष्पौ छर्दिरिति गृहनाम तस्यास्मदीयस्य पालकौ सन्तौ युवां यातमागच्छतं। उतापिच नोस्माकं परस्पा परं अतिशयेन पालकौ भूतं भवतं पारस्करादित्वात्सुट्। तथा जगत्पौ सर्वस्य जगतः जङ्गमस्य प्राणिजातस्यास्मदीयस्य पालकौ भवतम्। उतापिच नोस्माकं तनूपा तनूनां शरीराणां तनयानां वा पालकौ भवतम् एतत्सर्वार्थं तोकाय तोकस्य पुत्रस्य तनयाय तनयस्य पौत्रस्य वास्मदीयस्य वर्तिर्गृहं यातं गच्छतम् ॥ ११ ॥

११. अश्विद्वय, तुम लोग गृह-पालक होकर आओ। तुम लोग अतीव पोषक हो। तुम संसार और शरीर के पालक होओ। पुत्र और पौत्र के गृह में आओ।

अथ द्वादशी—

यदिन्द्रेण सरथं याथो अश्विना यद्वा वायुना भवथः समोकसा।
यदादित्येभिर्ऋभुभिः सजोषसा यद्वा विष्णोर्विक्रमणेषु तिष्ठथः ॥ १२॥

यत्। इन्द्रेण। सऽरथम्। याथः। अश्विना। यत्। वा।
वायुना। भवथः। समऽओकसा। यत्। आदित्येभिः। ऋभुऽभिः।
सऽजोषसा। यत्। वा। विष्णोः। विऽक्रमणेषु। तिष्ठथः ॥ १२ ॥

हे अश्विनौ इन्द्रेणसह सरथं समानमेकंरथं आस्थाय यद्यदि याथोगच्छथः यद्वा यदिवा वायुना सह समोकसा समाननिवासौ भवथः यद्यदिवा आदित्येभिः अदितेः पुत्रैः मित्रादिभिः ऋभुभिश्च सजोषसा सहप्रीयमाणौ वर्तेथे यद्वा यदिवा विष्णोर्विक्रमणेषु विष्णुना देवेन विक्रान्तेषु त्रिषु लोकेषु तिष्ठथः अतः सर्वस्मादपि स्थानादागच्छतमितिशेषः ॥१२ ॥

१२. अश्विद्वय, यदि तुम लोग इन्द्र के साथ एक रथ पर जाते हो, यदि वायु के साथ एक स्थानवासी हो, यदि अदिति के पुत्र ऋभु आदि के साथ प्रसन्न हो और यदि विष्णु के पाद-क्षेप के साथ तीनों लोकों में अवस्थान करते हो, तो आओ।

यदद्याश्विनावहं हुवेय वाजसातये।
यत्पृत्सु तुर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः ॥ १३ ॥

यत्। अद्य। अश्विनौ। अहम्। हुवेयं। वाजऽसातये। यत्।
पृत्ऽसु। तुर्वणे। सहः। तत्। श्रेष्ठम्। अश्विनोः। अवः ॥ १३ ॥

यद्यदा अहमश्विनौ वाजसातये संग्रामार्थं हुवेय आह्वयेय अद्येदानीं तावागच्छतमितिशेषः। पृत्सु पृतनासु संग्रामेषु तुर्वणे शत्रूणां हिंसने यत्सहः शत्रूणामभिभवितृ रक्षणं अश्विनोः तदवोरक्षणं श्रेष्ठं प्रशस्यतमं अतस्तावाह्वयामीतिभावः ॥ १३ ॥

१३. जिस समय में संग्राम के लिए अश्विद्वय को बुलाता हूँ, उस समय वे आवें। शत्रुओं के मारने में अश्विद्वय का जो विजयी रक्षण है, वही श्रेष्ठ है।

अथ चतुर्दशी—

आनूनंयातमश्विनेमाहव्यानिवांहिता।
इमेसोमासोअधितुर्वशेयदाविमेकण्वेषुवामथ ॥ १४ ॥

आ। नूनम्। यातम्। अश्विना। इमा। हव्यानि। वाम्।
हिता। इमे। सोमासः। अधि। तुर्वशे। यदौ। इमे। कण्वेषु।
वाम्। अथ ॥ १४ ॥

हे अश्विनौ नूनमवश्यं आयातमागच्छतम् इमा इमानि पुरोवर्तीनि हव्यानि हवींषि वां युवाभ्यां हिता हितानि यद्वा युवयोरर्थं विहितानि कृतानि इमेच सोमासः सोमाः तुर्वशे यदौ च वर्तमानाः वां युवाभ्यां युवयोरर्थं संस्कृता वा अधिः सप्तम्यर्थानुवादकः। अथ अपिच कण्वेषु कण्वपुत्रेषु अस्मासु च इमे सोमाः वां युवाभ्यां दत्ताः अतआयातमित्यर्थः ॥ १४ ॥

१४. अश्विद्वय, ये हव्य तुम्हारे लिए बनाये गये हैं। तुम लोग अवश्य आओ। यह सोम तुर्वश और यदु में वर्त्तमान है। यह तुम्हारे लिए संस्कृत है और कण्व-पुत्रों को दिया गया है।

यन्नासत्यापराकेअर्वाकेअस्तिभेषजम्।
तेननूनंविमदायप्रचेतसाछर्दिर्वत्साययच्छतम् ॥१५॥३२॥

यत्। नासत्या। पराके। अर्वाके। अस्ति। भेषजम्। तेन। नूनम्।
विऽमदाय। प्रऽचेतसा। छर्दिः। वत्साय। यच्छतम् ॥ १५ ॥ ३२ ॥

हे नासत्यावश्विनौ पराके दूरदेशे अर्वाके समीपेच यद्युवयोः संबन्धि भेषजं रोगोपशमनकारणमस्ति तेन भेषजेन सहितं छर्दिर्गृहं हे प्रचेतसा प्रकृष्टज्ञानावश्विनौ विमदाय लुप्तोपममेतत् एतत्संज्ञायेव ऋषये वत्साय नूनमवश्यं यच्छतं प्रयच्छतम् ॥ १५ ॥

१५. नासत्य (सत्य-स्वभाव) अश्विद्वय, दूर अथवा निकट में जो भेषज है, उसके साथ, हे प्रकृष्ट ज्ञानवाले अश्विद्वय, विमद के समान वत्स को भी गृह प्रदान करो।

॥ इति पञ्चमस्याष्टमे द्वात्रिंशोवर्गः ॥ ३२ ॥

अथ षोडशी—

अभुत्स्युप्रदेव्यासाकंवाचाहमश्विनोः।
व्यावर्देव्यामतिंविरातिंमर्त्येभ्यः ॥ १६ ॥

अभुत्सि । ऊँ इति । प्र । देव्या । साकम् । वाचा । अहम् । अश्विनोः ।
वि । आवः । देवि । आ । मतिम् । वि । रातिम् । मर्त्येभ्यः ॥ १६ ॥

अश्विनोः संबन्धिन्या देव्या द्योतमानया वाचा स्तुतिरूपया साकं सह अहं प्राभुत्सि प्रबुद्धोस्मि उइतिपूरणः हे देवि द्योतमाने उषस्त्वञ्च मतिं मयाकृतां स्तुतिं आ अभिलक्ष्य व्यावः तमांसि विवृणु अपगमय प्रकाशयेत्यर्थः वृणोतेश्छान्दसे लुङिमन्त्रेघसेत्यादिना च्लेर्लुक् छन्दस्यपिदृश्यतइत्याडागमः। अपिच मर्त्येभ्योमनुष्येभ्यः स्तोतृभ्योस्मभ्यं रातिं धनं व्यावः प्रकाशय ॥ १६॥

१६. अश्विद्वय-सम्बन्धी और प्रकाशमान स्तोत्र के साथ मैं जागा हूँ। द्युतिमती उषा, मेरी स्तुति से अन्धकार दूर करो और मनुष्यों को धन दो। अथ सप्तदशी—

प्रबोधयोषोअश्विनाप्रदेविसूनृतेमहि ।
प्रयंज्ञहोतरानुषक्प्रमदायश्रवोबृहत् ॥ १७ ॥

प्र । बोधय । उषः । अश्विना । प्र । देवि । सूनृते । महि । प्र ।
यज्ञऽहोतः । आनुषक् । प्र । मदाय । श्रवः । बृहत् ॥ १७॥

हे उषः अश्विनौ देवौ प्रबोधय अस्मत्स्तोत्रस्य श्रवणार्थं । हे देवि दानादिगुणयुक्ते हे सूनृते सुष्ठु नेत्रि हे महि महति इत्थं महाभागा त्वं अश्विनौ प्रबोधय। हे यज्ञहोतः यज्ञानां यष्टव्यानां देवानामाह्वातर्होतर्वा आनुषगनुषक्तं संततं यथाभवति तथा अश्विनौ स्तुतिभिः प्रबोधय। तथा मदाय अश्विनोर्मदोत्पादनार्थं बृहन्महत् श्रवः श्रवणीयं सोमलक्षणमन्नं अस्माभिः प्रकल्पितम् ॥ १७॥

१७. देवी, सुन्दर-नेत्रा और महती उषा, अश्विद्वय को जगाओ और वर्द्धित करो। हे देवाह्वाता, अश्विद्वय को सतत प्रबोधित करो। उनके आनन्द के लिए बृहद् अन्न (सोम) प्रस्तुत हुआ है।

अथाष्टादशी--

यदुषोयासिभानुनासंसूर्येणरोचसे ।
आहायमश्विनोरथोवर्तिर्यातिनृपाय्यम् ॥ १८ ॥

यत् । उषः । यासि । भानुना । सम् । सूर्येण । रोचसे । आ । ह ।
अयम् । अश्विनोः । रथः । वर्तिः । याति । नृऽपाय्यम् ॥ १८ ॥

हे उषः भानुना दीप्त्यासह यद्यदा यासि गच्छसि तदानीं सूर्येण संरोचसे सम्यग्दीप्यसे। अपिच तस्मिन्समये अश्विनोरयं रथः नृपाय्यं यत् नृभिर्नेतृभिर्ऋत्विग्भिः पालनीयं वर्तिर्यज्ञगृहं आयाति हं आगच्छति खलु ॥ १८ ॥

१८. उषा, जिस समय तुम दीप्ति के साथ जाती हो, उस समय सूर्य के समान शोभा पाती हो। उस समय अश्विद्वय का यह रथ मनुष्यों के पोषणीय यज्ञ-गृह में आता है।

यदापीतासोअंशवोगावोनदुह्नऊधभिः।
यद्वावाणीरनूंषतप्रदेवयन्तोअश्विना ॥ १९ ॥

यत्। आऽपीतासः। अंशवः। गावः। न। दुह्रे। ऊधःऽभिः।
यत्। वा। वाणीः। अनूषत। प्र। देवऽयन्तः। अश्विना ॥ १९ ॥

यद्यदा आपीतासः आसमन्तात्पीतवर्णा अंशवः सोमलताः ऊधभिः गावोन गावइव दुह्रे रसं दुहते लोपस्तआत्मनेपदेष्विति तलोपः बहुलंछन्दसीतिरुडागमः। यद्वा यदाच देवयन्तोदेवान्कामयमानाः ऋत्विजः वाणीर्वाचः स्तुतीः अनूषत अस्तुवन् अकुर्वन्नित्यर्थः। तदा अश्विना अश्विनौ देवौ प्रावतं प्ररक्षतम् ॥ १९ ॥

१९. जिस समय पीत-वर्ण सोमलता को गाय के स्तन की तरह दूहा जाता है और जिस समय देव-कामी लोक स्तुति करते हैं, उस समय, हे अश्विद्वय, रक्षा करो। अथविंशी—

प्रद्युम्नायप्रशवसेप्रनृषाह्यायशर्मणे। प्रदक्षायप्रचेतसा ॥२०॥

प्र। द्युम्नाय। प्र। शवसे। प्र। नृऽसह्याय।
शर्मणे। प्र। दक्षाय। प्रऽचेतसा ॥ २० ॥

प्रचेतसा प्रकृष्टज्ञानावश्विनौ द्युम्नाय द्योतमानायान्नाय यशसे वा तादर्थ्येचतुर्थी द्युम्नार्थं अस्मान्प्ररक्षतम् शवसे बलाय च प्ररक्षतम् नृषह्याय नृभिः सोढव्याय शर्मणे सुखाय च प्ररक्षतम् दक्षाय वृद्ध्यर्थं प्ररक्षतम्। यद्वा द्युम्नायेत्यादौ क्रियाग्रहणमपि कर्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थी द्युम्नादीन्यस्मभ्यं प्रयच्छतमित्यर्थः ॥ २० ॥

२०. प्रकृष्ट ज्ञानवाले अश्विद्वय, तुम लोग धन के लिए हमारी रक्षा करो। बल के लिए रक्षा करो। मनुष्यों के उपभोग्य सुख के लिए तथा समृद्धि के लिए हमारी रक्षा करो।

यंनूनंधीभिरश्विनापितुर्योनानिषीदथः।
यद्वासुम्नेभिरुक्थ्या ॥ २१ ॥ २३ ॥

यत् । नूनम् । धीभिः । अश्विना । पितुः । योना ।
निऽसीदथः । यत् । वा । सुम्नेभिः । उक्थ्या ॥ २१ ॥ ३३ ॥

अश्विनौ पितुः पालयितुर्द्युलोकस्य संबन्धिनि योना योनौ स्थाने यद्यदि धीभिः कर्मभिः सह निषीदथोनिवसथः यद्वा यदिवा हे उक्थ्या उक्थ्यौ प्रशस्यौ सुम्नेभिः सुम्नैः सुखैः सह निवसथः तदास्माभिः स्तुतौ संतावागच्छतमितिशेषः । अथवा पितुः पालयितुर्यजमानस्य संबन्धिनि योनौ यज्ञगृहे धीभिः स्तुतिभिः सार्धं यदि निवसथः यदिच सुम्नैः सुखकरैर्हविर्भिश्च सह निवसथः तर्ह्यागच्छतम् । नूनमिति पदपूरणः उक्तंच यास्केन—अथापिपदपूरणः नूनंसातेप्रतिवरंजरित्रेइति[1] ॥ २१ ॥

२१. अश्विद्वय, यदि तुम लोग पितृ-तुल्य द्युलोक की गोद में, कर्म के साथ, बैठे हो और यदि, प्रशंसनीय होकर, सुख के साथ, निवास करते हो, तो हमारे पास आओ।

॥ इति पञ्चमस्याष्टमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

यत्स्थइति षळृचं पञ्चमं सूक्तम् कण्वपुत्रस्य प्रगाथस्यार्षं आश्विनं आद्याबृहती द्वितीया मध्येज्योतिस्त्रिष्टुप् यतोष्टकस्ततोज्योतिरिति उक्तलक्षणसद्भावात् तृतीया अनुष्टुप् चतुर्थी आस्तारपंक्तिः अन्त्यौचेदास्तारपङ्क्तिरितितल्लक्षणम् पञ्चमी बृहती षष्ठी सतोबृहती । तथाचानुक्रान्तम्—यत्स्थःषट् प्रगाथोपश्यत बृहतीमध्येज्योतिरनुष्टुबास्तारपङ्क्तिःप्रगाथइति । प्रातरनुवाकाश्विने क्रतौ बार्हतेछन्दस्याश्विनशस्त्रेचेदंसूक्तम् सूत्र्यतेहि—द्युम्नीवांयत्स्थइतिबार्हतमिति ।

तत्र प्रथमा—

यत्स्थोदीर्घप्रसद्मनियद्वादोरोचनेदिवः ।
यद्वासमुद्रेअध्याकृतेगृहेतआयातमश्विना ॥ १ ॥

यत् । स्थः । दीर्घऽप्रसद्मनि । यत् । वा । अदः । रोचने । दिवः ।
यत् । वा । समुद्रे । अधि । आऽकृते । गृहे ।
अतः । आ । यातम् । अश्विना ॥ १ ॥

हे अश्विनौ दीर्घप्रसद्मनि प्रसीदन्त्येषु देवाइति प्रसद्मानोयज्ञगृहाः दीर्घाआयताः प्रसद्मानोयस्मिन् तस्मिन्लोके यत् यदिस्थोभवथोवर्तेथे यद्वा यदिवा अदः अमुष्मि-

[1] नि० १. ६ ।

न् दिवोद्युलोकस्य संबन्धिनि रोचने रोचमाने स्थाने भवथः यद्वा यदिवा समुद्रे अन्तरिक्षे समुद्रवन्त्यस्मादापइति समुद्रमन्तरिक्षंतस्मिन् आकृते निर्मिते गृहे अधिवसथः अतस्त्रितयादपिस्थानात् हे अश्विनावायातमागच्छतम् ॥ १ ॥

१. अश्विद्वय, जिस लोक में प्रशस्त यज्ञ-गृह है, यदि उस लोक में रहते हो, यदि उस द्युलोक के दीप्तिमान् प्रदेश में रहते हो और यदि अन्तरिक्ष में निर्मित गृह में रहते हो, तो इन सब स्थानों से आओ।

यद्वांयज्ञंमनवेसंमिमिक्षथुरेवेत्काण्वस्यंबोधतम् ।
बृहस्पतिंविश्वान्देवाँअहंहुवइन्द्राविष्णूअश्विनांवाशुहेषसा ॥ २॥

यत् । वा । यज्ञम् । मनवे । सम्ऽमिमिक्षथुः । एव । इत् ।
काण्वस्य । बोधतम् । बृहस्पतिम् । विश्वान् । देवान् । अहम् ।
हुवे । इन्द्राविष्णू इति । अश्विनौ । आशुऽहेषसा ॥ २ ॥

हे अश्विनौ यद्वा यथावा येन प्रकारेण मनवे प्रजापतये यजमानाय यज्ञं संमिमिक्षथुः संसिक्तवन्तौ युवां कृतवन्तौ एवेत् एवमेव काण्वस्य कण्वगोत्रस्य ममयज्ञं कर्तुं बोधतमवगच्छतम् । अपिच बृहस्पतिं बृहतां देवानां पतिं देवपुरोहितं विश्वान्सर्वान्मित्रादीन्देवांश्च इन्द्राविष्णू च आशुहेषसा शीघ्राश्वौ यद्वा हेषृशब्दे शीघ्रं सर्वत्र शब्द्यमानौ स्तूयमानावश्विनौ च अहं हुवे आह्वये ॥ २ ॥

२. अश्विद्वय, तुम लोगों ने जैसे मनु (प्रजापति यजमान) के लिए यज्ञ को सिक्त किया था, वैसे ही कण्व-पुत्र के यज्ञ को जानो। मैं बृहस्पति, समस्त देवों, इन्द्र, विष्णु और शीघ्रगामी अश्वोंवाले अश्विद्वय को बुलाता हूँ।

अथ तृतीया—

त्यान्व१श्विनांहुवेसुदंससागृभेकृता ।
ययोरस्तिप्रणःसख्यंदेवेष्वध्याप्यम् ॥ ३ ॥

त्या । नु । अश्विना । हुवे । सुऽदंससा । गृभे । कृता । ययोः ।
अस्ति । प्र । नः । सख्यम् । देवेषु । अधि । आप्यम् ॥ ३ ॥

त्या त्यौ पूर्वोक्तगुणावश्विनौ नु क्षिप्रमहं हुवे आह्वयामि कीदृशौ सुदंससा शोभनकर्माणौ गृभे गृहे ग्रहणाय अस्माभिर्दत्तानां हविषां स्वीकरणाय अस्मभ्यं धनदानाय वा कृता कृतौ प्रादुर्भूतौ देवेषु मध्ये अधिः सप्तम्यर्थानुवादी ययोरश्विनोः आप्यमाप्तव्यं नोस्माकं सख्यं सखित्वं प्रास्ति प्रभवति उत्कर्षेण वर्तते तौ हुवइत्यन्वयः ॥ ३ ॥

३. अश्विद्वय शोभनकर्मा हैं। वे हमारे हविष्य के स्वीकार के लिए प्रकट हुए हैं। मैं उन्हें बुलाता हूँ। अश्विद्वय का सख्य देवों में उत्कृष्ट और सहज-लभ्य है।

यद्योरधिप्रयज्ञाअंसूरेसन्तिसूरयः।
तायज्ञस्याध्वरस्यप्रचेतसास्वधाभिर्यापिबतःसोम्यंमधु ॥ ४॥

ययोः। अधि। प्र। यज्ञाः। असूरे। सन्ति। सूरयः।
ता। यज्ञस्य। अध्वरस्य। प्रऽचेतसा। स्वधाभिः।
या। पिबतः। सोम्यम्। मधु ॥ ४ ॥

ययोरश्विनोरध्युपरि यज्ञाः ज्योतिष्टोमादयः सर्वेयागाः प्रसन्ति प्रभवन्ति छिन्नस्य यज्ञशिरसोऽश्विभ्यांसन्धानात्। तथाच—यज्ञशिरसोछिद्यते इत्युपक्रम्य तैत्तिरीयकम्[1]—तावेतद्यज्ञशिरःप्रत्यधत्ताम् यदाश्विनोगृह्यते यज्ञस्यनिष्कृत्याइति। असूरे स्तोतृरहितेपि देशे ययोश्च सूरयः स्तोतारः सन्ति तावश्विनौ अध्वरस्य हिंसाप्रत्यवायरहितस्य यज्ञस्य ज्योतिष्टोमादेः प्रचेतसा प्रकृष्टज्ञातारौ स्वधाभिः बलहेतुभिः स्तुतिभिः आह्वयामीतिशेषः या यावश्विनौ सोम्यं सोममयं मधु मधुरं सोमरसं पिबतः ॥ ४ ॥

४. जिन अश्विनीकुमारों के ऊपर ज्योतिष्टोम आदि यज्ञ प्रभु होते हैं और स्तोतृ-शून्य देश में भी जिनके स्तोता हैं, वे हिंसा-रहित यज्ञ के प्रकृष्ट ज्ञाता हैं। वे स्वधा (बलकारण स्तुति) के साथ सोममय मधु का पान करें।

यदद्याश्विनावपाग्यत्प्राक्स्थोवाजिनीवसू।
यद्द्रुह्यव्यनवितुर्वशेयदौहुवेवामथमागतम् ॥ ५ ॥

यत्। अद्य। अश्विनौ। अपाक्। यत्। प्राक्। स्थः।
वाजिनीवसू इति वाजिनीऽवसू। यत्। द्रुह्यवि। अनवि।
तुर्वशे। यदौ। हुवे। वाम्। अथ। मा। आ। गतम् ॥ ५ ॥

हे अश्विनौ अद्येदानीं यद्यदि अपाक् प्रतीच्यां दिशि स्थोभवथोवर्तेथे हे वाजिनीवसू अन्नवद्धनौ यद्यदि प्राक् प्राच्यां दिशि स्थोभवथः यत् यदिवा द्रुह्यवि अनवि तुर्वशे यदौ द्रुह्युप्रभृतिषु चतुर्षु स्तोतृषु संनिहितौ भवथः एवं सर्वत्र संनिहितौ वां युवां हुवे अहमाह्वयामि अथानन्तरमेव मा मां आगतम् आगच्छतम् ॥ ५ ॥

५. अन्न और धनवाले अश्विद्वय, इस समय तुम लोग पूर्व दिशा अथवा पश्चिम दिशा में हो अथवा द्रुह्यु, अनु, तुर्वश और यदु के पास हो, मैं तुम्हें बुलाता हूँ; मेरे पास आओ।

---

1 तै० सं० ६. ४. ९.।

अथ षष्ठी—

यदन्तरिक्षेपतथःपुरुभुजायद्वेमेरोदसीअनु।
यद्वास्वधाभिरधितिष्ठथोरथमतआयातमश्विना॥६॥३४॥

यत्। अन्तरिक्षे। पतथः। पुरुऽभुजा। यत्। वा।
इमे इति। रोदसी इति। अनु। यत्। वा। स्वधाभिः।
अधिऽतिष्ठथः। रथम्। अतः। आ। यातम्। अश्विना॥६॥ ३४॥

हेपुरुभुजा बहूनां पालयितारौ बहुलहविषोभोक्तारौ वा यद्यदि अन्तरिक्षे पतथोगच्छथः यद्वा यदिवा इमे रोदसी द्यावापृथिव्यावनु अनुलक्ष्य गच्छथः यद्वा यदिवा स्वधाभिः आत्मीयैस्तेजोभिर्बलैर्वा सार्धं रथं अधितिष्ठथः रथेउपविशथः अधिशीङ्स्थासामिति आधारस्य कर्मसंज्ञा। अतः सर्वस्मात्स्थानात् हे अश्विनौ आयातमागच्छतम्॥ ६॥

६. बहुत हवि का भक्षण करनेवाले अश्विद्वय, यदि अन्तरिक्ष में जा रहे हो, यदि द्यावापृथिवी के अभिमुख जा रहे हो और यदि तेजोबल से रथ पर बैठ रहे हो, तो इन सभी स्थानों से आओ।

॥ इति पञ्चमस्याष्टमे चतुस्त्रिंशोवर्गः॥ ३४॥

त्वमग्नेइति दशर्चं षष्ठं सूक्तं कण्वगोत्रस्य वत्सस्यार्षं आग्नेयम् आद्या प्रतिष्ठागायत्री अष्टकसप्तकषट्कोपेतत्वात् द्वितीयावर्धमाना षट्कसप्तकाष्टकोपेतत्वात्। तथाचोक्तं—षट्कसप्तकाष्टकैर्वर्धमाना विपरीताप्रतिष्ठेति। दशमीत्रिष्टुप् शिष्टागायत्र्यः। तथाचानुक्रान्तम्—त्वमग्नेदशवत्सआग्नेयेगायत्रे अन्त्यात्रिष्टुप् आद्याप्रतिष्ठोपाद्यावर्धमानेति। प्रातरनुवाकस्याग्नेयेक्रतौ गायत्रेछन्दस्याश्विनशस्त्रे च उत्तमावर्जमेतत्सूक्तं सूत्र्यतेहि—त्वमग्नेव्रतपाइत्युत्तमामुद्धरेदिति। व्रातपत्यां त्वमग्नेव्रतपाइति आद्यानुवाक्या। सूत्रितञ्च—त्वमग्ने व्रतपाअसि यद्वोवयंप्रमिनामव्रतानीति।

सैषा प्रथमा—

त्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा। त्वंयज्ञेष्वीड्यः॥ १॥

त्वम्। अग्ने। व्रतऽपाः। असि। देवः। आ। मर्त्येषु। आ।
त्वम्। यज्ञेषु। ईड्यः॥ १॥

हे अग्ने देवोद्योतमानस्त्वं मर्त्येष्वा मनुष्येषु च आदेवेषु च मध्ये व्रतपाअसि व्रतानां कर्मणां रक्षिता भवसि अतःकारणात् यज्ञेषु त्वमीड्यः स्तुत्योसि॥ १॥

१. अग्निदेव, मनुष्यों में तुम कर्म-रक्षक हो; इसलिए यज्ञ में तुम्ह स्तुत्य हो।

अथ द्वितीया—

त्वमसिप्रशस्योविदथेषुसहन्त्य। अग्नेरथीरध्वराणाम् ॥ २ ॥

त्वम्। असि। प्रऽशस्यः। विदथेषु। सहन्त्य। अग्ने। रथीः। अध्वराणाम् ॥ २ ॥

हे सहन्त्य शत्रूणामभिभवितरग्नेविदथेषु यज्ञेषु त्वं प्रशस्यः स्तुत्योसि अध्वराणां यागानां रथीर्नेताच भवसि ॥ २॥

२. शत्रु-पराजय-कारी अग्नि, तुम यज्ञ में प्रशस्य हो और यज्ञों के नेता हो।

अथ तृतीया—

सत्वमस्मदपद्विषोयुयोधिजातवेदः। अदेवीरग्नेअरातीः ॥ ३ ॥

सः। त्वम्। अस्मत्। अप। द्विषः। युयोधि। जातऽवेदः। अदेवीः। अग्ने। अरातीः ॥ ३ ॥

हे जातवेदः जातानां वेदितरग्ने सपूर्वोक्तगुणस्त्वं अस्मदस्मत्तः द्विषोद्वेष्टॄन् शत्रून् अपयुयोधि पृथक्कुरु। अदेवीरासुरीः अरातीः शत्रुसेनाश्च पृथक्कुरु ॥ ३ ॥

३. उत्पन्न पदार्थों के ज्ञाता (जात-वेदा) अग्नि, हमारे शत्रुओं को अलग करो। अग्नि, तुम देव-द्वेषी शत्रु-सैन्य को अलग करो।

अथ चतुर्थी—

अन्तिचित्सन्तमहयज्ञंमर्तस्यरिपोः। नोपवेषिजातवेदः ॥ ४ ॥

अन्ति। चित्। सन्तम्। अह। यज्ञम्। मर्तस्य। रिपोः। न। उप। वेषि। जातऽवेदः ॥ ४ ॥

हे जातवेदः अन्तिचित् अन्तिकेपि सन्तं भवन्तं समीपे विद्यमानमपि रिपोः अस्मच्छत्रोर्मर्तस्य मनुष्यस्य यज्ञं नोपवेषि अहशब्दोवधारणे नैवकामयसे ॥ ४ ॥

४. जातवेदा अग्नि, समीपस्थ रहने पर भी तुम शत्रु के यज्ञ की कभी कामना नहीं करते।

अथ पञ्चमी—

मर्ताअमर्त्यस्यतेभूरिनाममनामहे। विप्रासोजातवेदसः ॥ ५ ॥ ३५ ॥

मर्ताः। अमर्त्यस्य। ते। भूरि। नाम। मनामहे। विप्रासः। जातऽवेदसः ॥ ५ ॥ ३५ ॥

मर्ता मनुष्याः विप्रासो मेधाविनोवयं हे अग्ने जातवेदसो जातानां वेदितुः अमर्त्यस्य मरणरहितस्य देवस्य ते तव भूरि विस्तृतं नाम स्तोत्रं मनामहे जानीमः कुर्मइति यावत् ॥५॥

५. हम विप्र हैं और तुम अमर जातवेदा (उत्पन्न-वस्तु-ज्ञाता) हो। हम तुम्हारा विस्तृत स्तोत्र करेंगे।

॥ इति पञ्चमस्याष्टमे पंचत्रिंशोवर्गः ॥ ३५ ॥

अथ षष्ठी—

विप्रंविप्रासोवसेदेवंमर्तासऊतये। आग्निंगीर्भिर्हवामहे ॥ ६ ॥

विप्रम्। विप्रासः। अवसे। देवम्। मर्तासः। ऊतये। अग्निम्। गीःऽभिः। हवामहे ॥ ६ ॥

विप्रासोमेधाविनः मर्तासोमनुष्यावयं विप्रं मेधाविनं देवं दानादिगुणयुक्तमग्निं अवसे हविर्भिः तर्पयितुं ऊतये अस्माकं रक्षणार्थं च गीर्भिः स्तुतिभिः हवामहे आह्वयामहे ॥ ६ ॥

६. हम विप्र और मनुष्य हैं। हम विप्र (मेधावी) अग्निदेव को, हव्य के द्वारा प्रसन्न करने के लिए, अपनी रक्षा के निमित्त, स्तुति-द्वारा बुलाते हैं।

आभिप्लविकेषूक्थ्येषु तृतीयसवने आतेवत्सइति वैकल्पिकःस्तोत्रियस्तृचः सूत्रितञ्च— आतेवत्सोमनोयमदाग्नेस्थूरंरयिंभरेति।

तृचे प्रथमा सूक्ते सप्तमी—

आतेवत्सोमनोयमत्परमाच्चित्सधस्थात्। अग्नेत्वांकामयागिरा ॥७॥

आ। ते। वत्सः। मनः। यमत्। परमात्। चित्। सधऽस्थात्। अग्ने। त्वाम्ऽकामया। गिरा ॥ ७ ॥

हे अग्ने वत्सऋषिः ते तव मनः परमाच्चित् उत्कृष्टादपि सधस्थानात् सहस्थात् द्युलोकात् आयमत् आयमयति। केन साधनेन त्वां कामया त्वामभिलषंत्या गिरा स्तुत्या॥७॥

७. अग्नि, उत्तम वासस्थान से भी वत्स ऋषि तुम्हारे मन को खींचते हैं। उनकी स्तुति तुम्हारी कामना करती है।

पुरुत्राहिसदृङ्ङसिविशोविश्वाअनुप्रभुः। समत्सुत्वाहवामहे ॥८॥

पुरुऽत्रा। हि। सऽदृङ्। असि। विशः। विश्वाः। अनु। प्रऽभुः। समत्ऽसु। त्वा। हवामहे ॥ ८ ॥

हे अग्ने पुरुत्रा बहुषु देशेषु त्वं सदृङ्ङसि समानद्रष्टा भवसि हिपूरणः अतएव विश्वाः सर्वाविशः प्रजाः अनु अनुलक्ष्य प्रभुरीश्वरोभवसि। ईदृशं त्वा त्वां समत्सु सङ्ग्रामेषु रक्षणार्थं हवामहे आह्वयामहे ॥ ८ ॥

८. तुम अनेक देशों में समान रूप से द्रष्टा हो। फलतः सारी प्रजा के तुम स्वामी हो। युद्ध में तुम्हें हम बुलाया करते हैं।

समत्स्वग्निमवसेवाजयन्तोहवामहे। वाजेषुचित्रराधसम् ॥ ९ ॥

समत्ऽसु। अग्निम्। अवसे। वाजऽयन्तः। हवामहे।
वाजेषु। चित्रऽराधसम् ॥ ९ ॥

समत्सु सहमदनेषु सङ्ग्रामेषु वाजयन्तोबलमिच्छन्तोवयं अवसे रक्षणार्थमग्निं हवामहे कीदृशं वाजेषु सङ्ग्रामेषु चित्रराधसं चायनीयधनम् ॥ ९॥

९. अन्नाभिलाषी होकर युद्ध में, रक्षा के लिए, हम अग्नि को बुलाते हैं। संग्राम में अग्नि विचित्र धन से युक्त होते हैं।

प्रत्नोहिकमीड्योअध्वरेषुसनाच्चहोतानव्यश्चसत्सि।
स्वांचाग्नेतन्वंपिप्रयस्वास्मभ्यंचसौभगमायजस्व ॥ १० ॥ ३६ ॥

प्रत्नः। हि। कम्। ईड्यः। अध्वरेषु। सनात्। च। होता।
नव्यः। च। सत्सि। स्वाम्। च। अग्ने। तन्वम्। पिप्रयस्व।
अस्मभ्यम्। च। सौभगम्। आ। यजस्व ॥ १० ३६ ॥

हे अग्ने अध्वरेषु यज्ञेषु ईड्यः स्तुत्यस्त्वं प्रत्नोहि चिरन्तनः खलु भवसि कमितिपूरकः तथा सनात् चिरकालादारभ्य होता देवानामाह्वाता च सन् नव्यः स्तुत्यश्च सन् सत्सि यज्ञेषु निषीदसि। हे अग्ने देवानां हविर्वहस्त्वं स्वां च तन्वं आत्मीयं च शरीरं पिप्रयस्व त्वदीयेन हविर्भागेन तर्पय अस्मभ्यं स्तोतृभ्यश्च सौभगं सुभगत्वं च आयजस्व प्रदेहि सुभगशब्दाद्भावार्थे सुभगान्मन्त्रइत्युद्गात्रादिषु पाठादञ्प्रत्ययः ॥ १० ॥

१०. अग्नि, तुम यज्ञ में पूज्य और प्राचीन हो। तुम चिरकाल से होता और स्तुत्य हो। यज्ञ में बैठते हो। अपने शरीर को हवि से तृप्त करो। हमें भी सौभाग्य प्रदान करो।

॥ इति पञ्चमस्याष्टमे षट्त्रिंशोवर्गः ॥ ३६ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येणविरचितेमाधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टकेअष्टमोध्यायः ॥ ८ ॥

॥ इतिपञ्चमाष्टकः समाप्तः ॥ ५ ॥

